सूची

सूची

ना

॥ इतिमनुसंहितायांसूचीपत्रंसमाप्तम्॥

श्रीगणेशायनमः ओंनमोभगवतेवासुदेवाय गौडेनंदनवासिनाम्निसुजनैर्वंद्येवरेंद्र्यांकुलेश्रीमद्भट्टदिवाकरस्यतनयःकुल्लूकभट्टोऽभ
वत् काश्यामुत्तरवाहिजन्हुतनयातीरेसमंपंडितैस्तेनेयंक्रियतेहितायविदुषांमन्वर्थमुक्तावली १ सर्वज्ञस्यमनोरसर्वविदपिव्याख्यामि
यद्वाङ्मयंयुक्तंस्यात्तद्बहुभिर्यतोमुनिवरैरेतद्बहुव्याहृतम् तांव्याख्यामधुनातनैरपिकृतांन्याय्यांब्रुवाणस्यमेभक्त्यामानववाङ्मयेभव-
भिदेभूयादशेषेश्वरः २ मीमांसेबहुसेवितासिसुहृदस्तर्काःसमस्ताःस्थमेवेदांताःपरमात्मबोधगुरवोयूयंमयोपासिताः जाताव्याकर
णानिबालसखितायुष्माभिरभ्यर्थयेप्राप्तोयंसमयोमनूक्तिविवृतौसाहाय्यमालंब्यताम् ३ द्वेषादिदोषरहितस्यसतांहितायमन्वर्थतत्त्व-
कथनायममोद्यतस्य दैवाद्यदिक्वचिदिहस्खलनंतथापिनिस्तारकोभवतुमेजगदंतरात्मा ४ मानववृत्तावस्यांज्ञेयाव्याख्यानवामपोद्भिन्ना
प्राचीना अपिरुचिरा व्याख्यातॄणामशेषाणाम् ५ मनुमेकाग्रमासीनमित्यादि अत्रमहर्षीणांधर्मविषयप्रश्नेमनोःश्रूयतामित्यु-
त्तरदानपर्यंतश्लोकचतुष्टयेनैतस्यशास्त्रस्यप्रेक्षावत्प्रवृत्त्युपयुक्तानिविषयसंबंधप्रयोजनान्युक्तानि तत्रधर्मएवविषयस्तेनसहवचनसंदर्भरू-

श्रीकृष्णायनमः मनुमेकाग्रमासीनमभिगम्यमहर्षयः प्रतिपूज्ययथान्यायमिदंवचनमब्रुवन् १

पस्यमानवशास्त्रस्यप्रतिपाद्यप्रतिपादकलक्षणःसंबंधः प्रमाणांतरासन्निकृष्टस्यस्वर्गापवर्गादिसाधनस्यधर्मस्यशास्त्रैकगम्यत्वात् प्रयो-
जनंतुस्वर्गापवर्गादितस्यधर्माधीनत्वात् यद्यपिपत्न्युपगमनादिरूपः कामोप्यत्राभिहितस्तथापिऋतुकालाभिगामीस्यात् स्वदारनिरतःस-
देतिऋतुकालादिनियमेनसोपिधर्मएव एवंचार्थार्जनमपिऋतामृताभ्यांजीवेदित्यादिनियमेनधर्मएवेत्यवगंतव्यम् मोक्षोपायत्वेनाभिहित-
स्यात्मज्ञानस्यापिधर्मत्वाद्धर्मविषयत्वंमोक्षोपदेशकत्वंचास्यशास्त्रस्योपपन्नम् पौरुषेयत्वेपिमनुवाक्यानामविगीतमहाजनपरिग्रहात् श्रुत्यु-
पग्रहाच्चवेदमूलकतयाप्रामाण्यंतथाचछांदोग्यब्राह्मणेश्रूयते मनुर्वैयत्किंचिदवदत्तद्भेषजंभेषजतायाइति बृहस्पतिरप्याह वेदार्थोपनि-
बंधत्वात्प्राधान्यंहिमनोःस्मृतम् मन्वर्थविपरीतातुयास्मृतिःसानशस्यते तावच्छास्त्राणिशोभंतेतर्कव्याकरणानिच धर्मार्थमोक्षोपदेश
मुनर्यावन्नदृश्यते महाभारतेप्युक्तम् पुराणंमानवोधर्मःसांगोवेदश्चिकित्सितम् आज्ञासिद्धानिचत्वारिनहंतव्यानिहेतुभिः विरोधि-
बौद्धादितर्कैर्नहंतव्यानि अनुकूलस्तुमीमांसादितर्कःप्रवर्त्तनीयएव अतएववक्ष्यति आर्षंधर्मोपदेशंचवेदशास्त्राविरोधिना यस्तर्केणा-
नुसंधत्तेसधर्मंवेदनेतरइति सकलवेदार्थादिमननान्मनुंमहर्षयइदंद्वितीयश्लोकवाक्यरूपंउच्यतेअनेनेतिवचनमब्रुवन् श्लोकस्यादौ

मनुनिर्देशोमंगलार्थःपरमात्मनएवसंसारस्थितयेसार्वज्ञैश्वर्यादिसंपन्नमनुरूपेणप्रादुर्भूतत्वात् तदभिधानस्यमंगलातिशयत्वात् वक्ष्यतिहि एनमेकेवदंत्यग्निंमनुमन्येप्रजापतिमिति एकाग्रंविषयांतराव्यासिक्तचित्तंआसीनंसुखोपविष्टंईदृशस्यैवमहर्षिप्रश्नोत्तरदानयोर्योग्यत्वात् अभिगम्यअभिमुखंगत्वामहर्षयोमहांतम्रूपतेऽस्यप्रश्नेनितथाप्रतिपूज्यपूजयित्वा यद्वामनुनापूर्वंस्वागतासनदानादिनापूजितास्तस्यपूजांछत्वेतिप्रतिशब्दादुन्नीयते यथान्यायंयेनन्यायेनविधानेनप्रश्नःकर्तुंयुज्यतेप्रणतिभक्तिश्रद्धातिशयादिना वस्तु-तिन नापृष्टःकस्यचिद्ब्रूयान्नचान्यायेनपृच्छतइति अभिगम्यप्रतिपूज्यअब्रुवन्नितिक्रियात्रयेपिमनुमित्येवकर्मअब्रुवन्नित्यत्राकथितकर्मता ब्रुविधातोर्द्विकर्मकत्वात् १ किमब्रुवन्नित्यपेक्षायामाह भगवन्नित्यादि ऐश्वर्यादीनांभगशब्दोवाचकः तदुक्तंविष्णुपुराणे ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसःश्रियः ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणा मतुवंतेनसंबोधनंभगवन्निति वर्णाब्राह्मणक्षत्रियवैश्यशूद्राः सर्वेचतेवर्णाश्चेतिसर्ववर्णाः तेषामंतरप्रभवानांचसंकीर्णजातीनांचापिअनुलोमप्रतिलोमजातानांअंबष्ठक्षत्तृकरणप्रभृतीनांतेषांविजात

भगवन्सर्ववर्णानांयथावदनुपूर्वशः अंतरप्रभवानांचधर्मान्नोवक्तुमर्हसि २ त्वमेकोह्यस्यसर्वस्यविधानस्यस्वयंभुवः अचिंत्यस्याप्रमेयस्यकार्यतत्त्वार्थवित्प्रभो ३

यमैथुनसंभवत्वेनखरतुरगीयसंपर्काज्जाताश्वतरवज्जात्यंतरत्वाद्वर्णशब्देनाग्रहणात्पृथक्प्रश्नः एतेनास्यशास्त्रस्यसर्वोपकारकत्वंदर्शितम् यथावत्योधर्मोयस्यवर्णस्ययेनप्रकारेणार्हतीत्यनेनाश्रमधर्मादीनामपिप्रश्नः अनुपूर्वशःक्रमेणजातकर्मतदनुनामधेयमित्यादिनाधर्मान्नोऽस्मभ्यंवक्तुमर्हसिसर्वधर्माभिधानेयोग्योभवसितस्माद्ब्रूहीत्यध्येषणमध्याहार्यम् यत्तुब्रह्महत्यादिरूपाधर्मकीर्तनमप्यत्रतत्प्रायश्चित्तविधिरूपधर्मविषयत्वेननस्वतंत्रतया २ सकलधर्माभिधानयोग्यत्वेहेतुमाह त्वमेकइत्यादि हिशब्दोहेतौयस्मात्त्वमेकोऽद्वितीयः अस्यसर्वस्यप्रत्यक्षश्रुतस्यस्मृत्याद्यनुमेयस्यचविधानस्यविधीयंतेऽनेनकर्माण्यग्निहोत्रादीनिइतिविधानंवेदस्तस्यस्वयंभुवोऽपौरुषेयस्याचिंत्यस्यबहुशाखाविभिन्नत्वादियत्तयापरिच्छेत्तुमयोग्यस्य अप्रमेयस्यमीमांसादिन्यायनिरपेक्षतयाऽनवगम्यमानप्रमेयस्य कार्यमनुष्ठेयमग्निष्टोमादि तत्त्वंब्रह्म सत्यंज्ञानमनंतंब्रह्मेत्यादिवेदांतवेद्यम् तदेवार्थःप्रतिपाद्यभागस्तंवेत्तीतिकार्यतत्त्वार्थवित् मेधातिथिस्तुकर्ममीमांसावासनयावेदस्यकार्यमेवतत्त्वरूपोऽर्थ

स्तंवेत्तीतिकार्यतत्त्वार्थविदितिव्याचष्टे तन्न वेदानांब्रह्मण्यपिप्रामाण्याभ्युपगमान्नकार्यमेवतत्त्वरूपोऽर्थः धर्माधर्मव्यवस्थापनस मर्थत्वात्प्रभोइतिसंबोधनम् ३ सतैःपृष्टस्तथासम्यगित्यादि समनुस्तैर्महर्षिभिस्तथातेनप्रकारेणपूर्वोक्तेनन्यायेनभणतिभक्तिश्रद्धा तिशयादिनापृष्टस्तान्सम्यक्यथातत्त्वंप्रत्युवाचश्रूयतामित्युपक्रम्य अमितमपरिच्छेद्यमोजःसामर्थ्यंज्ञानतत्त्वाभिधानादौयस्यसतथा अतएवसर्वज्ञसर्वशक्तितयामहर्षीणामपिप्रश्नविषयः महात्मभिर्महानुभावैः आर्च्यपूजयित्वा आङ्पूर्वस्यार्चतेर्ल्यबंतस्यरूपमिदम् धर्मस्याभिधानमपिपूजनपुरःसरमेवकर्त्तव्यमित्यनेनफलितम् ननुमनुप्रणीतत्वेअस्यशास्त्रस्यसपृष्टःप्रत्युवाचइतिनयुक्तम् अहं पृष्टोब्रवीमीतियुज्यते अन्यप्रणीतत्वेचकथंमानवीयसंहितेति उच्यतेप्रायेणाचार्याणामियंशैलीयत्स्वाभिप्रायमपिपरोपदेशमिववर्णयंति अतएवकर्माण्यपिजैमिनिःफलार्थत्वादितिजैमिनेरेवसूत्रं अतएवतदुपर्यपिबादरायणःसंभवादितिबादरायणस्यैवशारीरकसूत्रम् अथवामनूपदिष्टधर्मास्तच्छिष्येणभृगुणातदाज्ञयोपनिबद्धाः अतएववक्ष्यतिएतद्वोयंभृगुःशास्त्रंश्रावयिष्यत्यशेषतइत्स

सतैःपृष्टस्तथासम्यगमितौजामहात्मभिः प्रत्युवाचार्च्यतान्सर्वान्महर्षीञ्छ्रूयतामिति ४
आसीदिदंतमोभूतमप्रज्ञातमलक्षणम्

तोयुज्यतएवसपृष्टःप्रत्युवाचइति मनूपदिष्टधर्मोपनिबद्धत्वान्मानवीयसंहितेतिव्यपदेशः ४ श्रूयतामितिउपक्षिप्तसमर्थमाह आसीदिदमिति ननुमुनीनांधर्मविषयप्रश्नेतत्रैवोत्तरंदातुमुचितं तत्कोयमप्रस्तुतःप्रलयदशायांकारणलीनस्यजगतःसृष्टिप्रकरणावतारः अत्रमेधातिथिःसमादधे शास्त्रस्यमहाप्रयोजनत्व मनेनसर्वेणप्रतिपाद्यते ब्रह्माद्याःस्थावरपर्यंता संसारगतयोधर्माधर्मनिमित्ताअत्रप्रतिपाद्यंते तमसाबहुरूपेणवेष्टिताःकर्महेतुने तिचवक्ष्यतिच एतादृशस्यजीवस्यगतीःस्वेनैवचेतसा धर्मतोऽधर्मतश्चैवधर्मेदध्यात्सदामनइति ततश्चनिरतिशयैश्वर्यहेतुर्धर्म स्तद्विपरीतश्चाधर्मःतद्रूपपरिज्ञानार्थमिदंशास्त्रंमहाप्रयोजनमध्येतव्यमित्याद्याध्यायतात्पर्यमित्यंतेन गोविंदराजस्यापीदमेवसमाधानम् नैतन्मनोहरम् धर्मस्वरूपप्रश्नेपदधर्मस्यफलकीर्त्तनंतदप्यप्रस्तुतम् धर्मोक्तिमात्राद्धिशास्त्रमर्थवत् किंचकर्मणांफलानिर्दिशंसेत्युक्तेमहर्षिभिः द्वादशोवक्ष्यमाणासावत्तुमादौनयुज्यते इदंतुवदामः मुनीनांधर्मविषयेप्रश्नेजगत्कारणतयाब्रह्मप्रतिपा

दनंधर्मकथनमेवेतिनामस्तुनाभिधानम् आत्मज्ञानस्यापिधर्मरूपत्वान्मनुनैव धृतिःक्षमादमोस्तेयंशौचमिंद्रियनिग्रहः धीर्विद्या
सत्यमक्रोधोदशकंधर्मलक्षणमितिदशविधधर्माभिधानेविद्याशब्दवाच्यमात्मज्ञानन्धर्मत्वेनोक्तम् महाभारतेपि आत्मज्ञानंतिति
क्षान्तधर्मःसाधारणोन्तृपेत्यात्मज्ञानंधर्मत्वेनोक्तम् याज्ञवल्क्येनतुपरमधर्मत्वेनयदाह इज्याचारदमाहिंसादानंस्वाध्यायकर्मच अयं
तुपरमोधर्मोयद्योगेनात्मदर्शनमिति जगत्कारणत्वंब्रह्मलक्षणंअतएवब्रह्ममीमांसायांअथातोब्रह्मजिज्ञासेतिसूत्रानंतरंब्र-
ह्मलक्षणकथनायजन्माद्यस्ययतइतिद्वितीयसूत्रंभगवान्बादरायणःप्रणिनायास्यजगतोयतोजन्मादिसृष्टिस्थितिप्रलयमितिसू
त्रार्थः तथाचश्रुतिः यतोवाइमानिभूतानिजायंतेयेनजातानिजीवंतियत्प्रयंत्यभिसंविशंतितद्विजिज्ञासस्वतद्ब्रह्मेतिप्राधान्येनजग
दुत्पत्तिस्थितिलयनिमित्तोपादानब्रह्मप्रतिपादनंआत्मज्ञानरूपपरमधर्मावगमायप्रथमाध्यायेकृत्वासंस्कारादिरूपंधर्मंतदंगत-
याद्वितीयाध्यायादिक्रमेणवक्ष्यतीतिनकश्चिद्विरोधः किंतुप्रश्नोत्तरवाक्यानामेवस्वरसादयंमदुक्तोऽर्थोलभ्यतेतथाहि धर्मंपृष्टे

अप्रतर्क्यमविज्ञेयंप्रसुप्तमिवसर्वतः ५

मनुर्ब्रह्मजगतःकारणंब्रुवन् आत्मज्ञानंपरंधर्मंविंतेतिव्यक्तमुक्तवान् प्राधान्यात्प्रथमाध्यायेसाधुतस्यैवकीर्त्तनम् धर्मोन्यस्तुत
दंगत्वात्पुरुस्तादुक्तोवक्तुमनंतरम् इदमित्यध्यक्षेणसर्वस्यप्रतिभासमानत्वात् जगन्निर्दिश्यतेइदंजगत्तमोभूतंतमसिस्थितंलीनमासीत्त
मःशब्देनगुणत्रयात्मप्रकृतिर्निर्दिश्यतेतमइवतमः यथातमसिलीनाःपदार्थाः अध्यक्षेणनप्रकाश्यंतेएवंप्रकृतिलीनाअपिभावाना
वगम्यंतेइतिगुणयोगःप्रलयकालेसूक्ष्मरूपतयाप्रकृतौलीनमासीदित्यर्थः तथाचश्रुतिः तमआसीत्तमसागूढमग्रइति प्रकृतिरपि
ब्रह्मात्मनाअव्याकृतासीत् अतएवअप्रज्ञातमप्रत्यक्षंसकलप्रमाणश्रेष्ठतयाप्रत्यक्षगोचरःप्रज्ञातइत्युच्यतेतन्नभवतीत्यप्रज्ञातंअ
लक्षणमननुमेयंलक्ष्यतेऽनेनेतिलक्षणंलिंगंतदस्यनास्तीतिअलक्षणंअप्रतर्क्यंतर्कयितुमशक्यंतदानींवाचकस्थूलशब्दाभावात्
शब्दतोप्यविज्ञेयंएतदेवचप्रमाणत्रयंसतर्कंद्वादशाध्यायेमनुनाभ्युपगतंअतएवाविज्ञेयमित्यर्थोपत्याद्यगोचरमितिधरणीधरस्या २
पिव्याख्यानम् नचनासीदेवेतिवाच्यंतदानींश्रुतिसिद्धत्वात् तथाचश्रूयते तद्धेदंतर्ह्यव्याकृतमासीच्छांदोग्योपनिषच्चसदेवसो

म्येदमग्र आसीदिदंजगत्सदेवासीद्ब्रह्मात्मना आसीदित्यर्थः सच्छब्दोब्रह्मवाचकः अतएवप्रसुप्तमिवसर्वतः प्रथमार्थेतसिः स्वकार्या
क्षममित्यर्थः ५ अथक्रमसृष्टिमाह ततःस्वयंभूर्भगवानित्यादि ततःप्रलयावसानानंतरंस्वयंभूः परमात्मास्वयंभवतिस्वेच्छयाशरी
रपरिग्रहंकरोतिनत्वितरजीववत् कर्मायत्तदेहः तथाचश्रुतिः सएकधाभवतिद्विधाभवतीतिभगवानैश्वर्यादिसंपन्नः अव्यक्तोबाह्यक
रणागोचरः योगाभ्यासाद्वसेयइतियावत् इदंमहाभूतादिआकाशादीनिमहाभूतानिआदिग्रहणान्महदादीनिचव्यंजयन् अव्यक्ता
वस्थंप्रथमंसूक्ष्मरूपेणततःस्थूलरूपेणप्रकाशयन्वृत्तौजाः वृत्तमप्रतिहतमुच्यते अतएववृत्तिसर्गतापनेषुक्रमइत्यत्रवृत्तिरप्रतिघात
इतिव्याख्यातंजयादित्येन वृत्तमप्रतिहतमोजःसृष्टिसामर्थ्यंयस्यसतथा तमोनुदःप्रकृतिप्रेरकः तदुक्तंभगवद्गीतायाम् मयाध्यक्षे-
णप्रकृतिःसूयतेसचराचरमिति प्रादुरासीत्प्रकाशितोबभूवतमोनुदःप्रलयावस्थाध्वंसकइतितुमेधातिथिगोविंदराजौ ६ योसाविति

ततःस्वयंभूर्भगवानव्यक्तोव्यंजयन्निदम् महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ६ योसावतींद्रि
यग्राह्यःसूक्ष्मोऽव्यक्तःसनातनः सर्वभूतमयोचिंत्यः सएवस्वयमुद्बभौ ७ सोभिध्यायशरीरात्स्वात्सिसृ
क्षुर्विविधाःप्रजाः अपएवससर्जादौतासुबीजमवासृजत् ८ योसावितिसर्वनामद्वयेनसकललोकवेदपुराणेतिहा

सादिप्रसिद्धंपरमात्मानंनिर्दिशति अतींद्रियग्राह्यःइंद्रियमतीत्यवर्त्ततइत्यतींद्रियंमनस्तद्ग्राह्यइत्यर्थः यदाहव्यासः नैवासौचक्षुषा-
ग्राह्योनचशिष्टैरपींद्रियैः मनसातुप्रसन्नेनगृह्यतेसूक्ष्मदर्शिभिः सूक्ष्मोबहिरिंद्रियागोचरः अव्यक्तोव्यक्तिरवयवः तद्रहितःसनातनो
नित्यःसर्वभूतमयःसर्वभूतात्माअतएवाचिंत्यः इयत्तयापरिच्छेत्तुमशक्यःसएवस्वयंउद्बभौमहदादिकार्यरूपतयाप्रादुर्बभूवउत्पूर्वो
भातिःप्रादुर्भावेवर्त्ततेधातूनामनेकार्थत्वात् ७ सोभिध्यायेति सपरमात्मानानाविधाःप्रजाःसिसृक्षुरभिध्यायापोजायंतामित्यभि-
ध्यानमात्रेणापएवससर्ज अभिध्यानपूर्विकांसृष्टिंवदतोमनोःप्रकृतिरेवाचेतनाऽस्वतंत्रापरिणमतइत्ययंपक्षोनसंमतः किंतुब्रह्मैवा
व्याकृतशक्त्यात्मनाजगत्कारणमितित्रिदंडिवेदांतसिद्धांतएवाभिमतःप्रतिभातितथाचछांदोग्योपनिषत् तदैक्षतबहुस्यांप्रजायेये-
ति अतएवशारीरकसूत्रकृताव्यासेनसिद्धांतितमीक्षतेर्नाशब्दमिति ईक्षितेरीक्षणश्रवणात्नप्रधानंजगत्कारणंअशब्दंनविद्य
तेशब्दःश्रुतिर्यस्यतदशब्दमितिसूत्रार्थः स्वाच्छरीरात् अव्याकृतरूपात् अव्याकृतमेवभगवद्भास्करीयवेदांतदर्शनेप्रकृतिस्तदेव

तस्यचशरीरं अव्याकृतशब्देन पंचभूतसूक्ष्मेंद्रियकर्मेंद्रियप्राणमनःकर्मविद्यावासनाएवसूक्ष्मरूपतयाशक्त्यात्मनास्थिताअभिधीयं
ते अव्याकृतस्यच ब्रह्मणासहभेदाभेदस्वीकारात् अद्वैतंशक्त्यात्मनाचब्रह्मजगद्रूपतयापरिणमतइत्युभयमप्युपपद्यते आदौ
स्वकार्यभूमिब्रह्मांडसृष्टेःप्राक् अपांसृष्टिश्चेयंमहदहंकारतन्मात्रक्रमेण बोद्धव्या महाभूतादिव्यंजयन्निति पूर्वाभिधानात् अनंतर
मपिमहदादिसृष्टेर्वक्ष्यमाणत्वात् तासप्सुबीजंशक्तिरूपंआरोपितवान् ८ तदंडमभवद्धैममिति तद्बीजंपरमेश्वरेच्छया हैममंडम
भवत् हैममिव हैमंशुद्धिगुणयोगात् नतुहैममेव तदीयैकशकलेन भूमिनिर्माणस्य वक्ष्यमाणत्वात् भूमेश्चाहैमत्वस्य प्रत्यक्षत्वादुपचा
राश्रयणम् सहस्रांशुरादित्यस्तत्तुल्यप्रभंतस्मिन्नंडे हिरण्यगर्भोजातवान् येनपूर्वजन्मनि हिरण्यगर्भोहमस्मीति भेदाभेदभावनयाप
रमेश्वरोपासना कृता तदीयं लिंगशरीरावच्छिन्नजीवमनुप्रविश्य स्वयंपरमात्मैव हिरण्यगर्भरूपतया प्रादुर्भूतः सर्वलोकानांपितामहो-
जनकः सर्वलोकपितामहइतिवा तस्यनाम ९ इदानीमागमप्रसिद्धनारायणशब्दार्थनिर्वचनेनउक्तमेवार्थं द्रढयति आपोनाराइत्यादि

तदंडमभवद्धैमंसहस्रांशुसमप्रभम् तस्मिन्जज्ञेस्वयंब्रह्मासर्वलोकपितामहः ९ आपोनाराइतिप्रो
क्ताआपोवैनरसूनवः तायदस्यायनंपूर्वंतेननारायणःस्मृतः १० यत्तत्कारणमव्यक्तंनित्यंसदसदात्म
कम् तद्विसृष्टःसपुरुषोलोकेब्रह्मेतिकीर्त्यते ११

आपोनाराशब्देनोच्यंते अप्सुनाराशब्दस्याप्रसिद्धेस्तदर्थमाह यतस्ता
नराख्यस्यपरमात्मनःसूनवोऽपत्यानितस्येदमित्यण्प्रत्ययः यद्यपिअणिकृते ङीप्प्रत्ययः प्राप्तस्तथापि छांदसलक्षणैरपिस्मृतिषुव्यव
हारात्सर्वेविधयश्छंदसिविकल्प्यंतइति पाक्षिकोङीप्प्रत्ययस्तस्याभावपक्षेसामान्यलक्षणप्राप्तेदापिकृते नाराइतिरूपसिद्धिः आपोऽ
स्यपरमात्मनोब्रह्मरूपेणावस्थितस्यपूर्वमयनमाश्रयंइत्यसौनारायणइत्यागमेषाम्नातः गोविंदराजेनतु आपोनराइतिपठितंव्याख्यातं
चनरायणइतिप्राप्ते अन्येषामपिदृश्यतइतिदीर्घत्वेननारायणइतिरूपम् अन्येत्वापोनाराइतिपठंति १० यत्तत्कारणमव्यक्तमित्यादि
यत्तदितिसर्वनामभ्यांलोकवेदादिसर्वप्रसिद्धंपरमात्मानंनिर्दिशति कारणंसर्वोत्पत्तिमतां अव्यक्तंबहिरिंद्रियागोचरंनित्यंउत्पत्तिविनाशर
हितंवेदांतसिद्धत्वात् सत्स्वभावम् प्रत्यक्षाद्यगोचरत्वात् असत्स्वभावमिव अथवासद्भावजातमसदभावःतयोरात्मभूतम् तथाचश्रुतिः

ऐतदात्म्यमिदं सर्वमिति तद्विसृष्टस्तेनोत्पादितः सपुरुषः सर्वत्र ब्रह्मेति कीर्त्यते ११ तस्मिन्नंडे स भगवानित्यादि तस्मिन्पूर्वोक्तेंडे स ब्र
ह्मावक्ष्यमाणब्रह्ममानेन संवत्सरमुषित्वा स्थित्वा आत्मनैवांडं द्विधा भवत्विति आत्मगतध्यानमात्रेण तदंडं द्विखंडं कृतवान् १२ ताभ्यां
सशकलाभ्यांचेत्यादि शकलं खंडं ताभ्यामंडशकलाभ्यां उत्तरेण दिवं स्वर्लोकं अधरेण भूलोकं उभयोर्मध्ये आकाशं दिशश्चावांतरदि-
ग्भिः सहाष्टौ समुद्राख्यं अपांस्थानं स्थिरं निर्मितवान् १३ इदानीं महदादिक्रमेणैव जगन्निर्माणमिति दर्शयितुं तत्तत्सृष्टिमाह उद्बब
र्हात्मनश्चैवेत्यादि ब्रह्मा आत्मनः परमात्मनः सकाशात्तेनरूपेण मन उद्धृतवान्परमात्मन एव ब्रह्मस्वरूपेणोत्पन्नत्वात्परमात्मन एवच म
नःसृष्टिर्वेदांतदर्शनेन प्रधानात् तथाचश्रुतिः एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणिच खंवायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी
मनश्च श्रुतिसिद्धत्वात् युगपज्ज्ञानानुत्पत्तिलिंगाच्च सत् अप्रत्यक्षत्वादसदिति मनसः पूर्वमहंकारतत्त्वं अहमित्यभिमानाख्यकार्ययु

तस्मिन्नंडे स भगवानुषित्वा परिवत्सरम् स्वयमेवात्मनो ध्यानात्तदंडमकरोद्द्विधा १२ ताभ्यां स शकला
भ्यांच दिवं भूमिंच निर्ममे मध्ये व्योम दिशश्चाष्टावपां स्थानंच शाश्वतम् १३ उद्बबर्हात्मनश्चैव मनः स
दसदात्मकम् मनसश्चाप्यहंकारमभिमंतारमीश्वरम् १४ महांतमेवचात्मानं सर्वाणि त्रिगुणानिच

क्तं ईश्वरं स्वकार्यकरणक्षमम् १४ महांतमेवचात्मानमित्यादि महांतमिति महदाख्यं तत्त्वं अहंकारात्पूर्वं परमात्मन एवाव्याकृतशक्ति
रूपप्रकृतिसहिताद्धृतवान् आत्मन उत्पन्नत्वात् आत्मानमात्मोपकारकत्वाद्वा यान्यभिहितानि अभिधास्यंते च तान्युत्पत्तिमंतिस
र्वाणि सत्त्वरजस्तमोगुणयुक्तानि विषयाणां शब्दस्पर्शरूपरसगंधानां ग्राहकाणि शनैः क्रमेण वेदांतसिद्धेन श्रोत्रादीनि द्वितीयाध्या-
यवक्ष्यमाणानि पंचबुद्धींद्रियाणि च शब्दादीन् च पाय्वादीनि कर्मेंद्रियाणि शब्दतन्मात्रादीनि च पंचोत्पादितवान् नन्वभिध्यानपूर्वकसृ-
ष्ट्यभिधानाद्वेदांतसिद्धांत एव मनोरभिमत इति प्रागुक्तं तत्र संगच्छते इदानीं महदादिक्रमेण सृष्ट्यभिधानाद्वेदांतदर्शनेन च परमात्म
न एवाकाशादिक्रमेण सृष्टिरुक्ता तथाच तैत्तिरीयोपनिषत् तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्ने
रापः अद्भ्यः पृथिवीति उच्यते प्रकृतितो महदादिक्रमेण सृष्टिरिति भगवद्भास्करीयदर्शनेप्युपपद्यत इति तद्दोषो व्याचक्षते अव्याकृ

नमेवप्रकृतिरिष्यतेतस्यचसृष्ट्युन्मुखत्वंसृष्ट्याद्यकालयोगरूपंतदेवंमहत्त्वंततोबहुस्यामितिअभिमानात्मकेक्षणकालयोगित्व
मव्याकृतस्याहंकारतत्त्वम् ततआकाशादिपंचभूतसूक्ष्माणिक्रमेणोत्पन्नानिपंचतन्मात्राणिततस्तेभ्यएवस्थूलान्युत्पन्नानिपंचम
हाभूतानिसूक्ष्मस्थूलक्रमेणैवकार्योदयदर्शनादितिनविरोधः अव्याकृतगुणत्वेपिसत्त्वरजस्तमसांसर्वाणित्रिगुणानीत्युपपद्यतेप्र
यत्तुवासत्त्वरजस्तमः समतारूपैवमूलप्रकृतिः भवंतुचतत्त्वांतराण्येवमहदहंकारतन्मात्राणितथापिप्रकृतिर्ब्रह्मणोऽनन्येतिमनोःस्व
रसः यतोवक्ष्यति सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनीति तथा एवंयःसर्वभूतेषुपश्यत्यात्मानमात्मना ससर्वसमतामेत्यब्रह्मा
भ्येतिपरंपदमिति १५ तेषांत्ववयवान्सूक्ष्मानित्यादि तेषांषण्णांपूर्वोक्ताहंकारस्यतन्मात्राणांचयेसूक्ष्मा अवयवास्तान् आत्ममा
त्रासुषण्णांस्वविकारेषुयोजयित्वामनुष्यतिर्यक्स्थावरादीनिसर्वभूतानिपरमात्मानिर्मितवान् तत्रतन्मात्राणांविकारः पंचमहाभूतानि
अहंकारस्येंद्रियाणिपृथिव्यादिभूतेषुशरीररूपतयापरिणतेषुतन्मात्राहंकारयोजनांकृत्वासकलस्यकार्यजातस्यनिर्माणंअतएवाभि-

विषयाणांग्रहीतॄणिशनैःपंचेंद्रियाणिच १५ तेषांत्ववयवान्सूक्ष्मान् षण्णामप्यमितौजसाम् सन्नि
वेश्यात्ममात्रासुसर्वभूतानिनिर्ममे १६ यन्मूर्त्यवयवाःसूक्ष्मास्तस्येमान्याश्रयंतिषट् तस्माच्छरीरमि
त्याहुस्तस्यमूर्तिंमनीषिणः १७

तौजसां अनंतकार्यनिर्माणेनातिवीर्यशालिनाम् १६ यन्मूर्त्यवयवाःसूक्ष्माइत्यादि य
स्यान्मूर्तिः शरीरंतत्संपादका अवयवाः सूक्ष्मास्तन्मात्राहंकाररूपाः षट्तस्यब्रह्मणःसप्रकृतिकस्यइमानिवक्ष्यमाणानिभूतानींद्रिया
णिचपूर्वोक्तानिकार्यत्वेनाश्रयंतितन्मात्रेभ्योभूतोत्पत्तेः अहंकाराच्चइंद्रियोत्पत्तेः तथाचपठंतिप्रकृतेर्महांस्ततोहंकारस्तस्माद्गणश्च-
षोडशकः तस्मादपिषोडशकात्पंचभ्यःपंचभूतानि तस्मात्तस्यब्रह्मणोयामूर्तिः स्वभावस्तांतथापरिणतामिंद्रियादिशालिनींलोकाः
शरीरमितिवदंतिषडाश्रयणाच्छरीरमितिशरीरनिर्वचनेनानेनपूर्वोक्तोत्पत्तिक्रमएवदृढीकृतः १७ तदाविशंतिभूतानीत्यादि
पूर्वश्लोकेतस्येतिप्रकृतंब्रह्मात्रतदितिपरामृश्यतेतद्ब्रह्मशब्दादिपंचतन्मात्रात्मनावस्थितंमहाभूतान्याकाशादीनिआविशंतितेभ्यउ
त्पद्यंतेसहकर्मभिःस्वकार्यैस्तत्राकाशस्यावकाशदानंकर्मवायोर्व्यूहनंविन्यासरूपंतेजसःपाकोऽपांसंग्रहणंपिंडीकरणरूपंपृथिव्या

धारणंअहंकारात्मनावस्थितंब्रह्ममनआविशत्यहंकारादुत्पद्यतइत्यर्थः अवयवैःस्वकार्यैःशुभाशुभसंकल्पसुखदुःखादिरूपैःसू-
क्ष्मैर्बहिरिंद्रियागोचरैःसर्वभूतकृत्सर्वोत्पत्तिनिमित्तंमनोजन्यशुभाशुभकर्मप्रभवत्वाज्जगतः अव्ययमविनाशि १८ तेषामिदंतु
सप्तानामित्यादि तेषांपूर्वप्रकृतीनांमहदहंकारतन्मात्राणांसप्तसंख्यानांपुरुषादात्मनउत्पन्नत्वात् तद्वृत्तिग्राह्यत्वाच्चपुरुषाणांमहौ
जसांस्वकार्यसंपादनेनवीर्यवतांसूक्ष्मायामूर्तिमात्राशरीरसंपादकभागास्ताभ्यइदंजगत्नश्वरंसंभवत्यनश्वरान्यत्कार्यंतद्वि
नाशिस्वकारणेलीयतेकारणंतुकार्यापेक्षयास्थिरंपरमकारणंतुब्रह्मनित्यमुपासनीयमित्येतद्दर्शयितुमयमनुवादः १९ आद्याद्य
स्यगुणंत्वेषामित्यादि एषामितिपूर्वतरश्लोकेतदाविशंतिभूतानीत्यत्रभूतानांपरामर्शः तेषांचाकाशादिक्रमेणोत्पत्तिक्रमः शब्दादि
गुणवत्ताचवक्ष्यते तत्राद्याद्यस्याकाशादेर्गुणंशब्दादिकंवाय्वादिःपरःपरःप्राप्नोति एतदेवस्पष्टयति योयइति एषांमध्येयोयो
यावतांपूरणोयावतिथःवतोरिथुक्ससद्वितीयादिःद्वितीयोद्विगुणःतृतीयस्त्रिगुणइत्येवमादिर्मन्वादिभिःस्मृतः एतेनेतदुक्तंभव

तदाविशंतिभूतानिमहांतिसहकर्मभिः मनश्चावयवैःसूक्ष्मैःसर्वभूतकृदव्ययम् १८ तेषामिदंतुसप्ता
नांपुरुषाणामहौजसाम् सूक्ष्माभ्योमूर्तिमात्राभ्यःसंभवत्यव्ययाद्व्ययम् १९ आद्याद्यस्यगुणंत्वेषा
मवाप्नोतिपरःपरः योयोयावतिथश्चैषांससतावद्गुणःस्मृतः २० सर्वेषांतुसनामानिकर्माणिचपृथक्
पृथक् वेदशब्देभ्यएवादौपृथक्संस्थाश्चनिर्ममे २१

ति आकाशस्यशब्दोगुणःवायोःशब्दस्पर्शौतेजसःशब्दस्पर्शरू
पाणि अपांशब्दस्पर्शरूपरसाःभूमेःशब्दस्पर्शरूपरसगंधाः अत्रयद्यपिनित्यवीप्सयोरितिद्विर्वचनेनाद्यस्याद्यस्येतिप्राप्तंतथापिस्मृतीनां
छंदःसमानविषयत्वात्सुपांसुलुगितिप्रथमाद्यस्यसुपूलुकृतेनाद्याद्यस्येतिरूपसिद्धिः २० सर्वेषांतुसनामानीत्यादिसपरमात्माहिरण्य
गर्भरूपेणावस्थितःसर्वेषांनामानिगोजातेर्गौरितिअश्वजातेरश्वइति कर्माणिब्राह्मणस्याध्ययनादीनिक्षत्रियस्यप्रजारक्षादीनिपृथक्
पृथक्यस्यपूर्वकल्पेयान्यभूवन्आदौसृष्ट्यादौवेदशब्देभ्यएवावगम्यनिर्मितवान् भगवताव्यासेनापिवेदमीमांसायांवेदपूर्विकैवजग-
त्सृष्टिर्व्युत्पादिता तथाचशारीरकसूत्रंशब्दइतिचेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्यांअस्यार्थः देवतानांविग्रहवत्त्वेवैदिकेवआदिशब्देदे
वतावाचिनिविरोधःस्यात्वेदस्यादिमत्त्वप्रसंगादितिचेन्नास्तिविरोधः कस्मादतःशब्दादेवजगतःप्रभवात्तदुत्पत्तेःप्रलयकालेपिसूक्ष्मरूपे

णपरमात्मनिवेदराशिःस्थितःसइहकल्पादौहिरण्यगर्भस्यपरमात्मनएवप्रथमदेहिमूर्त्तेर्मनस्यवस्थांतरमनापन्नःस्त्रुसप्रबुद्धस्तेनप्र
दुर्भवितितेनप्रदीपस्थानीयेनस्रस्नरतिर्यगादिप्रविभक्तंजगत् अभिधेयभूतंनिर्मिमीतेकथमिदंगम्यतेप्रत्यक्षानुमानाभ्यांश्रुतिस्मृतिभ्य
मित्यर्थःप्रत्यक्षंश्रुतिरनपेक्षत्वात् अनुमानंस्मृतिरनुमीयमानश्रुतिसापेक्षत्वात् तथाचश्रुतिः एतइतिवैप्रजापतिर्देवानसृजतासृजद
ग्रइतिमनुष्यानिंदव इतिपितॄन्तिरःपवित्रमितिग्रहानाशवइतिस्तोत्रंविश्वानीतिशास्त्रमितिसौभगेत्यन्याःप्रजाः स्मृतिस्तुसर्वेषांतुस
नामानीत्यादिकामन्वादिप्रणीताएवपृथक्संस्थाश्चेतिलौकिकीश्चव्यवस्थाः कुलालस्यघटनिर्माणंकुविंदस्यपटनिर्माणमित्यादिकाविभा
गेननिर्मितवान् २१ कर्मात्मनांचदेवानामित्यादि सब्रह्मादेवानांगणमसृजत् प्राणिनामिंद्रादीनांकर्माणिआत्मास्वभावोयेषांतेषामप्रा-
णिनांचग्रावादीनांदेवानांसाध्यानांचदेवविशेषाणांसमूहंयज्ञंचज्योतिष्टोमादिकंकल्पांतरेप्यनुमीयमानत्वान्नित्यंसाध्यानांचगणस्यपृ

कर्मात्मनांचदेवानांसोऽसृजत्प्राणिनांप्रभुः साध्यानांचगणंसूक्ष्मंयज्ञंचैवसनातनम् २२ अग्निवायुरविभ्य
स्त्वत्रयंब्रह्मसनातनम् दुदोहयज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् २३ कालंकालविभक्तीश्चनक्षत्राणि
ग्रहांस्तथा सरितःसागरान्शैलान्समानिविषमाणिच २४ तपोवाचंरतिंचैवकामंचक्रोधमेवच सृष्टिंस
सर्जचैवेमांस्रष्टुमिच्छन्निमाःप्रजाः २५

थग्वचनंसूक्ष्मत्वात् २२ अग्निवायुरविभ्यस्त्वित्यादि ब्रह्माऋग्यजुःसामसंज्ञंवेदत्रयं
अग्निवायुरविभ्यआकृष्टवान् सनातनंनित्यंवेदापौरुषेयत्वपक्षएवमनोरभिमतःपूर्वकल्पेयेवेदास्तएवपरमात्ममूर्त्तेर्ब्रह्मणःस
त्वारूढाः तानेवकल्पादौअग्निवायुरविभ्यआचकर्षश्रौतश्चायमर्थोनशंकनीयः तथाचश्रुतिः अग्नेर्ऋग्वेदोवायोर्यजुर्वेदआदित्यात्स
दइतिआकर्षणार्थत्वाद्दुहिधातोर्नाग्निवायुरवीणामकथितकर्मताकिंत्वपादानतैवयज्ञसिद्ध्यर्थंत्रयीसंपाद्यत्वात्यज्ञानांआपीनस्थक्षीरव
त् विद्यमानानामेववेदानामभिव्यक्तिप्रदर्शनार्थंआकर्षणवाचकोगौणोदुहिःप्रयुक्तः २३ कालंकालविभक्तीश्चेत्यादि अत्रससर्जेत्युत्तर-
श्लोकवर्तिनीक्रियासंबध्यतेआदित्यादिक्रियाप्रचयरूपंकालंकालविभक्तीर्मासर्त्वयनाद्याःनक्षत्राणिकृत्तिकादीनिग्रहान्सूर्यादीन् सरि-
तोनदीःसागरान् समुद्रान् शैलान्पर्वतान्समानिसमस्थानानिविषमाणिउच्चनीचरूपाणि २४ तपोवाचमित्यादि तपःप्राजापत्यादिवाचं

वाणीं रतिं चेतः परितोषं कामम् इच्छां क्रोधं चेतोविकारं इमां एतच्छ्लोकोक्तां पूर्वश्लोकोक्तां च सृष्टिं चकार सृज्यत इति सृष्टिः कर्मणि क्तिन् इ
माः प्रजा वक्ष्यमाणा देवादिकाः कर्तुमिच्छन् २५ कर्मणां चेति धर्मो यज्ञादिः स च कर्तव्यः अधर्मो ब्रह्मवधादिः स न कर्तव्यः इति कर्मणां
विभागाय धर्माधर्मौ व्यवेचयत् पृथक्त्वेनाभ्यधात् धर्मस्य फलं सुखं अधर्मस्य फलं दुःखं धर्माधर्मफलभूतैर्द्वंद्वैः परस्परविरुद्धैः सुखदुः
खादिभिरिमाः प्रजा योजितवान् आदिग्रहणात् कामक्रोधरागद्वेषक्षुत्पिपासाशोकमोहादिभिः २६ अण्व्यो मात्रेति दशार्धानां पंचा
नां महाभूतानां याः सूक्ष्माः पंचतन्मात्ररूपा विनाशिन्यः पंचमहाभूतरूपतया विपरिणामिन्यः ताभिः सह उक्तं वक्ष्यमाणं चेदं सर्वमुत्पद्यते
अनुपूर्वशः क्रमेण सूक्ष्मात् स्थूलं स्थूलात् स्थूलतरमित्यनेन सर्वशक्तेर्ब्रह्मणो मानससृष्टिः कदाचित्तत्त्वनिरपेक्षा स्यादितीमां शंकामपनि
नीषन् तद्द्वारेणैवेयं सृष्टिरिति मध्ये पुनः पूर्वोक्तं स्मारितवान् २७ यं तु कर्मणीति स प्रजापतिर्यं जातिविशेषं व्याघ्रादिकं यस्यां क्रियायां ह

कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् द्वंद्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः २६ अण्व्यो मात्रा
विनाशिन्यो दशार्धानां तु याः स्मृताः ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः २७ यं तु कर्मणि यस्मिन्स न्य
युंक्त प्रथमं प्रभुः स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः २८ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते य
द्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत् २९

रिण मारणादिकायां सृष्ट्यादौ नियुक्तवान् स जातिविशेषः पुनः पुन
रपि सृज्यमानः स्वकर्मवशेन तदेवाचरितवान् एतेन प्राणिकर्मसापेक्षं प्रजापतेरुत्तमाधमजातिनिर्माणं न रागद्वेषाधीनमिति
दर्शितम् अत एव वक्ष्यति यथाकर्म तपोयोगात्सृष्टं स्थावरजंगममिति २८ एतदेव प्रपंचयति हिंस्राहिंस्रेत्यादि हिंस्रं कर्म
सिंहादेः करिमारणादिकं अहिंस्रं हरिणादेः मृदु दयाप्रधानं विप्रादेः क्रूरं क्षत्रियादेः धर्मो यथा ब्रह्मचार्यादेः गुरुशुश्रूषादिः अध
र्मो यथा तस्यैव मांसमैथुनसेवादिः ऋतं सत्यं तच्च प्रायेण देवानां अनृतमसत्यं तदपि प्रायेण मनुष्याणां तथा च श्रुतिः सत्यवाचो दे
वा अनृतवाचो मनुष्या इति तेषां मध्ये यत्कर्म स प्रजापतिः सर्गादौ यस्याधारयत् सृष्ट्युत्तरकालमपि स तदेव कर्म प्राक्तनादृष्टवशा
त् स्वयमेव भेजे २९

अत्र दृष्टांतमाह यथ    यथा वसंतादिऋतवऋतुचिन्हानि चूतमंजर्यादीनि ऋतुपर्यये स्वकार्यावसरे स्वयमेव माप्नुवंति तथा देहि-
नोपि हिंस्रादीनि कर्माणि ३० लोकानां त्विति भूलोकानां बाहुल्यार्थं मुखबाहूरुपादेभ्यो ब्राह्मणक्षत्रियवैश्यशूद्रान् यथाक्रमं निर्मित
वान् ब्राह्मणादिभिः सायंप्रातरग्नावाहुतिः प्रक्षिप्ता सूर्यमुपतिष्ठते सूर्याद्वृष्टिः वृष्टेरन्नमन्नात् प्रजा बाहुल्यं च स्यात् तच अग्नौ प्रास्ता
हुतिः सम्यगादित्यमित्यादि दैव्यान शक्त्या अथादित्यो ब्राह्मणादिनिर्माणं ब्राह्मणो न विशंकनीयः श्रुतिसिद्धत्वात् तथा च श्रुतिः ब्राह्मणो
स्य मुखमासीदित्यादि ३१ द्विधा कृत्वेति स ब्रह्मा निजदेहं द्विखंडं कृत्वा अर्द्धेन पुरुषो जातः अर्द्धेन स्त्री तस्यां मैथुनधर्मेण विराट्संज्ञं
पुरुषं निर्मितवान् श्रुतिश्च ततो विराडजायतेति ३२ तपस्तप्त्वेति स विराट् तपो विधाय यं निर्मितवान् तं मां मनुं जानीत अस्य सर्वस्य जगतः

यथर्त्तुलिंगान्यृतवः स्वयमेवर्त्तुपर्यये स्वानि स्वान्यभिपद्यंते तथा कर्माणि देहिनः ३० लोकानां तु विवृद्ध्यर्थं
मुखबाहूरुपादतः ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्त्तयत् ३१ द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोभवत्
अर्द्धेन नारी तस्यां स विराजमसृजत्प्रभुः ३२ तपस्तप्त्वासृजद्यं तु स स्वयं पुरुषो विराट् तं मां वित्तास्य सर्व-
स्यस्रष्टारं द्विजसत्तमाः ३३ अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् पतीन्प्रजानामसृजं महर्षीनादि
तो दश ३४ मरीचिमत्र्यंगिरसौ पुलस्त्यं पुलहं क्रतुम् प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ३५ एते मनूं
स्तु सप्तान्यानसृजन् भूरितेजसः देवान् देवनिकायांश्च महर्षींश्चामितौजसः ३६

स्रष्टारं भो द्विजसत्तमाः एतेन स्वजन्मोत्कर्षसामर्थ्यातिशयावभिहितवान् लोकानां प्रत्ययितप्रत्ययार्थम् ३३ अहमिति अहं प्रजाः स्र
ष्टुमिच्छन् सुदुश्चरं तपस्तप्त्वा दश प्रजापतीन् प्रथमं सृष्टवान् तैरपि प्रजानां सृज्यमानत्वात् ३४ मरीचिमित्यादि त एते दश प्रजापतयो
नामतो निर्दिष्टाः ३५ एते मनूंस्त्विति एते मरीच्यादयो दश भूरितेजसो बहुतेजसो अन्यान् सप्तापरिमिततेजस्कान् मनून् देवान् ब्रह्म
णा सृष्टान् देवनिवासस्थानानि स्वर्गादीन् महर्षींश्च सृष्टवंतः मनुशब्दोयमधिकारवाची चतुर्दशसु मन्वंतरेषु यस्य यत्र सर्गाद्यधिकारः
स एतस्मिन् मन्वंतरे स्वायंभुवस्वारोचिषादिनामभिर्मनुरिति व्यपदिश्यते ३६

यक्षरक्षइति एतेऽसृजन्निति पूर्वस्यैवात्रानुषंगः उत्तरत्रच श्लोकद्वयेन यक्षोवैश्रवणस्तदनुचराश्च रक्षांसि रावणादीनि पिशाचास्तेभ्यो ऽपकृष्टा अशुचिमरुदेशनिवासिनः गंधर्वाश्चित्ररथादयः अप्सरस उर्वश्यादयः असुरा विरोचनादयः नागा वासुक्यादयः सर्पास्ततोऽपकृष्टाः अलगर्दादयः सुपर्णा गरुडादयः पितृणामाज्यपादीनां गणः समूहः एषां च भेद इतिहासादिप्रसिद्धो नाध्यक्षादिगोचरः ३७ विद्युत इति मेघेषु दृश्यं दीर्घाकारं ज्योतिर्विद्युत् मेघादेव यज्ज्योतिर्वृक्षादिविनाशकं तदशनिः मेघाः प्रसिद्धाः रोहितं दंडाकारं नानावर्णं दिवि दृश्यते यज्ज्योतिस्तदेव वक्रमिंद्रधनुः उल्का रेखाकारमंतरिक्षात्पतज्ज्योतिर्निर्घातो भूम्यंतरिक्षगत उत्पातध्वनिः केतवः शिखावंति ज्योतींषि उत्पातरूपाणि अन्यानि ज्योतींषि ध्रुवागस्त्यादीनि नानाप्रकाराणि ३८ किन्नरानिति किन्नरा अश्वमुखादेवयोनयो नरविग्रहाः वानराः प्रसिद्धाः मत्स्या रोहितादयः विहंगमाः पक्षिणः पशवो गवाद्याः मृगा हरिणाद्याः व्यालाः सिंहाद्याः उभयतोदतः द्वे दंतपंक्ती येषां उत्त-

यक्षरक्षःपिशाचांश्च गंधर्वाप्सरसोऽसुरान् नागान्सर्पान्सुपर्णांश्च पितृणांच पृथग्गणान् ३७ विद्युतोऽशनिमेघांश्च रोहितेंद्रधनूंषि च उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च ३८ किन्नरान्वानरान्मत्स्यान्विविधांश्च विहंगमान् पशून्मृगान्मनुष्यांश्च व्यालांश्चोभयतोदतः ३९ कृमिकीटपतंगांश्च यूकामक्षिकमत्कुणम् सर्वं च दंशमशकं स्थावरं च पृथग्विधम् ४० एवमेतैरिदं सर्वं मन्नियोगान्महात्मभिः यथाकर्म तपोयोगात्सृष्टं स्थावरजंगमम् ४१ येषां तु यादृशं कर्म भूतानामिह कीर्तितम् तत्तथा वोऽभिधास्यामि क्रमयोगं च जन्मनि ४२

राधरे भवतः ३९ कृमिकीट इति कीटाः कृमिभ्यः किंचित्स्थूलाः पतंगाः शलभाः यूकादयः प्रसिद्धाः क्षुद्रजंतव इत्यनेन एकवद्भावः स्थावरं वृक्षलतादिभेदेन विविधप्रकारम् ४० एवमेतैरिति एवमित्युक्तप्रकारेण एतैर्मरीच्यादिभिरिदं सर्वं स्थावरजंगमं सृष्टम् यथाकर्म यस्य जंतोर्यादृशं कर्म तदनुरूपं तस्य देवमनुष्यतिर्यगादियोनिषूत्पादनं मन्नियोगान्मदाज्ञया तपोयोगान्महत्तपः कृत्वा सर्वमैश्वर्यं तपोऽधीनमिति दर्शितम् ४१ येषामित्यादि येषां पुनर्यादृशं कर्म इह संसारे पूर्वाचार्यैः कथितं यथौषध्यः फलपाकांता बहुपुष्पफलोपगाः ब्राह्मणादीनां चाध्ययनादि कर्म तत्तथैव वो युष्माकं वक्ष्यामि जन्मादिक्रमयोगं च ४२ ७

प. जरायुर्गर्भावरणचर्मतत्रमनुष्यादयः प्रादुर्भवंतिपश्चान्मुक्ताजायंतेएषामेवजन्मक्रमः प्रागुक्तोविवृतः दंतशब्दसमा
नार्थोदच्छब्दः प्रकृत्यंतरमस्तितस्येदंप्रथमाबहुवचनेरूपंउभयतोदतइति ४३ अंडजाः पक्षिणइति अंडआदौसंभवंतिततो-
जायंतइतिएषांजन्मक्रमः नक्रःकुंभीरःस्थलजानिकृकलासादीनिऔदकानिशंखादीनि ४४ स्वेदजमिति स्वेदःपार्थिवद्रव्याणां
तापेनक्लेदः ततोदंशमशकादिर्जायते ऊष्मणश्चस्वेदहेतुतापादपिअन्यत् दंशादिसदृशंपुत्तिकापिपीलिकादिजायते ४५ उ
द्भिज्जाइति उद्भेदनमुद्भित् भावेक्विप्ततोजायंतेऊर्ध्वबीजंभूमिंचाभित्त्वेत्युद्भिज्जावृक्षाः तेचद्विधाः केचिद्बीजादेवजायंतेकेचित्कांडात्
शाखाएवरोपितावृक्षतांयांति इदानींयेषांयादृशंकर्मतदुच्यते ओषध्यइति ओषध्योव्रीहियवादयःफलपाकेनैवनश्यंतिबहुपुष्प-

पशवश्चमृगाश्चैवव्यालाश्चोभयतोदतः रक्षांसिचपिशाचाश्चमनुष्याश्चजरायुजाः ४३ अंडजाःप
क्षिणःसर्पानक्रामत्स्याश्चकच्छपाः यानिचैवंप्रकाराणिस्थलजान्यौदकानिच ४४ स्वेदजंदंशमश
कंयूकामक्षिकमत्कुणम् ऊष्मणश्चोपजायंतेयच्चान्यत्किंचिदीदृशम् ४५ उद्भिज्जाःस्थावराःसर्वेबी
जकांडप्ररोहिणः ओषध्यःफलपाकांताबहुपुष्पफलोपगाः ४६ अपुष्पाःफलवंतोयेतेवनस्पतयः
स्मृताः पुष्पिणःफलिनश्चैववृक्षास्तूभयतःस्मृताः ४७ गुच्छगुल्मंतुविविधंतथैवतृणजातयः बी
जकांडरुहाण्येवप्रतानावल्ल्यएवच ४८

फलयुक्ताश्चभवंति ओषधिशब्दादेवकृदिकारादक्तिनइतिङीपादीर्घत्वेओष
ध्यइतिरूपम् ४६ अपुष्पाइति नास्यश्लोकस्याभिधानकोषवत् संज्ञासंज्ञिसंबंधिपरत्वमप्रकृतत्वात् किंतुक्रमयोगंचजन्मनीति
प्रकृतंतदर्थमिदमुच्यते येवनस्पतयस्तेषांपुष्पमंतरेणैवफलजन्मइतरेभ्यस्तुपुष्पाणिजायंतेतेभ्यःफलानीतिएवंवृक्षाउभय
रूपाःप्रथमांतात्तसि. ४७ गुच्छगुल्मंत्विति मूलतएवयत्रलतासमूहोभवतिनचप्रकांडानितेगुच्छामल्लिकादयःगुल्माएकमू
लाःसंघातजाताःशरेक्षुप्रभृतयः तृणजातयःउलपाद्याः प्रतानास्तंतुयुक्ताःत्रपुसालाबूप्रभृतयः वल्ल्योगुडूच्यादयःयाभूमेर्वृक्षमा
रोहंतिएतान्यपिबीजकांडरुहाणिनपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामितिनपुंसकत्वम् ४८

तमसेति एतेवृक्षादयस्तमोगुणेनविचित्रदुःखफलेनाधर्मकर्महेतुकेनव्याप्ताः अंतश्चैतन्या भवंति यद्यपि सर्वेषां तरेवचेतयंतेन तथापि बहि र्व्यापारादिकार्यविरहात्तथाव्यपदिश्यंते त्रिगुणारब्धत्वेपि चैषांतमोगुणबाहुल्यात्तथाव्यपदेशः अतएवसुखदुःखसमन्विताः सत्वस्यापिभा वात् कदाचित्सुखलेशोपिजलधरजनितजलसंपर्कादेषांजायते ४९ एतदंताइति स्थावरपर्यंताब्रह्मोपक्रमागतयउत्पत्तयः कथिताः भूता नां क्षेत्रज्ञानांजन्ममरणप्रबंधेदुःखबहुलतयाभीषणेसदाविनश्वरे ५० इत्थंसर्गमभिधायप्रलयदशामाह एवंसर्वमिति एवंउक्तप्रकारेण इदंसर्वंस्थावरजंगमंजगत्सृष्ट्वासप्रजापतिरचिंत्यशक्तिरात्मनिशरीरत्यागरूपंअंतर्धानंकृतवान् सृष्टिकालंप्रलयकालेननाशयन्प्राणिनां कर्मवशेनपुन पुनःसर्गप्रलयान्करोतीत्यर्थः ५१ अत्रहेतुमाह यदेति यदासप्रजापतिर्जागर्त्तिसृष्टिस्थितीइच्छतितदेदंजगत् श्वासप्रश्वा

तमसाबहुरूपेणवेष्टिताःकर्महेतुना अंतसंज्ञाभवंत्येतेसुखंदुःखसमन्विताः ४९ एतदंतास्तुगतयोब्र
ह्माद्याःसमुदाहृताः घोरेस्मिन्भूतसंसारेनित्यंसततयायिनि ५० एवंसर्वंससृष्ट्वेदंमांचाचिंत्यपराक्रमः
आत्मन्यंतर्दधेभूयःकालंकालेनपीडयन् ५१ यदासदेवोजागर्त्तितदेदंचेष्टतेजगत् यदास्वपितिशांतात्मा
तदासर्वंनिमीलति ५२ तस्मिन्स्वपितितुसुस्थेकर्मात्मानःशरीरिणः स्वकर्मभ्योनिवर्त्तंतेमनश्चग्लानिमृ
च्छति ५३ युगपत्तुप्रलीयंतेयदातस्मिन्महात्मनि तदायंसर्वभूतात्मासुखंस्वपितिनिर्वृतः ५४ तमोयंतु
समाश्रित्यचिरंतिष्ठतिसेंद्रियः नचस्वंकुरुतेकर्मतदोत्क्रामतिमूर्तितः ५५

साहारादिचेष्टांलभते यदास्वपितिनिवृत्तेच्छोभ वतिशांतात्माउपसंहारमना तदेदंजगत्प्रलीयते ५२ पूर्वोक्तमेवस्पष्टयति तस्मिन्स्वपतीति तस्मिन्प्रजापतौनिवृत्तेच्छेसुस्थेउपसंहृतदेहम नोव्यापारेकर्मलब्धदेहाःक्षेत्रज्ञाःस्वकर्मभ्योदेहग्रहणादिभ्योनिवर्त्तंतेमनःसर्वेंद्रियसहितंवृत्तिरहितंभवति ५३ इदानींमहाप्रलयमा ह युगपदिति एकस्मिन्नेवकालेयदातस्मिन्परमात्मनिसर्वभूतानिप्रलयंयांतितदायंसर्वभूतानामात्मानिर्वृतःनिवृत्तजाग्रत्स्वप्नव्यापारः सुखंस्वपितिसुषुप्तइवभवति यद्यपिनित्यज्ञानानंदस्वरूपेपरमात्मनिनसुषुप्तिः तथापिजीवधर्मोयमुपचर्यते ५४ इदानींप्रलयप्रसंगे नजीवस्योत्क्रमणमपिश्लोकद्वयेनाह तमोयमिति अयंजीवस्तमोज्ञाननिवृत्तिंप्राप्यबहुकालमिंद्रियादिसहितस्तिष्ठतिनचात्मीयंकर्म

श्वासमश्वासादिकंकरोतितदामूर्त्तिनः पूर्वदेहादुत्क्रामतिअन्यत्रगच्छतिलिंगशरीरावच्छिन्नस्यजीवस्यउत्क्रमात्तत्क्रमनमप्युपपद्यते तथाचोक्तंबृहदारण्यके तमुत्क्रामंतंप्राणोऽनूत्क्रामतिप्राणमनूत्क्रामंतंसर्वेप्राणा अनूत्क्रामंति प्राणाइंद्रियाणि ५५ कदादेहांतरंगृण्हातीत्यत्रआह यदाणुमात्रिकइति अणवोमात्राःपुर्यष्टकरूपायस्यसोऽणुमात्रिकः पुर्यष्टकशब्देनभूतादीन्यष्टावुच्यंते तदुक्तंसनंदेन भूतेंद्रियमनोबुद्धिवासनाकर्मवायवः अविद्याचाष्टकंप्रोक्तंपुर्यष्टमृषिसत्तमैः ब्रह्मपुराणेप्युक्तम् पुर्यष्टकेनलिंगेनप्राणाद्येनससुज्यते तेनबद्धस्यवैबंधोमोक्षोमुक्तस्यतेनतु यदाणुमात्रिकोभूत्वासंपद्यस्थास्नुवृक्षादिहेतुभूतंचरिष्णुमानुषादिकारणंबीजंप्रविशत्यधितिष्ठतितदासंसृष्टःपुर्यष्टकयुक्तोमूर्त्तिस्थूलदेहांतरंकर्मानुरूपंविमुंचतिगृण्हाति ५६ प्रासंगिकंजीवस्योत्क्रमणमभिधायप्रकृतमुपसंहरति एवंसजाग्रत्स्वप्नाभ्यामिति सब्रह्माअनेनप्रकारेणस्वीयजाग्रत्स्वप्नाभ्यामिदंस्थावरजंगमंसंजीवयतिमारयतिचाजस्रंसततंअ

यदाणुमात्रिकोभूत्वाबीजंस्थास्नुचरिष्णुच समाविशतिसंसृष्टस्तदामूर्त्तिंविमुंचति ५६ एवंसजाग्रत्स्वप्नाभ्यामिदंसर्वंचराचरम् संजीवयतिचाजस्रंप्रमापयतिचाव्ययः ५७ इदंशास्त्रंतु कृत्वासौमामेवस्वयमादितः विधिवद्ग्राहयामासमरीच्यादींस्त्वहंमुनीन् ५८ एतद्वोयंभृगुःशास्त्रंश्रावयिष्यत्यशेषतः एतद्धिमत्तोऽधिजगेसर्वमेषोऽखिलंमुनिः ५९

विनाशीअव्ययः ५७ इदंशास्त्रमिति असौब्रह्माइदंशास्त्रंकृत्वासृष्ट्यादौमामेवविधिवच्छास्त्रोक्तांगजातानुष्ठानेनाध्यापितवान् अहंतुमरीच्यादीनध्यापितवान् ननुब्रह्मकृतत्वेऽस्यशास्त्रस्यकथंमानवव्यपदेशः अत्रमेधातिथिः शास्त्रशब्देनशास्त्रार्थोविधिनिषेधसमूहउच्यते तंब्रह्मामनुंग्राहयामासमनुस्तुतत्प्रतिपादकंग्रंथंकृतवानितिनविरोधः अन्येतुब्रह्मकृतत्वेप्यस्यमनुनाप्रथमंमरीच्यादिभ्यःस्वरूपतोऽर्थतश्चप्रकाशितत्वान्मानवव्यपदेशः वेदापौरुषेयत्वेपिकाठकादिव्यपदेशवत् इदंतूच्यते ब्रह्मणाशतसाहस्रमिदंधर्मशास्त्रंकृत्वामनुरध्यापितआसीत्ततस्तेनचस्ववचनेनसंक्षिप्यशिष्येभ्यःप्रतिपादितमित्यविरोधः तथाचनारदःशतसाहस्रोयंग्रंथइतिस्मरतिस्म ५८ एतद्वोयमित्यादि एतच्छास्त्रमयंभृगुःयुष्माकमखिलंकथयिष्यतियस्मादेषोऽशेषमेतन्मत्तोधीतवान् ५९

ततस्तथेति सभृगुर्मनुनातथोक्तोऽयंश्रावयिष्यतीतियस्मादेषोऽधिजगद्स्कृतः ततोऽनंतरमनेकमुनिसन्निधौगुरुसंभावनयाप्रीतमनास्तानृषीन्प्रत्युवाचश्रूयतामिति ६० स्वायंभुवस्येति ब्रह्मपुत्रस्यास्यमनोः षड्वंशप्रभवा अन्येमनवः एवंकार्यकारिणः स्वस्वकाले सृष्टिपालनादावधिकृताः स्वाःस्वाःप्रजाउत्पादितवंतः ६१ स्वारोचिषश्चेति एतेप्रभेदेनमनवःषट्नामतोनिर्दिष्टाः ६२ स्वायंभुवेति स्वायंभुवसुखाःससप्तमीमनवःस्वीयस्वीयाधिकारकालेइदंस्थावरजंगमसुत्पाद्यपालितवंतः ६३ इदानीमुक्तमन्वंतरसृष्टिप्रलयादिकालपरिमाणपरिज्ञानायाह निमेषादशचाष्टौचेति अक्षिपक्ष्मणोःस्वाभाविकस्यउन्मेषस्यसहकारीनिमेषः तेऽष्टादशकाष्ठानामकालः त्रिंशच्चकाष्ठाःकलासंज्ञकः त्रिंशत्कलाः मुहूर्ताख्यःकालः तावत्त्रिंशन्मुहूर्तान् अहोरात्रंकालंविद्यात् तावतइतिद्वितीयानिर्देशात्

ततस्तथासतेनोक्तोमहर्षिर्मनुनाभृगुः तानब्रवीदृषीन्सर्वान्प्रीतात्माश्रूयतामिति ६० स्वायंभुवस्यास्यमनोःषड्वंश्यामनवोपरे सृष्टवंतःप्रजाःस्वाःस्वामहात्मानोमहौजसः ६१ स्वारोचिषश्चोत्तमश्चतामसोरैवतस्तथा चाक्षुषश्चमहातेजाविवस्वत्सुतएवच ६२ स्वायंभुवाद्याःसप्तैतेमनवोभूरितेजसः स्वेस्वेंतरेसर्वमिदमुत्पाद्यापुश्चराचरम् ६३ निमेषादशचाष्टौचकाष्ठात्रिंशत्तुताःकला त्रिंशत्कलामुहूर्तःस्यादहोरात्रंतुतावतः ६४ अहोरात्रेविभजतेसूर्योमानुषदैविके रात्रिःस्वप्नायभूतानांचेष्टायैकर्मणामहः ६५ पित्र्येरात्र्यहनीमासःप्रविभागस्तुपक्षयोः कर्मचेष्टास्वहःकृष्णःशुक्लःस्वप्नायशर्वरी ६६ दैवेरात्र्यहनीवर्षंप्रविभागस्तयोःपुनः अहस्तत्रोदगयनंरात्रिःस्याद्दक्षिणायनम् ६७

त्रियादित्यध्याहारः ६४ अहोरात्रेइति मानुषदैवसंबंधिनोदिनरात्रिकालावादित्यः पृथक्करोति तयोर्मध्येभूतानांस्वप्नार्थंरात्रिर्भवति कर्मानुष्ठानार्थंचदिनम् ६५ पित्र्येइति मानुषाणांमासः पितृणामहोरात्रेभवतः तत्रपक्षद्वयेनविभागः कर्मानुष्ठानाय पूर्वपक्षोऽहःस्वापार्थंशुक्लपक्षोरात्रिः ६६ दैवेरात्र्यहनीवर्षमिति मानुषाणांवर्षं देवानांरात्रिदिनेभवतः तयोरप्ययंविभागः नराणामुदगयनंदेवानामहः तत्प्रायेणदैवकर्मणामनुष्ठानंदक्षिणायनंतुरात्रिः ६७ ७ ७ ७

ब्राह्मस्येति ब्रह्मणोऽहोरात्रस्य यत्परिमाणं प्रत्येकं युगानां च कृतादीनां तत् क्रमेण समासतः संक्षेपतः शृणुत प्रकृतेऽपि कालविभागे ब्रह्म
णोऽहोरात्रस्य पृथक्प्रतिज्ञानं तत्तदीयज्ञानस्य पुण्यफलज्ञानार्थं वक्ष्यति च ब्राह्मं पुण्यमहर्विदुरिति तद्वेदनात्पुण्यं भवतीत्यर्थः ६८
चत्वार्याहुरिति चत्वारि वर्षसहस्राणि कृतयुगकालं मन्वादयो वदंति तस्य तावद्वर्षशतानि संध्या संध्यांशश्च भवति युगस्य पूर्वसंध्या उत्त
रश्च संध्यांशः तदुक्तं विष्णुपुराणे तत्प्रमाणैः शतैः संध्या पूर्वा तत्राभिधीयते संध्यांशकश्च तत्तुल्यो युगस्यानंतरो हि यः संध्यासंध्यांशयो
रंतर्यः कालो मुनिसत्तम युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञकः वर्षसंख्या चेयं दिव्यमानेन तस्यैवानंतरप्रकृतत्वात् दिव्यैर्वर्षसहस्रै
स्तु कृतत्रेतादिसंज्ञितम् चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे इति विष्णुपुराणवचनाच्च ६९ इतरेष्विति अन्येषु त्रेताद्वापरकलियुगे
संध्यासंध्यांशसहितेषु एकहान्या सहस्राणि शतानि च भवंति तेनेयं संपद्यते त्रीणि वर्षसहस्राणि त्रेतायुगं तस्य त्रीणि वर्षशतानि सं

ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः एकैकशो युगानां तु क्रमशस्तन्निबोधत ६८ चत्वार्याहुः सह-
स्राणि वर्षाणां तु कृतं युगम् तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ६९ इतरेषु ससंध्येषु ससंध्यां-
शेषु च त्रिषु एकापायेन वर्त्तन्ते सहस्राणि शतानि च ७० यदेतत्परिसंख्यातमादावेव चतुर्युगम् एतद्द्वा
दशसाहस्रं देवानां युगमुच्यते ७१ दैविकानां युगानां तु सहस्रं परिसंख्यया ब्राह्ममेकमहर्ज्ञेयं तावतीं
रात्रिमेव च ७२ तद्वै युगसहस्रांतं ब्राह्मं पुण्यमहर्विदुः रात्रिं च तावतीमेव तेऽहोरात्रविदो जनाः ७३

ध्यांशश्च एवं द्वे वर्षसहस्रे द्वापरः तस्य द्वे वर्षशते संध्यासंध्यांशश्च एवं वर्षसहस्रं कलिः तस्यैकवर्षशतं संध्यासंध्यांशश्च ७० यदेतदि-
ति एतस्य श्लोकस्यादौ पदेन मानुषं चतुर्युगं परिगणितं एतद्देवानां युगमुच्यते चतुर्युगशब्देन संध्यासंध्यांशयोरप्राप्तिशंकायामाह
एतद्द्वादशसाहस्रमिति स्वार्थेऽण् चतुर्युगैरेव द्वादशसंख्यैर्दिव्यं युगमिति तु मेधातिथेर्भ्रमो नादर्त्तव्यः मनुनानंतरं दिव्ययुगस
ब्रह्माहस्याप्यभिधानात् विष्णुपुराणे च मानुषचतुर्युगसहस्रेण ब्रह्माहकीर्त्तनान्मानुषचतुर्युगेनैव दिव्ययुगानुगमनात् तथा च वि-
ष्णुपुराणम् कृतत्रेताद्वापरं च कलिश्चेति चतुर्युगम् प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिवसो मुने ७१ दैविकानामिति देवयुगानां सहस्रं ब्राह्म
दिनं ज्ञातव्यं सहस्रमेव रात्रिः परिसंख्ययेति श्लोकपूरणोऽर्थानुवादः ७२ तद्वै युगेति युगसहस्रेणांतः समाप्तिर्यस्य तद्ब्राह्ममहस्तत्परिमा

णांनराभिंयेजानंतिते ऽहोरात्रज्ञाइतिस्तुतिरियंस्तुत्यान्चब्राह्ममहोरात्रंज्ञातव्यमितिविधिः परिकल्पतेअतएवतत्पुण्यहेतुत्वात्पुण्यमितिविशेषणंकृतम् ७३ तस्येति सब्रह्मातस्यपूर्वोक्तस्यस्वीयाहोरात्रस्यसमाप्तौप्रतिबुद्धोभवतिप्रतिबुद्धश्चस्वीयंमनःसृजतिभूर्लोकादित्रयस्रष्टयेनियुंक्तेनतुजनयतितस्यमहाप्रलयानंतरंजातत्वात् अनष्टत्वाच्च अवांतरप्रलयेभूर्लोकादित्रयमात्रनाशात् सृष्ट्यर्थमनोनियुक्तिरेवमनःसृष्टिः तथाचपुराणेश्रूयते मनःसिसृक्षयायुक्तंसर्गायनिदधेपुनरिति अथवामनःशब्दोयंमहत्तत्त्वपरएवयद्यपितन्महाप्रलयानंतरमुत्पन्नंमहांतमेवचेत्यादिनासृष्टिरपितस्योक्तातथाप्यनुक्तंभूतानामुत्पत्तिक्रमंतद्गुणांश्चकथयितुंमहाप्रलयानंतरितामेवमहदादिसृष्टिंभूतसृष्टिंचहिरण्यगर्भस्यापिपरमार्थत्वात्तत्कर्तृतामनुवदतिएतेनेदमुक्तंभवतिब्रह्मामहाप्रलयानंतरितसृष्ट्यादौपरमात्मरूपेणमहदादितत्त्वानिजगत्सृष्ट्यर्थंसृजति अतएवशेषेवक्ष्यतिइत्येषासृष्टिरादितइति अवांतरप्रलयानंतरंतुमनःप्रभृतिसृष्टावभिधानक्रमेणैवमाथ

तस्यसोहर्निशस्यांतेप्रसुप्तः प्रतिबुध्यते प्रतिबुद्धश्चसृजतिमनःसदसदात्मकम् ७४ मनःसृष्टिंविकुरुतेचोद्यमानंसिसृक्षया आकाशंजायतेतस्मात्तस्यशब्दंगुणंविदुः ७५ आकाशात्तुविकुर्वाणात्सर्वगंधवहःशुचिः बलवान्जायतेवायुःसवैस्पर्शगुणोमतः ७६ वायोरपिविकुर्वाणाद्विरोचिष्णुतमोनुदम् ज्योतिरुत्पद्यतेभास्वत्तद्रूपगुणमुच्यते ७७ ज्योतिषश्चविकुर्वाणादापोरसगुणाःस्मृताः अद्भ्योगंधगुणाभूमिरित्येषासृष्टिरादितः ७८ यत्प्राक्द्वादशसाहस्रमुदितंदैविकंयुगम् तदेकसप्ततिगुणंमन्वंतरमिहोच्यते ७९

त्यभाभूमिरित्येषासृष्टिरादितइतिनिष्प्रयोजनोनुवादःस्यात् ७४ मनःसृष्टमिति मनोमहान्सृष्टिंकरोतिपरमात्मनःस्रष्टुमिच्छयाप्रेर्यमाणंतस्मादाकाशमुत्पद्यतेतच्चपूर्वोक्तानुसारादहंकारतन्मात्रक्रमेणाकाशस्यशब्दंगुणंविदुर्मन्वादयः ७५ आकाशादिति आकाशात्तुविकारजनकात्सुरभ्यसुरभिगंधवहःपवित्रोबलवांश्चवायुरुत्पद्यतेसचस्पर्शाख्यगुणवान्मन्वादीनांसंमतः ७६ वायोरपीति वायोरपितेजउत्पद्यतेविरोचिष्णुपरप्रकाशकंतमोनाशनंभास्वत्प्रकाशकंतच्चगुणरूपमभिधीयते ७७ ज्योतिषश्चेति तेजसआपउत्पद्यंतेताश्चरसगुणयुक्ताअद्भ्योगंधगुणयुक्ताभूमिरित्येषामहाप्रलयानंतरसृष्टादौभूतसृष्टिः तैरेवभूतैरवांतरप्रलयानंतरमपिभूरादिलोकत्रयनिर्माणम् ७८ यत्प्रागिति यत्सू

र्वद्वादशवर्षसहस्रपरिमाणंसंध्यासंध्यांशसहितंमनुष्याणांचतुर्युगंदेवानामेकंयुगमुक्तंतदेकसप्ततिगुणितंमन्वंतराख्यःकालइहशा
स्त्रेऽभिधीयते तत्रैकस्यमनोःसर्गाद्यधिकारः ७९ मन्वंतराणीति यद्यपिचतुर्दशमन्वंतराणिपुराणेषुपरिगण्यंतेतथापिसर्गप्रलया
नामानंत्यात् असंख्यानिआवृत्त्यासर्गःसंहारश्चासंख्यःएतत्सर्वंक्रीडन्निवप्रजापतिःपुनःपुनः कुरुतेस्वस्वार्थोहिप्रवृत्तिःक्रीडातस्यचा
प्तकामत्वान्नस्वार्थेतिइवशब्दःप्रयुक्तःपरमेस्थानेऽनावृत्तलक्षणेतिष्ठतीतिपरमेष्ठीप्रयोजनंविनापरमात्मनःसृष्ट्यादौकथंप्रवृत्तिरि
तिचेत् लीलयैवएवंस्वभावत्वादित्यर्थःव्याख्यातुरिवकरताडनादौतथाचशारीरकसूत्रंलोकवत्तुलीलाकैवल्यम् ८० चतुष्पात्सकलोधर्मइ
ति सत्ययुगेसकलोधर्मश्चतुष्पात्सर्वांगसंपूर्णआसीत् धर्ममुख्यपादासंभवात् वृषोहिभगवान्धर्मइत्याद्यागमेवृषत्वेनकीर्तनात्तस्यपादच
तुष्टयेनसंपूर्णत्वात्सत्ययुगेपिधर्मिणांसर्वैरंगैःसमग्रत्वात्संपूर्णत्वपरोयंचतुष्पाच्छब्दःअथवातपःपरमित्यत्रमनुनैवतपोज्ञानयज्ञदानानां-

मन्वंतराण्यसंख्यानिसर्गःसंहारएवच क्रीडन्निवैतत्कुरुतेपरमेष्ठीपुनःपुनः ८० चतुष्पात्सकलोधर्मःसत्यं
चैवकृतेयुगे नाधर्मेणागमःकश्चिन्मनुष्यान्प्रतिवर्त्तते ८१ इतरेष्वागमाद्धर्मःपादशस्त्ववरोपितः चौरिका
नृतमायाभिर्धर्मश्चापैतिपादशः ८२ अरोगाःसर्वसिद्धार्थाश्चतुर्वर्षशतायुषः कृतेत्रेतादिषुह्येषामायुर्ह्रसति
पादशः ८३

चतुर्णांकीर्त्तनात् तस्यपादचतुष्टयेनसंपूर्णत्वात्पादत्वेननिरूपिताःसत्ययुगेसमग्राइत्यर्थः तथासत्यंचकृतयुगमासीत्स
कलधर्मश्रेष्ठत्वात्सत्यस्यपृथक्ग्रहणंतथानशास्त्रातिक्रमेणधनविद्यादेरागमउत्पत्तिर्मनुष्यान्प्रतिसंपद्यते ८१ इतरेष्विति सत्ययुगादन्येषु
त्रेतादिषु आगमात् अधर्मेणधनविद्यादेरर्जनात् तस्यैवपूर्वश्लोकेप्रकृतत्वात् आगमाद्वेदादितिगोविंदराजोमेधातिथिश्च धर्मोयागा-
दियथाक्रमंप्रतियुगंपादंपादमवरोपितोहीनःकृतः तथाधनविद्यार्जितोपियोधर्मःप्रचरतिसोपिचौर्यसत्यच्छद्मभिःप्रतियुगंपादशोन्हासा
दपगच्छतित्रेतादियुगेषुसहचौरिकानृतच्छद्मनांयथासंख्यंसर्वत्रसर्वेषांदर्शनात् ८२ अरोगाइति रोगनिमित्ताधर्माभावादरोगाःसर्वसिद्ध
ार्थ्यफलाःप्रतिबंधकाधर्माभावाच्चतुर्वर्षशतायुषःचस्वाभाविकमधिकायुःप्रापकधर्मवशादधिकायुषोपिभवंतितेनदशवर्षसहस्राणिरा
ज्यमकारयदित्याद्यविरोधः शतायुर्वैपुरुषइत्यादिश्रुतौतुशतशब्दोबहुत्वपरःकलिपरोवाएवंरूपामनुष्याःकृतेभवंतित्रेतादिषुपुनःपा

दंपादमायुरत्वं भवतीति ८३ वेदोक्तमायुरिति शतायुर्वैपुरुषइत्यादिवेदोक्तमायुः कर्मणांचकाम्यानांफलविषयाःप्रार्थनाब्राह्मणादीनांचशा पानुग्रहसमत्वादिप्रभावायुगानुरूपेण फलंति ८४ अन्यइति कृतयुगेन्येधर्माभवंतित्रेतादिष्वपियुगापचयानुरूपेणाधर्मवैलक्षण्यम् ८५ तपःपरमिति यद्यपितपःप्रभृतीनिसर्वाणिसर्वयुगेष्वनुष्ठेयानितथापिसत्ययुगेतपःप्रधानमहाफलमितिज्ञाप्यते एवमात्मज्ञानंत्रेतायु गेद्वापरेयज्ञः दानंकलौ ८६ सर्वस्यास्येति सब्रह्मामहातेजाअस्यसर्गस्यसमग्रस्याग्नौप्रस्ताहुतिरितिन्यायेनरक्षार्थंमुखादिजातानांब्राह्मणा दीनांविभागेनकर्माणिदृष्टादृष्टार्थानिनिर्मितवान् ८७ अध्यापनमिति अध्यापनादीनामिहसृष्टिप्रकरणेसृष्टिविशेषतयाभिधानंविधिस्ते षामुत्तरत्रभविष्यति अध्यापनादीनिषट्कर्माणिब्राह्मणानांकल्पितवान् ८८ प्रजानामिति प्रजारक्षणादीनिक्षत्रियस्यकर्माणिकल्पितवा

वेदोक्तमायुर्मर्त्यानामाशिषश्चैवकर्मणाम्। फलंत्यनुयुगंलोकेप्रभावश्चशरीरिणाम् ८४ अन्येकृतयुगेध र्मास्त्रेतायांद्वापरेपरे अन्येकलियुगेनृणांयुगह्रासानुरूपतः ८५ तपःपरंकृतयुगेत्रेतायांज्ञानमुच्यते द्वा परेयज्ञमेवाहुर्दानमेकंकलौयुगे ८६ सर्वस्यास्यतुसर्गस्यगुप्त्यर्थंसमहाद्युतिः मुखबाहूरुपज्जानांपृथक् कर्माण्यकल्पयत् ८७ अध्यापनमध्ययनंयजनंयाजनंतथा दानंप्रतिग्रहंचैवब्राह्मणानामकल्पयत् ८८ प्रजानांरक्षणंदानमिज्याध्ययनमेवच विषयेष्वप्रसक्तिश्चक्षत्रियस्यसमासतः ८९ पशूनांरक्षणंदान मिज्याध्ययनमेवच वणिक्पथंकुसीदंचवैश्यस्यकृषिमेवच ९० एकमेवतुशूद्रस्यप्रभुःकर्मसमादिशत् एतेषामेववर्णानांशुश्रूषामनसूयया ९१

—न् विषयेषुगीतनृत्यवनितोपभोगादिष्वप्रसक्तिस्तेषांपुनःपुनरासेवनंसमास तः संक्षेपेण ८९ पशूनामिति पशूनांपालनादीनिवैश्यस्यकल्पितवान् वणिक्पथंस्थलजलादिनावाणिज्यंकुसीदंवृद्ध्याधनप्रयोगः ९० एकमेवत्विति प्रभुर्ब्रह्माशूद्रस्यब्राह्मणादिवर्णत्रयपरिचर्यात्मकंकर्मनिर्मितवान् एकमेवेतिप्राधान्यप्रदर्शनार्थंदानादेरपितस्य विहितत्वात् अनसूययागुणानिंदया ९१ इदानींप्राधान्येनसर्गरक्षार्थत्वाद्ब्राह्मणस्यतदुपक्रमधर्माभिधानत्वाच्चास्यशास्त्रस्य ब्राह्मणस्यस्तुतिमाह ऊर्ध्वमिति सर्वतएवपुरुषोमेध्यःनाभेरूर्ध्वमतिशयेनमेध्यःततोपिमुखमस्यमेध्यतमंब्रह्मणोक्तम् ९२

ततः किमतआह उत्तमांगोद्भवादिति उत्तमांगंमुखंतदुद्भवत्वात् क्षत्रियादिभ्यः पूर्वोत्पन्नत्वादध्यापनव्याख्यानादिनाशुक्रस्यातिशये नवेदधारणात् सर्वस्यास्यजगतोधर्मानुशासनेनब्राह्मणप्रभुः संस्कारस्यविशेषात्तुवर्णानांब्राह्मणःप्रभुः ९३ कस्योत्तमांगादयमुद्भूतइत्यतआह तंहिस्वयंभूरिति तंब्राह्मणंब्रह्माआत्मीयमुखात् दैवपित्र्ये हविःकव्येवहनायतपःकृत्वासर्वस्यजगतोरक्षायैच क्षत्रियादिभ्यःप्रथमंसृष्टवान् ९४ पूर्वोक्तहव्यकव्यवहनंस्पष्टयति यस्यास्येनेति यस्यविप्रस्यमुखेनश्राद्धादौसर्वदादेवाहव्यानिपितरश्चकव्यानिभुंजतेततोन्यत्प्रकृष्टतमंभूतंकिंभवेत् ९५ भूतानामिति भूताख्यानांस्थावरजंगमानांमध्येप्राणिनःकीटादयःश्रेष्ठाःकदाचित्सुखलेशात्तेषामपिबुद्धिजीविनःसार्थनिरर्थदेशोपसर्पणापसर्पणकारिणःपश्वादयःतेभ्योपिमनुष्याःप्रकृष्टज्ञानसंबंधात्

ऊर्द्ध्वंनाभेर्मेध्यतरःपुरुषःपरिकीर्त्तितः तस्मान्मेध्यतमंत्वस्यमुखमुक्तंस्वयंभुवा ९२ उत्तमांगोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैवधारणात् सर्वस्यैवास्यसर्गस्यधर्मतोब्राह्मणःप्रभुः ९३ तंहिस्वयंभूःस्वादास्यात्तपस्तप्त्वादितोऽसृजत् हव्यकव्याभिवाह्यायसर्वस्यास्यचगुप्तये ९४ यस्यास्येनसदाश्नंति हव्यानित्रिदिवौकसः कव्यानिचैवपितरःकिंभूतमधिकंततः ९५ भूतानांप्राणिनःश्रेष्ठाःप्राणिनांबुद्धिजीविनः बुद्धिमत्सुनराःश्रेष्ठानरेषुब्राह्मणाःस्मृताः ९६ ब्राह्मणेषुचविद्वांसोविद्वत्सुकृतबुद्धयः कृतबुद्धिषुकर्त्तारःकर्तृषुब्रह्मवेदिनः ९७ उत्पत्तिरेवविप्रस्यमूर्तिर्धर्मस्यशाश्वती सहिधर्मार्थमुत्पन्नोब्रह्मभूयायकल्पते ९८ ब्राह्मणोजायमानोहिपृथिव्यामधिजायते ईश्वरःसर्वभूतानांधर्मकोशस्यगुप्तये ९९

तेभ्योपिब्राह्मणाःसर्वपूज्यत्वात् अपवर्गाधिकारयोग्यत्वाच्च ९६ ब्राह्मणेषुचेति ब्राह्मणेषुतुमध्येविद्वांसोमहाफलज्योतिष्टोमादिकर्माधिकारित्वात्तेभ्योपिकृतबुद्धयः अनागतेऽपिकृतंमयेतिबुद्धिर्येषांशास्त्रोक्तानुष्ठानेष्वुत्पन्नकर्त्तव्यताबुद्धयइत्यर्थः तेभ्योपिअनुष्ठातारः हिताहितप्राप्तिपरिहारभागित्वात्तेभ्योपिब्रह्मविदःमोक्षलाभात् ९७ उत्पत्तिरेवेति ब्राह्मणदेहजन्ममात्रमेवधर्मस्यशरीरमविनाशियस्मादसौधर्मार्थंजातःधर्मानुगृहीतात्मज्ञानेनमोक्षायसंपद्यते ९८ ब्राह्मणइति यस्माद्ब्राह्मणोजायमानःपृथिव्यामधिउपरिभवतिश्रेष्ठइत्यर्थःसर्वभूतानांधर्मसमूहरक्षायै

प्रभुः ब्राह्मणोपदिष्टत्वात्सर्वधर्माणाम् ९९ सर्वस्वमिति यत्किंचिज्जगद्वर्त्तिधनं तद्ब्राह्मणस्य स्वमिति स्तुत्योच्यते स्वमिव स्वं न तु स्वमेव ब्रा
ह्मणस्यापि मनुना स्तेयस्य वक्ष्यमाणत्वात् तस्माद्ब्रह्ममुखोद्भवत्वेनाभिजनेन श्रेष्ठतया सर्वं ब्राह्मणोऽर्हतीति सर्वग्रहणयोग्यो भवत्येव वै अवधार
णे १०० स्वमेवेति यत्परस्याप्यन्नं ब्राह्मणो भुंक्ते परस्य च वस्त्रं परिधत्ते परस्य गृहीत्वान्यस्मै ददाति तदपि ब्राह्मणस्य स्वमिव पूर्ववत्स्तुतिः एवं सति
ब्राह्मणस्य कारुण्यादन्ये भोजनादि कुर्वंति १०१ इदानीं प्रकृष्टब्राह्मणकर्माभिधायकतया शास्त्रप्रशंसां प्रक्रमते तस्य कर्मविवेकार्थमिति
ब्राह्मणस्य कर्मज्ञानार्थं शेषाणां क्षत्रियादीनां च स्वायंभुवो ब्रह्मपुत्रो धीमान् सर्वविषयज्ञानवान् मनुरिदं शास्त्रं विरचितवान् १०२ विदुषेति
एतच्छास्त्राध्ययनफलज्ञेन ब्राह्मणेन एतस्य व्याख्यानाध्यापनोचितप्रयत्नतोऽध्ययनं कर्त्तव्यं शिष्येभ्यश्चेदं व्याख्यातव्यं नान्येन क्षत्रियादि

सर्वं स्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम् श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति १०० स्वमेव ब्राह्मणो भुं
क्ते स्वं वस्ते स्वं ददाति च आनृशंस्याद्ब्राह्मणस्य भुंजते हीतरे जनाः १०१ तस्य कर्मविवेकार्थं शेषाणामनुपूर्व
शः स्वायंभुवो मनुर्धीमानिदं शास्त्रमकल्पयत् १०२ विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः शिष्येभ्यश्च प्र
वक्तव्यं सम्यङ्नान्येन केनचित् १०३ इदं शास्त्रमधीयानो ब्राह्मणः संशितव्रतः मनोवाग्देहजैर्नित्यं कर्म-
दोषैर्न लिप्यते १०४ पुनाति पंक्तिं वंश्यांश्च सप्त सप्त परावरान् पृथिवीमपि चैवेमां कृत्स्नामेकोऽपि सोऽर्हति
१०५ इदं स्वस्त्ययनं श्रेष्ठमिदं बुद्धिविवर्द्धनम् इदं यशस्यमायुष्यमिदं निःश्रेयसं परम् १०६

ना अध्ययनमात्रं तु व्याख्यानाध्यापनरहितं क्षत्रियवैश्ययोरपि निषेकादिः श्मशानांते इत्यादिना विधास्यते अनुवादमात्रमेतदिति मेधाति
थिमतं तन्न मनोहरं द्विजैरध्ययनं ब्राह्मणेनैवाध्यापनव्याख्याने इत्यस्यालाभात् यत्तु अधीयीरंस्त्रयो वर्णा इत्यादि तद्देदविषयमिति च स्य-
ति विप्रेणैवाध्यापनमिति विधानेन संभवत्यपि अनुवादत्वमस्येति वृथा मेधातिथेराग्रहः १०३ इदं शास्त्रमिति इदं शास्त्रं पठन्नेतदीयमर्थं ज्ञा-
त्वा शंसितव्रतोऽनुष्ठितव्रतः मनोवाक्कायसंभवैः पापैर्न संबध्यते १०४ पुनातीति इदं शास्त्रमधीयान इत्यनुवर्त्तते अपांक्त्योपहतां पंक्तिमा
नुपूर्व्या निविष्टजनसमूहं पवित्रीकरोति वंशभवांश्च सप्त परान्पित्रादीन् अवरांश्च पुत्रादीन् पृथिवीमपि सर्वां सकलधर्मज्ञतया पात्रत्वेन गृहीतुं
योग्यो भवति १०५ इदमिति अभिप्रेतार्थस्याविनाशः स्वस्ति तस्यापनं प्रापकं एतच्छास्त्रस्याध्ययनं स्वस्त्ययनं जपहोमादिबोधकत्वाच्च श्रेष्ठं-

स्वस्त्ययनांतरात्मकृष्टं बुद्धिविवर्द्धनमेतच्छास्त्राभ्यासेनाशेषविधिनिषेधपरिज्ञानात् यशसे हितं यशस्यं विद्वत्तया ख्यातिलाभात् परमं
कृष्टं निःश्रेयसं निःश्रेयसस्य मोक्षस्योपायोपदेशकत्वात् १०६ अस्मिन्धर्म इति अस्मिन् कार्त्स्न्येन धर्मोऽभिहित इति शास्त्रप्रशंसा क
र्मणां च विहितनिषिद्धानामिष्टानिष्टफले वर्णचतुष्टयस्यैव पुरुषधर्मरूप आचारः शाश्वतः पारंपर्यागतः धर्मत्वेप्याचारस्य प्राधान्यख्याप
नाय पृथक् निर्देशः १०७ प्राधान्यमेव स्पष्टयति आचार इति युक्तो यत्नवान् आत्महितेच्छुः सर्वस्यात्मास्तीति आत्मशब्देन आत्महितेच्छा
उच्यते १०८ आचारादिति आचाराद्विच्युतो विप्रो न वैदिकं फलं लभेत् आचारयुक्तः पुनः समग्रफलभाग्भवति १०९ एवमिति उक्तप्र-
कारेणाचाराद्धर्मप्राप्तिं मुनयो बुद्ध्वा तपसश्चांद्रायणादेः समग्रस्य कारणमाचारमनुष्ठेयतया गृहीतवंतः उत्तरत्र वक्ष्यमाणस्याचारस्येह
स्तुतिः शास्त्रस्तुत्यर्था ११० इदानीं शिष्यस्य सुखप्रतिपत्तये वक्ष्यमाणार्थानुक्रमणिकामाह जगतश्च समुत्पत्तिमिति पाखंडगणधर्मश्चो

अस्मिन्धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम् चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः १०७ आचारः
परमो धर्मः श्रुत्युक्तः स्मार्त एव च तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः १०८ आचाराद्विच्युतो वि
प्रो न वेदफलमश्नुते आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् १०९ एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गति
म् सर्वस्य तपसो मूलमाचारं जगृहुः परम् ११० जगतश्च समुत्पत्तिं संस्कारविधिमेव च व्रतचर्योपचारं च स्ना
नस्य च परं विधिम् १११ दाराधिगमनं चैव विवाहानां च लक्षणम् महायज्ञविधानं च श्राद्धकल्पं च शाश्वतः
११२ वृत्तीनां लक्षणं चैव स्नातकस्य व्रतानि च भक्ष्याभक्ष्यं च शौचं च द्रव्याणां शुद्धिमेव च ११३ संतम् जगदुत्पत्तिर्य-

थोक्ता ब्राह्मणस्तुतिश्च मार्गरक्षार्थत्वेन ब्राह्मणस्य शास्त्रकृत्यादिकं च सूचयेवांतर्भवति एतत्प्रथमाध्यायप्रमेयम् संस्काराणां जातकर्मादीनां
विधिमनुष्ठानं ब्रह्मचारिणो व्रताचरणं उपचारं च गुर्वादीनामभिवादनोपासनादि सर्वो द्वितीये भाषैकवद्भवति इत्येकवद्भावः एतद्द्वितीयाध्याय
प्रमेयम् स्नानं गुरुकुलान्निवर्तमानस्य संस्कारविशेषस्तस्य प्रकृष्टं विधानम् १११ दाराधिगमनमिति दाराधिगमनं विवाहः तद्विशेषाणां ब्रा-
ह्मादीनां च लक्षणं महायज्ञाः पंचवैश्वदेवादयः श्राद्धस्य विधिः शाश्वतः प्रतिसर्गमनादिप्रवाहप्रवृत्तत्वान्नित्यः एष तृतीयाध्यायार्थः ११२ वृत्तीना
मिति वृत्तीनां जीवनोपायानां ऋतादीनां लक्षणम् स्नातकस्य गृहस्थस्य व्रतानि नियमाः एतच्चतुर्थाध्यायप्रमेयम् भक्ष्यं दध्यादि अभक्ष्यं ल

ऋनादिशौचंमरणादौब्राह्मणादेर्दशाहादिनाद्र्व्याणांशुद्धिमुदकादिना ११३ स्त्रीधर्मयोगमिति स्त्रीणांधर्मयोगंधर्मोपायंएतत्सांचमिकम्
तापस्यंतपसेवानप्रस्थायहितंतस्यधर्ममोक्षहेतुत्वान्मोक्षंयतिधर्मम् यतिधर्मत्वेपिसंन्यासस्यपृथगुपदेशःप्राधान्यज्ञापनार्थः एषषष्ठाध्या
यार्थः राज्ञोभिषिक्तस्यसर्वोदृष्टादृष्टार्थोधर्मः एषसप्तमाध्यायार्थः कार्याणामृणादीनामर्थिप्रत्यर्थिसमर्पितानांविनिर्णयोविचार्यतत्त्वनि
र्णयः ११४ साक्षीति साक्षिणांचप्रश्नेयद्विधानंव्यवहारांगत्वेपिसाक्षिप्रश्नस्यविधाननिर्णयोपायत्वात् पृथक्निर्देशः एतदाष्टमिकम् स्त्री
पुंसयोर्भार्यापत्योःसन्निधावसन्निधौचधर्मानुष्ठानंऋक्थभागस्यचधर्मप्रधपिऋक्थभागोपिकार्याणांविनिर्णयमित्यनेनैवप्राप्तस्तथाप्य
ध्यायभेदात्पृथक्निर्देशः द्यूतविषयोविधिर्द्यूतशब्देनोच्यतेकंटकानांचौरादीनांशोधनंनिरसनम् ११५ वैश्यशूद्रोपचारंचेति वैश्यशू-

स्त्रीधर्मयोगंतापस्यंमोक्षंसंन्यासमेवच राज्ञश्चधर्ममखिलंकार्याणांचविनिर्णयम् ११४ साक्षिप्रश्नविधानं
चधर्मंस्त्रीपुंसयोरपि विभागधर्मंद्यूतंचकंटकानांचशोधनम् ११५ वैश्यशूद्रोपचारंचसंकीर्णानांचसंभवम्
आपद्धर्मंचवर्णानांप्रायश्चित्तविधिंतथा ११६ संसारगमनंचैवत्रिविधंकर्मसंभवम् निःश्रेयसंकर्मणांचगुणदो
षपरीक्षणम् ११७ देशधर्मान्जातिधर्मान्कुलधर्मांश्चशाश्वतान् पाषंडगणधर्मांश्चशास्त्रेऽस्मिन्नुक्तवा
न्मनुः ११८ यथेदमुक्तवान्शास्त्रंपुरापृष्टोमनुर्मया तथेदंयूयमप्यद्यमत्सकाशान्निबोधत ११९ इतिमा
नवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांप्रथमोऽध्यायः १

द्रोपचारंस्वधर्मानुष्ठानंएतन्नवमे एवंसंकीर्णानांअनुलोमप्रतिलोमजानामुत्पत्तिंआपदिवृत्तिजीविकोपदेशंआपद्धर्मएतद्दशमे प्रायश्चित्तविधि
मेकादशे ११६ संसारगमनमिति संसारगमनंदेहांतरप्राप्तिरूपंउत्तममध्यमाधमभेदेनत्रिविधशुभाशुभकर्महेतुकम् निःश्रेयसमात्मज्ञानंसर्वो
त्कृष्टमोक्षलक्षणस्यश्रेयोहेतुत्वात्कर्मणांचविहितनिषिद्धानांगुणदोषपरीक्षणम् ११७ देशधर्मानिति प्रतिनियतदेशेऽनुष्ठीयमानादेशधर्माः
ब्राह्मणादिजातिनियताजातिधर्माःकुलविशेषाश्रयाःकुलधर्माःवेदवाह्यागमसमाश्रयाप्रतिषिद्धव्रतचर्यापाषंडंतद्योगात्पुरुषोपिपाषंडःतन्निमि
त्तायेधर्माःपाषंडिनोधिकर्मस्यानित्यादयःतेषांपृथक्धर्मानभिधानात्गणःसमूहोवणिगादीनाम् ११८ यथेदमिति पूर्वमयापृष्टोमनुर्यथेदंशा

स्त्वमभिहितवान् तथैवान्यूनानतिरिक्तंमत्सकाशाच्छृणुतेतिऋषीणांश्रद्धातिशयार्थंपुनरभिधानम् ११९ इतिश्रीकुल्लूकभट्ट-
कृतायांमन्वर्थमुक्तावल्यांमनुवृत्तौप्रथमोऽध्यायः १ ७ ७ ७ मनूक्तपरमात्मज्ञानरूपधर्मज्ञानायजगत्कारणं
ब्रह्मप्रतिपाद्याधुनाब्रह्मज्ञानांगभूतंसंस्कारादिरूपंधर्मंप्रतिपिपादयिषुर्धर्मसामान्यलक्षणंप्रथममाह विद्वद्भिरिति विद्वद्भिर्वेदविद्भिः स-
द्भिर्धार्मिकैरागद्वेषशून्यैरनुष्ठितोहृदयेनाभिमुख्येनज्ञात इत्यनेनश्रेयःसाधनमभिमतम् तत्रहिस्वरसान्मनोभिमुखीभवतिवेदविद्भिर्ज्ञा
नइतिविशेषणोपादानसामर्थ्यात् ज्ञानस्यवेदस्यैवश्रेयःसाधनज्ञानेकारणत्वंविवक्षितंखड्गधारिणाहतइत्युक्तेधृतखड्गस्यैवहनने प्राधान्यं
अतोवेदप्रमाणकःश्रेयःसाधनंधर्मइत्युक्तंएवंविधोयोधर्मस्तन्निबोधत उक्तार्थसंग्रहश्लोकाः वेदविद्भिर्ज्ञानइतिप्रयुंजानोविशेषणम्
वेदादेवपरिज्ञातोधर्मइत्युक्तवान्मनुः हृदयेनाभिमुख्येनज्ञात इत्यपिनिर्दिशन् श्रेयःसाधनमित्याहतद्धृत्यनिसुखंमनः वेदप्रमाणकःश्रे

श्रीकृष्णायनमः विद्वद्भिःसेवितःसद्भिर्नित्यमद्वेषरागिभिः हृदयेनाभ्यनुज्ञातोयोधर्मस्तन्निबोधत १
कामात्मतानप्रशस्तानचैवेहास्त्यकामता काम्योहिवेदाधिगमःकर्मयोगश्चवैदिकः २

यःसाधनंधर्मइत्यतः प्र
नूक्तमेवमुनयःप्रणिन्युर्धर्मलक्षणम् अतएवहारीतः अथातोधर्मंव्याख्यामः श्रुतिप्रमाणकोधर्मः श्रुतिश्चद्विविधावैदिकीतांत्रिकीच
भविष्यपुराणे धर्मःश्रेयःसमुद्दिष्टंश्रेयोभ्युदयलक्षणम् सतुपंचविधःप्रोक्तोवेदमूलःसनातनः अस्यसम्यगनुष्ठानात्स्वर्गोमोक्षश्चजाय
ते इहलोकेसुखैश्वर्यमतुलंचखगाधिप श्रेयःसाधनमित्यर्थः जैमिनिरपि इदमपिधर्मलक्षणमसूत्रयत्चोदनालक्षणोऽर्थोधर्मइतिउभ
यचोदनयालक्ष्यतेऽर्थःश्रेयःसाधनंज्योतिष्टोमादिः अनर्थःप्रत्यवायसाधनंश्येनादितत्रवेदप्रमाणकंश्रेयःसाधनंज्योतिष्टोमादिधर्मइतिसू-
त्रार्थः स्मृत्यादयोपिवेदमूलत्वेनैवधर्मेप्रमाणमितिदर्शयिष्यामः गोविंदराजस्तुहृदयेनाभ्यनुज्ञातइत्यंतःकरणविचिकित्साशून्यइतिव्या-
ख्यातवान् तन्मतेवेदविद्भिरित्यनुष्ठितःसंशयरहितश्चधर्मइतिधर्मलक्षणंस्यात् एतच्चदृष्टार्थग्रामगमनादिसाधारणंधर्मलक्षणंविलक्षण
नश्रद्दधते मेधातिथिस्तुहृदयेनाभ्यनुज्ञातइतियत्रचित्तंप्रवर्त्तयतीतिव्याख्यायअथवाहृदयंवेदःसत्वधीतोभावनादिरूपेणहृत्स्थितं
हृदयमित्युच्यतइत्युक्तवान् १ कामात्मतेति फलाभिलाषशीलत्वंपुरुषस्यकामात्मतासानप्रशस्ताबंधहेतुत्वात्स्वर्गादिफलाभिलाषेणका

म्यानिकर्माण्यनुष्ठीयमानानिपुनर्जन्मनेकारणंभवंतिनित्यनैमित्तिकानितु आत्मज्ञानसहकारितयामोक्षायकल्पंतेनपुनरिच्छामात्रमनेन निषिध्यते तदाहनचैवेहास्त्यकामतेति यतोवेदस्वीकरणंवैदिकसकलधर्मसंबंधश्चेच्छाविषयएव २ अत्रोपपत्तिमाह संकल्पमूलइति अनेनकर्मणाइदमिष्टंफलंसाध्यतइतिएवंविषयाबुद्धिःसंकल्पःतदनंतरमिष्टसाधनतयावगतेतस्मिन्निच्छाजायतेतदर्थंप्रयत्नंकुरुतेचइ त्येवंयज्ञाःसंकल्पप्रभवाव्रतानियमरूपाश्चधर्माश्चतुर्थाध्यायेवक्ष्यमाणाःसर्वइत्यनेनपदेनअन्येपिशास्त्रार्थाःसंकल्पादेवजायंतेइच्छामंत रेणतान्यपिनसंभवंतीत्यर्थः गोविंदराजस्तुव्रतान्यनुष्ठेयरूपाणियमधर्माःप्रतिषेधार्थकाइत्याह ३ अत्रैवलौकिकंनियमंदर्शयति अ कामस्येति लोकेयाकाचिद्भोजनगमनादिक्रियासाप्यनिच्छतोनकदाचिदृश्यते ततश्चसर्वकर्मलौकिकंवैदिकंचयद्यत्पुरुषःकुरुतेतत्तदिच्छा कार्यम् ४ संप्रतिपूर्वोक्तंफलाभिलाषनिषेधंनियमयति तेषुसम्यग्वर्तमानइति नात्रेच्छानिषिध्यतेकिंतुशास्त्रोक्तकर्मसुसम्यग्वृत्तिर्वि-

संकल्पमूलःकामोवैयज्ञाःसंकल्पसंभवाः व्रतानियमधर्माश्चसर्वेसंकल्पजाःस्मृताः ३ अकामस्यक्रियाका चिद्दृश्यतेनेहकर्हिचित् यद्यद्धिकुरुतेकिंचित्तत्तत्कामस्यचेष्टितम् ४ तेषुसम्यग्वर्तमानोगच्छत्यमरलो कताम् यथासंकल्पितांश्चेहसर्वान्कामान्समश्नुते ५ वेदोऽखिलोधर्ममूलंस्मृतिशीलेचतद्विदाम् आ चारश्चैवसाधूनामात्मनस्तुष्टिरेवच ६

धीयतेबंधहेतुफलाभिलाषंविनाशास्त्रीयकर्मणामनुष्ठानंतेषुसम्यग्वृत्तिःसम्य ग्वर्तमानोऽमरलोकतां अमरधर्मकंब्रह्मभावंगच्छतिमोक्षंप्राप्नोतीत्यर्थः तथाभूतश्चसर्वेश्वरत्वादिहापिलोकेसर्वानभिलषितान्प्राप्नोति तथाचछांदोग्येसयदापितृलोककामोभवतिसंकल्पादेवास्यपितरःसमुत्तिष्ठंतीत्यादि ५ इदानींधर्मप्रमाणान्याह वेदोऽखिलोधर्ममूल मिति वेदऋग्यजुःसामाथर्वलक्षणःससर्वोविध्यर्थवादमंत्रात्माधर्मेमूलंप्रमाणं अर्थवादानामपिविध्येकवाक्यतयास्तावकत्वेनधर्मेप्रामा ण्यात् यदाहजैमिनिः विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेनविधीनांस्युर्मंत्रार्थवादानामपिविधिवाक्यैकवाक्यतयैवधर्मेप्रामाण्यंप्रयोगकाले चानुष्ठेयस्मारकत्वंवेदस्यचधर्मेप्रामाण्यंयथानुभवकरणत्वरूपंन्यायसिद्धम् स्मृत्यादीनामपितन्मूलत्वेनैवप्रामाण्यप्रतिपादनार्थमनूद्यते मन्वादीनांचवेदविदांस्मृतिर्धर्मेप्रमाणम् वेदविदामितिविशेषणोपादानाद्वेदमूलत्वेनैवस्मृत्यादीनांप्रामाण्यमभिमतंशीलंब्रह्मण्यतादिरू

पम् तदाह हारीतः ब्रह्मण्यता देवपितृभक्तता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्य
ता कारुण्यं प्रशांतिश्चेति त्रयोदशविधं शीलम् गोविंदराजस्तु शीलं रागद्वेषपरित्याग इत्याह आचारः कंबलवल्कलाद्याचरणरूपः साधूनां
धार्मिकाणां आत्मतुष्टिश्च वैकल्पिकपदार्थविषया धर्मे प्रमाणम् तदाह गर्गः वैकल्पिके आत्मतुष्टिः प्रमाणम् ६ वेदादन्येषां वेदमूलत्वेन
प्रामाण्येऽभिहितेपि मनुस्मृतेः सर्वोत्कर्षज्ञापनाय विशेषेण वेदमूलतामाह यः कश्चिदिति यः कश्चित्कस्यचिद्ब्राह्मणादेर्मनुना धर्म उक्तः स
सर्वो वेदे प्रतिपादितः यस्मात्सर्वज्ञोसौ मनुः सर्वज्ञतयाचोत्सन्नविप्रकीर्णपठ्यमानवेदार्थं सम्यग्ज्ञात्वा लोकहितायोपनिबद्धवान् गोविंदरा
जस्तु सर्वज्ञानमयइत्यस्य सर्वज्ञानारब्ध इव वेद इति वेदविशेषणतामाह ७ सर्वंत्विति सर्वं शास्त्रजातं वेदार्थावगमोचितं ज्ञानं मीमांसा
व्याकरणादिकं ज्ञानमेव चक्षुस्तेन निखिलं तद्विशेषेण पर्यालोच्य वेदप्रामाण्येनानुष्ठेयमवगम्य स्वधर्मे वर्तिष्येत ८ श्रुतिस्मृत्युदितमिति

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः सस र्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ७ सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ८ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ९ श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ १० योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः स साधुभिर्बहिष्कार्यो नास्तिको वेदनिंदकः ११

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्मानव इहलोके धार्मिकत्वेनानुषंगिकीं कीर्तिं परलोके च धर्मफलमुत्कृष्टं स्वर्गापवर्गादि
सुखरूपं प्राप्नोति अनेन वास्तवगुणकथनेन श्रुतिस्मृत्युदितं धर्ममनुतिष्ठेदिति विधिः कल्प्यते ९ श्रुतिस्त्विति लोकप्रसिद्धसंज्ञासंज्ञिसंबं-
धानुवादोयं श्रुतिस्मृत्योः प्रतिकूलतर्केणामीमांस्यत्वविधानार्थं स्मृतेः श्रुतितुल्यत्वबोधनेनाचारादिभ्यो बलवत्त्वप्रतिपादनार्थं च तेन स्मृतिवि
रुद्धाचारो हेय इत्यस्य फलम् श्रुतिर्वेदो मन्वादिशास्त्रं स्मृतिः ते उभे प्रतिकूलतर्कैर्न विचारयितव्ये यतस्ताभ्यां निःशेषेण धर्मो बभौ प्रकाश
तां गतः १० योवमन्येतेति यः पुनस्ते द्वे श्रुतिस्मृती द्विजोऽवमन्येत स शिष्टैर्द्विजानुष्ठेयाध्ययनादिकर्मणो निःसार्यः पूर्वश्लोके सामान्येनामी
मांस्ये इति मीमांसानिषेधादनुकूलमीमांसापि न प्रवर्तनीयेति भ्रमो मा भूदिति विशेषयति हेतुशास्त्राश्रयात् वेदवाक्यमप्रमाणं वाक्यत्वात्

विप्रलंभकवाक्यवदित्यादिप्रतिकूलतर्कावष्टंभेनचार्वाकादिनास्तिकइवनास्तिकोयतोवेदनिंदकः ११ इदानींशीलस्याचारएवांतर्भाव संभवात्वेदमूलताएवतंत्रेणस्मृतिशीलादिप्रकारनियमइतिदर्शयितुंचतुर्धाधर्मप्रमाणमाह वेदइति वेदोधर्मप्रमाणंसकश्चित्यस्सर्वः कश्चित्स्मृत्यानुमितःइत्येवंतात्पर्येणतुप्रमाणपरिगणनेअतएवश्रुतिस्मृत्युदितंधर्ममित्यत्रद्वयमेवाभिहितवान् सदाचारःशिष्टाचारः स्वस्यचात्मनःप्रियमात्मतुष्टिः १२ अर्थकामेष्विति अर्थकामेषुप्रसक्तानांअर्थकामलिप्साशून्यानांधर्मोपदेशोयम् येत्वर्थकामसमीहयालोकप्रतिपत्त्यर्थंधर्ममनुतिष्ठंतिनतेषांकर्मफलमित्यर्थः धर्मंचज्ञातुमिच्छतांप्रकृष्टंप्रमाणंश्रुतिः प्रकर्षबोधनेनचश्रुतिस्मृतिविरोधेस्मृत्यर्थोनादरणीयइतिभावः अतएवजाबालः श्रुतिस्मृतिविरोधेतुश्रुतिरेवगरीयसी अविरोधेसदाकार्यंस्मार्तंवैदिकवत्सता भविष्यपुराणेप्युक्तम् श्रुत्यासहविरोधेतुबाध्यतेविषयंविना जैमिनिरप्याह विरोधेत्वनपेक्षंस्यादसतिह्यनुमानकम्श्रुतिविरोधेस्मृतिवाक्यमनपे

वेदःस्मृतिःसदाचारःस्वस्यचप्रियमात्मनः एतच्चतुर्विधंप्राहुःसाक्षाद्धर्मस्यलक्षणम् १२ अर्थकामेष्वसक्तानांधर्मज्ञानंविधीयते धर्मंजिज्ञासमानानांप्रमाणंपरमंश्रुतिः १३ श्रुतिद्वैधंतुयत्रस्यात्तत्रधर्मावुभौस्मृतौ उभावपिहितौधर्मौसम्यगुक्तौमनीषिभिः १४ उदितेऽनुदितेचैवसमयाध्युषितेतथा सर्वथावर्त्तते यज्ञइतीयंवैदिकीश्रुतिः १५

क्ष्यंअप्रमाणंअनादरणीयम् असतिविरोधेमूलवेदानुमानमित्यर्थः १३ श्रुतिद्वैधमिति यत्रपुनःश्रुत्योरेवद्वैधंपरस्परविरुद्धार्थप्रतिपादनंतत्रद्वावपिधर्मौमनुनास्मृतौतुल्यबलतयाविकल्पानुष्ठानविधानेनचविरोधाभावः यस्मान्मन्वादिभ्यःपूर्वतरैरपिविद्वद्भिःसम्यक्समीचीनौद्वावपितौधर्मावुक्तौसमानन्यायतयास्मृत्योरपिविरोधेविकल्पइतिप्रकृतोपयोगःतुल्यबलत्वाविशेषात् तदाहगौतमः तुल्यबलविरोधेविकल्पः १४ अत्रदृष्टांतमाह उदितेऽनुदितेचैवेति सूर्यनक्षत्रवर्जितःकालःसमयाध्युषितशब्देनउच्यते उदयात्पूर्वमरुणकिरणवान्प्रविरलतारकोऽनुदितकालःपरस्परविरुद्धकालश्रवणेपिसर्वथाविकल्पेनाग्निहोत्रहोमःप्रवर्त्तते देवतोद्देशेनद्रव्यत्यागगुणयोगात्यज्ञशब्दोत्रगौणःउदितेहोतव्यइत्यादिकावैदिकीश्रुतिः १५ निषेकादीति गर्भाधानादिरंत्येष्टिपर्यंतोयस्यवर्णस्यमंत्रैरनुष्ठानकलापउक्तोद्विजातेरित्यर्थः तस्यास्मिन्मानवधर्मशास्त्रेऽध्ययने

श्रवणेऽधिकारः नत्वन्यस्यकस्यचिच्छूद्रादेः एतच्छास्त्रानुष्ठानंचयथाधिकारंसर्वैरेवकर्त्तव्यंप्रवचनंतस्याध्यापनंव्याख्यानरूपंब्राह्मणकर्तृकमेवेतिविदुषाब्राह्मणेनइत्यत्रव्याख्यातम् १६ सरस्वतीति धर्मस्यसरूपंप्रमाणंपरिभाषांचोक्त्वाइदानींधर्मानुष्ठानयोग्यदेशानाह सरस्वतीदृषद्वत्योर्नद्योरुभयोर्मध्यंब्रह्मावर्त्तदेशमाहुः देवनदीदेवनिर्मितशब्दौप्राशस्त्यार्थौ १७ तस्मिन्देशइति तस्मिन्देशेप्रायेणशिष्टानांसंभवात्तेषांब्राह्मणादिवर्णानांसंकीर्णजातिपर्यंतानांयआचारः पारंपर्यक्रमागतोनत्विदानींतनःससदाचारोऽभिधी १८ कुरुक्षेत्रमिति मत्स्यादिशब्दाबहुवचनांताएवदेशविशेषवाचकाः पंचालाः कान्यकुब्जदेशाः शूरसेनकामथुरादेशाः एषब्रह्मर्षिदेशोब्रह्मावर्त्तात्किंचिदूनः १९ एतद्देशइति कुरुक्षेत्रादिदेशजातस्यब्राह्मणस्यसकाशात्सर्वमनुष्याआत्मीयमाचारंशिक्षेरन् २०

निषेकादिश्मशानांतोमंत्रैर्यस्योदितोविधिः तस्यशास्त्रेऽधिकारोस्मिन्ज्ञेयोनान्यस्यकस्यचित् १६ सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरम् तंदेवनिर्मितंदेशंब्रह्मावर्त्तंप्रचक्षते १७ तस्मिन्देशेयआचारःपारंपर्यक्रमागतः वर्णानांसांतरालानांससदाचारउच्यते १८ कुरुक्षेत्रंचमत्स्याश्चपंचालाःशूरसेनकाः एषब्रह्मर्षिदेशोवैब्रह्मावर्त्तादनंतरः १९ एतद्देशप्रसूतस्यसकाशादग्रजन्मनः स्वंस्वंचरित्रंशिक्षेरन्पृथिव्यांसर्वमानवाः २० हिमवद्विंध्ययोर्मध्यंयत्प्राग्विनशनादपि प्रत्यगेवप्रयागाच्चमध्यदेशःप्रकीर्त्तितः २१ आसमुद्रात्तुवैपूर्वादासमुद्रात्तुपश्चिमात् तयोरेवांतरंगिर्योरार्यावर्त्तंविदुर्बुधाः २२ कृष्णसारस्तुचरतिमृगोयत्रस्वभावतः सज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्त्वतःपरः २३

हिमवदिति उत्तरदक्षिणदिगवस्थितौ हिमवद्विंध्यौपर्वतौतयोर्यन्मध्यंविनशनात्सरस्वत्यंतर्धानदेशात्यत्पूर्वंप्रयागाच्चयत्पश्चिमंसमध्यदेशनामादेशःकथितः २१ आसमुद्रात्विति आपूर्वसमुद्रात्आपश्चिमसमुद्रात्हिमवद्विंध्ययोश्चयन्मध्यंतमार्यावर्त्तदेशंपंडिताजानंति मर्यादायामयमाङ्नाभिविधौ तेनसमुद्रमध्यद्वीपानांनार्यावर्त्तता आर्याअत्रावर्त्ततेपुनःपुनरुद्भवंतीत्यार्यावर्त्तः २२ कृष्णसारस्त्विति कृष्णसारोमृगोयत्रस्वतोवसतिनतुबलादानीतःसयज्ञार्हदेशोज्ञातव्यः अन्योम्लेच्छदेशोनयज्ञार्हइत्यर्थः २३ ७ ६ ५

एतानिति अन्यदेशोद्भवा अपि द्विजातयो यज्ञार्थत्वाद् दृष्टार्थत्वाच्च एतान् देशान् प्रयत्नादाश्रयेरन् शूद्रस्तु वृत्तिपीडितो वृत्त्यर्थमन्यदेशमप्याश्रयेत् २४ एषा धर्मस्येति एषा युष्माकं धर्मस्य योनिः संक्षेपेणोक्ता योनिर्ज्ञप्तिकारणं वेदोऽखिलो धर्ममूलमित्यादिनोक्तमित्यर्थः गोविंदराजस्त्विह धर्मशब्दोऽपूर्वाख्यात्मकधर्मे वर्त्तत इति विद्वद्भिः सेवित इत्यत्र तत्कारणेऽष्टकादौ वा पूर्वाख्यस्य धर्मस्य योनिरिति व्याख्यातवान् संभवश्चोत्पत्तिर्जगत इत्युक्ताः इदानीं वर्णधर्मान् शृणुत वर्णधर्मशब्दश्च वर्णधर्माश्रमधर्मवर्णाश्रमधर्मगुणधर्मनैमित्तिकधर्माणामुपलक्षकः ते च भविष्यपुराणोक्ताः वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्त्तते वर्णधर्मः स उक्तस्तु यथोपनयनं नृप यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते स खल्वाश्रमधर्मस्तु भिक्षादंडादिको यथा वर्णत्वमाश्रमत्वं च यो धिकृत्य प्रवर्त्तते स वर्णाश्रमधर्मस्तु मौंजीया मेखला यथा यो गुणेन प्रवर्त्तेत गुणधर्मः

एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद् वृत्तिकर्षितः २४ एषा धर्मस्य वो योनिः समासेन प्रकीर्तिता संभवश्चास्य सर्वस्य वर्णधर्मान् निबोधत २५ वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च २६ गार्भैर्होमैर्जातकर्मचौडमौंजीनिबंधनैः बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते २७

स उच्यते यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम् निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्त्तते नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा २५ वैदिकैरिति वेदमूलत्वाद् वैदिकैः पुण्यैः शुभैर्मंत्रयोगादिकर्मभिः द्विजातीनां गर्भाधानादिशरीरसंस्कारः कर्त्तव्यः पावनः पापक्षयहेतुः प्रेत्य परलोके संस्कृतस्य यागादिफलसंबंधात् इह लोके च वेदाध्ययनाद्यधिकारात् २६ कुतः पापसंभवो येनैषां पापक्षयहेतुत्वमत आह गार्भैरिति ये गर्भशुद्धये क्रियंते ते गार्भाः होमग्रहणमुपलक्षणं गर्भाधानादेरहोमरूपत्वात् जातस्य यत्कर्म मंत्रवत्सर्पिः प्राशनादिरूपं तज्जातकर्म चौडं चूडाकरणकर्म मौंजीनिबंधनमुपनयनं एतैर्बैजिकं प्रतिषिद्धमैथुनसंकल्पादिना च पैतृकरेतोदोषात् यदेनः पापं गार्भिकं चाशुचिमातृगर्भवासजं तद् द्विजातीनां अपमृज्यते २७

अतऊर्ध्वमिति एतेब्राह्मणादयोयथाकालंयोयस्यानुकल्पिकोप्युपनयनकालउक्तः षोडशवर्षादिपर्यंतंतत्रासंस्कृतास्तदूर्ध्वंसावित्रीपतिताउपनयनहीनाः शिष्टगर्हिताव्रात्यसंज्ञाभवंतिसंज्ञाप्रयोजनंचव्रात्यानांयाजनंकुर्वीतेत्यादिनाव्यवहारसिद्धिः ३९ नैतैरिति एतैरपूतैर्व्रात्यैर्यथाविधिप्रायश्चित्तमकृतवद्भिःसहआपत्कालेपिकदाचिदध्यापनकन्यादानादीन्संबंधान्ब्राह्मणोनानुतिष्ठेत् ४० कार्ष्णरौरववास्तानीति कार्ष्णइतिविशेषानभिधानेपिमृगविशेषःरुरुसाहचर्यात्हारिणमैणेयंवाकार्ष्णंब्राह्मणस्येत्यापस्तंबवचनाच्च कृष्णमृगोगृह्यते कृष्णमृगरुरुच्छागचर्माणिब्रह्मचारिणउत्तरीयाणिवसीरन्चर्माण्युत्तरीयाणीतिगृह्यवचनात् तथाशाणक्षौमामेषलोमभवान्यधोवसनानिब्राह्मणादयःक्रमेणपरिदधीरन् ४१ मौंजीति मुंजमयीत्रिगुणासमगुणत्रयनिर्मितासुखस्पर्शा मेखलाकर्त्तव्या क्षत्रियस्यमुर्वामयीज्याधनुर्गुणरूपामेखलाअनोज्यालविनाशापत्तेस्त्रिवृत्त्वंनास्तीतिमेधातिथिगोविंदराजौ वैश्यस्य

अतऊर्ध्वंत्रयोप्येतेयथाकालमसंस्कृताः सावित्रीपतिताव्रात्याभवंत्यार्यविगर्हिताः ३९ नैतैरपूतैर्विधिवदापद्यपिहिकर्हिचित् ब्राह्मान्यौनांश्चसंबंधान्नाचरेद्ब्राह्मणःसह ४० कार्ष्णरौरववास्तानिचर्माणिब्रह्मचारिणः वसीरन्नानुपूर्वेणशाणक्षौमाविकानिच ४१ मौंजीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला क्षत्रियस्यतुमौर्वीज्यावैश्यस्यशाणतांतवी ४२ मुंजालाभेतुकर्त्तव्याःकुशाश्मांतकबल्वजैःत्रिवृताग्रंथिनैकेनत्रिभिःपंचभिरेववा ४३

शणसूत्रमयी अत्रत्रैगुण्यंअनुवर्त्ततएवत्रिगुणाःप्रदक्षिणामेखलाइति सामान्येनप्रचेतसात्रैगुण्याभिधानात् ४२ मुंजालाभेत्विति कर्त्तव्याइतिबहुवचननिर्देशाद्ब्रह्मचारित्रयस्यप्रकृतत्वात् मुख्यालाभेत्रिष्वप्यपेक्षायाःसमत्वात् कौशादीनांचतिसृणांविधानात् मुंजाद्यलाभइतिबोद्धव्यंकर्त्तव्याइतिबहुवचनमुपपन्नतरंभिन्नजातिसंबंधितयेतिब्रुवाणस्यमेधातिथेरपिबहुवचनपाठःसंमतःमुंजाद्यलाभेब्राह्मणादीनांत्रयाणांयथाक्रमंकुशादिभिर्मेखलाःकार्याः त्रिगुणेनैकग्रंथिनायुक्तास्त्रिभिर्वापंचभिर्वाअत्रचवाशब्दनिर्देशात् ग्रंथीनांनविप्रादिभिःक्रमेणसंबंधः त्रयथाकुलाचारंविकल्पःग्रंथिभेदस्मायंमुख्यामुख्यापेक्षासंभवाद्गृहीतव्यः ४३

कार्पासमिति पदार्थविन्यासविशेषस्योपवीतसंज्ञां स्यात्तदूर्ध्वं ब्राह्मणस्य कार्पासं क्षत्रियस्य शणसूत्रमयं वैश्यस्य मेषलोमनिर्मितं त्रि
वृदिति त्रिगुणं कृत्वा ऊर्ध्ववृतं दक्षिणावर्तितं एतच्च सर्वत्र संबध्यते यद्यपि गुणत्रयमेवोर्ध्ववृतं मनुनोक्तं तथापि तत् त्रिगुणीकृत्य त्रिगुणं का
र्यम् तदुक्तं छंदोगपरिशिष्टे ऊर्ध्वं तु त्रिवृतं कार्यं तंतुत्रयमधोवृतम् त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रंथिरिष्यते देवलोप्याह यज्ञोपवीतं कुर्वी
त सूत्राणि नव तंतवः ४४ ब्राह्मण इति यद्यपि द्वंद्वनिर्देशेन समुच्चयावगमात् धारणमपि समुच्चितस्यैव भासते तथापि केशांतिको ब्राह्मणस्य
दंडः कार्य इति तथा प्रतिगृह्येप्सितं दंडमिति विधाने कत्वस्य विवक्षितत्वात् बैल्वः पालाशो वा दंड इति वासिष्ठे विकल्पदर्शनात् एकस्यैव दंडस्य
धारणं विकल्पितयोरेवैकब्राह्मणसंबंधात् समुच्चयो द्वंद्वेनानूद्यते ब्राह्मणादयो विकल्पेन द्वौ द्वौ दंडौ वक्ष्यमाण कार्यं कर्तुमर्हंति ४५ केशांति
क इति केशललाटनासिकापर्यंतपरिमाणक्रमेण ब्राह्मणादीनां दंडाः कर्तव्याः ४६ ऋजव इति ते दंडा अव्रणा अक्षताः शोभनदर्शनाः स

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ४४ ब्राह्मणो बै
ल्वपालाशौ क्षत्रियो वाटखादिरौ पैलवौदुंबरौ वैश्यो दंडानर्हति धर्मतः ४५ केशांतिको ब्राह्मणस्य दं
डः कार्यः प्रमाणतः ललाटसंमितो राज्ञः स्यात्तु नासांतिको विशः ४६ ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्श
नाः अनुद्वेगकरा नॄणां सत्वचो नाग्निदूषिताः ४७ प्रतिगृह्येप्सितं दंडमुपस्थाप्य च भास्करम् प्रदक्षिणं प
रीत्याग्निं चरेद्भैक्षं यथाविधि ४८ भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः भवन्मध्यं तु राजन्यो वैश्यस्तु भव
दुत्तरम् ४९ मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ५०

त्वचः अग्निदग्धा न भवेयुः ४७ न च तैः प्राणिजातमुद्वेजनीयमित्याह प्रतिगृह्येप्सितमिति उक्तलक्षणं प्राप्तुमिष्टं दंडं गृहीत्वा आ
दित्याभिमुखं स्थित्वाग्निं प्रदक्षिणीकृत्य यथाविधि भैक्षं याचेत् ४८ भवदिति ब्राह्मणो भवति भिक्षां देहीति भवच्छब्दपूर्वं भिक्षां याच
नवाक्यमुच्चारयेत् क्षत्रियो भिक्षां भवति देहीति भवन्मध्यं वैश्यो भिक्षां देहि भवतीति भवदुत्तरम् ४९ मातरं चेति उपनयनांगभूतां भि
क्षां प्रथमं मातरं भगिनीं वा मातुर्वा भगिनीं सहोदरां याचेत् या चैनं ब्रह्मचारिणं प्रत्याख्यानेन नावमन्येत् पूर्वासंभवे उत्तरापरिग्रहः ५०

समाहृत्येति तद्भैक्ष्यं बहुभ्य आहृत्य यावदन्नं तृप्तिमात्रोचितं गुरवे निवेद्य निवेदनं कृत्वा अमायया न कदन्नेन सदन्नं भक्ष्यात् एवमेतद्गुरु
र्गृहीष्यतीत्यादि मायाव्यतिरेकेण तदनुज्ञात आचमनं कृत्वा शुचिः सन् भुंजीत प्राङ्मुखः ५१ इदानीं काम्यभोजनमाह आयुष्यमिति आ
युषे हितमन्नं प्राङ्मुखो भुंक्ते आयुःकामः प्राङ्मुखो भुंक्त इत्यर्थः यशसे हितं दक्षिणामुखः श्रियमिच्छन् प्रत्यङ्मुखः ऋतं सत्यं तत्फलमिच्छ
न् उदङ्मुखो भुंजीत ५२ उपस्पृश्येति निवेद्य गुरवे भैक्ष्यं यदाचम्येति यद्यपि भोजनात्प्रागाचमनं विहितं तथाप्यद्भिः खानि च संस्पृशेदिति गु
णविधानार्थोऽनुवादः नित्यं ब्रह्मचर्यानंतरमपि द्विज आचम्यान्नं भुंजीत समाहितोऽनन्यमनाः भुक्त्वा चाचामेत् सम्यग्यथाशास्त्रं तेन प्रक्षा
ल्य हस्तौ पादौ च त्रिः पिबेदंबु वीक्षितमित्यादि दक्षाद्युक्तमपि संगृह्णाति जलेन खानीन्द्रियाणि षट् छिद्राणि च स्पृशेत् तानि च शिरःस्थानि घ्रा
णचक्षुःश्रोत्रादीनि ग्रहीतव्यानि खानि चोपस्पृशेत् शीर्षण्यानीति गोतमवचनात् उपस्पर्शनं कृत्वा खानि च संस्पृशेदिति पृथग्विधानात्

समाहृत्य तु तद्भैक्ष्यं यावदर्थममायया निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ५१ आयुष्यं प्राङ्मुखो
भुंक्ते यशस्यं दक्षिणामुखः श्रियं प्रत्यङ्मुखो भुंक्ते ऋतं भुंक्ते ह्युदङ्मुखः ५२ उपस्पृश्य द्विजो नित्यमन्न
मद्यात्समाहितः भुक्त्वा चोपस्पृशेत्सम्यगद्भिः खानि च संस्पृशेत् ५३ पूजयेदशनं नित्यमद्याच्चैतदकुत्स
यन् दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनंदेच्च सर्वशः ५४ पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति अपूजितं
तु तद्भुक्तमुभयं नाशयेदिदम् ५५

त्रिरर्थं क्षणमात्रमाचमनं खस्पर्शनादिकमिति कर्त्तव्यता इति दर्शितम् ५३ पूजयेदश
नमिति सर्वदा अन्नं पूजयेत् प्राणार्थत्वेन ध्यायेत् तदुक्तमादिपुराणे अन्नं विष्णुः स्वयं प्राह इत्यनुवृत्तौ प्राणार्थं मां सदा ध्यायेत्स मां संपू
जयेत्सदा अनिंदंश्चैतदद्यात्तु दृष्ट्वा हृष्येत्प्रसीदेच्चेति हेत्वंतरमपि खेदमन्नदर्शनेन त्यजेत् प्रतिनंदेत् नित्यमस्माकमेतदस्त्विति अभि
धाय वंदनं प्रतिनंदनम् तदुक्तमादिपुराणे अन्नं दृष्ट्वा प्रणम्यादौ प्रांजलिः कथयेत्ततः अस्माकं नित्यमस्त्वेतदिति भक्त्याथ तदन्नमेत् सर्व
शः सर्वमन्नम् ५४ पूजितमिति यस्मात्पूजितमन्नं सामर्थ्यं वीर्यं च ददाति अपूजितं पुनरेतदुभयं नाशयति तस्मात्सर्वदाऽन्नं पूजयेदिति पू
र्वेणैकवाक्यतापन्नमिदम् फलश्रवणं संध्यावंदनादावुपात्तदुरितक्षयवन्नित्यं कामनाविषयत्वेनापि नित्यश्रुतिरविहन्ता नित्यश्रुतिवि

रोधात् फलश्रवणंस्तुत्यर्थमितितुमेधातिथिगोविंदराजौ ५५ नोच्छिष्टमिति भुक्तावशेषंकस्यचिन्नदद्यात् चतुर्थ्यासामासायांसंबंधमा
त्रविवक्षयाषष्ठीअनेनैवसामान्यनिषेधेनशूद्रस्याप्युच्छिष्टदाननिषेधेसिद्धेनोच्छिष्टंनहविष्कृतमितिशूद्रगोचरनिषेधश्चातुर्थःस्ना
तकव्रतत्वार्थः दिवासायंभोजनयोश्चमध्येनभुंजीतवारद्वयेप्यतिभोजनंनकुर्यात् नातिसौहित्यमाचरेदितिचातुर्थःस्नातकव्रतार्थंउच्छि
ष्टःसन्क्वचिन्नगच्छेत् ५६ अतिभोजनेदोषमाह अनारोग्यमिति अरोगोरोगाभावःतस्मैहितमारोग्यंआयुषेहितमायुष्यंयस्माद
तिभोजनमनारोग्यमनायुष्यंचभवति अजीर्णजनकत्वेनरोगमरणहेतुत्वात् अस्वर्ग्यंचस्वर्गहेतुयागादिविरोधित्वात् अपुण्यमितरपु
ण्यप्रतिपक्षत्वात् लोकविद्विष्टंबहुभोजितयालोकैर्निंदनात् तस्मात्तन्नकुर्यात् ५७ ब्राह्मेणेति ब्राह्मादिसंज्ञेयंशास्त्रेसंव्यवहारार्था
स्तुत्यर्थाचनतुमुख्यंब्रह्मदेवताकत्वंसंभवति अयागरूपत्वात्तीर्थशब्दोपिपावनगुणयोगात्ब्राह्मेणतीर्थेनसर्वदाविप्रादिराचामेत्

नोच्छिष्टंकस्यचिद्दद्यान्नाद्याच्चैवतथांतरा नचैवात्यशनंकुर्यान्नचोच्छिष्टःक्वचिद्व्रजेत् ५६ अनारोग्य
मनायुष्यमस्वर्ग्यंचातिभोजनम् अपुण्यंलोकविद्विष्टंतस्मात्तत्परिवर्जयेत् ५७ ब्राह्मेणविप्रस्तीर्थेन
नित्यकालमुपस्पृशेत् कायत्रैदशिकाभ्यांवानपित्र्येणकदाचन ५८ अंगुष्ठमूलस्यतलेब्राह्मंतीर्थं
प्रचक्षते कायमंगुलिमूलेग्रेदैवंपित्र्यंतयोरधः ५९ त्रिराचामेदपःपूर्वंद्विःप्रमृज्यात्ततोमुखम् खानि चै
वस्पृशेदद्भिरात्मानंशिरएवच ६०

कःप्रजापतिस्तदीयस्तस्येदमित्यण्इकारश्चांतादेशः त्रैदशिकोदैवःताभ्यांवापित्र्ये-
णतुतीर्थेननकदाचिदाचामेत् अप्रसिद्धत्वात् ५८ ब्राह्मादितीर्थान्याह अंगुष्ठमूलस्येति अंगुष्ठमूलस्याधोभागेब्राह्मंकनिष्ठांगु
लिमूलेकायंअंगुलीनामग्रेदैवंअंगुष्ठप्रदेशिन्योर्मध्येपित्र्यंतीर्थंमन्वादयआहुः यद्यपिकायमंगुलिमूलेतयोरधइत्यत्रचांगुलिमात्रं
श्रुतंतथापिस्मृत्यंतराद्विशेषपरिग्रहः तथाचयाज्ञवल्क्यः कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रंकरस्यच प्रजापतिपितृब्रह्मदेवतीर्थान्यनु
क्रमात् ५९ सामान्येनोपदिष्टस्याचमनस्यानुष्ठानक्रममाह त्रिराचामेदिति पूर्वंब्राह्मादितीर्थेनजलगंडूषत्रयंपिबेत् अनंतरंसंवृ-
तौष्ठाधरौवारद्वयमंगुष्ठमूलेनसंमृज्यात् संवृत्यांगुष्ठमूलेनद्विःप्रमृज्यात्ततोमुखंइतिदक्षेणविशेषाभिधानात् खानिचेंद्रियाणि

जलेनस्पृशेन्मुखस्यसन्निधानान्मुखखान्येव गोतमोप्याह खानिचोपस्पृशेच्छीर्षण्यानिहृद्यंतज्ज्योतिःपुरुषइतिउपनिषत्कःहृदेशालेनात्मनःश्रवणादात्मानंहृदयंशिरश्चाद्भिरेवस्पृशेत् ६० अनुष्णाभिरिति अनुष्णीकृताभिः फेनवर्जिताभिर्ब्राह्मोदितं नमिच्छन् एकांतेजनैरनाकीर्णेसुचिदेशइत्यर्थः प्राङ्मुख उदङ्मुखोवासर्वदाचामेत् आपस्तंबेनतप्ताभिश्चकारणादित्यभिधानात् व्याध्यादिकारणव्यतिरेकेणनाचामेत् व्याधौतुउष्णीकृताभिरप्याचमनेदोषाभावः तीर्थव्यतिरेकेणाचमनेशौचाभावइतिदर्शयितुमुक्तस्यापितीर्थस्यपुनर्वचनम् ६१ हृद्गाभिरिति आचमनजलपरिमाणमाह ब्राह्मणोहृदयगामिनीभिः क्षत्रियःकंठगामिनीभिः वैश्योंतरास्यप्रविष्टाभिः कंठमप्राप्ताभिरपिशूद्रोजिह्वोष्ठांतेनापिस्पृष्टाभिरद्भिःपूतोभवतिअंततइतितृतीयार्थेतसिः ६२ उद्धृतेइति आचमनांगतामुपवीतस्यदर्शयितुमुपवीतलक्षणंततः प्रसंगेनप्राचीनावीतीत्यादिलक्षमाह दक्षिणेपाणावुद्धृतेवामस्कंधस्थितेदक्षिणस्कंधाव

अनुष्णाभिरफेनाभिरद्भिस्तीर्थेनधर्मवित् शौचेप्सुःसर्वदाचामेदेकांतेप्रागुदङ्मुखः ६१ हृद्गाभिःपूयतेविप्रःकंठगाभिस्तुभूमिपः वैश्योद्भिःप्राशिताभिस्तुशूद्रःस्पृष्टाभिरंततः ६२ उद्धृतेदक्षिणेपाणावुपवीत्युच्यतेद्विजः सव्येप्राचीनआवीतीनिवीतीकंठसज्जने ६३ मेखलामजिनंदंडमुपवीतंकमंडलुम् अप्सुप्रास्यविनष्टानिगृण्हीतान्यानिमंत्रवत् ६४ केशांतःषोडशेवर्षेब्राह्मणस्यविधीयते राजन्यबंधोर्द्वाविंशेवैश्यस्यद्व्याधिकेततः ६५

लंबेयज्ञसूत्रेवस्त्रेवाउपवीतीद्विजः कथ्यतेवामपाणावुद्धृतेदक्षिणस्कंधस्थितेवामस्कंधावलंबेप्राचीनावीतीभण्यतेसव्येप्राचीनआवीतीतिछंदोनुरोधाद्व्युत्क्रमः तथाचगोभिलः दक्षिणंबाहुमुद्धृत्यशिरोवधायसव्येंसेप्रतिष्ठापयतिदक्षिणस्कंधमवलंबनंभवतिएवंयज्ञोपवीतीभवतिसव्यंबाहुमुद्धृत्यशिरोवधायदक्षिणेंसेप्रतिष्ठापयतिसव्यंकक्षमवलंबंभवत्येवंप्राचीनावीतीभवति निवीतीकंठसज्जनइतिशिरोवधायदक्षिणपाण्यादावप्यनुद्धृतेकंठदेशसज्जनेऋजुमालंबेयज्ञसूत्रेवस्त्रेचनिवीतीभवति ६३ मेखलामिति मेखलादीनिविनष्टानिभिन्नानिछिन्नानिचजलेप्रक्षिप्यान्यानिस्वस्वगृह्योक्तमंत्रैर्गृण्हीयात् ६४ केशांतइति केशांतस्योगृह्योक्तसंस्कारोगर्भादिसंख्यावर्षाणामितिबोधायनवचनात्गर्भषोडशेवर्षेब्राह्मणस्यक्षत्रियस्यगर्भद्वाविंशेवैश्यस्यततोद्व्याधिकेग

र्मन्त्रतुर्विशेषकर्त्तव्यः ६५ अमंत्रिकेतिइयमावृदयंजातकर्मादिक्रियाकलापःसमग्रउक्तकालक्रमेणशरीरसंस्कारार्थंस्त्रीणाममंत्रकःकार्यः ६६ अनेनोपनयनेऽपिप्राप्तेविशेषमाह वैवाहिकइति विवाहविधिरेवस्त्रीणांवैदिकःसंस्कारःउपनयनाख्योमन्वादिभिःस्मृतःपतिसेवै वगुरुकुलेवासोवेदाध्ययनरूपः गृहकृत्यमेवसायंप्रातःसमिद्धोमरूपोऽग्निपरिचर्यातस्माद्विवाहादेरुपनयनस्थानेविधानादुपनयनादेर्निवृ त्तिरिति ६७ एषइति औपनायनिकइतिअनुशतिकादित्वादुभयपदवृद्धिः अयंद्विजातीनामुपनयनसंबंधीकर्मकलापउक्तःउत्पत्तेर्द्वितीयजन्मनोव्यंजकः ६८ इदानीमुपनीतस्ययेनकर्मणायोगस्तंशृणुतइत्याह उपनीयगुरुरिति गुरुःशिष्यमुपनीयप्रथममेकालिंगेगुदे तिस्रइत्यादिवक्ष्यमाणंशौचंस्नानाचमनाद्याचारमग्नौसायंप्रातःसमिद्धोमानुष्ठानंसमंत्रकसंध्योपासनविधिंचशिक्षयेत् ६९ अध्येष्य

अमंत्रिकातुकार्येयंस्त्रीणामावृदशेषतः संस्कारार्थंशरीरस्ययथाकालंयथाक्रमम् ६६ वैवाहिकोवि धिःस्त्रीणांसंस्कारोवैदिकःस्मृतः पतिसेवागुरौवासोगृहार्थोऽग्निपरिक्रिया ६७ एषप्रोक्तोद्विजाती नामौपनायनिकोविधिः उत्पत्तिव्यंजकःपुण्यः कर्मयोगंनिबोधत ६८ उपनीयगुरुःशिष्यंशिक्षयेच्छौ चमादितः आचारमग्निकार्यंचसंध्योपासनमेवच ६९ अध्येष्यमाणस्त्वाचांतोयथाशास्त्रमुदङ्मुखः ब्र ह्मांजलिकृतोध्याप्योलघुवासाजितेंद्रियः ७० ब्रह्मारंभेवसानेचपादौग्राह्यौगुरोःसदा संहत्यहस्ता वध्येयंसहिब्रह्मांजलिःस्मृतः ७१ व्यस्तहस्तेनकार्यमुपसंग्रहणंगुरोः सव्येनसव्यःस्प्रष्टव्योद क्षिणेनचदक्षिणः ७२

माणइति अध्ययनंकरिष्यमाणःशिष्योयथाशास्त्रंकृताचमनउत्तराभिमुखः कृतांजलिः पवित्रवस्त्रः कृतेंद्रियसंयमोगुरुणाअध्याप्यःप्राङ्मुखोदक्षिणतःशिष्यउदङ्मुखोवेतिगौतमवचनात् प्राङ्मुखस्यापिअध्ययनंब्रह्मांजलिकृतइति वाहिताग्न्यादिषुइत्यनेनकृतशब्दस्यपरनिपातः ७० ब्रह्मारंभेवसानेचेति वेदाध्ययनस्यारंभेकर्त्तव्येसमापनेचकृतेगुरोःपादोपसंग्र हणंकर्त्तव्यंहस्तौसंहत्यसंश्लिष्टौकृत्वाऽध्येतव्यंसएवब्रह्मांजलिःस्मृतइतिपूर्वश्लोकोक्तब्रह्मांजलिशब्दार्थव्याकारः ७१ व्यस्तपाणि नेति पादोपसंग्रहणंकार्यमित्यनंतरमुक्तंतद्व्यस्तपाणिनाकार्यमितिविधीयतेकीदृशोव्यासःकार्यइत्यतआह सव्येनपाणिनासव्यः

पादौदक्षिणेनपाणिनादक्षिणः पादःगुरोः स्प्रष्टव्यः उत्तानहस्ताभ्यांनेदंपादयोःस्पर्शनंकार्यम् यदाहपैठीनसिः उत्तानाभ्यांहस्ताभ्यां दक्षिणेनदक्षिणंसव्यंसव्येनपादावभिवादयेत् दक्षिणोपरिभावेनव्यत्यासोवायंशिष्टसमाचारात् ७२ अध्येष्यमाणमिति अध्ययनं करिष्यमाणंशिष्यंसर्वदा अनलसोगुरुरधीष्वभोइतिप्रथमंवदेत् शेषेविरामोस्त्वित्यभिधायविरमेत्निवर्त्तेत ७३ ब्रह्मणःप्रणवमिति ब्रह्मणोवेदस्याध्ययनारंभेअध्ययनसमाप्तौचोंकारंकुर्यात् यस्मात्पूर्वंयस्योंकारोन कृतस्तत्स्रवतिशनैःशनैर्नश्यतियस्यपुरस्तान्न कृत स्तद्विशीर्यतिअवस्थितिमेवनलभते ७४ प्राक्कूलानिति प्राक्कूलान्प्रागग्रान्दर्भान्अध्यासीनः पवित्रैःकुशैः करद्वयस्थैःपवित्रीकृतः प्राणायामास्त्रयःपंचदशमात्राइतिगोतमस्मरणात् पंचदशमात्रैस्त्रिभिःप्राणायामैःप्रयतःअकारादिलघ्वक्षरकालप्रमात्राततोऽध्य यनार्होंकारमर्हति ७५ अकारंचेति एतदक्षरमेतांचेतिनिवक्ष्यति तस्यायंशेषः अकारमुकारंमकारंचप्रणवावयवभूतंब्रह्मावेदत्रयात्

अध्येष्यमाणंतुगुरुर्नित्यकालमतंद्रितः अधीष्वभोइतिब्रूयाद्विरामोस्त्वितिचारमेत् ७३ ब्रह्मणःप्रणवंकुर्यादादावंतेचसर्वदा स्रवत्यनोंकृतंपूर्वंपरस्ताच्चविशीर्यति ७४ प्राक्कूलान्पर्युपासीनःपवित्रैश्चैवपावितः प्राणायामैस्त्रिभिःपूतस्ततओंकारमर्हति ७५ अकारंचाप्युकारंचमकारंचप्रजापतिः वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीतिच ७६ त्रिभ्यएवतुवेदेभ्यःपादंपादमदूदुहत् तदित्यृचोस्याःसावित्र्याःपरमेष्ठीप्रजापतिः ७७ एतदक्षरमेतांचजपन्व्याहृतिपूर्विकाम् संध्ययोर्वेदविद्विप्रोवेदपुण्येन युज्यते ७८

ऋग्यजुःसामलक्षणात् भूर्भुवःस्वरितिव्याहृतित्रयंचक्रमेणनिरदुहत्उद्धृतवान् ७६ त्रिभ्यएवेति तथात्रि- भ्यएववेदेभ्यःऋग्यजुःसामभ्यःतदित्यृचइतिप्रतीकेनानूदितायाःसावित्र्याःपादंपादमिति त्रीन्पादान्ब्रह्माचकर्षपरमेस्थानेतिष्ठती तिपरमेष्ठी ७७ यतएवमतः एतदक्षरमिति एतदक्षरमोंकाररूपंएतांचत्रिपदांसावित्रींव्याहृतित्रयपूर्विकांसंध्याकालेजपन्वेद- ज्ञोविप्रादिर्वेदत्रयाध्ययनपुण्येनयुक्तोभवतिअतःसंध्याकालेप्रणवव्याहृतित्रयोपेतांसावित्रींजपेदितिविधिःकल्प्यते ७८ सहस्रकृ त्वइति संध्यायामन्यत्रकालेएतत्सकृतंप्रणवव्याहृतित्रयंसावित्र्यात्मकंत्रिकंग्रामाद्बहिर्नदीतीरारण्यादौसहस्रावृत्तिंजपित्वामह

तोपिपापात्सर्पइवकंचुकान्मुच्यते तस्मात्पापक्षयार्थमिदंजपनीयमिति अप्रकरणेपिलाघवार्थमुक्तम् अन्यत्रैतत्त्रयोच्चारणमपिपु
नःकर्त्तव्यंस्यात् ७९ एतयर्चेति संध्यायामन्यत्रसमयेऋचैतयासावित्र्याविमुक्तस्त्यक्तसावित्रीजपःस्वकीययाक्रिययासायंप्रातर्होमा
दिरूपयास्वकालेत्यक्तोब्राह्मणःक्षत्रियोवैश्योपिसज्जनेषुनिंदांगच्छतितस्मात्स्वकालेसावित्रीजपंस्वक्रियांचनत्यजेत् ८० ओंकारपू
र्विकेति ओंकारपूर्विकास्तिस्रोव्याहृतयः भूर्भुवःस्वरित्येताअक्षरब्रह्मावाप्तिफलत्वेनाव्ययाःत्रिपदाचसावित्रीब्रह्मणोवेदस्यमुख
माद्यंतत्पूर्वकवेदाध्ययनारंभात् अथवाब्रह्मणःपरमात्मनःप्राप्तेर्द्वारमेतदध्ययनजपादिनानिष्पापस्यब्रह्मज्ञानप्रकर्षेणमोक्षावाप्तेः
८१ अतएवाह योऽधीतइति यःप्रत्यहमनलसःसन्सावित्रींप्रणवव्याहृतियुक्तांवर्षत्रयमधीतेसपरंब्रह्माभिमुखेनगच्छतिसवायुभू
तोवायुरिवकामचारीजायतेखंब्रह्मतदेवास्यमूर्त्तिरितिखमूर्त्तिमान्भवतिशरीरस्यापिनाशात्ब्रह्मैवसंपद्यते ८२ एकाक्षरमिति एका

सहस्रकृत्वस्त्वभ्यस्यबहिरेतत्त्रिकंद्विजः महतोप्येनसोमासात्त्वचेवाहिर्विमुच्यते ७९ एतयर्चाविसंयु
क्तःकालेचक्रिययास्वया ब्रह्मक्षत्रियविड्योनिर्गर्हणांयातिसाधुषु ८० ओंकारपूर्विकास्तिस्रोमहाव्या
हृतयोऽव्ययाः त्रिपदाचैवसावित्रीविज्ञेयंब्रह्मणोमुखम् ८१ योऽधीतेऽहन्यहन्येतांस्त्रीणिवर्षाण्यतं
द्रितः सब्रह्मपरमभ्येतिवायुभूतःखमूर्त्तिमान् ८२ एकाक्षरंपरंब्रह्मप्राणायामाःपरंतपः सावित्र्यास्तु
परंनास्तिमौनात्सत्यंविशिष्यते ८३ क्षरंतिसर्वावैदिक्योजुहोतियजतिक्रियाः अक्षरंदुष्करंज्ञेयंब्रह्मचै
वप्रजापतिः ८४

क्षरमोंकारः परब्रह्मपरंब्रह्मावाप्तिहेतुत्वात् ओंकारस्यजपेनतदर्थस्यचपरंब्रह्मणोभावनयातदवाप्तेःप्राणायाम
ाःसप्रणवसव्याहृतिसशिरस्कगायत्रीभिःत्रिरावृत्तिभिःकृताश्चांद्रायणादिभ्योपिपरंतपःप्राणायामाइतिबहुवचननिर्देशात्त्रयोवश्यंक
र्तव्याइत्युक्तम् सावित्र्याःप्रकृष्टमन्यन्मंत्रजातंनास्तिमौनादपिसत्यंवाग्विशिष्यते एषांचतुर्णांस्तुत्याचत्वार्येतान्युपासनीयानीतिविधिः
कल्प्यते धरणीधरेणतु एकाक्षरपरंब्रह्मप्राणायामपरंतपइतिपठितंव्याख्यातंचएकाक्षरंपरंयस्यतदेकाक्षरपरंएवंप्राणायामपरमिति
मेधातिथिप्रभृतिभिर्वृद्धैरलिखितंयतःलिखनात्पाठांतरंतत्स्वतंत्रोधरणीधरः ८३ क्षरंतीति सर्वावेदविहिताहोमयागादिरूपाःक्रि
याःस्वरूपतःफलतश्चविनश्यंतिअक्षरंतुप्रणवरूपमक्षयंब्रह्मप्राप्तिहेतुत्वात् फलद्वारेणाक्षरंब्रह्मीभावस्याविनाशात् कथमस्यब्र-

ह्मप्राप्तिहेतुत्वमतआह ब्रह्मचैवेति चशब्दोहेतौ यस्मात्प्रजानामधिपतिर्यत्ब्रह्मतदेवायमोंकारःस्वरूपतोब्रह्मप्रतिपादकत्वेनचास्यब्र
ह्मप्राप्तिहेतुत्वमतआह ब्रह्मचैवेति ... ब्रह्मत्वेनप्रतिपादकत्वेनवायमुपासितोजपकालेमोक्षहेतुरनेनदर्शितम् ८४ विधियज्ञादिति विधिविषयोयज्ञोविधि
ह्मत्वंउभयथापिब्रह्मत्वेनप्रतिपादकत्वेनवायमुपासितोजपकालेमोक्षहेतुरनेनदर्शितम् ८४ विधियज्ञादिति विधिविषयोयज्ञोविधि
यज्ञोदर्शपौर्णमासादिस्तस्मात्प्रकृतानांप्रणवादीनांजपयज्ञोदशगुणाधिकःसोप्युपांशुश्चेदनुष्ठितःतदाशतगुणाधिकःयत्समीपस्थोपि
परोनशृणोतितदुपांशुमानसस्तुजपःसहस्रगुणाधिकः जिह्वौष्ठस्पंदनायापिनचलतिसमानसः ८५ येपाकयज्ञादति ब्रह्मयज्ञादन्येयेपं
चमहायज्ञांतर्गतावैश्वदेवहोमबलिकर्मनित्यश्राद्धातिथिभोजनात्मकाश्चत्वारःपाकयज्ञाःविधियज्ञादर्शपौर्णमासादयःतैःसहिताजप
यज्ञस्यषोडशीमपिकलांनप्राप्नुवंतिजपयज्ञस्यषोडशांशेनापिनसमाइत्यर्थः ८६ जप्येनैवेति ब्राह्मणोजप्येनैवनिःसंदेहांसिद्धिंलभ
तेमोक्षप्राप्तियोग्योभवति अन्यद्वैदिकंयागादिकंकरोतुनकरोतुवा यस्मान्मैत्रोब्राह्मणःब्रह्मणःसंबंधीब्रह्मणिलीयतइत्यागमेषूच्यते

विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणैः उपांशुःस्याच्छतगुणःसाहस्रोमानसःस्मृतः ८५ येपाकयज्ञा
श्चत्वारोविधियज्ञसमन्विताः सर्वेतेजपयज्ञस्यकलांनार्हंतिषोडशीम् ८६ जप्येनैवतुसंसिध्येद्ब्राह्मणो
नात्रसंशयः कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते ८७ इंद्रियाणांविचरतांविषयेष्वपहारिषु संयमे
यत्नमातिष्ठेद्विद्वान्यंतेववाजिनाम् ८८ एकादशेंद्रियाण्याहुर्यानिपूर्वेमनीषिणः तानिसम्यक्प्रव-
क्ष्यामियथावदनुपूर्वशः ८९ श्रोत्रंत्वक्चक्षुषीजिह्वानासिकाचैवपंचमी पायूपस्थंहस्तपादंवाक्चैवद
शमीस्मृता ९०

मित्रमेवमैत्रःस्वार्थेऽण् यागादिषुपशुबीजादिवधान्नसर्वप्राणिप्रियतासंभवतितस्माद्यागादिनाविनापिप्रणवा
दिजपनिष्ठोनिस्तरतीतिजपप्रशंसानतुयागादीनांनिषेधःतेषामपिशास्त्रीयत्वात् ८७ इदानींसर्ववर्णानुष्ठेयंसकलपुरुषार्थोपयुक्त
मिंद्रियसंयममाह इंद्रियाणामिति इंद्रियाणांविषयेष्वपहरणशीलेषुवर्त्तमानानांक्षयित्वादिविषयदोषान्जानन्संयमेयत्नंकुर्यात्सा
रथिरिवरथनियुक्तानामश्वानाम् ८८ एकादशेति पूर्वपंडितायान्येकादशेंद्रियाण्याहुस्तान्यर्वाचांशिक्षार्थंसर्वाणिकर्मतोनामतश्चक्रमा
द्वक्ष्यामि ८९ श्रोत्रमिति तेषुएकादशसुश्रोत्रादीनिदशैतानिबहिरिंद्रियाणिनामतोनिर्दिष्टानि पायूपस्थंहस्तपादमितिद्वंद्वैकवद्भावाणित्

गंगेनांगानामितिप्राण्यंगहृद्दलादेकवद्भावः ९० बुद्धींद्रियाणीति एषांदशानांमध्येश्रोत्रादीनिपंचक्रमोक्तानिबुद्धेःकरणत्वात्बुद्धींद्रिया
णि पाय्वादीनिचोत्सर्गादिकर्मकरणत्वात्कर्मेंद्रियाणितद्विदोवदंति ९१ एकादशमिति एकादशसंख्यापूरकंचमनोरूपमंतरिंद्रियंज्ञा
तव्यम् स्वगुणेनसंकल्परूपेणउभयरूपेंद्रियगणप्रवर्त्तकस्वरूपम् अतएवयस्मिन्मनसिजितेउभावपिपंचकौबुद्धींद्रियकर्मेंद्रियगणौ-
जितौभवतः पंचकाविति तदस्यपरिमाणमित्यनुवृत्तौसंख्यायाःसंज्ञासंघसूत्राध्ययनेष्विति पंचसंख्यापरिमितिसंघार्थेकः ९२ मनोधर्मसं
कल्पमूलत्वादिंद्रियाणांप्रायेणप्रवृत्तेःकिमर्थमिंद्रियनिग्रहःकर्त्तव्यइत्यतआह इंद्रियाणामिति यस्मादिंद्रियाणांविषयेषुप्रसक्त्याऽदृष्टा
दृष्टंचदोषंनिःसंदेहंप्राप्नोतितान्येवपुनरिंद्रियाणिसम्यङ्नियम्यसिद्धिंमोक्षादिपुरुषार्थयोग्यतारूपांलभतेतस्मादिंद्रियसंयमंकुर्यादिति

बुद्धींद्रियाणिपंचैषांश्रोत्रादीन्यनुपूर्वशः कर्मेंद्रियाणिपंचैषांपाय्वादीनिप्रचक्षते ९१ एकादशंमनोज्ञे
यंस्वगुणेनोभयात्मकम् यस्मिन्जितेजितावेतौभवतःपंचकौगणौ ९२ इंद्रियाणांप्रसंगेनदोषमृच्छ
त्यसंशयम् सन्नियम्यतुतान्येवततःसिद्धिंनियच्छति ९३ नजातुकामःकामानामुपभोगेनशाम्यति ह
विषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते ९४ यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् प्रापणात्सर्व
कामानांपरित्यागोविशिष्यते ९५ नतथैतानिशक्यंतेसंनियंतुमसेवया विषयेषुप्रजुष्टानियथाज्ञानेन
नित्यशः ९६

शेषः ९३ किमिंद्रियसंयमेनविषयोपभोगादेवलब्धकामोनिवर्त्स्यतीत्याशंक्याह नजात्विति नकदाचित्कामोभिला
षः काम्यंतइतिकामाविषयाःतेषामुपभोगेननिवर्त्तते किंतुघृतेनाग्निरिवाधिकाधिकतरमेववर्द्धतेप्रात्यहंभोगस्यापिप्रतिदिनंतदधिकभो
गवांछादर्शनात् अतएवविष्णुपुराणेययातिवाक्यम् यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः एकस्यापिनपर्याप्तंतदित्यतितृष्णांत्यजे
त् तथा पूर्णंवर्षसहस्रंमेविषयासक्तचेतसः तथाप्यनुदिनंतृष्णायत्तेषुवहिजायते ९४ यश्चैतानिति यएतान्सर्वान्विषयान्प्राप्नुया
त् यश्चैतान्कामानुपेक्षतेतयोर्विषयोपेक्षकःश्रेयान्तस्मात्सर्वकामप्राप्तेस्तदुपेक्षाप्रशस्यातथाहिविषयलोलुपस्यतत्साधनार्जुत्पादनेक
प्रसंगतोविपत्तौचक्लेशानिशमेनतुविषयनिरसस्य ९५ इदानीमिंद्रियसंयमोपायमाह नतथेति एतानींद्रियाणिविषयेषुप्रसक्तानित-

थानासेवयाविषयसन्निधिवर्जनरूपयानियंतुंनशक्यंतेदुर्निवारत्वात् यथासर्वदाविषयाणां क्षयित्वादिदोषज्ञानेनशरीरस्यचास्थिस्थू
लमित्यादिवक्ष्यमाणदोषचिंतनेनेनतस्मादिषयदोषज्ञानादिनाबहिरिंद्रियाणिमनश्चनियच्छेत् ९६ यस्मादनियमितंमनोविकारस्यहे-
तुःस्यादतआह वेदाइति वेदाध्ययनदानयज्ञनियमतपांसिभोगादिविषयसेवासंकल्पशीलिनोनकदाचित्फलसिद्धयेप्रभवंति ९७ जि
तेंद्रियस्यस्वरूपमाह श्रुत्वेति स्तुतिवाक्यंनिंदावाक्यंचश्रुत्वासुखस्पर्शंदुकूलादिदुःखस्पर्शंमेषकंबलादिस्पृष्ट्वासुरूपंकुरूपंचदृष्ट्वास्वा
दु अस्वादुचभुक्त्वासुरभिमसुरभिंचघ्रात्वायस्यनहर्षविषादौसजितेंद्रियोज्ञातव्यः ९८ एकेंद्रियासंयमोपिनिवार्यतइत्याह इंद्रियाणांत्वि
ति सर्वेषामिंद्रियाणांमध्येयद्येकमपींद्रियंविषयप्रवणंभवतिततोस्यविषयपरस्यइंद्रियांतरैरपितत्त्वज्ञानंक्षरतिनव्यवतिष्ठतेचर्मनिर्मि
तोदकपात्रादिवैकेनापिछिद्रेणसर्वस्थानस्थमेवोदकंनव्यवतिष्ठते ९९ इंद्रियसंयमस्यसर्वपुरुषार्थहेतुतांदर्शयति वशेकृत्वेति बहि

वेदास्त्यागश्चयज्ञाश्चनियमाश्चतपांसिच नविप्रदुष्टभावस्यसिद्धिंगच्छंतिकर्हिचित् ९७ श्रुत्वास्पृष्ट्वा
चदृष्ट्वाचभुक्त्वाघ्रात्वाचयोनरः नहृष्यतिग्लायतिवासविज्ञेयोजितेंद्रियः ९८ इंद्रियाणांतुसर्वेषांयद्ये-
कंक्षरतींद्रियम् तेनास्यक्षरतिप्रज्ञादृतेःपादादिवोदकम् ९९ वशेकृत्वेंद्रियग्रामंसंयम्यचमनस्तथा
सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् १०० पूर्वांसंध्यांजपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् पश्चि-
मांतुसमासीनःसम्यगृक्षविभावनात् १०१

रिंद्रियगणमायत्तंकृत्वामनश्चसंयम्यसर्वान्पुरुषार्थान्सम्यक्साधयेत् योगत
उपायेनस्वदेहमपीडयन् यःसहजसुखीसंस्कृतान्नादिकंभुंक्तेसक्रमेणतंत्यजेत् १०० पूर्वांसंध्यामिति पूर्वांसंध्यांपश्चिमामितिचक्रा
लाध्वनोरत्यंतसंयोगेद्वितीयाप्रथमसंध्यांसूर्यदर्शनपर्यंतंसावित्रींजपन्तिष्ठेत् आसनादुत्थायनिवृत्तगतिरेकत्रदेशेकुर्यात् पश्चिमां
तुसंध्यांसावित्रींजपन्सम्यङ्नक्षत्रदर्शनपर्यंतमुपविष्टःस्यात् अत्रचफलवत्त्वाज्जपःप्रधानंस्थानासनंत्वंगंफलवत्सन्निधावफलंतदंग
मितिन्यायात् संध्ययोर्वेदविद्विप्रोवेदपुण्येनयुज्यते सहस्रकृत्वस्त्वभ्यस्यइतिचपूर्वंजपात्फलमुक्तम् मेधातिथिस्तुस्थानासनयोरेव
प्राधान्यमाह संध्याकालश्चमुहूर्तमात्रंनदाहयोगीयाज्ञवल्क्यःह्रासवृद्धीतुसततंदिवसानांयथाक्रमम् संध्यामुहूर्तमात्रंतुह्रासेवृद्धौचसा
स्मृता १०१

पूर्वसंध्यामिति पूर्वसंध्यायांतिष्ठन्जपंकुर्वाणोनिशासंचितंपापंनाशयति पश्चिमसंध्यायांतुउपविश्यजपंकुर्वन्दिवार्जितंपापंनिहंतितत्रा पिजपात्फलमुक्तम् एतच्चाज्ञानादिकृतपापविषयम् अतएवयाज्ञवल्क्यः दिवावायदिवारात्रौयदज्ञानकृतंभवेत् त्रिकालसंध्याकरणा त्तत्सर्वंविप्रणश्यति १०२ नतिष्ठतीति यःपुनःपूर्वसंध्यांनासुत्तिष्ठतिपश्चिमांतुनोपास्तेतत्तत्कालविहितंजपादिनकरोतीत्यर्थःसशूद्रइव सर्वस्माद्द्विजातिकर्मणोऽतिथिसत्कारादेरपिवाह्यःकार्यः अनेनैवप्रत्यवायेनसंध्योपासनस्यनित्यतोक्तानित्यत्वेपिसर्वदापेक्षितपापक्षय-स्यफलत्वमविरुद्धम् १०२ अपांसमीपइति ब्रह्मयज्ञरूपमिदंबहुवेदाध्ययनाशक्तौसावित्रीमात्राध्ययनमपिविधीयते अरण्यादिनिर्जन देशंगत्वानद्यादिजलसमीपेनियतेंद्रियःसमाहितोऽनन्यमनानैत्यकंविधिंब्रह्मयज्ञरूपमास्थितोऽनुतिष्ठन्सन् सावित्रीमपिप्रणवव्याहृतित्र ययुतांयथोक्तामधीयीत १०४वेदोपकरणइति वेदोपकरणेवेदांगेशिक्षादौनैत्यकेनित्यानुष्ठेयेचस्वाध्यायेब्रह्मयज्ञरूपेहोममंत्रेषुचानध्या

पूर्वांसंध्यांजपंस्तिष्ठन्नैशमेनोव्यपोहति पश्चिमांतुसमासीनोमलंहंतिदिवाकृतम् १०२ नतिष्ठतितुयः पूर्वांनोपास्तेयश्चपश्चिमाम् सशूद्रवद्बहिष्कार्यःसर्वस्माद्द्विजकर्मणः १०३ अपांसमीपेनियतोनैत्यकं-विधिमास्थितः सावित्रीमप्यधीयीतगत्वारण्यंसमाहितः १०४ वेदोपकरणेचैवस्वाध्यायेचैवनैत्यके नानुरोधोस्त्यनध्यायेहोममंत्रेषुचैवहि १०५ नैत्यकेनास्त्यनध्यायोब्रह्मसत्रंहितत्स्मृतम् ब्रह्माहुतिहुतंपुण्यमनध्यायवषट्कृतम् १०६ यःस्वाध्यायमधीतेऽब्दंविधिनानियतःशुचिः तस्यनित्यंक्षरत्येषपयोदधि घृतंमधु १०७

यादरोनास्ति १०५ नैत्यकइति पूर्वोक्तनैत्यकस्वाध्यायस्यायमनुवादःनैत्यकेजपयज्ञेअनध्यायोनास्तियतःसततप्र वृत्तत्वात् ब्रह्मसत्रंतन्मन्वादिभिःस्मृतंब्रह्मैवाहुतिर्ब्रह्माहुतिर्हविस्तस्याहुत अनध्यायाध्ययनमध्ययनरूपमनध्यायवषट्कृतमपिपुण्य मेवभवति १०६ यःस्वाध्यायमिति अब्दमिति अत्यंतसंयोगेद्वितीयायोवर्षमप्येकंस्वाध्यायमहरहर्विहितांगयुक्तंनियतेंद्रियःप्रयतोजप तितस्यैषस्वाध्यायोजपयज्ञः क्षीरादीनि क्षरतिक्षीरादिभिर्देवान्पितॄंश्चप्रीणातितेचप्रीताःसर्वकामैर्जपयज्ञकारिणंतर्पयंतीत्यर्थः अत एवयाज्ञवल्क्यः मधुनापयसाचैवसदेवांस्तर्पयेद्द्विजः पितॄन्मधुघृताभ्यांचऋचोधीतेहियोन्वहं इत्युपक्रम्यन्यतुर्णामेव वेदानांपुराणानांच

जपस्यदेवपितृनृप्तिमुक्तारोषे तेतृप्तास्तर्पयंत्येनंसर्वकामफलैःशुभैरित्युक्तवान् १०७ अग्नींधनमिति सायंप्रातःसमिद्धोमंभिक्षास
मूहाहरणमखट्वाशयनरूपामधःशय्यांनतुस्थंडिलशायित्वमेवगुरोरुदककुंभाद्याहरणरूपंहितंकृतोपनयनोब्रह्मचारीसमावर्त्तनप
र्यंतंकुर्यात् १०८ कीदृशाःशिष्योऽध्याप्यइत्याह आचार्यपुत्रःपरिचारकज्ञानांतरदाता धर्मवित्मृद्वार्यादिशुचिः बांधवःग्रहणधा
रणसमर्थःधनदाताहितेच्छुःज्ञातिः दशैतेधर्मेणाध्याप्याः १०९ नापृष्टइति यद्यन्येनाल्पाक्षरंविस्वरंचाधीतंतस्यतत्त्वंनवदेत् शि
ष्यस्यतुपृच्छतोपिवक्तव्यंभक्तिश्रद्धादिमप्यधर्मोल्लंघनमन्यायःतेनपृच्छतोनब्रूयात् जानन्नपिहिप्राज्ञोलोकेमूकइवव्यवहरेत् ११०
उक्तप्रतिषेधद्वयातिक्रमेदोषमाह अधर्मेणेति अधर्मेणपृष्टोपियोयस्यवदतियश्चान्यायेनयंपृच्छतितयोरन्यतरोव्यतिक्रमकारीम्रि
यतेविद्वेषंवातेनसहगच्छति १११ धर्मार्थाविति यस्मिन्शिष्येऽध्यापितेधर्मार्थौनभवतःपरिचर्यावाऽध्ययनानुरूपातत्रविद्यानार्प

अग्नींधनंभैक्षचर्यामधःशय्यांगुरोर्हितम् आसमावर्त्तनात्कुर्यात्कृतोपनयनोद्विजः १०८ आचार्य
पुत्रःशुश्रूषुर्ज्ञानदोधार्मिकःशुचिः आप्तःशक्तोऽर्थदःसाधुःस्वोध्याप्यादशधर्मतः १०९ नापृष्टःक
स्यचिद्ब्रूयान्नचान्यायेनपृच्छतः जानन्नपिहिमेधावीजडवल्लोकआचरेत् ११० अधर्मेणचयःप्राह
यश्चाधर्मेणपृच्छति तयोरन्यतरःप्रैतिविद्वेषंवाधिगच्छति १११ धर्मार्थौयत्रनस्यातांशुश्रूषावापित
द्विधा तत्रविद्यानवप्तव्याशुभंबीजमिवोषरे ११२ विद्ययैवसमंकामंमर्त्तव्यंब्रह्मवादिना आपद्य
पिहिघोरायांनत्वेनामिरिणेवपेत् ११३ विद्याब्राह्मणमेत्याहशेवधिस्तेस्मिरक्षमाम् असूयकायमां
मादास्तथास्यांवीर्यवत्तमा ११४

णीयास्कृष्टब्रीह्यादिबीजमिवोषरेयत्रबीजसुसंनप्ररोहतिसउषरःनचार्थग्रहणेभृतका
पकत्वमाशंकनीयंयद्येतावन्मह्यंदीयतेतदैतावदध्यापयामीतिनियमाभावात् ११२ विद्ययेति विद्ययैवसहवेदाध्यापकेनवरंमर्त्तव्यं
नतुसर्वथाध्यापनयोग्यशिष्याभावेचापात्रायैवतांप्रतिपादयेत् तथाछांदोग्यब्राह्मणम् विद्ययासार्द्धंम्रियेतनविद्यामूषरेवपेत् ११३
अस्यानुवादमाह विद्याब्राह्मणमिति विद्याधिष्ठात्रीदेवताकंचिदध्यापकंब्राह्मणमागत्यएवमवदत् नवाहंनिधिरस्मिमांरक्षअसूय-

कादिदोषवत्तेनमांवदेः तथासत्यतिशयेनवीर्यवती भूयासम् तथाच छांदोग्यब्राह्मणम् विद्याहवैब्राह्मणमाजगामतवाहमस्मित्वंमांपाल
यअनर्हतेमानिनेनैवमादागोपायमांश्रेयसीतथाहमस्मीति ११४ यमिति यमेवपुनःशिष्यंशुचिन्नियतेंद्रियंब्रह्मचारिणंजानासितस्मैवि
द्यारूपनिधिरक्षकायप्रमादरहितायमांवद ११५ ब्रह्मेति यःपुनरभ्यासार्थमधीयानादन्यंवाकंचिदध्यापयतस्तदनुमतिरहितंवेदंगृण्हाति
सवेदस्तेययुक्तोनरकंगच्छतितस्मादेतन्नकर्त्तव्यम् ११६ लौकिकमिति लौकिकमर्थशास्त्रादिज्ञानंवैदिकंवेदार्थज्ञानं आध्यात्मिकंब्रह्म
ज्ञानंयस्मात्तुगृण्हातिबहुमान्यमध्येस्थितंप्रथममभिवादयेत् लौकिकादिज्ञानदातॄणामेवत्रयाणांसमवायेयथोत्तरंमान्यत्वम् ११७ सा
वित्रीति सावित्रीमात्रवेत्तापिवरंसुयंत्रितःशास्त्रनियमितः विप्रादिर्मान्यः नायंत्रितोवेदत्रयवेत्तापिनिषिद्धभोजनादिशीलः प्रतिषिद्धविक्रे

यमेवतुशुचिंविद्यान्नियतब्रह्मचारिणम् तस्मैमांब्रूहिविप्रायनिधिपायाप्रमादिने ११५ ब्रह्मयस्त्वननु
ज्ञातमधीयानादवाप्नुयात् सब्रह्मस्तेयसंयुक्तोनरकंप्रतिपद्यते ११६ लौकिकंवैदिकंवापितथाध्यात्मिक
मेवच आददीतयतोज्ञानंतंपूर्वमभिवादयेत् ११७ सावित्रीमात्रसारोपिवरंविप्रःसुयंत्रितः नायंत्रित
स्त्रिवेदोपिसर्वाशीसर्वविक्रयी ११८ शय्यासनेऽध्याचरितेश्रेयसानसमाविशेत् शय्यासनस्थश्चैवैनंप्र
त्युत्थायाभिवादयेत् ११९ ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआयति प्रत्युत्थानाभिवादाभ्यांपुनस्तान्प्र
तिपद्यते १२० अभिवादनशीलस्यनित्यंवृद्धोपसेविनः चत्वारितस्यवर्द्धंते आयुर्विद्यायशोबलम् १२१

तायणतच्चप्रदर्शनमात्रम् सुयंत्रितशब्देनविधिनिषेधनिष्ठत्वस्यविवक्षितत्वात् ११८ शय्येति शय्याचआसनंचशय्यासनंजातिरप्राणिना
मितिद्वंद्वैकवद्भावः तस्मिन्श्रेयसाविद्याद्यधिकेनगुरुणाचाध्याचरितेसाधारण्येनस्वीकृतेचतत्कालमपिनासीत् स्वयंचशय्यासनस्थो
गुरावागतेउत्थायाभिवादनंकुर्यात् ११९ अस्यार्थवादमाह ऊर्ध्वमिति यस्मात्यूनोऽल्पवयसोवयोविद्यादिनास्थविरेआयतिआगच्छ
तिसतिप्राणाऊर्ध्वंउत्क्रामंतिदेहाद्बहिर्निर्गंतुमिच्छंतितान्वृद्धस्यप्रत्युत्थानाभिवादाभ्यांपुनःसुस्थान्करोति तस्माद्वृद्धस्यप्रत्युत्थायाभिवा
दनंकुर्यात् १२० इतश्चफलमाह अभिवादनशीलस्येति उत्थायसर्वदावृद्धाभिवादनशीलस्यवृद्धसेविनश्च आयुःप्रज्ञायशोबलानिच

त्यादिपदैरभिभाषणम् १२९ मातुलांश्चेति मातुलादीनागतान् कनिष्ठानासनादुत्थाय असावहमितिवदेत् नाभिवादयेत् असाविति स्वनामनिर्देशः भूयिष्ठाः खलुगुरवइत्युपक्रम्यज्ञानवृद्धतपोवृद्धयोरपिहारीतेनगुरुत्वकीर्त्तनात्तयोश्चकनिष्ठयोरपिसंभवात् तद्विषयंगुरुशब्दः १३० मातृष्वसेति मातृष्वस्रादयोगुरुपत्नीवत्प्रत्युत्थानाभिवादनासनदानादिभिः संपूज्याः अभिवादनप्रकरणादभिवादनमेवसंपूजनंविज्ञायतइतिसमास्ताइत्युक्तम् गुरुभार्यासमानत्वात्प्रत्युत्थानादिकमपिकार्यमित्यर्थः १३१ भ्रातुर्भार्येति भ्रातुःसजातीयाभार्याज्येष्ठापूजाप्रकरणात्उपसंग्राह्यापादयोरभिवाद्या अहन्यहनिप्रत्यहमेव अपिरेवार्थे ज्ञातयःपितृपक्षाःपितृव्यादयः संबंधिनोमातृपक्षाःश्वसुरादयश्चतेषांपत्न्यःपुनर्विप्रोष्यप्रवासात्प्रत्यागतेनैवाभिवाद्याःनतुप्रत्यहंनियमः १३२ पितुर्भगिन्यामिति पितुर्मातुश्चभगिन्यांज्येष्ठायांचात्मनोभगिन्यांमातृवद्वृत्तिमातिष्ठेत् मातापुनस्ताभ्योगुरुतमा ननुमातृष्वसामातुलानीत्यनेनैवगुरुप-

मातुलांश्चपितृव्यांश्चश्वसुरानृत्विजोगुरून् असावहमितिब्रूयात्प्रत्युत्थाययवीयसः १३० मातृष्वसा-
मातुलानीश्वश्रूरथपितृष्वसा संपूज्यागुरुपत्नीवत्समास्तागुरुभार्यया १३१ भ्रातुर्भार्योपसंग्राह्या
सवर्णाहन्यहन्यपि विप्रोष्यतूपसंग्राह्याज्ञातिसंबंधियोषितः १३२ पितुर्भगिन्यांमातुश्चज्यायस्यांच-
स्वसर्यपि मातृवद्वृत्तिमातिष्ठेन्मातातांभ्योगरीयसी १३३ दशाब्दाख्यंपौरसख्यंपंचाब्दाख्यंकलाभृता
म् त्र्यब्दपूर्वंश्रोत्रियाणांस्वल्पेनापिस्वयोनिषु १३४

त्नीवत्पूज्यत्वमुक्तंकिमधिकमनेनबोध्यते इदमेवमातातांभ्योगरीयसीतितेनपितृष्वस्रानुज्ञायांदत्तायांमात्राचविरोधेमातुराज्ञाअनुष्ठेयेति अथवापूर्वंपितृष्वस्रादेर्मातृवत्पूज्यत्वमुक्तंअनेनतुस्नेहादिवृत्तिरप्यतिदिश्यतेइत्यपुनरुक्तिः १३३ दशाब्दाख्यमिति दश अब्दाआख्यायस्यतद्दशाब्दाख्यंपौरसख्यं अयमर्थः एकपुरवासिनांवक्ष्यमाणविद्यादिगुणरहितानांएकस्यदशभिरब्दैर्ज्येष्ठत्वेसत्यपिसख्यमाख्यायते पुरग्रहणंप्रदर्शनार्थंतेनैकग्रामादिनिवासिनामपिस्यात् गीतादिकलाभिज्ञानांपंचवर्षपर्यंतंसख्यंश्रोत्रियाणांत्र्यब्दपर्यंतंसापिंडेषु अत्यंताल्पेनैवकालेनसहसख्यम् अपिरेवार्थेसर्वत्रोक्तकालादूर्ध्वंज्येष्ठव्यवहारः १३४

ब्राह्मणमिति दशवर्षंब्राह्मणंशतवर्षंपुनः क्षत्रियंपितापुत्रौजानीयात् तयोर्मध्येदशवर्षोपिब्राह्मणएव क्षत्रियस्यशतवर्षस्यापिपितातस्मा
त्पितृवदसौतस्यमान्यः १३५ वित्तमिति वित्तंन्यायार्जितंधनंबंधुः पितृव्यादिःवयोऽधिकवयस्कताकर्मश्रौतंस्मार्तंचविद्यावेदार्थतत्त्वज्ञा
नंएतानिपंचमान्यत्वकारणानि एषांमध्येयद्यदुत्तरंतत्तत्पूर्वस्मात्श्रेष्ठमिति बहुमान्यमेऽकेवलाबलमुक्तम् १३६ पंचानामिति त्रिषु
वर्णेषुब्राह्मणादिषुपंचानांवित्तादीनांमध्येयत्रपुरुषेपूर्वमप्यनेकंभवतिसएवोत्तरस्मादपिमान्यः तेनवित्तबंधुयुक्तोवयोधिकान्मान्यः ए
वंवित्तादित्रययुक्तःकर्मवतोमान्यःवित्तादिचतुष्टययुक्तोविदुषोमान्यः गुणवंतिचेतिप्रकर्षवंतितेनद्वयोरेवविद्यादिसत्त्वेप्रकर्षोमानहेतुः
शूद्रोपिदशमीमवस्थांनवत्यधिकांगतोद्विजन्मनामपिमानार्हः शतवर्षाणांदशधाविभागेदशम्यवस्थानवत्यधिकाभवति १३७ अयमपि

ब्राह्मणंदशवर्षंतुशतवर्षंतुभूमिपम् पितापुत्रौविजानीयाद्ब्राह्मणस्तुतयोःपिता १३५ वित्तंबंधुर्वयःक
र्मविद्याभवतिपंचमी एतानिमान्यस्थानानिगरीयोयद्यदुत्तरम् १३६ पंचानांत्रिषुवर्णेषुभूयांसिगुणवं
तिच यत्रस्युःसोत्रमानार्हःशूद्रोपिदशमींगतः १३७ चक्रिणोदशमीस्थस्यरोगिणोभारिणःस्त्रियाः स्ना
तकस्यचराज्ञश्चपंथादेयोवरस्यच १३८ तेषांतुसमवेतानांमान्यौस्नातकपार्थिवौ राजस्नातकयोश्चैवस्नात
कोनृपमानभाक् १३९ उपनीयतुयःशिष्यंवेदमध्यापयेद्द्विजः सकल्पंसरहस्यंचतमाचार्यंप्रचक्षते १४०

पूजाप्रकारःप्रसंगादुच्यते चक्रिणइति चक्रयुक्तरथादियानारूढस्यनवत्यधिकवयसोरोगार्त्तस्यभारपीडितस्यस्त्रियाःअचिरनिवृ
त्तसमावर्त्तनस्यदेशाधिपस्यविवाहायप्रस्थितस्यपंथास्त्यक्तव्यः त्यागार्थत्वाच्चददातेर्न्नचतुर्थी १३८ तेषामिति तेषामेकत्रमिलि
तानांदेशाधिपस्नातकौमान्यौराजस्नातकयोरपिस्नातकएवराजापेक्षयामान्यः अतोराजशब्दोत्रपूर्वश्लोकेनकेवलजातिवचनःक्षत्रि
यजात्यपेक्षयाब्राह्मणंदशवर्षंत्वित्यनेनब्राह्मणमात्रस्यमान्यत्वाभिधानात् स्नातकग्रहणवैयर्थ्यात् १३९ उपनीयेति आचार्यादि
शब्दार्थमाह तैःशब्दैरिहशास्त्रेप्रायोव्यवहारात् योब्राह्मणःशिष्यमुपनीयकल्परहस्यसंहितांवेदशाखांसर्वंअध्यापयतितमाचा
र्यंपूर्वेमुनयोवदंति कल्पोयज्ञविद्यारहस्यमुपनिषत् वेदत्वेप्युपनिषदांप्राधान्यविवक्षयापृथङ्निर्देशः १४० ७ ७

श्रेष्ठत्वंसर्वत्रद्रष्टव्यम् ... ब्राह्मणानांविद्ययाक्षत्रियाणांपुनर्वीर्येणवैश्यानांधान्यवस्त्रादिधनेनशूद्राणामेवपूर्वजन्मनाश्रेष्ठत्वंसर्वत्रतृतीया-
विप्राणामिति ब्राह्मणानांविद्ययाक्षत्रियाणांपुनर्वीर्येणवैश्यानांधान्यवस्त्रादिधनेनशूद्राणामेवपूर्वजन्मनाश्रेष्ठत्वंसर्वत्रतृतीया-
थेंतसिः १५५ नतेनेति नतेनवृद्धोभवतियेनास्यशुक्लकेशंशिरःकिंतुयुवापिसन्विद्वान्तंदेवाःस्थविरंजानंति १५६ यथाकाष्ठमय
इति यथाकाष्ठघटितोहस्तीयथाचर्मनिर्मितोमृगःयश्चविप्रोनाधीतेत्रयएतेनाममात्रंदधतिनतुहस्त्यादिकार्यंशत्रुवधादिकंकर्तुंक्षम
ते १५७ यथाषंढइति यथानपुंसकंस्त्रीषुनिष्फलंयथाचस्त्रीगवीगव्यामेवनिष्फलायथाचाज्ञेदानमफलंतथाब्राह्मणोऽप्यनर्थ
नोनिष्फलःश्रौतस्मार्तकर्मानर्हतयातत्फलरहितः १५८ अहिंसयेवेति भूतानांशिष्याणांप्रकरणात्श्रेयोर्थमनुशासनमनतिहिंस
याकर्त्तव्यंरज्जवेणुदलेनवेत्यहिंसायाअभ्यनुज्ञानात् वाणीमधुराप्रीतिजननीश्लक्ष्णयानोच्चैरुच्यतेसाशिष्यशिक्षायैधर्मबुद्धिमिच्छ

विप्राणांज्ञानतोज्यैष्ठंक्षत्रियाणांतुवीर्यतः वैश्यानांधान्यधनतःशूद्राणामेवजन्मतः १५५ नतेनवृद्धो
भवतियेनास्यपलितंशिरः योवैयुवाप्यधीयानस्तंदेवाःस्थविरंविदुः १५६ यथाकाष्ठमयोहस्तीयथाच
र्ममयोमृगः यश्चविप्रोनधीयानस्त्रयस्तेनामबिभ्रति १५७ यथाषंढोफलःस्त्रीषुयथागोगविचाफला
यथाचाज्ञेऽफलंदानंतथाविप्रोऽनृचोफलः १५८ अहिंसयैवभूतानांकार्यंश्रेयोऽनुशासनम् वाक्चैवम
धुराश्लक्ष्णाप्रयोज्याधर्ममिच्छता १५९ यस्यवाङ्मनसीशुद्धेसम्यग्गुप्तेचसर्वदा सवैसर्वमवाप्नोतिवेदा
न्तोपगतंफलम् १६० नारुंतुदःस्यादार्तोपिनपरद्रोहकर्मधीः ययास्योद्विजतेवाचानालोक्यांतामुदीरयेत्
१६१

तामयोक्तव्या १५९ यस्येति इदानींपुरुषमात्रस्यफलंधर्मंवाङ्मनःसंयममाहनअध्यापयितुरेव यस्यवाङ्मनसोरुभये
शुद्धंभवति वागनृतादिभिरदुष्टंमनश्चरागद्वेषादिभिरदूषितंभवतिएतेवाङ्मनसीनिषिद्धविषयप्रकरणेसर्वदायस्यपुंसःसुरक्षि
तेभवतःसवेदांतेऽवगतंसर्वफलंसर्वज्ञत्वंसर्वेशानादिरूपंमोक्षलाभादवाप्नोति १६० नारुंतुदइति अयमपिपुरुषमात्रस्यैवधर्मोना
ध्यापकस्यआर्तःपीडितोपिनारुंतुदःस्यात् नमर्मपीडाकरंतत्त्वदूषणमुदाहरेत् तथापरस्यद्रोहोपकारस्तदर्थंकर्मबुद्धिश्चनकर्त्तव्या
तयाययावाचान्यास्यपरोव्यथतेतांमर्मस्पृशमथालोक्यांस्वर्गादिप्राप्तिविरोधिनींनवदेत् १६१ ७ ७ ७

संमानादिति ब्राह्मणः संमानात् विषादिव सर्वदो द्विजः संमाने प्रीतिं न कुर्यात् अमृतस्येव सर्वस्माल्लोकादवमानस्याकांक्षेत् अवमाने
परेण कृतेपि क्षमावांस्तत्र खेदं न कुर्यात् मानावमानद्वंद्वसहिष्णुत्वमनेन विधीयते १६२ सुखंह्यवमतः शेते इति अवमानसहिष्णुत्वे
हेतुमाह यस्मादवमाने परेण कृते तत्र खेदमकुर्वाणः सुखं निद्राति अन्यथावमानदुःखेन दह्यमानः कथं निद्रां लभते कथं च सुखं प्रति
बुध्यते प्रतिबुद्धस्य कथं सुखं कार्येषु चरति अवमानकर्त्ता तेन पापेन विनश्यति १६३ अनेनेति अनेन क्रमकथितोपायेन जातकर्मादि
नाउपनयनपर्यंतेन संस्कृतो द्विजो गुरुकुले वसन् शनैरत्वरया वेदग्रहणार्थं तपोऽभिहिताभिधास्यमाननियमकलापरूपमनुतिष्ठेत् वि
ध्यंतरसिद्धस्यापि अयमर्थवादो ध्ययनांगत्वबोधनाय १६४ अध्ययनांगत्वमेव स्पष्टयति तपोविशेषैर्नियमकलापैर्विविधैर्बहुप्र-
कारैश्च अध्येष्यमाणस्त्वाचांत इत्यादिनोक्तैः सेवेतेमांस्तु नियमानित्यादिभिर्वक्ष्यमाणैरपि व्रतैश्चोपनिषन्महानाम्निकादिभिर्विधि

संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव अमृतस्येव चाकांक्षेदवमानस्य सर्वदा १६२ सुखंह्यवमतः शे
ते सुखं च प्रतिबुध्यते सुखं चरति लोकेस्मिन्नवमंता विनश्यति १६३ अनेन क्रमयोगेन संस्कृतात्मा-
द्विजः शनैः गुरौ वसन् संचिनुयाद्ब्रह्माधिगमिकं तपः १६४ तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः
वेदः कृत्स्नोधिगंतव्यः सरहस्यो द्विजन्मना १६५ वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः वेदाभ्या
सो हि विप्रस्य तपः परमिहोच्यते १६६ आहैव स नखाग्रेभ्यः परमं तप्यते तपः यः स्रग्व्यपि द्विजोऽधीते
स्वाध्यायं शक्तितोऽन्वहम् १६७

देशितैः स्वगृह्यविहितैः समग्रवेदो मंत्रब्राह्मणात्मकः सोपनिषत्कोप्यध्येतव्यः रहस्य
मुपनिषदः प्राधान्यख्यापनाय पृथङ्निर्देशः १६५ वेदमेवेति यत्र नियमानामंगत्वमुक्तं तत् कृत्वा स्वाध्यायाध्ययनमनेन विधत्ते तप
स्तप्स्यन् चरिष्यन् द्विजो वेदमेव ग्रहणार्थमावर्त्तयेत् तस्माद्वेदाभ्यास एव विप्रादेरिह लोके प्रकृष्टं तपो मुनिभिरभिधीयते १६६
आहैवेति स्वाध्यायाध्ययनस्तुतिरियं ह शब्दः परमशब्द विहितस्यापि प्रकर्षस्य सूचकः स द्विज आनखाग्रेभ्य एव चरणनखपर्यंतस
र्वदेहव्यापकमेव प्रकृष्टं तपस्तप्यते यः स्रग्व्यपि कुसुममालाधार्यपि प्रत्यहं यथाशक्ति स्वाध्यायमधीते स्रग्वी अपीत्यनेन वेदाध्ययना

यत्रस्नानादिनियमत्यागमपिस्तत्यर्थंदर्शयतितप्यतइतितपस्तपःकर्मकस्यवेतियंणात्मनेपदेभवतः १६७ योनऽधीत्येति योद्विजोवेदमनधीत्यान्यत्रार्थशास्त्रादौश्रमंयत्नातिशयंकरोतिसजीवन्नेवपुत्रपौत्रादिसहितःशीघ्रंशूद्रत्वंगच्छति वेदमनधीत्यापिस्मृतिवेदांगाध्ययनेविरोधाभावः अतएवशंखलिखितौ नवेदमनधीत्यान्यांविद्यामधीतान्यत्रवेदांगस्मृतिभ्यः १६८ द्विजानांतत्रतत्राधिकारश्रुतेर्द्विजत्वनिरूपणार्थमाह मातुरग्रेइति मातुःसकाशादादौपुरुषस्यजन्मद्वितीयंमौंजीबंधनेउपनयनेऽथापोःसंज्ञाछंदसोर्बहुलमितिन्ह्रस्वः तृतीयंज्योतिष्टोमादियज्ञदीक्षायांवेदश्रवणात् तथाचश्रुतिःपुनर्वाएतमृत्विजोगर्भंकुर्वंतियदीक्षयंतीतिप्रथमद्वितीयदृतंयजन्मकथनंचेदंद्वितीयजन्मस्तुत्यर्थंद्विजस्यैवयज्ञदीक्षायामप्यधिकारात् १६९ तत्रेति तेषुत्रिषुजन्मसुमध्येयदेतद्ब्रह्मग्रहणार्थंजन्मउपनयनसंस्काररूपंमेखलाबंधनोपलक्षितंतत्रास्यमाणवकस्यसावित्रीमाताआचार्यश्चपितामातृपितृसंपाद्यत्वाज्जन्मनः१७०

योऽनधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः १६८ मातुरग्रेऽधिजननं द्वितीयंमौंजीबंधने तृतीयंयज्ञदीक्षायांद्विजस्यश्रुतिचोदनात् १६९ तत्रयद्ब्रह्मजन्मास्यमौंजीबंधनचिन्हितम् तत्रास्यमातासावित्रीपितात्वाचार्यउच्यते १७० वेदप्रदानादाचार्यंपितरंपरिचक्षते नह्यस्मिन् युज्यतेकर्मकिंचिदामौंजिबंधनात् १७१ नाभिव्याहारयेद्ब्रह्मस्वधानिनयनादृते शूद्रेणहिसमस्तावद्या वद्वेदेनजायते १७२ कृतोपनयनस्यास्यव्रतादेशनमिष्यते ब्रह्मणोग्रहणंचैवक्रमेणविधिपूर्वकम् १७३

वेदप्रदानादिति वेदाध्ययनादाचार्यंपितरंमन्वादयोवदंतिपितृवन्महोपकारफलात्गौणंपितृत्वंमहोपकारमेवदर्शयति नह्यस्मिन्निति यस्माद्स्मिन्माणवकेआउपनयनात्किंचित्कर्मश्रौतंस्मार्तंचनसंबध्यतेनतत्राधिक्रियतइत्यर्थः १७१ नाभिव्याहारयेदिति आमौंजीबंधनादित्यनुवर्त्ततेआउपनयनाद्वेदंनोच्चारयेत् स्वधाशब्देनश्राद्धमुच्यतेनिनीयतेनिष्पाद्यतेयेनमंत्रजातेनतदृच्छेयित्वामृतपितृकोनवश्राद्धादौमंत्रंनोच्चारयेत् तद्व्यतिरिक्तंवेदंनोदाहरेत्यस्माद्यावद्वेदेनजायतेतावदसौशूद्रेणतुल्यः १७२ कृतोपनयनस्येति यस्मादस्यमाणवकस्यसमिधमाधेहिदिवामास्वाप्सीरित्यादिव्रतादेशनंवेदस्याध्ययनंमंत्रब्राह्मणक्रमेणाध्येष्यमाणस्त्वाचांतइत्यादि-

विधिपूर्वकमुपनीतस्योपदिश्यतेतस्मादुरुपनयनात्पूर्वंनवेदमुदाहरेत् १७३ यद्यस्येति यस्यब्रह्मचारिणोयानिचर्मसूत्रमेखलादंड
वस्त्राणिउपनयनकालेगृह्येणविहितानिगोदानादिव्रतेष्वपितान्येवनवानिकर्त्तव्यानि १७४ सेवेतेति ब्रह्मचारीगुरुसमीपेवसन्इंद्रिय
संयमंकृत्वानुगतादृष्टवृद्ध्यर्थमिमान्नियमाननुतिष्ठेत् १७५ नित्यमिति प्रत्यहंस्नात्वादेवर्षिपितृभ्यउदकदानंप्रतिमादिषुहरिहरादि
देवपूजनंसायंप्रातश्चसमिद्धोमंकुर्यात् यत्तुगौतमीयेस्नाननिषेधोब्रह्मचारिणःससकृत्स्नानविषयः अतएवबौधायनःनाप्सुश्लाघमा
नःस्नायात् विष्णुनाप्यकालद्वयमभिषेकाग्निकार्यकरणमप्सुदंडवन्मज्जनमितिब्रुवाणेनवारद्वयंस्नानमुपदिष्टम् १७६ वर्ज्जयेदिति
क्षौद्रंमांसंचनखादेत्गंधंचकर्पूरचंदनकस्तूरिकादिवर्ज्जयेत् एषांचगंधानांयथासंभवंभक्षणमनुलेपनंचनिषिद्धंमाल्यंचनधारयेत्
उद्रिक्तरसांश्चगुडादीन्नखादेत्स्त्रियश्चनोपेयात् यानिस्वभावतोमधुरादिरसानिकालवशेनउदकवासादिनाचाम्लयंतितानिशुक्तानिन

यद्यस्यविहितंचर्मयत्सूत्रंयाचमेखला योदंडोयच्चवसनंतत्तदस्यव्रतेष्वपि १७४ सेवेतेमांस्तुनियमान्
ब्रह्मचारीगुरौवसन् सन्नियम्येंद्रियग्रामंतपोवृद्ध्यर्थमात्मनः १७५ नित्यंस्नात्वाशुचिःकुर्याद्देवर्षि-
पितृतर्पणम् देवताभ्यर्चनंचैवसमिदाधानमेवच १७६ वर्ज्जयेन्मधुमांसंचगंधंमाल्यंरसान्स्त्रियः
शुक्तानियानिसर्वाणिप्राणिनांचैवहिंसनम् १७७ अभ्यंगमंजनंचाक्ष्णोरुपानच्छत्रधारणम् कामंक्रो
धंचलोभंचनर्त्तनंगीतवादनम् १७८ द्यूतंचजनवादंचपरिवादंतथानृतम् स्त्रीणांचप्रेक्षणालंभमु
पघातंपरस्यच १७९ एकःशयीतसर्वत्रनरेतःस्कंदयेत्क्वचित् कामाद्धिस्कंदयन्रेतोहिनस्तिव्रतमात्म
नः १८०

स्वादेत् प्राणिनांहिंसांनकुर्यात् १७७ अभ्यंगमिति तैलादिनाशिरःसहितदेहमर्दनलक्षणंकज्जलादिभिश्चचक्षुषोरं
जनंपादुकायाश्छत्रस्यचधारणंकामंमैथुनातिरिक्तविषयाभिलाषातिशयंमैथुनस्यस्त्रियइत्यनेनैवनिषिद्धत्वात् क्रोधलोभनृत्यगीत
वीणापणवादिवर्जयेत् १७८ द्यूतंचेति अक्षादीनांजनैःसहनिरर्थकलहंपरस्यदोषवादंमृषाभिधानंस्त्रीणांचमैथुनेच्छयासानुरा
गेणप्रेक्षणालिंगनंपरस्यचापकारंवर्जयेत् १७९ एकइति सर्वत्रनीचशय्यादावेकाकीशयनंकुर्यात् इच्छयानस्वशुक्रंपातयेत् यस्माद्-

च्छयास्वप्नेमेहनात्शुक्रंपातयन्स्वकीयव्रतंनाशयतिव्रतलोपेनावकीर्णिप्रायश्चित्तंकुर्यात् १८० स्वप्नइति ब्रह्मचारीस्वप्नादावनिच्छ
यारेतः सिक्त्वाकृतस्नानश्चंदनाद्यनुलेपनपुष्पधूपादिभिःसूर्यमभ्यर्च्यपुनर्मामैत्विंद्रियमित्येतामृचंवारत्रयंपठेत् इदमत्रप्रायश्चित्तं
१८१ उदकुंभमिति जलकलशपुष्पगोमयमृत्तिकाकुशान्यावदर्थानियावद्भिःप्रयोजनानिआचार्यस्यतावदाचार्यार्थमाहरेत् भ
तएवउदकुंभमित्यत्रएकत्वमप्यविवक्षितंप्रदर्शनंचैतत् अन्यदप्याचार्योपयुक्तमुपहरेत्भैक्षंचप्रत्यहमर्जयेत् १८२ वेदयज्ञैरिति
वेदयज्ञैश्चात्यक्तानांस्वकर्मसुदक्षाणांगृहेभ्यःप्रत्यहंब्रह्मचारीसिद्धान्नभिक्षामाहरेत् १८३ गुरोःकुलइति आचार्यस्यसपिंडेषुबंधु
षुचमातुलादिषुनभिक्षेत्तद्गृहव्यतिरिक्तभिक्षायोग्यगृहाभावेनोक्तेभ्यःपूर्वंपूर्वंवर्जयेत् ततश्चप्रथमंबंधून्भिक्षेत् तत्रालाभेज्ञातीन्

स्वप्नेसिक्त्वाब्रह्मचारीद्विजःशुक्रमकामतः स्नात्वार्कमर्चयित्वात्रिःपुनर्मामित्यृचंजपेत् १८१ उदकुंभंसुमन
सोगोशकृन्मृत्तिकाकुशान् आहरेद्यावदर्थानिभैक्षंचाहरहश्चरेत् १८२ वेदयज्ञैरहीनानांप्रशस्तानां
स्वकर्मसु ब्रह्मचार्याहरेद्भैक्षंगृहेभ्यःप्रयतोऽन्वहम् १८३ गुरोःकुलेनभिक्षेतनज्ञातिकुलबंधुषु अलाभे
त्वन्यगेहानांपूर्वंपूर्वंविवर्जयेत् १८४ सर्वंवापिचरेद्ग्रामंपूर्वोक्तानामसंभवे नियम्यप्रयतोवाचमभिशस्तांस्तु
वर्जयेत् १८५ दूरादाहृत्यसमिधःसंनिदध्याद्विहायसि सायंप्रातश्चजुहुयात्ताभिरग्निमतंद्रितः १८६ अ
कृत्वाभैक्षचरणमसमिध्यचपावकम् अनातुरःसप्तरात्रमवकीर्णिव्रतंचरेत् १८७ भैक्षेणवर्त्तयेन्नित्यंनैका
न्नादीभवेद्व्रती भैक्षेणव्रतिनोवृत्तिरुपवाससमास्मृता १८८

तत्रालाभेगुरोरपिज्ञातीन्भिक्षेत १८४ सर्वंवेति पूर्ववेदयज्ञै
रहीनानामित्यनेनोक्तासंभवेसर्वंवाग्राममुक्तगुणरहितमपिशुचिर्मौनीभिक्षेत्महापातकाद्यभिशस्तांस्त्यजेत् १८५ दूरादिति दूराद्विप्यः
परिगृहीतवृक्षेभ्यःसमिधआनीयआकाशेधारणाशक्तःपटलादौस्थापयेत् ताभिश्चसमिद्भिःसायंप्रातरनलेहोमंकुर्यात् १८६ अकृत्वे
ति भिक्षाहारंसायंप्रातःसमिद्धोममरोगोनैरंतर्येणसप्तरात्रमकृत्वाऽलुप्तव्रतोभवति ततश्चावकीर्णिप्रायश्चित्तंकुर्यात् १८७ भैक्षेणेति ब्रह्म
चारीनएकान्नमद्यात्किंतुबहुगृहाहृतभिक्षासमूहेनप्रत्यहंजीवेत् यस्माद्भिक्षासमूहेनब्रह्मचारिणोवृत्तिरुपवासतुल्यामुनिभिःस्मृता १८८

व्रतवदिति पूर्वनिषिद्धस्यैकान्नभोजनस्यायंप्रतिप्रसवः देवदैवत्येकर्मणिदेवतोद्देशेनाभ्यर्थितोब्रह्मचारीव्रतवदितिव्रतविरुद्धमधुमांसा
दिवर्जितमेकस्याप्यन्नंयथेप्सितंभुंजीत अथपित्र्युद्देशेनाभ्यर्थितोभवतितदाऋषिर्यतिःसम्यग्दर्शनसंपन्नत्वात्सइवमधुमांसवर्जित
मेकस्याप्यन्नंयथेप्सितंभुंजीतइतिसएवार्थोवैदग्ध्येनोक्तः तथापिभैक्षवृत्तिनियमरूपंव्रतमस्यलुप्तंनभवति याज्ञवल्क्योपिश्राद्धेभ्यर्थि
तस्यैकान्नभोजनमाह ब्रह्मचर्येस्थितोनैकमन्नमद्यादनापदि ब्राह्मणःकाममश्नीयाच्छ्राद्धेव्रतमपीडयन्निति विश्वरूपेणतुव्रतमस्यन
लुप्यतइतिपश्यताब्रह्मचारिणोमांसभक्षणमनेनमनुवचनेनविधीयतइतिव्याख्यातम् १८९ ब्राह्मणस्यैवेति ब्राह्मणक्षत्रियविशां
त्रयाणामेवब्रह्मचारिणांभैक्षचरणविधानाद्व्रतवदित्यनेनतदपवादरूपमेकान्नभोजनंउपदिष्टंक्षत्रियवैश्ययोरपिपुनरुक्तेनपर्युदस्य
नैतदेकान्नभोजनरूपंकर्मतद्ब्राह्मणस्यैववेदार्थविद्भिर्विहितंक्षत्रियवैश्ययोःपुनर्नैवैतत्कर्मेतिब्रूते १९० चोदितइति आचार्येणप्रेरितो

व्रतवद्देवदैवत्ये पित्र्येकर्मण्यथर्षिवत् काममभ्यर्थितोऽश्नीयाद्व्रतमस्यनलुप्यते १८९ ब्राह्मणस्यैव
कर्मैतदुपदिष्टंमनीषिभिः राजन्यवैश्ययोस्त्वेवंनैतत्कर्मविधीयते १९० चोदितोगुरुणानित्यमप्रचोदितए
वना कुर्यादध्ययनेयत्नमाचार्यस्यहितेषुच १९१ शरीरंचैववाचंचबुद्धींद्रियमनांसिच नियम्यप्रांजलिस्ति
ष्ठेद्वीक्षमाणोगुरोर्मुखम् १९२ नित्यमुद्धृतपाणिःस्यात्साध्वाचारःसुसंयतः आस्यतामितिचोक्तःसन्ना
सीताभिमुखंगुरोः १९३ हीनान्नवस्त्रवेषःस्यात्सर्वदागुरुसन्निधौ उत्तिष्ठेत्प्रथमंचास्यचरमंचैवसंविशेत्
१९४ प्रतिश्रवणसंभाषेशयानोनसमाचरेत् नासीनोनचभुंजानोनतिष्ठन्नपराङ्मुखः १९५

नप्रेरितोवास्वयमेवप्रत्यहमध्ययनेगुरुहितेषुचउद्योगंकुर्यात् १९१ शरीरंचेति देहवाग्बुद्धींद्रियमनांसिनियम्यकृतांजलिर्गुरुमुखं
पश्यंस्तिष्ठेत् नोपविशेत् १९२ नित्यमिति सततमुत्तरीयाद्बहिष्कृतदक्षिणबाहुःशोभनाचारोवस्त्रावृतदेहआस्यतामितिगुरुणो-
क्तःसन्गुरोरभिमुखंयथाभवतितथाआसीत् १९३ हीनान्नवस्त्रेति सर्वदागुरुसमीपेगुर्वपेक्षयाल्पवस्त्रश्चान्नवस्त्रप्रसाधनोभवेत्
गुरोश्चप्रथमंरात्रिशेषेशयनादुत्तिष्ठेत्प्रदोषेचगुरौसुप्तेपश्चात्स्वपीत १९४ प्रतिश्रवणेति प्रतिश्रवणमाज्ञांगीकरणंसंभाषणंचगुरोः
शय्यायांस्थितः आसनोपविष्टोभुंजानस्तिष्ठन्विमुखश्चनकुर्यात् १९५ कथंतर्हिकुर्यात्तदाह आसीनस्येति आसनोपविष्टस्यगुरोरा

त्संददतः स्वयमासनादुत्थितः तिष्ठतो गुरोरादिशतः तदभिमुखं कतिचित्पदानि गत्वा यथा गुरुरागच्छति तथाप्यभिमुखं गत्वा यदा-
तु गुरुर्द्धावन्नादिशति तदा तस्य पश्चाद्धावन् प्रतिश्रवणसंभाषे कुर्यात् १९६ तथा पराङ्मुखस्येति पराङ्मुखस्यवादिशतः संमुखस्थो
दूरस्थस्य गुरोः समीपमागत्य शयानस्य गुरोः प्रणम्य प्रह्वीभूत्वा निदेशे निकटे अवतिष्ठतो गुरोरादिशतः प्रह्वीभूयैव प्रतिश्रवणसंभाषे-
कुर्यात् १९७ नीचमिति यत्र च देशे समासीनं गुरुः पश्यति न तत्र यथेष्टचेष्टां चरणप्रसारादिकां कुर्यात् १९८ नोदाहरेदिति अस्य गु
रोः परोक्षमपि उपाध्यायाचार्यादि पूजावचनोपपदशून्यं नाम नोच्चारयेत् न तु गुरोर्गमनभाषितचेष्टितान्यनुकुर्वीत गुरुगमनादिसदृश
न्यात्मनो गमनादीनि उपहासबुध्या न कुर्वीत १९९ गुरोर्यत्रेति विद्यमानदोषस्याभिधानं परीवादः अविद्यमानदोषाभिधानं निंदा य

आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः १९६ पराङ्मुख
स्याभिमुखो दूरस्थस्यैत्य चान्तिकम् प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः १९७ नीचं शय्यासनं चास्य
सर्वदा गुरुसन्निधौ गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् १९८ नोदाहरेदस्य नाम परोक्षमपि केवलम्
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् १९९ गुरोर्यत्र परीवादो निंदा वापि प्रवर्त्तते कर्णौ तत्र पिधात-
व्यौ गंतव्यं वा ततोन्यतः २०० परीवादात्खरो भवति श्वा वै भवति निंदकः परिभोक्ता कृमिर्भवति कीटो भ
वति मत्सरी २०१ दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः यानासनस्थश्चैवैनमवरुह्याभिवादयेत् २०२

त्र देशे गुरोः परीवादो निंदा च वर्त्तते तत्र स्थितेन शिष्येण कर्णौ हस्तादिना तिरोधातव्यौ तस्माद्वा देशाद्देशांतरं गंतव्यम् २०० परीवादादिति
इदानीं शिष्यकर्तृकपरीवादकृतफलमाह गुरोः परिवादाच्छिष्यो मृतः खरो भवति गुरोर्निंदकः कुक्कुरो भवति परिभोक्ता अनुचितेन गुरु
धनेनोपजीवकः कृमिर्भवति मत्सरी गुरोरुत्कर्षासहनः कीटो भवति कीटः कृमिभ्यः स्थूलो भवति २०१ दूरस्थ इति दूरस्थः शिष्योऽन्यं
नियुज्यमानो वस्त्रादिना गुरुं नार्चयेत् स्वयं गमनाशक्तौ त्वदोषः क्रुद्धः कामिनीसमीपे च स्थितं स्वयमपि नार्चयेत् यानासनस्थश्चाशि
ष्यो यानासनादवतीर्य गुरुमभिवादयेत् यानासनस्थश्चैवैनं प्रत्युत्थायेत्यनेन यानासनादुत्थानं विहितमनेन तु यानासनत्याग इत्यपुनरुक्तिः
२०२

मनिवातइति प्रतिगतोऽभिमुखीभूतः शिष्यस्तदागुरुदेशाच्छिष्यदेशमागच्छतिसप्रतिवातः यः शिष्यदेशाद्गुरुदेशमागच्छतिसोऽ
नुवातः तत्रगुरुणासमंवासीत तथाऽविद्यमानःसंश्रवोयत्रतस्मिन्नसंश्रवेगुरुर्यत्रनशृणोतीत्यर्थः तत्रगुरुगतमन्यगतंवानकिंचित्क
थयेत् २०२ गोइति यान शब्दःप्रत्येकमभिसंबध्यते बलीवर्दयानेघोटकप्रयुक्तेयानेउष्ट्रयुक्तयानेरथकाष्ठादौप्रासादोपरिस्रस्तरेक
टेचतृणादिनिर्मितेशिलायांफलकेचदारुघटितदीर्घासनेनौकायांचगुरुणासह आसीत् २०४ गुरोर्गुराविति आचार्यस्याचार्यसन्नि
हिते आचार्यइवतस्मिन्नपिअभिवादिकांवृत्तिमनुतिष्ठेत् तथागुरुगृहेवसन् शिष्य आचार्येणानियुक्तोनस्वान्गुरून्मातृपितृव्यादी
नभिवादयेत् २०५ विद्येति आचार्यव्यतिरिक्ताउपाध्यायाविद्यागुरवः तेष्वेतदेवेतिसामान्योपक्रमः किंतदाचार्यइवनित्यासार्वकालि
कीवृत्तिर्विधेया तथास्वयोनिष्वपिपितृव्यादिषुतद्वृत्तिः अधर्मान्निषेधत्सुधर्मतत्त्वंचोपदिशत्सुगुरुवद्वर्त्तितव्यम् २०६ श्रेयस्सुविद्या

प्रतिवातेऽनुवातेचनासीतगुरुणासह असंश्रवेचैवगुरोर्नकिंचिदपिकीर्त्तयेत् २०३ गोऽश्वोष्ट्रयान
प्रासादस्रस्तरेषुकटेषुच आसीतगुरुणासार्द्धं शिलाफलकनौषुच २०४ गुरोर्गुरौसन्निहितेगुरुव
द्वृत्तिमाचरेत् नचानिसृष्टोगुरुणास्वान्गुरूनभिवादयेत् २०५ विद्यागुरुष्वेतदेवनित्यावृत्तिःस्वयो
निषु प्रतिषेधत्सुचाधर्मान्हितंचोपदिशत्स्वपि २०६ श्रेयस्सुगुरुवद्वृत्तिनित्यमेवसमाचरेत् गुरुपु
त्रेषुचार्येषुगुरोश्चैवस्वबंधुषु २०७ बालःसमानजन्मावाशिष्योवायज्ञकर्मणि अध्यापयन्गुरुसु
तोगुरुवन्मानमर्हति २०८ उत्सादनंचगात्राणांस्नापनोच्छिष्टभोजने नकुर्याद्गुरुपुत्रस्यपादयोश्चावने
जनम् २०९ तपःसमृद्धेषु आर्येष्विति गुरुपुत्रविशेषणंसमानजातिगुरुपुत्रेषुगुरोश्चज्ञातिष्वपिपितृव्यादिषुसर्वदागुरु
वद्वृत्तिमनुतिष्ठेत् गुरुपुत्रश्चात्रशिष्याऽधिकवयाश्चबोधव्यः शिष्यबालसमानवयसांअनंतरंशिष्यस्यवक्ष्यमाणत्वात् २०७ बा
लइति कनिष्ठःसवयावाज्येष्ठोपिवाशिष्योऽध्यापयन् अध्यापनसमर्थोगृहीतवेदइत्यर्थः सयज्ञकर्मणिऋत्विगनृत्विग्वायज्ञदर्शना
र्थमागतोगुरुवत्पूजामर्हति २०८ उत्सादनमिति आचार्यवदित्यविशेषेणपूजायांप्राप्तायांविशेषमाह गात्राणामुत्सादनमुद्वर्त्तनंउ
च्छिष्टस्यप्राशनंपादयोश्चप्रक्षालनंगुरुपुत्रस्यनकुर्यात् २०९ ५ ५ ५ ५

गुरुवदिति सवर्णागुरुपत्न्यः गुरुवदाज्ञाकरणादिनापूज्याभवेयुः असवर्णाःपुनःकेवलप्रत्युत्थानाभिवादनैः २१० अभ्यंजनमि
त्यैलादिनादेहाभ्यंगंस्नापनंगात्राणांचोद्वर्तनंकेशानांचमाल्यादिनाप्रसाधनमेतानिगुरुपत्न्यानकर्त्तव्यानिकेशानामितिप्रदर्शनमात्रा
र्थंदेहस्यापिचंदनादिनाप्रसाधनंनकुर्यात् २११ गुरुपत्नीत्विति युवतीगुरुपत्नीपादयोरुपसंगृह्यअभिवादनदोषगुणज्ञेनयूना
नाभिवाद्यापूर्णविंशतिवर्षत्वंयौवनप्रदर्शनार्थंबालस्यपादयोरभिवादनमनिषिद्धम् यूनस्तुभूमावभिवादनंवक्ष्यति २१२ स्वभावइ
ति स्त्रीणामयंस्वभावःयदिहशृंगारचेष्टयाव्यामोह्यपुरुषाणांदूषणम् अतोऽर्थादस्माद्धेतोःपंडिताःस्त्रीषुनप्रमत्ताभवंति २१३ अ
विद्वांसमिति विद्वानहंजितेंद्रियइतिबुद्ध्यानस्त्रीसन्निधिर्विधेयः यस्मादविद्वांसंविद्वांसमपिवापुनःपुरुषंदेहधर्मात्कामक्रोधवशानु

गुरुवत्प्रतिपूज्याःस्युःसवर्णागुरुयोषितः असवर्णास्तुसंपूज्याःप्रत्युत्थानाभिवादनैः २१० अभ्यंजनंस्ना
पनंचगात्रोत्सादनमेवच गुरुपत्न्यानकार्याणिकेशानांचप्रसाधनम् २११ गुरुपत्नीतुयुवतिर्नाभिवा
द्येहपादयोः पूर्णविंशतिवर्षेणगुणदोषौविजानता २१२ स्वभावएषनारीणांनराणामिहदूषणम् अ
तोऽर्थान्नप्रमाद्यंतिप्रमदासुविपश्चितः २१३ अविद्वांसमलंलोकेविद्वांसमपिवापुनः प्रमदाह्युत्पथंनेतुं
कामक्रोधवशानुगम् २१४ मात्रास्वस्रादुहित्रावानविविक्तासनोभवेत् बलवानिंद्रियग्रामोविद्वांसम-
पिकर्षति २१५ कामंतुगुरुपत्नीनांयुवतीनांयुवाभुवि विधिवद्वंदनंकुर्यादसावहमितिब्रुवन् २१६
विप्रोष्यपादग्रहणमन्वहंचाभिवादनम् गुरुदारेषुकुर्वीतसतांधर्ममनुस्मरन् २१७

यायिनंस्त्रियमुत्पथंनेतुं
समर्थाः २१४ अतआह मात्रेति मात्राभगिन्यादुहित्रानिर्जनगृहादौनासीतयतोऽतिबलइंद्रियगणः शास्त्रनियमितात्मानमपि
पुरुषंपरवशंकरोति २१५ कामन्त्विति कामंतुगुरुपत्नीनांयुवतीनांस्वयमपियुवायथोक्तविधिनाभिवादयेऽमुकशर्माहंभोरि
त्यादग्रहणंविनायथेष्टमभिवादनंकुर्यात् २१६ विप्रोष्येति प्रवासादागत्यसव्येनसव्यंदक्षिणेनचदक्षिणमित्युक्तविधिनापाद
ग्रहणंप्रत्यहंचभूमावभिवादनंचगुरुपत्नीषुयुवाकुर्यात् शिष्टानामयमाचारइतिजानंस्तु २१७ ७ ७ ७

यथेति उक्तस्यशुश्रूषाविधेःफलमाह यथाकश्चिन्मनुष्यःखनित्रेणभूमिंखनन्जलंप्राप्नोति एवंस्थितांविद्यांगुरुसेवापरःशिष्यःप्राप्नो
ति २१८ मुंडोवेति ब्रह्मचारिणःप्रकारत्रयमाह मुंडितमस्तकः शिरःकेशोवाजटावान्वाशिखैववाजटाजातायस्यवापरेशिरःकेशामुंडि
ताःतथावाभवेत् एनंब्रह्मचारिणंकस्मिंश्चिद्ग्रामेनिद्राणंउत्तरत्रशयनमितिदर्शनात्सूर्योभिनिम्लोचेत्नास्तमियात् २१९ अत्रप्रायश्चित्तमाह
तंचेदिति तं चेत्कामतोनिद्राणंनिद्रोपवशत्वेनसूर्योऽभ्युदियात् अस्तमियात्तदासावित्रींजपन्उभयत्रापिदिनंउपवसन्रात्रौभुंजीत
अभिनिर्मुक्तस्यउत्तरेहनिउपवासजपोअभिरभागइतिकर्मप्रवचनीयसंज्ञाततःकर्मप्रवचनीययुक्तेद्वितीया सावित्रीजपंतुगौतमवचनात्
तदाहगौतमः सूर्याभ्युदितोब्रह्मचारीतिष्ठेत् अहरभुंजानोऽभ्यस्तमितश्चरात्रिंजपन्सावित्रीम् ननुगौतमवचनात्सूर्योभ्युदितस्यैवदि
नाभोजनजपावुक्तौअभ्यस्तमितस्यतुरात्र्यभोजनजपौनैतदपेक्षायांव्याख्यासंदेहेवामुन्यंतरविवृतमन्वर्थमन्वयसाह नतुस्फुटंमन्वर्थंस्मृत्वं

यथाखनन्खनित्रेणनरोवार्यधिगच्छति तथागुरुगतांविद्यांशुश्रूषुरधिगच्छति २१८ मुंडोवाजटि
लोवास्यादथवास्याच्छिखाजटः नैनंग्रामेऽभिनिम्लोचेत्सूर्योनाभ्युदियात्कचित् २१९ तंचेदभ्युदिया
त्सूर्यःशयानंकामचारतः निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् २२० सूर्येणह्यभिनिर्मुक्तःशयानो-
ऽभ्युदितश्चयः प्रायश्चित्तमकुर्वाणोयुक्तःस्यान्महतैनसा २२१ आचम्यप्रयतोनित्यमुभेसंध्येसमाहितः शु
चौदेशेजपन्जप्यमुपासीतयथाविधि २२२ यदिस्त्रीयद्यवरजःश्रेयःकिंचित्समाचरेत् तत्सर्वमाचरेद्यु-
क्तोयत्रवास्यरमेन्मनः २२३

तरदर्शनादन्यथाकुर्मः अतएवजपापेक्षायांगौतमवचनात् सावित्रीजपमभ्युपेयएवनतूभयत्र
स्फुटमनूक्तंदिनोपवासजपावपाकुर्मः तस्मादभ्यस्तमितस्यमानवगौतमीयप्रायश्चित्तविकल्पः अस्यतुप्रायश्चित्तविधेःप्रायश्चित्तमाह
२२० सूर्येणेति यस्मात्सूर्येणाभिनिर्मुक्तोऽभ्युदितश्चनिद्राणःप्रायश्चित्तमकुर्वन्महतापापेनयुक्तोनरकंगच्छतितस्माद्यथोक्तप्रायश्चि
त्तंकुर्यात् यस्मादुक्तप्रकारेणसंध्यातिक्रमेमहत्पापमतः २२१ आचम्येति आचम्यपवित्रोनित्यमनन्यमनाःशुचिदेशेसावित्रींजपन्उभे
संध्येविधिवदुपासीत २२२ यदीति यदिस्त्रीशूद्रोवाकिंचित्श्रेयोऽनुतिष्ठतितत्सर्वंयुक्तोऽनुतिष्ठेत्यत्रचशास्त्रानिषिद्धेमनोऽस्यतुष्य

नितदपिकुर्यात् श्रेयएवहिधर्मार्थौतिदर्शयति २२३ धर्मार्थाविति धर्मार्थौश्रेयोऽभिधीयतेकामहेतुत्वादितिकेचिदाचार्यामन्यंतेअन्ये त्वर्थकामौसुखहेतुत्वात् श्रेयोऽभिधीयतेधर्मएवेत्यपरेअर्थकामयोरप्युपायत्वात् अर्थएवेहलोकेश्रेयइत्यन्येधर्मकामयोरपिसाध नत्वात् संप्रतिस्वमतमाह धर्मार्थकामात्मकःपरस्पराविरुद्धःत्रिवर्गएवपुरुषार्थतयाश्रेयइतिविनिश्चयःएवंचबुभुक्षुमुमुक्षुपदेशोनमुमु क्षून्मुमुक्षूणांतुमोक्षएवश्रेयइतिषष्ठेवक्ष्यते २२४ आचार्यइति आचार्योदांतोदितस्यब्रह्मणःपरमात्मनोमूर्त्तिःशरीरं गर्भस्यमातात्वधारणात्पृथिवीमूर्त्तिःभ्रातास्वःसगर्भःक्षेत्रज्ञस्यतस्माद्देवतारूपाएतानावमंतव्याः २२५ आचार्यश्चेति आचा नन कोजननीचभ्रातास्वसगर्भोज्येष्ठःपीडितेनापिअमीनावमाननीयाःविशेषतोब्राह्मणेनयस्मात् २२६ यमिति नृणामपत्यानांसंभवेगर्भा

धर्मार्थावुच्यतेश्रेयःकामार्थौधर्मएवच अर्थएवेहवाश्रेयस्त्रिवर्गइतितुस्थितिः २२४ आचार्योब्रह्मणो मूर्त्तिःपितामूर्त्तिःप्रजापतेः मातापृथिव्यामूर्त्तिस्तुभ्रातास्वोमूर्त्तिरात्मनः २२५ आचार्यश्चपिताचैवमाता भ्राताचपूर्वजः नार्त्तेनाप्यवमंतव्याब्राह्मणेनविशेषतः २२६ यंमातापितरौक्लेशंसहेतेसंभवेनृणाम् न तस्यनिष्कृतिःशक्याकर्त्तुंवर्षशतैरपि २२७ तयोर्नित्यंप्रियंकुर्यादाचार्यस्यचसर्वदा तेष्वेवत्रिषुतुष्टेषुतपः सर्वंसमाप्यते २२८ तेषांत्रयाणांशुश्रूषापरमंतपउच्यते नतैरभ्यननुज्ञातोधर्ममन्यंसमाचरेत् २२९

धानेसति अनंतरंयंक्लेशंमातापितरौसहेतेतस्यवर्षशतैरप्यनेकैरपिजन्मभिरानृण्यंकर्त्तुमशक्यम् मातुस्तावत्कुक्षौधारणदुःखंप्रसव वेदनातिशयोजातस्यरक्षणवर्द्धनकष्टंचपितुरधिकान्येवरक्षासंवर्द्धनदुःखंउपनयनात्प्रभृतिवेदतदंगाध्यापनादिक्लेशातिशयइतिसर्वं सिद्धंतस्मात् २२७ तयोर्नित्यमिति तयोर्मातापित्रोःप्रत्यहमाचार्यस्यचसर्वदाप्रीतिमुत्पादयेत् यस्मात्तेष्वेवत्रिषुप्रीतेषुसर्वंतपश्चांद्रा यणादिकंफलद्वारेणसम्यक्प्राप्यतेमात्रादित्रयतुष्ट्यैवसर्वस्यतपसःफलंप्राप्यतइत्यादि २२८ तेषामिति तेषांमातापित्राचार्याणां परिचर्यासर्वतपोमयंइतएवसर्वतपःफलप्राप्तेर्यद्यन्यमपिधर्मंकथंचित्करोतितदप्येतत्त्रयाननुमतिव्यतिरेकेणनकुर्यात् २२९ तएवे ति यस्मात्तएवमातापित्राचार्यास्त्रयोलोकाःलोकत्रयप्राप्तिहेतुत्वात् कारणेकार्योपचारः तएवब्रह्मचर्यादिभावत्रयआश्रमाःगार्हस्थ्या

श्राश्रमत्रयप्रदायकत्वात् तएवत्रयोवेदाः वेदत्रयजपफलोपायत्वात् तएवहित्रयोऽग्नयोऽभिहिताः त्रेतासंपाद्ययज्ञादिफलदातृत्वात्
२३० पितेति वैशब्दोऽवधारणेपितैवगार्हपत्योऽग्निःमातादक्षिणाग्निःआचार्यआहवनीयः सेयमग्नित्रेताश्रेष्ठतरास्तुत्यर्थत्वाच्चास्यनव
स्तुविरोधोत्रभावनीयः २३१ त्रिष्विति एतेषुत्रिषुप्रमादमकुर्वन्ब्रह्मचारीतावज्जपत्येव गृहस्थोपित्रीन्लोकान्विजयतेसंज्ञापूर्वकस्यात्म
नेपदविधेरनित्यत्वात्नविपराभ्यांजेरित्यात्मनेपदंत्रीन्लोकान्विजयेदिति त्रिष्वाधिपत्यंप्राप्नोतितथास्ववपुषाप्रकाशमानः सूर्यादिदेववत्
दिविहृष्टोभवति २३२ इममिति इमंभूर्लोकंमातृभक्त्यापितृभक्त्यामध्यममंतरीक्षम् आचार्यभक्त्यातुहिरण्यगर्भलोकमेवप्राप्नोति २३३
सर्वेतस्येति यस्यैतेत्रयोमातृपित्राचार्याआदृताःसत्कृताः तस्यसर्वेधर्माःफलदाभवंतियस्यैतेत्रयोऽनादृतास्तस्यसर्वाणिश्रौतस्मार्तकर्माणि

तएवहित्रयोलोकास्तएवत्रयआश्रमाः तएवहित्रयोवेदास्तएवोक्तास्त्रयोऽग्नयः २३० पितावैगार्हपत्यो
ऽग्निर्माताग्निर्दक्षिणःस्मृतः गुरुराहवनीयस्तुसाग्नित्रेतागरीयसी २३१ त्रिष्वप्रमाद्यन्नेतेषुत्रीन्लोका
न्विजयेद्गृही दीप्यमानःस्ववपुषादेववद्दिविमोदते २३२ इमंलोकंमातृभक्त्यापितृभक्त्यातुमध्यमम् गु
रुशुश्रूषयात्वेवंब्रह्मलोकंसमश्नुते २३३ सर्वेतस्यादृताधर्मायस्यैतेत्रयआदृताः अनादृतास्तुयस्यैतेसर्वा
स्तस्याफलाःक्रियाः २३४ यावत्त्रयस्तेजीवेयुस्तावन्नान्यंसमाचरेत् तेष्वेवनित्यंशुश्रूषांकुर्यात्प्रियहितेरतः
२३५ तेषामनुपरोधेनपारत्र्यंयद्यदाचरेत् तत्तन्निवेदयेत्तेभ्योमनोवचनकर्मभिः २३६ त्रिष्वेतेष्वितिकृत्यंहि
पुरुषस्यसमाप्यते एषधर्मःपरःसाक्षादुपधर्मोऽन्यउच्यते २३७

निष्फलानिभवंति २३४ यावदिति तेत्रयोयावज्जीवं-
तितावदन्यंधर्मस्वातंत्र्येणनानुतिष्ठेत् तदनुज्ञयातुधर्मानुष्ठानंप्राग्विहितमेव किंतुतेष्वेवमत्यहं प्रियहितपरः शुश्रूषांतदर्थंप्रीतिसाधनं
प्रियंभेषजपानादिवत् आपत्यामिष्टसाधनंहितम् २३५ तेषामिति तेषांशुश्रूषायाअविरोधेनतदनुज्ञातोयद्यन्मनोवचनकर्मभिःपरलो
कफलंकर्मानुष्ठितंतन्मयैतदनुष्ठितमितिपश्चात्तेभ्योनिवेदयेत् २३६ त्रिष्विति इतिशब्दःकार्त्स्न्येहिशब्दोहेतौयस्मादेतेषुत्रिषुशुश्रूषिते
षुसर्वंश्रौतस्मार्तंकर्तव्यंसंपूर्णमनुष्ठितंभवतितत्फलावाप्तेस्तस्मादेवस्पष्टोधर्मःसाक्षात्सर्वपुरुषार्थसाधनः अस्याग्निहोत्रादिप्रतिनियत

स्वर्गादिहेतुरूपधर्मोजयन्यधर्मइतिसुश्रूषास्कृतिः २३७ श्रद्दधानइति श्रद्धायुक्तःशुभांदृष्टशक्तिंगारुडादिविद्यांअवराच्छूद्रादपि गृण्हीयात् अंत्यश्चांडालः तस्मादपिजातिस्मरादेर्विहितयोगप्रकर्षात् दुष्कृतशेषोपभोगार्थमवाप्तचांडालजन्मतःपरंधर्ममोक्षोपायमाददीत तथाअज्ञानमेवोपक्रम्यमोक्षधर्मंप्राप्यज्ञानंब्राह्मणात्क्षत्रियात्वैश्यात्शूद्रादपिनीचादभीष्टंश्रद्धातव्यंश्रद्दधानेननित्यन्तश्चाद्रिनंप्रतिजन्ममृत्कविशेषता मेधातिथिस्तुश्रुतिस्मृत्यपेक्षयापरोधर्मोलौकिकःधर्मशब्दोव्यवस्थायामपियुज्यते यदिचांडालोप्यत्रप्रदेशेमाचिरंस्थामावास्मिन्नंभसिस्नायाइतिवदतितमपिधर्ममनुतिष्ठेत् प्रागल्भ्याल्लौकिकंवस्तुपरंधर्ममितिब्रुवन् चित्रंतथापिसर्वत्रश्लाघ्योमेधातिथिःसताम् स्त्रीरत्नंआत्मापेक्षयानिकृष्टकुलादपिपरिणेतुंस्वीकुर्यात् २३८ विषादिति विषंयद्यमृतसंयुक्तंभवतितदाविषमपसार्यतस्मादमृतंग्राह्यंबालादपिहितवचनंग्राह्यंशत्रुतोपिसज्जनवृत्तंअमेध्यादपिसुवर्णादिकंग्रहीतव्यम् २३९ स्त्रियइति अतस्त्यादीना

श्रद्दधानःशुभांविद्यामाददीतावरादपि अंत्यादपिपरंधर्मंस्त्रीरत्नंदुष्कुलादपि २३८ विषादप्यमृतंग्राह्यंबालादपिसुभाषितम् अमित्रादपिसद्वृत्तममेध्यादपिकांचनम् २३९ स्त्रियोरत्नान्यथोविद्याधर्मःशौचंसुभाषितम् विविधानिचशिल्पानिसमादेयानिसर्वतः २४० अब्राह्मणादध्ययनमापत्कालेविधीयते अनुव्रज्याचशुश्रूषायावदध्ययनंगुरोः २४१ नाब्राह्मणेगुरौशिष्योवासमात्यंतिकंवसेत् ब्राह्मणेचाननूचानेकांक्षन्गतिमनुत्तमाम् २४२ यदित्वात्यंतिकंवासंरोचयेतगुरोःकुले युक्तःपरिचरेदेनमाशरीरविमोक्षणात् २४३

सुक्तानामपिदुष्टांतत्वेनोपादनंयथास्याद्योनिकृष्टकुलादिभ्योगृह्यंतेतथा अन्यान्यपिहितानिचित्रलिखनादसर्वतःप्रतिग्रहीतव्यानि २४० अब्राह्मणादिति ब्राह्मणादन्योयोद्विजः क्षत्रियस्तदभावेवैश्योवातस्मादध्ययनमापत्कालेब्राह्मणाध्यापकासंभवेब्रह्मचारिणोविधीयते अनुव्रज्यादिरूपागुरोःशुश्रूषप्रायावदध्ययनंतावत्कार्य्यागुरुपादप्रक्षालनउच्छिष्टप्राशनादिरूपाशुश्रूषाप्रशस्तासानकार्यातदर्थमनुव्रज्याचेतिविशेषितंगुरुत्वमपियावदध्ययनमेवक्षत्रियस्याहव्यासःमंत्रदःक्षत्रियोविप्रैःशुश्रूषानुगमादिना प्राप्तविद्योब्रस्तुपुनस्तस्यगुरुःस्मृतः ब्रह्मचारिणोनैष्ठिकस्यापिअब्राह्मणादध्ययनंप्रसक्तंप्रतिषेधयति २४१ नाब्राह्मणइति आत्यंतिकंवासंयावज्जीविकंयंक्षत्रियादिकेगुरौब्राह्मणेसांगवेदानध्येतरिअनुत्तमांगतिंमोक्षलक्षणामिच्छन्शिष्योनावतिष्ठेत् २४२ यदीति यदितुगुरोःकुलेनैष्ठिकब्रह्म

चार्यर्थकमात्यंतिकंवासमिच्छेत्तदायावज्जीवनमुद्युक्तोगुरुंशुश्रूषयेत् २४३ अस्यफलमाह आसमाप्तेरिति समाप्तिःशरीरस्यजीव
नत्यागः तत्पर्यंतंयोगुरुंपरिचरतिसतस्तोब्रह्मणःसद्मरूपमविनाशिप्राप्नोतिब्रह्मणिलीयतइत्यर्थः २४४ नपूर्वमिति उपकुर्वाणस्यायं
विधिःनैष्ठिकस्यस्नानासंभवात् गुरुदक्षिणादानंधर्मज्ञोब्रह्मचारीस्नानात्पूर्वंकिंचित्गोवस्त्रादिधनंगुरवेनावश्यंदद्यात् यदितुयदृच्छा
तोलभतेतदागुरवेदद्यादेव अतएवस्नानात्पूर्वंगुरवेदानमाहापस्तंबः यदन्यानिद्रव्याणियथालाभमपहरतिदक्षिणाएवताःसएवब्रह्मचा
रिणोयज्ञोनित्यव्रतमिति स्नास्यन्पुनर्गुरुणादत्ताज्ञोयथाशक्तिधनिनंयाचित्वापिप्रतिग्रहादिनापिगुरवेऽर्थमाहृत्यावश्यंदद्यात् २४५ किं
तत्तदाह क्षेत्रमिति शक्त्यागुर्वर्थमाहरेदित्युक्तत्वात् क्षेत्रहिरण्यादिकंयथासामर्थ्यंविकल्पितंसमुदितंवागुरवेदत्वातत्प्रीतिमर्जयेत् वि-
कल्पपक्षेचांततोऽन्यासंभवेच्छत्रोपानहमपिदद्यात्द्वंद्वनिर्देशात् समुदितदानंप्रदर्शनार्थंचेत्तसंभवेऽन्यदपिदद्यात् अतएवलघुहारी

आसमाप्तेःशरीरस्ययस्तुशुश्रूषतेगुरुम् सगच्छत्यंजसाविप्रोब्रह्मणःसद्मशाश्वतम् २४४ नपूर्वंगुरवेकिं
चिदुपकुर्वीतधर्मवित् स्नास्यंस्तुगुरुणाज्ञप्तःशक्त्यागुर्वर्थमाहरेत् २४५ क्षेत्रंहिरण्यंगामश्वंछत्रोपानहमा
सनम् धान्यंशाकंचवासांसिगुरवेप्रीतिमावहन् २४६ आचार्येतुखलुप्रेतेगुरुपुत्रेगुणान्विते गुरुदारेसपि
ण्डेवागुरुवद्वृत्तिमाचरेत् २४७ एतेष्वविद्यमानेषुस्नानासनविहारवान् प्रयुंजानोऽग्निशुश्रूषांसाधयेद्देहमात्म
नः २४८ एवंचरतियोविप्रोब्रह्मचर्यमविप्लुतः सगच्छत्युत्तमस्थानंनचेहाजायतेपुनः २४९ इतिमानवेधर्म
शास्त्रेभृगुप्रोक्तायांसंहितायांद्वितीयोऽध्यायः २ ७ ७

नः एकमप्यक्षरंयस्तुगुरुःशिष्येनिवेदयेत् पृथिव्यांनास्ति
तद्द्रव्यंयद्दत्वाचानृणीभवेत् असंभवेशाकमपिदद्यात् २४६ आचार्यइति नैष्ठिकस्यायमुपदेशः आचार्येमृतेतत्सुतेविद्यादिगुणयुक्तेतद-
भावेगुरुपत्न्यांतदभावेगुरोःसपिंडेपितृव्यादौगुरुवत्शुश्रूषामनुतिष्ठेत् २४७ एतेष्विति एतेषुत्रिषुअविद्यमानेषुसततमाचार्यस्यैवाग्नेःस-
मीपेस्नानासनविहारैःसायंप्रातरादौसमिद्धोमादिनाचाग्नेःशुश्रूषांकुर्वन्आत्मनोदेहमात्मदेहावच्छिन्नंजीवंब्रह्मप्राप्तियोग्यंसाधयेत् २४८
एवंचरतीति आसमाप्तेःशरीरस्येत्यनेनयावज्जीवमाचार्यशुश्रूषायामोक्षलक्षणंफलम् इदानीमाचार्येमृतेऽपिएवमित्यनेनानंतरोक्तविधि

नाआन्चार्यपुत्रादीनामप्यग्निपर्यंतानांशुश्रूषकोयोनैष्ठिकोब्रह्मचर्यमखंडितव्रतोऽनुतिष्ठतिसउत्तमंस्थानंब्रह्मण्यंतकसलक्षणंमाप्नोति
नचेहसंसारेकर्मवशादुत्पत्तिंलभते २४९ इतिमन्वर्थमुक्तावल्यांमनुवृत्तौद्वितीयोऽध्यायः २ ७॥ ७॥ ७॥ ७
पूर्वत्रासमाप्तेःशरीरस्येत्यनेननैष्ठिकब्रह्मचर्यमुक्तम् नतत्रावध्यपेक्षा आसमावर्त्तनादित्यनेनचोपकुर्वाणकस्यसावधिब्रह्मचर्यमुक्तम्
अतस्तस्यैवगार्हस्थ्याधिकारः तत्रकियदवधिविधौब्रह्मचर्येतस्यगार्हस्थ्यमित्यपेक्षायामाह षट्त्रिंशदाब्दिकमिति त्रयोवेदाऋग्यजुःसा
मारूपाःनिवेदीतद्विषयंव्रतंस्वगृह्योक्तनियमसमूहरूपंषट्त्रिंशद्वर्षयावत्गुरुकुलेचरितव्यंषट्त्रिंशदाब्दिकमितिषट्त्रिंशदब्दशब्दात्का
लावृत्तुअस्मिंश्चपक्षेसमंस्यादश्रुतत्वादितिन्यायेनप्रतिवेदशाखंद्वादशवर्षाणिव्रतचरणम् तदर्द्धिकमष्टादशवर्षाणितत्रप्रतिवेदशाखंषट्
पादिकंनववर्षाणितत्रप्रतिवेदशाखंत्रीणि यावताकालेनोक्तावधेरूर्ध्वमधोवावेदान्गृह्णातितावत्कालंतद्व्रतचरणंविषमशिष्टत्वेपिपक्षाणा-
मेकादेयास्त्रिदेयाद्देयाइतिवत्नियमफलेन्यूनापेक्षोविकल्पः तथाचश्रुतिः नियमेनाधीतंवीर्यवत्तरंभवतीतिग्रहणांतिकपक्षसंदर्शनात्

षट्त्रिंशदाब्दिकंचर्यंगुरौत्रैवेदिकंव्रतम् तदर्द्धिकंपादिकंवाग्रहणांतिकमेववा १ वेदानधीत्यवेदौवा
वेदंवापियथाक्रमम् अविप्लुतब्रह्मचर्योगृहस्थाश्रममावसेत् २

वोक्तपक्षत्रयेग्रहणादूर्ध्वमपिव्रतानुष्ठान
मवगम्यते अथर्ववेदस्यऋग्वेदांशत्वेपिऋग्वेदंयजुर्वेदंसामवेदमथर्वाणंचतुर्थमितिछांदोग्योपनिषदिचतुर्थवेदत्वेनकीर्त्तनात् अंगानिवे
दाश्चत्वारइतिविष्णुपुराणादिवाक्येषुचपृथङ्निर्देशाच्चतुर्थवेदत्वेपिप्रायेणाभिचारार्थत्वात्यज्ञविद्यायामनुपयोगाच्चानिर्देशः तथाहिऋग्वे
देनैवहौत्रंकुर्वन्यजुर्वेदेनाध्वर्यवंसामवेदेनौद्गात्रंयदेवत्रय्यैविद्यायैसूक्तंतेनब्रह्मत्वमितिश्रुतेस्त्रयीसंपाद्यत्वंयज्ञानांज्ञायतेअयंचमानवःत्रैवे-
दिकव्रतचर्याविधिर्नाथर्ववेदेव्रतचर्यानिषेधयतितत्परत्वेवाक्यभेदप्रसंगात् श्रुत्यंतरेवेदमात्रेव्रतश्रवणाच्च यदाहयोगियाज्ञवल्क्यः
ब्रह्मचर्यंद्वादशाब्दानिपंचवा १ वेदानधीत्येति वेदशब्दोयंभिन्नवेदशाखापरः स्वशाखाध्ययनपूर्वकंवेदशाखात्रयंद्वयमेकांवाशाखांमंत्र
ब्राह्मणक्रमेणाधीत्यगृहस्थाश्रमंगृहस्थविहितकर्मकलापरूपमनुतिष्ठेत् कृतदारपरिग्रहोगृहस्थःगृहशब्दस्यदारवचनत्वात् अविप्लुत-
ब्रह्मचर्यइतिपूर्वविहितस्त्रीसंयोगमधुमांसभक्षणवर्जनरूपब्रह्मचर्यानुवादोयंभक्तयाध्ययनांगत्वख्यापनार्थःपुरुषशक्त्यपेक्षश्चायमेकद्वि
त्रिशाखाध्ययनविकल्पःयद्यपिव्रतानिवेदाध्ययनंचनित्यवदुपदिशतामनुनोभयस्नातकएवश्रेष्ठत्वादभिहितस्तथापिस्मृत्यंतरादन्यस्नात-

कोपिचोद्व्यः तदाहहारीतः त्रयःस्नातकाभवंतिविद्यास्नातकोव्रतस्नातकोविद्याव्रतस्नातकश्चेति यःसमाप्यवेदमसमाप्यव्रतानिसमावर्त्त तेसविद्यास्नातकः यःसमाप्यव्रतानिअसमाप्यवेदंसमावर्त्ततेसव्रतस्नातकः उभयंसमाप्यसमावर्त्ततेयःसविद्याव्रतस्नातकः याज्ञवल्क्योप्या ह वेदंव्रतानिवापारन्नीत्वाह्युभयमेववेति २ तमिति तंब्रह्मनाविधर्मानुष्ठानेनस्यातंदीयतइतिदायःअध्येवदायोब्रह्मदायः तंहरतीतिब्रह्म दायहरंपितुःपितृतोगृहीतवेदमित्यर्थः पितृतोऽध्ययनंसुत्यसुक्तंपितुरभावेआचार्यादेरप्यधीतवेदंमाल्यालंकृतंउत्कृष्टशयनोपविष्टंगोसा धनमधुपर्केणपिताआचार्योवाविवाहात्प्रथमंपूजयेत् ३ गुरुणेति गुरुणादत्तानुज्ञःस्वगृह्योक्तविधिनाकृतस्नानसमावर्त्तनःसमानवर्णा- शुभलक्षणांकन्यांविवहेत् ४ असपिंडाचेति मातुर्यासपिंडानभवतिसप्तमपुरुषपर्यंतंसपिंडतांवक्ष्यति सपिंडतातुपुरुषेसप्तमेविनिवर्त्तत इतितेनमातामहादिवंशजायानभवतीत्यर्थः चशब्दान्मातृसगोत्रापिमातृवंशजन्मपरंपरनाम्नोःअत्यभिज्ञानेसतिनाविवाह्यातदितरातुमातृसगो

तंप्रतीतंस्वधर्मेणब्रह्मदायहरंपितुः स्रग्विणंतल्पआसीनमर्हयेत्प्रथमंगवा ३ गुरुणानुमतःस्नात्वा समावृत्तोयथाविधि उद्वहेतद्विजोभार्यांसवर्णांलक्षणान्विताम् ४ असपिंडाचयामातुरसगोत्राचयापि- तुः सासप्रशस्ताद्विजातीनांदारकर्मणिमैथुने ५ महान्त्यपिसमृद्धानिगोजाविधनधान्यतः स्त्रीसंबंधेदशैता निकुलानिपरिवर्जयेत् ६

त्राविवाह्येतिसंगृहीतम् तथाचव्यासः सगोत्रांमातुरप्येकेनेच्छंत्युद्वाहकर्मणि जन्मनाम्नोरविज्ञाने उद्वहेदविशंकितः यत्तुमेधातिथिनावशिष्टनाम्नामातृसगोत्रानिषेधवचनंलिखितम् परिणीयसगोत्रांतुसमानप्रवरांतथा तस्यांकृत्वा समुत्सर्गंद्विजश्चांद्रायणंचरेत् मातुलस्यसुतांचैवमातृगोत्रांतथैवचेति तदपिमातृवंशजन्मनामापरिज्ञानविषयमेव असगोत्राचया- पितुरितिपितुर्यासगोत्रानभवतिचकारात्पितृसपिंडापिपितृव्यादिसंततिभवायानभवतीत्यर्थः साद्विजातीनांदारत्वसंपादकेविवाहेप्र- शस्तामैथुनसाध्येअग्न्याधानकर्मपुत्रोत्पादनार्थंचेति ५ महान्त्यपीति उत्कृष्टान्यपिगवादिभिःसमृद्धान्यपिइमानिदशकुलानिविवाहे त्यजेत् ६ तानिकानीत्याह हीनक्रियमिति जातकर्मादिक्रियारहितंस्त्रीजनकंवेदाध्यापनशून्यम् बहुदीर्घरोमान्वितं अर्शोनामव्याधि युक्तम् क्षयोराजयक्ष्मामंदानलापस्मारश्वित्रकुष्ठयुक्तानांचकुलानिवर्जयेदितिपूर्वक्रियासंबंधः दृष्टमूलत्वाचास्यप्रतिषेधस्यमातुल

वद्दुत्सन्नाअनुवहंते नेनहीनक्रियादिकुलात्परिणीतायांसंततिरपिताद्दशीस्यात् व्याधयःसंचारिणइतिवैद्यकाःपठंति सर्वेसंक्रामि
णोरोगावर्जयित्वाप्रवाहिकांइति अवेदमूलाकथमियंप्रमाणमितिचेन्न दृष्टार्थतयैवप्रामाण्यसंभवात् तदुक्तंभविष्यपुराणे सर्वाएत
वेदमूलाद्दृष्टार्थाःपरिहृत्यतु मीमांसाभाष्यकारेणापिस्मृत्यधिकरणेउक्तम् ७ येदृष्टार्थाःतेतत्प्रमाणंयेत्वदृष्टार्थास्तेवैदिकाःशब्दात्तु
मानमिति कुलाश्रयप्रतिषेधमभिधायकन्यास्वरूपाश्रयप्रतिषेधमाह नोद्वहेदिति कपिलकेशान्नित्यव्याधितां अविद्यमानलोमांप्रचुर-
लोमांबहुपरुषभाषिणीं पिंगलाक्षींकन्यान्नोपयच्छेत् ८ नेति ऋक्षंनक्षत्रंतन्नामिकांआर्द्रारेवतीत्यादिकांएवंतरुनदीम्लेच्छपर्वतप
क्षिसर्पदासभयानकनामिकांकन्यांनोद्वहेत् ९ अव्यंगांगीमिति अविकलांगींमधुरस्वरोधनाम्नींहंसगजरुचिरगमनांअनतिस्थूललोम

हीनक्रियंनिष्पुरुषंनिश्छंदोरोमशार्शसम् क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानिच ७ नोद्वहेत्क
पिलांकन्यांनाधिकांगींनरोगिणीम् नालोमिकांनातिलोमांनवाचाटांनपिंगलाम् ८ नर्क्षवृक्षनदीना
म्नींनांत्यपर्वतनामिकाम् नपक्ष्यहिप्रेष्यनाम्नींनचभीषणनामिकाम् ९ अव्यंगांगींसौम्यनाम्नींहंसवा
रणगामिनीम् तनुलोमकेशदशनांमृद्वंगीमुद्वहेत्स्त्रियम् १० यस्यास्तुनभवेद्भ्राताविज्ञायेतवापिता
नोपयच्छेततांप्राज्ञःपुत्रिकाधर्मशंकया ११ केशदशनांकोमलांगींकन्यामुद्वहेत् १० अत्रविधिनिषेधयोरभिधानम्
निषिद्धविहितकन्यापरिणयनमभ्युदयार्थमितिदर्शयितुमाह यस्याइति यस्याःपुनर्भ्रातानास्तितांपुत्रिकाशंकयानोद्वहेत् यदपत्यं
भवेदस्यास्तन्ममस्यात्स्वधाकरमित्यभिसंधानमात्रादपिपुत्रिकाभवति अभिसंधिमात्रात्पुत्रिकेत्येकइतिगोतमस्मरणात् यस्यावाविशे
षेणपितानज्ञायतेअनेनैवपसुतत्वेतितामपिनोद्वहेत् अत्रचपुत्रिकाधर्मशंकयेतिनयोजनीयमितिकेचित् गोविंदराजस्त्वाहभिन्नपितृ
कयोरप्येकमातृकयोर्भ्रातृत्वप्रसिद्धेःसद्भ्रातृकत्वेपियस्याविशेषेणपितानज्ञायतेतामपिपुत्रिकाशंकयैवनोद्वहेदिति मेधातिथिस्तुएकमे
वइमंपक्षमाह यस्यास्तुभ्रातानास्तितांपुत्रिकाशंकयानोपयच्छेत् पिताचेन्नज्ञायतेप्रोषितोमृतोवावाशब्दश्चेदर्थेपितरित्तुविद्यमानेत
दीयवाक्यादेवपुत्रिकात्वाभावमवगम्याभ्रातृकापिवोढव्येति अस्माकंतुविकल्पस्वरसादिदंप्रतिभाति यस्याविशेषेणपितानज्ञायतेता
मपितावत्वेनाधर्मशंकयानोद्वहेत् अत्रचपक्षेपुत्रिकाधर्मशंकयेतिपुत्रिकात्वाधर्मश्चतयोःशंकापुत्रिकाधर्मशंकयेतियथासंख्यंयोजनी

यं अत्रनप्रकरणेसगोत्रांचेदमत्योपयच्छेत्मातृवदेनांबिभृयादितिपरित्यागश्रवणात् परिणीयसगोत्रांचेतिप्रायश्चित्तश्रवणाच्च तन्त्रतामसमभिव्याहृतेनचमातृसपिंडापरिणयनादौभार्यात्वमेवनभवति भार्याशब्दस्याहवनीयादिवत्संस्कारवचनत्वात् येषांपु-नर्दृष्टगुणदोषमूलकेविधिनिषेधाभिधानेयथाहीनक्रियमितिनतदतिक्रमेभार्यात्वाभावः अतएवमनुनामहांत्यपिसमृद्धानीत्यादि पृथक्करणंकृतंएतन्मध्यपतितश्चनर्तस्पृत्सनदीनाम्नीमित्यादिप्रतिषेधोपिनभार्यात्वाभावफलकः किंत्वत्रशास्त्रातिक्रमात्प्रायश्चित्तमात्रम् ११ सवर्णाग्रइति ब्राह्मणक्षत्रियवैश्यानांप्रथमेविवाहेकर्त्तव्येसवर्णाश्रेष्ठाभवतिकामतः पुनर्विवाहेप्रवृत्तानामेतावक्ष्यमाणा आनुलोम्येनश्रेष्ठाभवेयुः १२ शूद्रैवेति शूद्रस्यशूद्रैवभार्याभवतिननूत्कृष्टावैश्यादयस्तित्रः वैश्यस्यचशूद्रावैश्याचभार्यामन्वादिभिःस्मृता क्षत्रियस्यवैश्याशूद्रेक्षत्रियाच ब्राह्मणस्यक्षत्रियावैश्याशूद्राब्राह्मणीच वसिष्ठोपिशूद्रामप्येकेमंत्रवर्जमितिद्विजातीनांमंत्रवर्जितंशूद्राविवाहमाह १३ नब्राह्मणेति ब्राह्मणक्षत्रिययोर्गार्हस्थ्यमिच्छतोःसर्वथासवर्णालाभेकस्मिंश्चिदपिवृत्तांतेइतिहासाख्यानेपिशूद्राभार्या

सवर्णाग्रेद्विजातीनांप्रशस्तादारकर्मणि कामतस्तुप्रवृत्तानामिमाःस्युःक्रमशोवराः १२ शूद्रैवभार्या शूद्रस्यसाचस्वाचविशःस्मृते तेचस्वाचैवराज्ञश्चताश्चस्वाचाग्रजन्मनः १३ नब्राह्मणक्षत्रिययोराप द्यपिहितिष्ठतोः कस्मिंश्चिदपिवृत्तांतेशूद्राभार्योपदिश्यते १४ हीनजातिस्त्रियंमोहादुद्वहंतोद्विजात यः कुलान्येवनयंत्याशुससंतानानिशूद्रताम् १५ शूद्रावेदीपतत्यत्रेरुतथ्यतनयस्यच शौनकस्यसु तोत्पत्त्यातदपत्यतयाभृगोः १६ नाभिधीयते पूर्वसवर्णानुक्रमेणानुलोम्येनविवाहाभ्यनुज्ञानात् अयंनिषेधःप्रातिलोम्येन विवाहविषयोबोद्धव्यः ब्राह्मणक्षत्रियग्रहणंचेददोषप्रूपस्थार्थं अनंतरंद्विजातयइतिबहुवचनात् वैश्यगोचरनिषेधस्यापिवक्ष्यमाणत्वात् १४ हीनजातिस्त्रियमिति सवर्णामपिपरिणीयहीनजातिंशूद्रांशास्त्राविवेकात्परिणयंतोब्राह्मक्षत्रियवैश्यास्तत्रोत्पन्नपुत्रपौत्रादिक्रमेणकुलान्येवससंततिकानिशूद्रतांगमयंति अत्रद्विजातयइतिबहुवचननिर्देशात्निंदयावैश्यस्यापिनिषेधःकल्प्यते ब्राह्मणक्षत्रिययोस्तुपूर्ववन्नैवनिषेधकल्पनात्तन्निंदामात्रार्थत्वेव १५ शूद्रावेदीति शूद्रांविंदतिपरिणयतीतिशूद्रावेदीसपततिपतितइवभवतिइ-दमत्रेर्मतंउतथ्यतनयस्यगौतमस्यच अत्र्यादिग्रहणंसादरार्थंएतद्ब्राह्मणविषयंशूद्रायांकृतोस्त्यापततीतिशौनकस्यमतमेतत्क्षत्रि

यविषयंशूद्रासकृतोत्पत्त्यापतीतिभृगोर्मतंएतद्देश्यविषयंएतस्यमहर्षिमतत्रयस्यव्यवस्थासंभवेविसदृशपतनविकल्पायोगात् मेधातिथिगोविंदराजयोस्तमतंशूद्रावेदीपततीतिपूर्वोक्तशूद्राविवाहनिषेधविशेषः सुतोत्पत्त्यापततीतिदैवाज्ज्ञातशूद्राविवाहेऋतो नोपेयादितिविधानार्थंऋतुकालगमनेसुतोत्पत्तेः तदपत्यतयेतितुतान्येवशूद्रोत्पन्नान्यपत्यानियस्यसतदपत्यस्तस्यभावस्तदपत्यता तयापततिएतेनेदमुक्तंऋतावुपयन्नितरासुजातापत्यउपेयात् १६ शूद्रामिति सवर्णामपरिणीयदैवान्मोहाद्वाशूद्रापरिणेतुर्ब्राह्म णस्यशयननिषेधोयंनिंदयानिषेधस्मृत्यनुमानात् शूद्रांगत्वाब्राह्मणोनरकंगच्छतिजनयित्वासुतंतस्यांऋतुकालगमननिषेधपरंब्रा ह्मण्यादेवहीयतइतिदोषभूयस्त्वार्थः १७ दैवेति यदिकथंचित्सवर्णानुक्रमेणवाशूद्रापिपरिणीयतेतदाभार्यात्वेनप्रसक्तानितत्कर्तृ कानिदैवेत्यनेननिषिध्यंतेदैवंहोमादिपित्र्यंश्राद्धादिआतिथेयंअतिथिभोजनादि एतानियस्यशूद्रासंपाद्यानितद्धव्यंकव्यंपितृदेवा

शूद्रांशयनमारोप्यब्राह्मणोयात्यधोगतिम् जनयित्वासुतंतस्यांब्राह्मण्यादेवहीयते १७ दैवपित्र्याति थेयानितत्प्रधानानियस्यतु नाश्नंतिपितृदेवास्तन्नचस्वर्गंसगच्छति १८ वृषलीफेनपीतस्यनिःश्वासो पहतस्यच तस्यांचैवप्रसूतस्यनिष्कृतिर्नविधीयते १९ चतुर्णामपिवर्णानांप्रेत्यचेहहिताहितान् अ ष्टाविमान्समासेनस्त्रीविवाहान्निबोधत २० ब्राह्मोदैवस्तथैवार्षःप्राजापत्यस्तथासुरः गांधर्वोराक्षसश्चै वपैशाचश्चाष्टमोधमः २१

नाश्नंतिनचतेनातिथ्येनसगृहीस्वर्गंयाति यस्तुसंस्कारयेन्मोहात्सजात्यास्थितयान्ययेतिसवर्णा- यांसन्निहितायांनिषेधंवक्ष्यतिअयंत्वसन्निहितायामपीत्यपुनरुक्तिः १८ वृषलीति वृषलीफेनोऽधररसःसपीतोयेनसवृषलीफेनप नः वाहिताग्न्यादिष्वित्यनेनसमासः अनेनशूद्रायाअधररसपानंनिषिध्यते निःश्वासोपहतस्यचेतितयासहैकशय्यादौशयननिषेधः तस्यांजातापत्यस्यशुद्धिर्नोपदिश्यतइतिऋतुकालगमननिषेधानुवादः १९ चतुर्णामिति चतुर्णामपिवर्णानांब्राह्मणादीनांपरलो केइहलोकेचकांश्चिद्धितान्कांश्चिदहितानिमानभिधास्यमानानष्टौसंक्षेपेणभार्याप्राप्तिहेतून्विवाहान्शृणुत २० ब्राह्मइति तएतेनामतोनिर्दिश्यंतेब्राह्मराक्षसादिसंज्ञाश्चेयंशास्त्रसंव्यवहारार्थास्तुतिनिंदाप्रदर्शनार्थंच ब्रह्मणइवायंब्राह्मः रक्षसइवायंराक्ष

सः नतुब्राह्मादिदेवतात्वंविवाहानांसंभवति पैशाचस्याधर्मस्याभिधानंनिंदातिशयार्थम् २१ यइति धर्मादनपेतोधर्म्यःयोविवा
होधर्म्योयस्यविवाहस्ययोगुणदोषोदृष्टानिष्टफलेतत्तद्विवाहोत्पन्नापत्येषुयेगुणागुणास्तत्सर्वंयुष्माकंप्रकर्षेणाभिधास्यामि वक्ष्य
माणानुकीर्त्तनमिदंशिष्याणांसुखग्रहणार्थम् २२ षडिति ब्राह्मणस्यब्राह्मादिक्रमेणषट् क्षत्रियस्यावराद्युपरितनानासुरादीं
श्चतुरः विट्शूद्रयोस्तुतानेवराक्षसवर्जितानासुरगांधर्वपैशाचान्धर्मादनपेतान्जानीयात् २३ चतुरइति ब्राह्मणस्यप्रथमसंपठि
तान्ब्राह्मादींश्चतुरः क्षत्रियस्यराक्षसमेकमेववैश्यशूद्रयोरासुरमेतान्श्रेष्ठान्ज्ञातारोजानंति अतएवब्राह्मणादिष्वासुरादीनांपूर्व
विहितनामप्यत्राप्युपादानंजघन्यत्वज्ञापनार्थंतेनप्रशस्तविवाहासंभवेजघन्यस्यापिपरिग्रहइतिदर्शितम् एवमुत्तरत्रापिविगर्हित
परित्यागोबोद्धव्यः २४ पंचानामिति इहपैशाचप्रतिषेधादुपरितनानांपंचानांप्राजापत्यादीनांग्रहणम् तेषुमध्येप्राजापत्यगांधर्वरा

योयस्यधर्म्योवर्णस्यगुणदोषौचयस्ययौ तद्वःसर्वंप्रवक्ष्यामिप्रसवेचगुणागुणान् २२ षडानुपूर्व्याविप्रस्य
क्षत्रस्यचतुरोवरान् विट्शूद्रयोस्तुतानेवविद्याद्धर्म्यानराक्षसान् २३ चतुरोब्राह्मणस्याद्यान्प्रशस्तान्
कवयोविदुः राक्षसंक्षत्रियस्यैकमासुरंवैश्यशूद्रयोः २४ पंचानांतुत्रयोधर्म्याद्वावधर्म्यौस्मृताविह पैशा
चश्चासुरश्चैवनकर्त्तव्यौकदाचन २५ पृथक्पृथग्वामिश्रौवाविवाहौपूर्वचोदितौ गांधर्वोराक्षसश्चैवध-
र्म्यौक्षत्रस्यतौस्मृतौ २६

क्षसास्त्रयोधर्मादनपेतास्तत्रप्राजापत्यः क्षत्रियादीनामप्राप्तोविधीयतेब्राह्मणस्यविहितत्वाद
नूद्यते गांधर्वस्यचचतुर्णामेवप्राप्तत्वादनुवादः राक्षसोपिवैश्यशूद्रयोर्विधीयते ब्राह्मणस्यक्षत्रियवृत्त्यवस्थितस्यापि आसुरपै-
शाचौनकर्त्तव्यौकदाचनेत्यविशेषाच्चतुर्णामेवनिषिध्यते अत्रपूर्वंवर्णप्रतियस्यविवाहस्यविधिनिषेधौतस्यतंप्रतिविकल्पः सचविहि-
तासंभवेबोद्धव्यः २५ पृथगिति पृथक्पृथगितिप्राप्तत्वादनूद्यते मिश्राविति विधीयते पृथक्पृथग्विमिश्रौवापूर्वविहितौगांधर्व-
राक्षसौक्षत्रस्यधर्म्यौमन्वादिभिःस्मृतौ यदास्त्रीपुंसयोरन्योन्यानुरागपूर्वकसंवादेनपरिणेतायुद्धादिनाविजित्यतामुद्वहेत्तदागांध
र्वराक्षसौमिश्रौभवतः २६ आच्छाद्येति आच्छादनमात्रस्यैव औचित्यप्राप्तत्वात्सविशेषवाससाकन्यावराच्छाद्यालंकारादिना

च पूजयित्वा विद्याचारवंतमप्रार्थकवरमानीयतस्मै कन्यादानं ब्राह्मोविवाहोमन्वादिभिरुक्तः २७ यज्ञइति ज्योतिष्टोमादियज्ञेप्रार-भ्येयथाविधि ऋत्विजेकर्मकर्त्रेअलंकृत्यकन्यादानंदैवंविवाहंमुनयोब्रुवते २८ एकमिति स्त्रीगवीपुंगौश्चगोमिथुनंतदेकं द्वेवावरा-त्धर्मतः धर्मार्थंयागादिसिद्ध्येकन्यायैवादातुं नतुशुल्कबुध्यागृहीत्वा यथाशास्त्रंकन्यादानंसआर्षोविवाहोविधीयते २९ सहे-ति सहयुवांधर्मंकुरुतमितिकृताप्रदानकालेवचसापूर्वंनियम्यार्थयित्वायत्कन्यादानंसप्राजापत्योविवाहःस्मृतः ३० ज्ञातिभ्यइति कन्यायाज्ञातिभ्यः पित्रादिभ्यः कन्यायैयत्तंयथाशक्तिधनंदत्वाकन्यायाआप्रदानमादानंस्वीकारःस्वाच्छंद्यात्स्वेच्छयानत्वार्षशास्त्रीय धनंजातिपरिमाणंनियमेनसआसुरोविवाहउच्यते ३१ इच्छयेति कन्यायावरस्यचान्योन्यानुरागेणयःपरस्परसंयोग आलिंगनादि

आच्छाद्यचार्चयित्वाचश्रुतिशीलवतेस्वयम् आहूयदानंकन्यायाब्राह्मोधर्मःप्रकीर्तितः २७ यज्ञेतु विततेसम्यगृत्विजेकर्मकुर्वते अलंकृत्यसुतादानंदैवंधर्मंप्रचक्षते २८ एकंगोमिथुनंद्वेवावरादा दायधर्मतः कन्याप्रदानंविधिवदार्षोधर्मःसउच्यते २९ सहनौचरतांधर्ममितिवाचानुभाष्यच क न्याप्रदानमभ्यर्च्यप्राजापत्योविधिःस्मृतः ३० ज्ञातिभ्योद्रविणंदत्वाकन्यायैचैवशक्तितः कन्याप्रदा नंस्वाच्छंद्यादासुरोधर्मउच्यते ३१ इच्छयान्योन्यसंयोगःकन्यायाश्चवरस्यच गांधर्वःसतुविज्ञेयो मैथुन्यःकामसंभवः ३२ हत्वाछित्वाचभित्वाचक्रोशंतींरुदतींगृहात् प्रसह्यकन्याहरणंराक्षसो विधिरुच्यते ३३

रूपःसगांधर्वोज्ञातव्यः संभवत्यस्मादितिसंभवः यस्मात्कन्यावरयोरभिलाषादसौसंभवति अत एवमैथुन्योमैथुनायहितः सर्वविवाहानामेवमैथुनत्वेनयदस्यमैथुनत्वाभिधानंतत्सत्यपिमैथुनेनविरोधइतिप्रदर्शनार्थम् ३२ ह-त्वेति प्रसह्यबलात्कारेणकन्यायाहरणंराक्षसोविवाहइत्येवलक्षणम् यदातुहर्त्तुःशक्त्यातिशयंज्ञात्वापित्रादिभिरुपेक्षतेतदानाव-श्यकंहननादि यदिकन्यापक्षःप्रतिपक्षतांयातितदाहननादिकमपिकर्त्तव्यमित्यर्थप्राप्तमनूद्यते कन्यापक्षान्विनाश्यतेषामंगच्छेदंकृ-त्वाप्राकारादीन्भित्वाहापितर्भ्रातरनाथाहंक्रियेइतिवदंतींअश्रूणिमुंचंतींयत्कन्यांगृहादपहरतिअनेनकन्यायाअनिच्छोक्तागांधर्वादि वेकार्थम् ३३

सुप्तामिति निद्राभिभूतां मद्यमदविह्वलां शीलसंरक्षणेन रहितां विजनदेशे यत्र विवाहे मैथुनधर्मेण प्रवर्त्तते स पापहेतुर्विवाहानां मध्ये ऽध
मः पैशाचः ख्यातः ३४ अद्भिरिति उदकदानपूर्वकमेव ब्राह्मणानां कन्यादानं प्रशस्तं क्षत्रियादीनां पुनर्विनाप्युदकं परस्परेच्छया वाङ्मात्रेणा
पि कन्यादानं भवति उदकपूर्वकमपीत्यनियमः ३५ य इति यद्यपि गुणदोषौ च यस्य यावित्ति गुणाभिधानमपि प्रतिज्ञातमेव तथापि बहूनामर्था
नां तत्र वक्तव्यतया प्रतिज्ञातत्वात् विशेषज्ञापनार्थः पुनरुपन्यासः एषां विवाहानामिति निर्द्धारणे षष्ठी एषां मध्ये यस्य विवाहस्य यो गुणो मनु-
ना कथितः तत्सर्वं हे विप्राः मम कथयतः शृणुत ३६ दशेति दश पूर्वान् पित्रादीन् वंश्यान् परान् पुत्रादीन् दश आत्मानं चैकविंशकं ब्राह्मवि
वाहोढासुतो यदि सुकृतकृद्भवति तदा पापान्मोचयति पित्रादीन्नरकादुद्धरति पुत्रादयश्च तस्य कुले निष्पापा जायन्त इति मोचनार्थः तेषामनुस

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः ३४ अद्भिरेव द्विजाग्र्या
णां कन्यादानं विशिष्यते । इतरेषां तु वर्णानामितरेतरकाम्यया ३५ यो यस्यैषां विवाहानां मनुना कीर्त्तितो गु
णः । सर्वं शृणुत तं विप्राः सर्वं कीर्त्तयतो मम ३६ दश पूर्वान्परान् वंश्यानात्मानं चैकविंशकम् । ब्राह्मीपुत्रः सु
कृतकृन्मोचयेदेनसः पितॄन् ३७ दैवोढाजः सुतश्चैव सप्त सप्त परावरान् । आर्षोढाजः सुतस्त्रींस्त्रीन् षट्
षट् कायोढजः सुतः ३८ ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्च्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ३९

न्तेः पापध्वंसस्याशक्यत्वात् ३७ दैवोढेति दैवविवाहोढायाः पुत्रः सप्त परान् पित्रादीन् सप्त अवरान् पुत्रादींश्च आर्षविवाहोढायाः
पुत्रः त्रीन् पित्रादीन् त्रींश्च पुत्रादीन् प्राजापत्यविवाहोढायाः पुत्रः षट् पित्रादीन् षट् पुत्रादीन् आत्मानं चैनसो मोचयतीति पूर्वस्यैव सर्व
त्रानुषङ्गः कायोढज इति आपोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वम् ब्राह्माद्यष्टविवाहोद्देशक्रमानुसारेण मन्त्रफलस्यार्षस्येह बहुफल-
प्राजापत्यात्पूर्वाभिधानं ब्राह्मादिविवाहोद्देशश्लोक एव कथमयं क्रम इति चेत् षण्णां तु त्रयो धर्म्या इत्यत्र प्राजापत्यग्रहणार्थम् अन्यथा
त्वार्षस्यैव ग्रहणं स्यात् ३८ ब्राह्मेति प्रसङ्गेन गुणागुणाविति यदुक्तं तदुच्यते ब्राह्मादिषु चतुर्षु विवाहेषु श्रुताध्ययनसंपत्तिकृततेजोयु-
क्ताः पुत्राः शिष्टप्रियाः जायन्ते प्रियार्थत्वाच्च संमतशब्दस्य क्तेन च पूजायामिति न षष्ठीसमासप्रतिषेधः संबंधसामान्यविवक्षायां षष्ठी यं समस्यते

रूपेति रूपं मनोहराकृतिः सत्त्वं द्वादशाध्याये वक्ष्यमाणगुणोदयः तैर्युक्ता धनिनः ख्यातिमंतो यथेप्सितवस्त्रस्रग्गंधलेपनादिभोगशा
लिनो धार्मिकाश्च पुत्रा जायंत इति पूर्वमनुवर्त्तते शतं च वर्षाणि जीवंति ४० इतरेष्विति ब्राह्मादिभ्यश्चतुर्भ्योऽन्येष्वासुरादिषु चतुर्षु वि
वाहेषु क्रूरकर्माणो मृषावादिनो वेदद्वेषिणो यागादिधर्मद्वेषिणः पुत्रा जायंते ४१ अनिंदितैरिति संक्षेपेण विवाहानां फलकथनमिदम्
अगर्हितैर्भार्याप्राप्तिहेतुभिर्विवाहैरगर्हिता मनुष्याणां संततिर्गर्हितैस्तु गर्हिता तस्माद्गर्हितविवाहान्न कुर्यात् ४२ पाणीति समानजा
तीयासु उह्यमानासु हस्तग्रहणलक्षणः संस्कारो गृह्यादिशास्त्रेण विधीयते विजातीयासु पुनरुह्यमानासु विवाहकर्मणि पाणिग्रहणस्था
ने अयमनंतरश्लोके वक्ष्यमाणो विधिर्ज्ञेयः ४३ शर इति क्षत्रियया पाणिग्रहणस्थाने ब्राह्मणविवाहे ब्राह्मणहस्तपरिगृहीतकांडैकदेशो ग्रा
ह्यः वैश्यया ब्राह्मणक्षत्रियाधृतप्रतोदैकदेशो ग्राह्यः शूद्रया पुनर्द्विजातित्रयविवाहे प्रावृतवसनदशा ग्राह्या ४४ ऋताविति ऋतुर्नाम शोणि

रूपसत्त्वगुणोपेता धनवंतो यशस्विनः पर्याप्तभोगा धर्मिष्ठा जीवंति च शतं समाः ४० इतरेषु तु शिष्टेषु नृशं
सानृतवादिनः जायंते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ४१ अनिंदितैः स्त्रीविवाहैरनिंद्या भवति प्रजा निं
दितैर्निंदिता नृणां तस्मान्निंद्यान्विवर्जयेत् ४२ पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते असवर्णास्व
यं ज्ञेयो विधिरुद्वाहकर्मणि ४३ शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया वसनस्य दशा ग्राह्या शूद्रयोत्कृ
ष्टवेदने ४४ ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा पर्ववर्ज्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ४५

तदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः तत्कालाभिगामी स्यादित्ययं नियमविधिः न तु परिसंख्या स्वार्थहानिपरा
र्थकल्पनाप्राप्तबाधात्मकदोषत्रयदुष्टत्वात् ऋतुकालेपि रागतः पक्षे गमनप्राप्तौ यस्मिन्पक्षे प्राप्तिस्तत्र विधिः समे यजेतेतिवत् अत
एवऋताव गमने दोषमाह पराशरः ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति घोरायां ब्रह्महत्यायां पतते नात्र संशयः अनुत्पन्नपुत्र
स्य चायं नियमः ब्राह्मणो ह वै जायमानस्त्रिभिर्ऋणैर्ऋणवान्जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्य इत्येतस्य श्रु
तिमूलत्वे स्यसंभवति मूलांतरकल्पनस्यायुक्तत्वात् तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियमिति च वक्ष्यति ततोप्येतच्छ्रुतिमूलत्व

मवगम्यते पुत्रोत्पादनशास्त्रस्यनैकपुत्रोत्पादनेनैवचरितार्थत्वात् कामजानितरान्विदुरितिदर्शनादजातपुत्रस्यैवनियमः दशास्यां पुत्रानाधेहीतिमंत्रस्तुबहुपुत्रप्रशंसापरः जातपुत्रस्यापिऋतुकालगमननियमोनदशस्वेवावतिष्ठते स्वदारनिरतःसदेतिनित्यंस्वदार संतुष्टःस्यान्नान्यभार्यामुपगच्छेदितिविधानात्परिसंख्यैववाक्यानर्थक्यात् स्वदारगमनस्यप्रशस्तत्वात् ऋतावगमनेदोषाश्रवणाच्चननि यमविधिः पर्ववर्ज्जंव्रजेच्चैनामिति पर्वाण्यमावास्यादीनिवक्ष्यंते तानिवर्ज्जयित्वाभार्याप्रीतिव्रतंयस्यसतद्व्रतोऽनृतावप्युपेयात् अतएव रतिकाम्ययानत्वपुत्रोत्पादनशास्त्रवश्यात्तस्माद्विधिनियमिदम् ऋतावुपेयादेव अन्यभार्यांनोपगच्छेत् अनृतावपिभार्याप्रीतयेगच्छेदि ति अत्रगौतमः ऋतावुपेयादनृतौचपर्ववर्ज्जम् याज्ञवल्क्योप्याह यथाकामीभवेद्वापिस्त्रीणांवरमनुस्मरन् पर्ववर्जमितिऋताव नृतौचोभयनसंवध्यते ४५ ऋतुरिति अत्ररात्र्यहःशब्दावहोरात्रपरौ शोणितदर्शनात्प्रभृतिस्त्रीसंपर्कगमनादोशिष्टानिंदितैश्चतुर्भि

ऋतुःस्वाभाविकःस्त्रीणांरात्रयःषोडशस्मृताः चतुर्भिरितरैःसार्द्धमहोभिःसद्विगर्हितैः ४६ तासामा द्याश्चतस्रस्तुनिंदितैकादशीचया त्रयोदशीचशेषास्तुप्रशस्तादशरात्रयः ४७ युग्मासुपुत्राजायंतेस्त्रि योऽयुग्मासुरात्रिषु तस्माद्युग्मासुपुत्रार्थीसंविशेदार्त्तवेस्त्रियम् ४८ पुमान्पुंसोधिकेशुक्रेस्त्रीभवत्य धिकेस्त्रियाः समेपुमान्पुंस्त्रियौवाक्षीणेल्पेचविपर्ययः ४९

रन्यैरहोरात्रैःसहषोडशाहोरात्राणिमासिमासिस्त्रीणा मृतुःस्वभावेभवःस्वाभाविकः व्याध्यादिनातुन्यूनाधिककालोपिभवति ४६ तासामिति तासांपुनःषोडशानांरात्रीणांशोणितदर्श नात्प्रभृतिआद्याश्चतस्रोरात्रयः एकादशीत्रयोदशीचरात्रिर्गमनेनिंदिताअवशिष्टादशरात्रयःप्रशस्ताभवेयुः ४७ युग्मेति पूर्वोक्ता स्वपिदशसुषष्ठ्यष्टम्याद्यासुरात्रिषुगमनेपुत्राउत्पद्यंते अयुग्मासुपंचमीसप्तम्यादिषुदुहितरः अतःपुत्रार्थीयुग्मासुऋतुकालेभा र्यांगच्छेत् ४८ पुमानिति पुंसोबीजेअधिकेऽयुग्मास्वपिपुत्रोजायतेस्त्रीबीजेधिकेयुग्मास्वपिदुहिताएव अतोवृष्याहारादिनानि जबीजाधिक्यंभार्यायाश्चाहारलाघवादिनाबीजाल्पत्वमवगम्ययुग्मास्वपिपुत्रार्थिनागंतव्यमितिदर्शितम् स्त्रीपुंसयोस्तुबीजसाम्ये ऽपुमान्नपुंसकंजायतेपुंस्त्रियौवेतियमौच निःसारेल्पेचोभयोरेवबीजेगर्भस्यासंभवः ४९ ५ ५ ५

निंद्येति निंद्यास्तु पूर्वोक्ताःषट्सुरात्रिषु अन्यासुच निंद्यास्वपियासुकासुचिद्द्वाभ्यांस्त्रियोवर्जयन्द्वेरात्री अवशिष्टेपर्ववर्ज्जितेव्रजन्मनु-
ब्रह्मचार्येवभवतियत्रतत्राश्रमेवसन्निति वानप्रस्थापेक्षया तस्यहिभार्यासहगमनपक्षेऋतुगमनंप्रसक्तम् नचवनस्थभार्यायाऋ-
तुर्नभवतीतिवाच्यम् पुनःपंचाशतोव्रजेदिति वर्षैरेकगुणांभार्यामुद्वहेत्त्रिगुणःपुमानित्यादिशास्त्रपर्यालोचनयातत्संभवात् मेधाति-
थिस्तुयत्रतत्राश्रमेवसन्निति अनुवादमात्रंगृहस्थेतराश्रमत्रयेजितेंद्रियत्वविधानात् रात्रिद्वयाभ्यनुज्ञानासंभवादित्याह गोविंदराजस्तु
उत्पन्नविनष्टपुत्रस्याश्रमांतरस्थस्यापीच्छयापुत्रार्थंरात्रिद्वयगमनेदोषाभावप्रतिपादनार्थमेतत् यत्रतत्राश्रमेवसन्नितिवचनात्पुत्रार्थसिं
विशेदितिचमनुस्तत्वात्पुत्रस्यचमहोपकारकत्वादित्याह हंतगोविंदराजेनविशेषमविभृण्वता व्यक्तमंगीकृतमृतौस्वदारसुरतंयतेः ५०
नेति कन्यायाःपिताधनग्रहणदोषज्ञःअल्पमपिधनंकन्यादाननिमित्तकंनगृण्हीयात् यस्माल्लोभेनतद्गृण्हन्अपत्यविक्रयीभवति ५१
स्त्रीधनेति कन्यादाननिमित्तकशुल्कग्रहणनिषेधात् नवमाध्यायाभिधेयस्त्रीधनग्रहणनिषेधोयम् येबांधवाःपतिपित्रादयःकलत्रदु

निंद्यास्वष्टासुचान्यासुस्त्रियोरात्रिषुवर्ज्जयन् ब्रह्मचार्येवभवतियत्रतत्राश्रमेवसन् ५० नकन्यायाःपिता
विद्वान्गृण्हीयाच्छुल्कमण्वपि गृण्हञ्छुल्कंहिलोभेनस्यान्नरोपत्यविक्रयी ५१ स्त्रीधनानितुयेमोहादुप-
जीवंतिबांधवाः नारीयानानिवस्त्रंवातेपापायांत्यधोगतिम् ५२ आर्षेगोमिथुनंशुल्कंकेचिदाहुर्मृषैवतत्
अल्पोप्येवंमहान्वापिविक्रयस्तावदेवसः ५३ हित्रादिधनानिगृण्हंतिनारीस्त्रीयानानिअश्वादीनिवस्त्रंचेतिप्रदर्शनार्थं
सर्वमेवधनंनग्राह्यंतेगृण्हाना पापकारिणोनरकंगच्छंति ५२ आर्षइति आर्षेविवाहेगोमिथुनंशुल्कंवराद्ग्राह्यमितिकेचिदाचार्यावद-
तितत्पुनरसत्यंयस्मादल्परूपसाध्यत्वादल्पोवाभवतुबहुमूल्यसाध्यत्वान्महान्वाभवतुसतावद्विक्रयोभवत्येव यत्पुनरेकंगोमिथुनमिति
पूर्वमुक्तंतत्परमतमितिगोविंदराज तदयुक्तम् मनुमतेलक्षणमार्षस्यनस्यादेवं वराद्गोमिथुनपूर्वककन्यादानस्यैवार्षविवाहलक्षणत्वात्
मन्वभिमतमन्यदेवार्षलक्षणमेकंगोमिथुनमितिपरमतमितिचेत् एकंगोमिथुनंद्वेचेत्येतत्परमतंयदि तदामनुमतेनार्षलक्षणंकिंतदुच्यता
म् अष्टौविवाहान्कथयन्नार्षेदाराननेर्गुणान् मनुः किंस्वमतेनार्षलक्षणंवक्तुमक्षमः मेधातिथिस्तुपूर्वापरविरोधोपन्यासनिरासमेवनकृ-
तवान् तस्मादस्माभिरित्थंव्याख्यायते आर्षेविवाहेगोमिथुनंशुल्कमुक्तोचरूपमितिकेचिदाचार्यावदंतिमनोस्तुमतंनेदंशास्त्रनियमितजा-

तिसंख्याकंग्रहणंनशुल्करूपंशुल्कत्वेमूल्याल्पत्वमहत्त्वे ऽनुपयोगिनिविक्रयएवतदास्यात् किंत्वार्षविवाहसंपत्त्यै अवश्यकर्त्तव्ययागादि
सिद्ध्येकन्यायैवादातुंशास्त्रीयंधर्मार्थमेवगृह्यते अतएवार्षलक्षणश्लोकेवरादादायधर्मतइतिधर्मतोधर्मार्थमितितस्यार्थः भोगलोभेन
तुधनग्रहणंशुल्करूपमशास्त्रीयंअतएवगृण्हन्शुल्कंहिलोभेनेतिनिंदामुक्तवान् तस्मात्सोर्वापर्यपर्यालोचनादार्षेधर्मार्थंगोमिथुनंग्राह्यंन-
तुभोगार्थमितिमनुनास्वमतमनुवर्णितम् ५३ आर्षेगोमिथुनंशुल्कमित्युक्तंइदानींकन्यार्थमपिधनस्यदानंनशुल्कमित्याह यासामिति या
सांकन्यानांभोत्यावरेणदीयमानंधनंपित्रादयोनगृण्हंतिकिंतुकन्यायैसमर्पयंतिसोपिनविक्रय. यस्मात्कुमारीणांपूजनंतदानृशंस्यमहिंसक
त्वंकेवलंतदनुकंपारूपम् ५४ पितृभिरिति नकेवलंविवाहकालेवरेणदत्तंधनंसमर्पणीयंकिंतुतदुत्तरकालमपिपित्रादिभिरप्येताभोजना-
दिनापूजयितव्या. वस्त्रालंकारादिनाभूषयितव्याश्चबहुधनादिसंपदंप्राप्तुकामैः ५५ यत्रेति यत्रकुलेपित्रादिभिः स्त्रियःपूज्यंतेतत्रदेव-

यासांनाददतेशुल्कंज्ञातयोनसविक्रयः अर्हणंतत्कुमारीणामानृशंस्यंचकेवलम् ५४ पितृभिर्भ्रातृभि-
श्चैताःपतिभिर्देवरैस्तथा पूज्याभूषयितव्याश्चबहुकल्याणमीप्सुभिः ५५ यत्रनार्यस्तुपूज्यंतेरमंतेतत्रदे-
वताः यत्रैतास्तुनपूज्यंतेसर्वास्तत्राफलाःक्रियाः ५६ शोचंतिजामयोयत्रविनश्यत्याशुतत्कुलम् नशोचंति
तुयत्रैतावर्द्धतेतद्धिसर्वदा ५७ जामयोयानिगेहानिशपंत्यप्रतिपूजिताः तानिकृत्याहतानीवविनश्यंति-
समंततः ५८ तस्मादेताःसदापूज्याभूषणाच्छादनाशनैः भूतिकामैर्नरैर्नित्यंसत्कारेषूत्सवेषुच ५९

ताःप्रसीदंतियत्रपुनरेतानपूज्यंतेतत्रदेवताप्रसादाभावात् यागादिक्रियाःसर्वानिःफलाभवंतीतिनिंदार्थवादः ५६ शोचंतीति जामि.स्वसृ
कुलस्त्रियोरित्याभिधानिका. यस्मिन्कुलेभगिनीगृहपतीसंवर्द्धनीयसन्निहितसपिंडस्त्रियश्चपत्नीदुहितृस्नुषाद्याःपरितापादिनादुःखि
न्योभवंतितत्कुलंशीघ्रंनिर्द्धनीभवतिदैवराजादिनाचपीड्यते यत्रैतानशोचंतितद्धनादिनानित्यंवृद्धिमेति मेधातिथिगोविंदराजौतु नवोढा
दुहितृस्नुषाद्याजामयइत्याहतुः ५७ जामयइति यानिगेहानिभगिनीपत्नीदुहितृस्नुषाद्याअपूजिताःसत्योअभिशपंतिइदमनिष्टमेषाम-
स्त्वितितान्यभिचारहतानिधनपश्वादिसहितानिनश्यंति ५८ तस्मादिति यस्मादेवंतस्मात्कारणादेताभूषणाच्छादनाशनैर्नित्यंसत्कारेषुकौ

मुंडादिषुउत्सवेषुउपनयनादिषुसमृद्धिकामैःनृभिःसदापूजनीयाः ५९ संतुष्टइति भार्ययाभर्त्ताइतिहेतौतृतीया यत्रकुलेभार्ययाभर्त्ता प्रीतोभवतिस्त्र्यंतराभिलाषादिकंनकरोतिभार्याचस्वामिनाप्रीताभवतितस्मिन्कुलेचिरंश्रेयोभवति कुलग्रहणान्नकेवलंभार्यापतीएवं-पुत्रपौत्रादिसंततिःश्रेयोभागिनीभवति ६० यदीति दीप्त्यर्थोरुचिः यदिस्त्रीवस्त्राभरणादिनाशोभाजनकेनदीप्तिमतीनस्यात् तदास्वामिनंपुनर्नहर्षयेदेव हिशब्दोवधारणे अप्रहर्षात्पुनःस्वामिनःप्रजननंगर्भधारणंनसंपद्यते ६१ स्त्रियामिति स्त्रियांमंडनादिनाकांतिमत्यां भर्तृस्नेहविषयतयापरपुरुषसंपर्कविरहात् तत्कुलंदीप्तंभवतितस्यांपुनररोचमानायांभर्तृविद्विष्टतयानरांतरसंपर्कात्सकलमेवकुलंमलिनंभवति ६२ कुविवाहैरिति आसुरादिविवाहैर्यथावर्णनिषिद्धैर्जातकर्मादिक्रियालोपैर्वेदापाठेनब्राह्मणापूजनेनमहत्यानकुलान्यपकर्षं

संतुष्टोभार्ययाभर्त्ताभर्त्राभार्यातथैवच यस्मिन्नेवकुलेनित्यंकल्याणंतत्रवैध्रुवम् ६० यदिहिस्त्रीनरोचेत पुमांसंनप्रमोदयेत् अप्रमोदात्पुनःपुंसःप्रजननंनप्रवर्त्तते ६१ स्त्रियांतुरोचमानायांसर्वंतद्रोचतेकुलम् तस्यांत्वरोचमानायांसर्वमेवनरोचते ६२ कुविवाहैःक्रियालोपैर्वेदानध्ययनेनच कुलान्यकुलतांयांतिब्राह्मणातिक्रमेणच ६३ शिल्पेनव्यवहारेणशूद्रापत्यैश्चकेवलैः गोभिरश्वैश्चयानैश्चकृष्याराजोपसेवया ६४ अयाज्ययाजनैश्चैवनास्तिक्येनचकर्मणाम् कुलान्याशुविनश्यंतियानिहीनानिमंत्रतः ६५ मंत्रतस्तुसमृद्धानिकुलान्यल्पधनान्यपि कुलसंख्यांचगच्छंतिकर्षंतिचमहद्यशः ६६

गच्छंति ६३ शिल्पेनेति चित्रकर्मादिशिल्पेनकलपाधनप्रयोगात्मकव्यवहारेणकेवलशूद्रापत्येनगवाश्वरथक्रयविक्रयादिनाकृषिराजसेवाभ्यांकुलानिविनश्यंतीत्युत्तरेणसंबंधः ६४ अयाज्येति अयाज्यव्रात्यादियाजनैः कर्मणांश्रौतस्मार्त्तादीनांनास्तिक्येनशास्त्रीयफलवत्कर्मसुफलाभावबुद्धिर्नास्तिक्यम् वेदाध्ययनशून्यानिकुलानिक्षिप्रमपकर्षंगच्छंति अत्रचविवाहप्रकरणेविवाहनिंदाप्रसंगेनक्रियालोपादयोनिंदिताः निंद्यात्वैतन्नकर्त्तव्यमितिसर्वत्रनिषेधःकल्प्यते ६५ इदानींक्रियालोपादिगतप्रासंगिककुलनिंदानुप्रसक्त्याकुलोत्कर्षमाह मंत्रेति यद्यपिधनेनकुलमितिलोकेप्रसिद्धंतथाप्यल्पधनान्यपिकुलानिवेदाध्ययनतदर्थज्ञानानुष्ठानप्रसक्तानिउत्कृष्टकुलगणनायांगण्यंतेमहतींचख्यातिमर्जयंति

विवाहप्रकरणमतिक्रांतंइदानींवैवाहिकाग्नौसंपाद्यंमहायज्ञविधानंचेतिवक्तव्यतयाप्रतिज्ञातंमहायज्ञाद्यनुष्ठानमाह वैवाहिकइति वि
वाहेभवोवैवाहिकः आध्यात्मिकादित्वाट्ठञ् तस्मिन्नग्नौगृह्योक्तंकर्मसायंप्रातर्होमाष्टकादियथाशास्त्रमग्निसंपाद्यंचपंचमहायज्ञां
तर्गतवैश्वदेवाद्यनुष्ठानंप्रतिदिनसंपाद्यंचपाकंगृहस्थःकुर्यात् ६७ पंचेति पशुवधस्थानंसूना सूनाइवसूनाहिंसास्थानगुणयोगात्
चुल्ल्यादयः पंचगृहस्थस्यहिंसाबीजानिहिंसास्थानानिचुल्हीउद्वाहनीपेषणीदृषदुपलात्मिका उपस्करः गृहोपकरणकुंडसंमार्जन्यादि.
कंडनीउलूखलमुसले उदकुंभोजलाधारकलशः याःस्वकार्येयोजयन्पापेनसंबध्यते ६८ तासामिति तासांचुल्हीआदिस्थानानांय-
थाक्रमंनिःकृत्यर्थंउत्पन्नपापनाशार्थंगृहस्थानांपंचमहायज्ञाःप्रतिदिनंमन्वादिभिरनुष्ठेयतयास्मृताः एवंचनिष्कृत्यर्थमित्यभिधानात्
हिंसास्थानत्वेनचकीर्त्तनात्सूनादोषैर्नलिप्यतइतिवक्ष्यमाणत्वात्चसूनानांपापहेतुत्वंपंचयज्ञानांचतत्पापनाशकत्वमवगम्यते अत्य-

वैवाहिकेग्नौकुर्वीतगृह्यंकर्मयथाविधि पंचयज्ञविधानंचपक्तिंचान्वाहिकींगृही ६७ पंचसूनागृहस्थस्य
चुल्हीपेषण्युपस्करः कंडनीचोदकुंभश्चबध्यतेयास्तुवाहयन् ६८ तासांक्रमेणसर्वासांनिष्कृत्यर्थंमहर्षि
भिः पंचक्लृप्तामहायज्ञाःप्रत्यहंगृहमेधिनाम् ६९ अध्यापनंब्रह्मयज्ञःपितृयज्ञस्तुतर्पणम् होमोदैवोबलि
र्भौतोनृयज्ञोतिथिपूजनम् ७० पंचैतान्योमहायज्ञान्नहापयतिशक्तितः सगृहेपिवसन्नित्यंसूनादोषैर्न-
लिप्यते ७१ देवतातिथिभृत्यानांपितृणामात्मनश्चयः ननिर्वपतिपंचानामुच्छ्वसन्नसजीवति ७२

हमित्यभिधा
नात्प्रतिदिनंतत्पापक्षयस्यापेक्षितत्वात्संध्यावंदनादिवन्नित्यत्वमपिनविरुध्यते ६९ अध्यापनमिति अध्यापनशब्देनाध्ययनमपिगृह्यतेज
पोऽहुतमितिवक्ष्यमाणत्वादतोऽध्यापनमध्ययनंचब्रह्मयज्ञः अन्नाद्येनोदकेनवाइतितर्पणंवक्ष्यतिसपितृयज्ञः अग्नौहोमोवक्ष्यमाणोदै
वयज्ञः भूतबलिर्भूतयज्ञः अतिथिपूजनंमनुष्ययज्ञः अध्यापनादिषुयज्ञशब्दोमहच्छब्दश्चस्तुत्यर्थंगौणः ७० पंचेति शक्तितइत्येतद्वि
धानार्थोपमनुवादः अनुकल्पेनापियथासंभवमेतेकर्त्तव्याः हापयतीतिभंक्तुसर्थएवच्छांदसत्वात्णिच्जहातीत्यर्थः ७१ देवतेति देवता
शब्देनभूतानामपिग्रहणम् तेषामपिबलिहरणेदेवतारूपत्वात् भृत्याःवृद्धमातापित्रादयोऽवश्यंसंवर्द्धनीयाः सर्वतएवात्मानंगोपायेदिति

कुर्यादिति एते गृहस्थेभ्यः सकाशादाशार्थयंते अतः शास्त्रज्ञेन तेभ्यः कर्त्तव्यम् ८० किंतत्तदाह स्वाध्यायेनेति नानाप्रकारत्वादर्च्चन
स्यस्वाध्यायादेरर्च्चनार्थत्वगुनितम् महायज्ञांतर्गतैः स्वाध्यायादिभिः ऋषिदेवपित्रतिथिभूतानि यथाशास्त्रं पूजयेत् ८१ तत्रापित्र्य
ज्ञंतावदाह कुर्यादिति प्रत्यहं यथासंभवं श्राद्धं कुर्यात् श्राद्धशब्दोयं कर्मविधिवाक्यवर्ती कोऽपायिनामथनीयाग्निहोत्रशब्दवत्तत्र स्थ
माणपार्वणश्राद्धधर्मातिदेशार्थः अन्नाद्येनेति तिलैर्व्रीहिभिर्यवैरित्यादेरुपादानं पयः क्षीरम् ८२ एकमिति पित्र्यप्रयोजने पंचयज्ञां
तर्गते एकमपि ब्राह्मणं भोजयेत् अपि शब्दात्संभवे बहूनपि पार्वणधर्मग्रहणाच्च वैश्वदेवब्राह्मणभोजनप्राप्तावाह न किंचिद्वैश्वदे
वार्थं ब्राह्मणमत्र भोजयेत् ८३ वैश्वदेवस्येति विश्वदेवार्थं सर्वदेवतार्थो वैश्वदेवस्तस्य पक्वस्यान्नस्यावसथ्याग्नौ स्वगृह्यविहितपर्यु

ऋषयः पितरो देवा भूतान्यतिथयस्तथा आशासते कुटुंबिभ्यस्तेभ्यः कार्यं विजानता ८० स्वाध्यायेनार्च
येदृषीन् होमैर्देवान्यथाविधि पितॄन्श्राद्धैश्च नॄनन्नै भूतानि बलिकर्मणा ८१ कुर्यादहरहः श्राद्धम
न्नाद्येनोदकेन वा पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ८२ एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञि
के न चैवात्राशयेत्किंचिद्वैश्वदेवं प्रति द्विजम् ८३ वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् आभ्यः कुर्या
द्देवताभ्यो ब्राह्मणो होममन्वहम् ८४ अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः विश्वेभ्यश्चैव देवेभ्यो ध
न्वंतरय एव च ८५ कुह्वै चैवानुमत्यै च प्रजापतय एव च सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः ८६

क्षणादीतिकर्त्तव्यतापूर्वकमाभ्यो वक्ष्यमाणदेवताभ्यो ब्राह्मणः प्रत्यहं होमं कुर्यात् ब्राह्मणग्रहणं द्विजातिप्रदर्शनार्थं त्रयाणां प्रकृ
तत्वात् ८४ अग्नेरिति चतुर्थ्यंतस्वाहाकारप्रदानहोम इति कात्यायनस्मरणादादावग्नये स्वाहा सोमाय स्वाहेति निरपेक्षदेवताकं
होमद्वयं कृत्वा अग्नीषोमाभ्यां स्वाहेति समस्तदेवताकं होमं कुर्यात्ततो विश्वेभ्यो देवेभ्यो धन्वंतरये ८५ कुह्वैचेति कुह्वै अनुमत्यै प्रजा
पतये द्यावापृथिवीभ्यामग्नये स्विष्टकृत इत्येवं स्वाहाकारांतान् होमान्कुर्यात् श्रुत्यंतरे त्वग्निविशेषणत्वेन स्विष्टकृतो विधानात्केव
लं स्विष्टकृन्निर्देशोपि अग्निविशेषणत्वेनैव प्रयोगः पागदेवांतत्वसिद्धेः स्विष्टकृते ततः इत्यभिधानं स्मृत्यंतरीयहोमसमुच्चये प्यंतत्वज्ञाप
नार्थम् ८६

एवमिति एवमुक्तप्रकारेणसम्यगनन्यचित्तोदेवताध्यानपरएवहोमान्कृत्वासर्वासुप्राच्यादिषुदिक्षुप्रदक्षिणमिंद्रादिभ्यःसपुरुषे-भ्योबलिंहरेत् तथाप्राच्यामिंद्रायनमःइंद्रपुरुषेभ्योनमः दक्षिणस्यांयमायनमः यमपुरुषेभ्योनमः पश्चिमायांवरुणायनमः वरुणपुरुषेभ्योनमः उत्तरस्यांसोमायनमः सोमपुरुषेभ्योनमः यद्यपिशब्दावगम्यत्वाद्देवतात्वस्यांतकाप्यतीदु

बह्वृचानुशासनसंवादाद्बह्वृचगृह्येचयमाययमपुरुषेभ्योवरुणायवरुणपुरुषेभ्यःसोमायसोमपुरुषेभ्यइतिप्रतिदिशामितिपाठात् य [illegible]-क्तएवप्रयोगः ८७ मरुद्भ्यइति इतिशब्दःस्वरूपविवक्षार्थः मरुद्भ्योनमइतिद्वारेबलिंदद्यात्जलेऽद्भ्यइति मुशलोलूखलइतिद्वंद्वनि-र्देशात्सहयुक्तयोरन्यतरत्रवनस्पतिभ्यइतिबलिंदद्यात् गुणानुरोधेनप्रधानबलिकर्मावृत्तेरन्याय्यत्वात् ८८ उच्छीर्षेति वास्तुपु-रुषस्यशिरःप्रदेशेउत्तरपूर्वस्यांदिशिश्रियैबलिंदद्यात् तस्यैवपाददेशेदक्षिणपश्चिमायांदिशिभद्रकाल्यै अन्येतुउच्छ

एवंसम्यग्घविर्हुत्वासर्वदिक्षुप्रदक्षिणम् इंद्रांतकाप्पतीदुभ्यःसानुगेभ्योबलिंहरेत् ८७ मरुद्भ्यइति तुद्वारिक्षिपेदप्स्वद्भ्यइत्यपि वनस्पतिभ्यइत्येवंमुसलोलूखलेहरेत् ८८ उच्छीर्षकेश्रियैकुर्याद्भद्रकाल्यैच पादतः ब्रह्मवास्तोःपतिभ्यांतुवास्तुमध्येबलिंहरेत् ८९ विश्वेभ्यश्चैवदेवेभ्योबलिमाकाशउत्क्षिपेत् दिवाचरेभ्योभूतेभ्योनक्तंचारिभ्यएवच ९० पृष्ठवास्तुनिकुर्वीतबलिंसर्वात्मभूतये पितृभ्योबलिशेषंतुसर्वंदक्षिणतोहरेत् ९१

यनस्यशिरःस्थानभूभागंपादतइतितस्यैवचरणभूप्रदेशमाहुः ब्रह्मणेवास्तोःपतयइतिगृहमध्ये इ-दंनिर्देशेपिब्रह्मवास्तोःपत्योःपृथगेवदेवतात्वम् यत्रद्वंद्वोमिलितस्यदेवतात्वमपेक्षितंतत्रसहादिशब्दंकरोति यथासहद्यावापृथिव्यो-श्चेति ८९ विश्वेभ्यइति विश्वेभ्यश्चैवदेवेभ्यइतिशब्दादेकैवगाहुतिः विश्वेभ्योदेवेभ्योनमइतिगृहाकाशेबलिंदद्यात् दिवाचरेभ्यो-भूतेभ्यइतिदिवानक्तंचारिभ्यइतिनक्तम् बह्वृचगृह्यदर्शनादियंव्यवस्था ९० पृष्ठेति गृहस्योपरियद्गृहंतत्पृष्ठवास्तुबलिंदातुः पृ-ष्ठदेशेभूभागेवानत्रसर्वात्मभूतयेनमइत्येवबलिंदद्यात् उक्तबलिदानावशिष्टंसर्वमन्नंदक्षिणस्यांदिशिदक्षिणामुखः स्वधापितृभ्य-इतिबलिंहरेत् प्राचीनावीतिनाचायंबलिर्देयः स्वधापितृभ्यइतिप्राचीनावीतीशेषंदक्षिणामुखोनिनयेदितिबह्वृचगृह्यवचनात्

९१ शुनांचेति अन्यदन्नंपात्रेसमुद्धृत्यश्वपतितादिभ्यःशनकैर्यथारजसानसंगृह्यतेतथाभुविदद्यात् पापरोगीकुष्ठीक्षय

रोगीवा ९२ एवमिति एवमुक्तप्रकारेणयः सर्वभूतान्यन्नदानादिना नित्यंपूजयतिसपरंस्थानंब्रह्मात्मकंतेजोमूर्तिप्रकाशं अवक्रेण वर्त्मनार्चिरादिमार्गेणप्राप्नोति ब्रह्मणिलीयतइत्यर्थः ज्ञानकर्मभ्यांमोक्षप्राप्तेः तेजोमूर्त्तिरितिसविसर्गपाठेप्रकृष्टब्रह्मबोधस्वभावोभू-त्वेतिव्याख्या ९३ कृत्वेति एवमुक्तप्रकारेणएतद्बलिकर्मकृत्वागृहभोक्तृभ्यः पूर्वमतिथिंभोजयेत् भिक्षवेपरिव्राजेब्रह्मचारिणेप्रथमा-श्रमिणेचविधिवत्स्वस्तिवाच्यभिक्षादानमप्पूर्व्वमितिगौतमाद्युक्तविधिनाभिक्षांदद्यात् ग्रासप्रमाणाचभिक्षाभवति ग्रासमात्राभवे-द्भिक्षेतिशातातपवचनात् संभवेत्वधिकमपिदेयम् ९४ यदिति गुरवेगांदत्वाविधिवत्स्वर्णशृंगिकादिविधानेनयत्फलंप्राप्नोतितद्गृह-स्थोविधिनाभिक्षादानात्प्राप्नोति ९५ भिक्षामिति प्रचुरान्नाभावेग्रासप्रमाणांभिक्षामपिव्यंजनादिनासत्कृत्यतदभावेजलपूर्णपात्रम-

शुनांच पतितानांच श्वपचांपापरोगिणाम् वायसानांकृमीणांचशनकैर्निर्वपेद्भुवि ९२ एवंयःसर्वभूतानि ब्राह्मणोनित्यमर्चति सगच्छतिपरंस्थानंतेजोमूर्त्तिपथर्जुना ९३ कृत्वैतद्बलिकर्मैवमतिथिंपूर्वमाशये-त् भिक्षांचभिक्षवेदद्याद्विधिवद्ब्रह्मचारिणे ९४ यत्पुण्यफलमाप्नोतिगांदत्वाविधिवद्गुरोः तत्पुण्यफ-लमाप्नोतिभिक्षांदत्वाद्विजोगृही ९५ भिक्षामप्युदपात्रंवासत्कृत्यविधिपूर्वकम् वेदतत्त्वार्थविदुषे ब्रा-ह्मणायोपपादयेत् ९६ नश्यन्तिहव्यकव्यानिनराणामविजानताम् भस्मीभूतेषुविप्रेषुमोहाद्दत्तानि दातृभिः ९७ विद्यातपःसमृद्धेषुहुतंविप्रमुखाग्निषु निस्तारयतिदुर्गाच्चमहतश्चैवकिल्बिषात् ९८ संप्राप्तायत्वतिथयेप्रदद्यादासनोदके अन्नंचैवयथाशक्तिसत्कृत्यविधिपूर्वकम् ९९

पिफलपुष्पादिनासत्कृत्य ततोवेदतदर्थज्ञानवतेब्राह्मणायस्वस्तिवाच्येत्यादिविधिपूर्वकंदद्यात् ९६ नश्यंतीति मोहाद्यस्मात्रानभिज्ञतयादेवपित्रुद्देशेनान्नानि वेदाध्ययनतदर्थज्ञानानुष्ठानतेजःशून्यतयाभस्मरूपेष्विवपात्रेषुदत्तानिदातृभिर्निष्फलानिभवंति ९७ विद्यातपःसमृद्धेष्विति विद्यात-पस्तेजःसंपन्नविप्राणांमुखानिहोमाधिकरणत्वेनाग्नितयानिरूपितानिहव्यकव्यादिप्रक्षिप्तमिहलोकेदुस्तरात्व्याधिशत्रुराजपीडादिभ-यान्महतश्चपापात्अमुत्रनरकात्त्रायते ९८ संप्राप्तायेति स्वयमागतायत्वतिथये आसनंपादप्रक्षालनाद्युदकंयथासंभवंव्यंजनादिभि-

सत्कृतंत्वान्नमासनावसथावित्यादिवक्ष्यमाणविधिपूर्वकंदद्यात् ९९ शिलानिति लूनकेदारशेषधान्यानिशिलस्तानपिउ ञ्छ
त्तिसंयमान्वितस्यत्रेतावसथ्य सभ्यश्चेतिपंचाग्नय. सभ्योनामाग्निःशीतापनोदाद्यर्थयस्तत्रप्रणीयतेपंचस्वा ॰
त्तिसंकोचेनपंचाग्निहोमार्जितपुण्यमनर्चितोऽतिथिर्वसन्गृण्हाति अनयाचनिंदयातिथ्यनर्चनस्यनिंदावगम्यते १०० तृणानीति
अन्नासंभवेपुनस्तृणविश्रामभूमिपादप्रक्षालनाद्यर्थजलप्रियवचनान्यपिधार्मिकगृहेष्वतिथ्यर्थनकदाचिदुच्छिद्यंते अवश्यदेया-
नीतिविधीयते तृणग्रहणंशयनीयोपलक्षणार्थम् १०१ अप्रसिद्धत्वादतिथिलक्षणमाह एकेति एकरात्रमेवपरगृहेनिवसन्ब्रा
ह्मणोतिथिर्भवति अनित्यावस्थानान्नविद्यतेद्वितीयातिथिरस्येति अतिथिरुच्यते १०२ नैकेति एकग्रामनिवासिनंलोकेषुर्वि
त्रपरिहासकथादिभिःसंगत्यावृत्त्यर्थिनंभार्याग्निसुक्तोगृहेवैश्वदेवकालोपस्थितमपिनातिथिंविद्यात् एतेनभार्याग्निरहितस्यप्रवा

शिलानप्युञ्छतोनित्यंपंचाग्नीनपिजुह्वतः सर्वंसुकृतमादत्तेब्राह्मणोनर्चितोवसन् १०० तृणानिभू
मिरुदकंवाक्चतुर्थीचसूनृता एतान्यपिसतांगेहेनोच्छिद्यंतेकदाचन १०१ एकरात्रंतुनिवसन्नतिथि
र्ब्राह्मणःस्मृतः अनित्यंहिस्थितोयस्मात्तस्मादतिथिरुच्यते १०२ नैकग्रामीणमतिथिंविप्रंसांगतिकं
तथा उपस्थितंगृहेविद्याद्भार्यायत्राग्नयोपिवा १०३ उपासतेयेगृहस्थाःपरपाकमबुद्धयः तेनतेप्रेत्य
पशुतांव्रजन्त्यन्नादिदायिनाम् १०४ अप्रणोद्योऽतिथिःसायंसूर्योढोगृहमेधिना कालेप्राप्तस्त्वका
लेवानास्यानश्नन्गृहेवसन् १०५

सिनोनातिथित्वमितिबोधितम् १०३ उपासतइति अतिथिप्रकरणादातिथ्यलो-
भेनयेगृहस्थाःग्रामांतराणिगत्वापरान्नंसेवंतेते निषिद्धपरान्नदोषानभिज्ञाः तेनपरान्नभोजनेनजन्मांतरेअन्नादिदायिनांपशु-
तांव्रजंतितस्मादिदंनकुर्यादितिनिषेधःकल्प्यते १०४ अप्रणोद्यइति सूर्येऽस्तमितेगृहस्थेनातिथिर्नप्रत्याख्येयः सूर्येणोढःप्रा
पितःरात्रौस्वगृहगमनाशक्तेः द्वितीयवैश्वदेवकालेप्राप्तः अकालेवासायंभोजनेनिवृत्तेपिनास्यगृहेअतिथिरनश्नन्वसेदवश्यम
स्मैभोजनंदेयंप्रत्याख्यानेप्रायश्चित्तगौरवार्थोयमारंभ अतएवविष्णुपुराणे दिवातिथौतुविमुखेगतेयत्पातकंनृप तदेवाष्टगुणं
प्रोक्तंसूर्योढेविमुखेगते गोविंदराजस्तुप्रतिनिषिद्धातिथिप्रतिप्रसवार्थत्वमस्याह १०५ ७ ७ ७

नवेइति यद्भूतदध्यादिउत्कृष्टमतिथिंनप्रत्यन्विष्टे तत्तस्मैअदत्वानस्वयंभोक्तव्यम् धनायहितंधनस्यनिमित्तंवाधन्यंएवंयशस्यादयोपिशब्दाः अतिथिभोजनफलकथनमिदम् नत्वानावश्यकतापत्तिः सर्वंसुकृतमादत्तेइत्यादिदोषश्रवणात् १०६ आसनेति आसनंपीठंचर्मवा आव सथोविश्रामस्थानम् शय्याखट्वादि अनुव्रज्यागच्छतोऽनुगमनम् उपासनांपरिचर्याम् एतत्सर्वंबहुष्वतिथिषुयुगपदुपस्थितेषु इतरेत रापेक्षयाउत्कृष्टपकृष्टमध्यसंकुर्यात् नपुनःसर्वेषांसमम् १०७ वैश्वेति अन्यशब्दनिर्देशादातिथिभोजनपर्यंतंवैश्वदेवे कृतेयद्यपरोतिथि रागच्छेत्तदातदर्थंपुनःपाकंकृत्वातस्यान्नंदद्यात् बलिहरणंततोनात्रकुर्यात् बलिनिषेधादन्नसंस्काराभावोवैश्वदेवस्यावगम्यते अन्नसं स्कारपक्षेकथमसंस्कृतान्नभोजनमनुजानीयात् १०८ नेति भोजनलाभार्थंब्राह्मणःस्वकुलगोत्रेननिवेदयेत् यस्माद्भोजनार्थंतेकथयन् उद्गीर्णाशीतिपंडितैःकथ्यते १०९ नेति ब्राह्मणस्यक्षत्रियादयअतिथयोनभवंति क्षत्रियादीनांब्राह्मणास्योत्कृष्टजातित्वात् मित्रज्ञा-

नवैस्वयंतदश्नीयादतिथिंयन्नभोजयेत् धन्यंयशस्यमायुष्यंस्वर्ग्यंवातिथिपूजनम् १०६ आसनावस थोशय्यामनुव्रज्यामुपासनाम् उत्तमेषूत्तमंकुर्याद्धीनेहीनंसमेसमम् १०७ वैश्वदेवेतुनिर्वृत्तेयद्यन्योति- थिराव्रजेत् तस्याप्यन्नंयथाशक्तिप्रदद्यान्नबलिंहरेत् १०८ नभोजनार्थंस्वेविप्रःकुलगोत्रेनिवेदयेत् भोजनार्थंहितेशंसन्वान्ताशीत्युच्यतेबुधैः १०९ नब्राह्मणस्यत्वतिथिर्गृहेराजन्यउच्यते वैश्यशूद्रौसखा- चैवज्ञातयोगुरुरेवच ११० यदित्वतिथिधर्मेणक्षत्रियोगृहमाव्रजेत् भुक्तवत्सूक्तविप्रेषुकामंतमपिभोज- येत् १११ वैश्यशूद्रावपिप्राप्तौकुटुंबेतिथिधर्मिणौ भोजयेत्सहभृत्यैस्तावानृशंस्यंप्रयोजयन् ११२

तीनामात्मसंबंधाङ्कुरोःप्रकृत्वात् अनेनैवन्यायेनक्षत्रियस्यउत्कृष्टोब्राह्मणःसजातीयश्चक्षत्रियोऽतिथिःस्यान्नापकृष्टौवैश्यशूद्रौ ए वंवैश्यस्यापिद्विजातयोतिथयोनशूद्रः ११० यदीति ग्रामांतरागतत्वादतिथिकालोपस्थितत्वादतिथिधर्मेणक्षत्रियोविप्रगृहमाग च्छेत्तदाविप्रगृहोपस्थितविप्रेषुकृतभोजनेषुस्थितेषु इच्छातस्तमपिभोजयेत् १११ वैश्येति यदिवैश्यशूद्रावपिब्राह्मणस्यकुटुंबे गृहेप्राप्तौग्रामांतरादागतत्वाद्यद्यतिथिधर्मशालिनौतदातावपिक्षत्रियभोजनकालात्परतोदंपतीभोजनात्पूर्वंदासभोजनकालेअनु कंपामाश्रयन्भोजयेत् ११२ इतरानिति रक्तभोजनकालेक्षत्रियादिव्यतिरिक्तान्सखिसहाध्यायिप्रभृतीन्संप्रीत्यागृहमागतान्नूनवति

थिभावेन तस्य प्रतिषेधात् यथाशक्ति प्रकृष्टमन्नं कृत्वा भार्याभोजनकाले भोजयेत् गृहस्थस्यापि स एव भोजनकाल अवशिष्टं तु दंपती तिवक्ष्यमाणत्वात् आत्मना सहेति कर्तव्ये यच्चनवैश्विदीयमाचार्यस्य गुरोक्तभोजनकालानभिधानं प्रकृतेन स्वाधीनकालत्वात् ११३ स्ववासिनीमिति सुवासिन्यो नवोढाः स्त्रियः स्नुषादुहितरश्च ताः कुमारीर्गर्भिणीश्चातिथिभ्योऽग्रे पूर्वमेवातिथिभ्यो भोजयेत् कथमतिथिषु अभोजितेषु भोजनमेषामिति विचारमकुर्वन् मेधातिथिरत्तनुमेवेति पठित्वानुगतानेवैतान्भोजयेत् अतिथिसमकालमिति व्याख्यातवान् अ- न्ये तु अग्र इति पठंतो व्याकृतवान् ११४ अदत्त्वेति एतेभ्योऽतिथ्यादिभृत्यपर्यन्तेभ्यो अन्नमदत्त्वा व्यतिक्रमभोजनदोषमजानन् यः पूर्वं भुंक्ते स म- रणानंतरं श्वगृध्रैरात्मनो भक्षणं न जानातीति व्यतिक्रमस्येदं फलमिति वचनवैदग्ध्येनोक्तम् ११५ भुक्तेति विप्रेष्वतिथिषु स्वेषु ज्ञातिषु भृ-

इतरानपि सख्यादीन्संप्रीत्या गृहमागतान् सत्कृत्यान्नं यथाशक्ति भोजयेत्सह भार्यया ११३ सुवासिनीः कुमारीश्च रोगिणो गर्भिणीः स्त्रियः अतिथिभ्योऽग्र एवैतान्भोजयेदविचारयन् ११४ अदत्त्वा तु य एतेभ्यः पूर्वं भुंक्तेऽविचक्षणः स भुंजानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ११५ भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि भुंजीयातां ततः पश्चादवशिष्टं तु दंपती ११६ देवानृषीन्मनुष्यांश्च पितॄन्गृह्याश्च देवताः पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ११७ अघं स केवलं भुंक्ते यः पचत्यात्मकारणात् यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ११८ राजर्त्विक्स्नातकगुरून्प्रियश्वशुरमातुलान् अर्हयेन्मधुपर्केण परिसंवत्सरात्पुनः ११९

त्येषु दासादिषु कृतभोजनेषु ततोऽन्नादवशिष्टं भार्यापती पश्चादश्नीयाताम् ११६ देवानिति गृह्याश्च देवता इत्यनेन भूतयज्ञ उक्तः पंचयज्ञानुष्ठानस्य अवशिष्टं तु दंपतीत्यनेन शेषभोजनस्य च विहितत्वात् वक्ष्यमाणदोषकथनार्थोऽयमनुवादः अथवा देवानित्यनेनैव भूतयज्ञस्य संग्रहः गृहे भवा गृह्या देवताः पूजयित्वेति वासुदेवादिप्रतिकृतिपूजाविधानार्थत्वमस्य ११७ अघमिति यस्त्वात्मार्थमेवान्नं पक्त्वा भुंक्ते देवादि- भ्यो न ददाति स पापहेतुत्वात्पापमेव केवलं भुंक्ते नान्नम् तथा च श्रुतिः केवलाघो भवति केवलादी यस्माद्यद्देवपाकयज्ञावशिष्टमशनमन्न- मर्पते इति न देवसाधूनामन्नमुपदिश्यते इति ११८ अतिथिपूजाप्रसंगेन राजादीनामपि गृहागतानां पूजाविशेषमाह राजेति राज्याभिषि-

क्षत्रियोराजा ऋत्विक्‌येनयस्यार्त्विज्यंकृतंस्नातकोपि ग्राम्रताभ्यांप्रियोजामाता राजादीनेतान्गृहागतान्ससगृह्योक्तेन मधुपर्काख्येन कर्मणापूजयेत् परिसंवत्सरादितिसंवत्सरंवर्जयित्वातदूर्ध्वंगृहागतान्पुनर्मधुपर्केणपूजयेत् पंचम्यपाङ्परिभिरितिसूत्रेणवर्जनार्थ परियोगेनइयंपंचमी अतएवैतत्सूत्रव्याख्यानेजयादित्येनोक्तं अपेनसाहचर्यात्परेर्वर्जनार्थस्यग्रहणमिति मेधातिथिस्तुपरिसंवत्सरानि तिपठित्वापरिगतोनिष्क्रांतःसंवत्सरोयेषांतान्पूजयेदितिव्याख्यातवान् उभयत्रापिपाठेसंवत्सरमध्यागमनेनमधुपर्कार्हता ११९ राजस्ना तकयोःपूजासंकोचनार्थमाह राजेति राजस्नातकौसंवत्सरादूर्ध्वमपियज्ञकर्मण्येवप्राप्तौमधुपर्केणपूजनीयौनतुयज्ञव्यतिरेकेणजामात्रा दयस्तुसंवत्सरादूर्ध्वंयज्ञंविनापिमधुपर्कार्हाः संवत्सरमध्येतुसर्वेषांयज्ञविवाहयोरेवमधुपर्कः तदाहगौतमः ऋत्विगाचार्यश्वसुरपितृव्य मातुलानामुपस्थानेमधुपर्कः संवत्सरेपुनर्यज्ञविवाहयोरर्वाक्राज्ञःश्रोत्रियस्यच १२० सायमिति दिनांतेसिद्धस्यान्नस्यपत्नी अमंत्रंबलि

राजाचश्रोत्रियश्चैवयज्ञकर्मण्युपस्थितौ मधुपर्केणसंपूज्यौनत्वयज्ञइतिस्थितिः १२० सायंत्वन्नस्यसिद्ध स्यपत्न्यमंत्रंबलिंहरेत् वैश्वदेवंहिनामैतत्सायंप्रातर्विधीयते १२१ पितृयज्ञंतुनिर्वर्त्यविप्रश्चंद्रक्षयेग्नि मान् पिंडान्वाहार्यकंश्राद्धंकुर्यान्मासानुमासिकम् १२२ पितॄणांमासिकंश्राद्धमन्वाहार्यंविदुर्बुधाः तच्चा मिषेणकर्तव्यंप्रशस्तेनसमंततः १२३ तत्रयेभोजनीयाःस्युर्येचवर्ज्याद्विजोत्तमाः यावंतश्चैवयैश्चान्नैस्तान्प्र वक्ष्याम्यशेषतः १२४

हरणंकुर्यात् इंद्रायनमइतिमंत्रपाठवर्जमानसस्तदेवतोद्देशोननिषिध्यते यतएतत्वैश्वदेवंनामा न्नसाध्यंहोमबलिदानातिथिभोजनात्मकंनत्सायंप्रातर्गृहस्थस्योपदिश्यते १२१ श्राद्धकल्पंचशाश्वतमित्यनुक्रमणिकायांप्रतिज्ञातं श्राद्धकल्पमुपक्रमते पितृयज्ञमिति साग्निरमावास्यायांपिंडपितृयज्ञाख्यंकर्मकृत्वाश्राद्धंकुर्यात् पितृयज्ञपिंडानामनुपश्चादाह्रियत इतिपिंडान्वाहार्यकंश्राद्धंमासानुमासिकंमासश्चानुमासश्चतयोर्भवंप्रतिमासंकर्तव्यमित्यर्थः अनेनास्यनित्यत्वमुक्तंविप्रग्रहणंद्विजाति परंत्रयाणांप्रकृतत्वात् १२२ इदानींनामनिर्वचनेनोक्तमेवपितृयज्ञानंतर्यंद्रढयति पितॄणामिति इदंमासिकंप्रतिमासभवंश्राद्धंयस्मा त्पितृयज्ञपिंडानामनुपश्चादाह्रियतेतेनपिंडान्वाहार्यकमिदंपंडिताजानंति ततोयुक्तंपितृयज्ञानंतर्यमस्यतच्चामिषेणवक्ष्यमाणमांसे नप्रशस्तेनमनोहरेणपूतिगंधादिरहितेनप्रयत्नतःकर्तव्यंपिंडानांमासिकंश्राद्धमितिवापाठःपिंडानांपितृयज्ञपिंडानांशेषंतुल्यम् १२३ तत्रे

ति तस्मिन्श्राद्धेये भोजनीयाः येनत्वाज्यायत्संख्याकाः यैश्चान्नैस्तत्सर्वंप्रवक्ष्यामि १२४ अत्रयद्यप्युद्देशक्रमेणये भोजनीयाइतिवक्तु
मुचितंतथाप्यल्पवक्तव्यत्वाद्ब्राह्मणसंख्यामाह द्वाविति दैवश्राद्धेद्वौब्राह्मणौपितृपितामहप्रपितामहानांत्रीन्ब्राह्मणान् अथवा
वैएकंपित्रादित्रिकेचैकंब्राह्मणंभोजयेत् उक्तातिरिक्तभोजनेसमर्थोपिनाधिकभोजनेषुप्रवर्त्तेन मेधातिथिस्त्वाह पितृकृत्येत्री
पितुस्त्रीन्ब्राह्मणान्पितामहस्यत्रीन्ब्राह्मणान्प्रपितामहस्यत्रीन् ब्राह्मणान्भोजयेत् एकैकमुभयत्रवेतिदैवएकंपित्रादित्रयस्यचै
कैकम् नत्वेवैकंपित्रादित्रयस्य नत्वेवैकंसर्वेषांपिंडैर्व्याख्यातमित्याश्वलायनगृह्यविरोधात् यथैकः पिंडःपित्रादित्रयस्यननिरूप्यतेत
थैकोब्राह्मणोनभोजयितव्यइत्यर्थः तस्मान्नपित्रादित्रयस्यैकब्राह्मणभोजनम् तदसत् गृह्यकारेणैवनत्वेवैकंसर्वेषांपिंडैर्व्याख्यात-
मितिपठित्वाकाममनाद्येइत्यभिहितम् अस्यार्थः बहुपित्रादिदेवताकश्राद्धानामाद्यंसपिंडीकरणमभिमतंतद्व्यतिरिक्तश्राद्धेकाममेकः
पित्रादीनांब्राह्मणइत्यर्थः अथवाअनाद्येअदनीयद्रव्याभावेएकोपिभोजयितव्यः उभयत्रापिव्याख्यानेपार्वणादौपित्रादित्रयस्यैकब्रा-

द्वौदैवेपितृकार्येत्रीनेकैकमुभयत्रवा भोजयेत्सुसमृद्धोपिनप्रसज्जेतविस्तरे १२५ सत्क्रियांदेशकालौच
शौचंब्राह्मणसंपदः पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरम् १२६ प्रथितापेतकृत्यैषापित्र्यंनामविधुक्ष
ये तस्मिन्युक्तस्यैतिनित्यंप्रेतकृत्यैवलौकिकी १२७

ह्मणभोजनंगृह्यकृतैवोक्तम् वशिष्ठोपि यद्येकंभोजयेच्छ्राद्धेदैवतं
त्रंकथंभवेत् अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच देवतायतनेकृत्वायथाविधिप्रवर्त्तयेत् प्रास्येदग्नौतदन्नंवादद्याद्वाब्रह्मचारिणइतिस
र्वेभ्यएकब्राह्मणभोजनमाहतस्माद्यथोक्तैवव्याख्याप्रथमेवाशब्दइत्यनेन विस्तारइतिप्रासेछंदःसमानत्वात्स्मृतीनांसर्वेविधयःछंदसिवि
कल्प्यंतेइतिविस्तरइतिरूपम् १२५ सदिति सत्क्रियांब्राह्मणस्यपूजांदेशंदक्षिणप्रवणत्वादिवक्ष्यमाणंकालमपराह्णंशौचंश्राद्धकर्तृ
ब्राह्मणयोर्घ्यगतंगुणवद्ब्राह्मणालाभंचब्राह्मणविस्तारोनाशयतितस्माद्ब्राह्मणविस्तारंनकुर्यादितिसत्क्रियादिविरोधतोब्राह्मणा
येधात्सत्क्रियादिसंभवेपित्रादेरेकैकस्यापिब्राह्मणत्रयाभ्यनुज्ञानम् अतएवगौतमः नवावरान्भोजयेदयुजोवायथोत्साहम् बह्वृचगृह्य
कारोपिअथातःपार्वणश्राद्धेकाम्येआभ्युदयिकएकोद्दिष्टेब्राह्मणानित्यप्रक्रम्यएकैकमेकैकस्यद्वौद्वौत्रीन्त्रीन्वावृद्धौफलभूयस्त्वमित्याह
द्वौद्वाविति आभ्युदयिकश्राद्धविषयंस्मृत्यंतरेषुतथाविधानात् अत्राप्याभ्युदयिकइत्युपक्रमात्च १२६ प्रथितेति यदेतत्पित्र्यंकर्मश्राद्धरूपंप्र

थमभियंप्रख्यातामेतत्कृत्यापित्रुपकारार्थाक्रिया प्रकर्षेणइतःप्रेतःपितृलोकस्थएवोच्यते विधुक्षये अमावास्यायांतस्मिन्पित्र्येक
र्मणियुक्तस्यैतस्यरस्यलौकिकास्मार्तिकाप्रेत कृत्या पित्रुपकारार्थाक्रियागुणवत्पुत्रपौत्रधनादिफलप्रबंधरूपेणकर्त्तारमुपतिष्ठतेत
स्मादिदंकर्त्तव्यम् गोविंदराजेनतुविधिःक्षयइतिपठितंव्याख्यातंचयोपंनामविधिःपित्र्यंकर्मतिथिक्षयेचंद्रक्षयेग्रहेवा तदसामंदा
धिकम् मेधातिथिप्रभृतिभिर्गोविंदराजादपिवृद्धतरैरनभ्युपेतत्वात्क्षयइतिसंबंधक्लेशाच्च १२७ श्रोत्रियेति छंदोमात्राध्यायीश्रो
त्रियस्तस्मैदेवपित्र्यन्नानियत्नतोदेयानि अर्हत्तमायश्रुताचाराभिजनादिभिःपूज्यतमायतस्मैदत्तंमहाफलंभवति १२८ एकैकमि-
ति देवपित्र्ययोरेकैकमपिवेदतत्त्वविदंब्राह्मणंभोजयेत् तदापिविशिष्टंश्राद्धफलमाप्नोतिनत्वविदुषोबहूनपिएवंचफलश्रवणाद्ब्राह्म
णभोजनमेवप्रधानंपिंडदानादिकंत्वंगमितिगोविंदराजः-वयंतुपित्रुद्देशेनद्रव्यत्यागंब्राह्मणस्वीकारपर्यंतंश्राद्धशब्दवाच्यंप्रधानंब्रूमः
तदेवमनुनापिंडान्वाहार्यकंश्राद्धंकुर्यादितिविहितंआपस्तंबेनतुमन्त्वर्थस्यैवव्याख्यातत्वात् तदाहआपस्तंबःतथैतन्मनुःश्राद्धशब्दं

श्रोत्रियायैवदेयानिहव्यकव्यानिदातृभिः अर्हत्तमायविप्रायतस्मैदत्तंमहाफलम् १२८ एकैकम
पिविद्वांसं दैवेपित्र्येचभोजयेत् पुष्कलफलमाप्नोतिनामन्त्रज्ञान्बहूनपि १२९ दूरादेवपरीक्षेतब्रा
ह्मणंवेदपारगम् तीर्थंतद्धव्यकव्यानांप्रदानेसोतिथिःस्मृतः १३० सहस्रंहिसहस्राणामनृचांयत्रभुं
जते एकस्तान्मन्त्रवित्प्रीतःसर्वानर्हतिधर्मतः १३१ कर्मप्रोवाचप्रजानिःश्रेयसार्थंतत्रपितरोदेवताब्राह्मणस्त्वाहव

नीयार्थेमासिमास्यपरपक्षस्यापराण्हःश्रेयानिति श्राद्धशब्दंश्राद्धमितिशब्दोवाचकोयस्यतत्तथाब्राह्मणस्त्वाहवनीयार्थेआहव-
नीयवत्त्यक्तद्रव्यप्रतिपत्तिस्थानत्वात् पितरोदेवताइतिनियतपितृदेवताकत्वाच्चश्राद्धस्य देवताश्राद्धादौश्राद्धशब्दस्तत्सद्धर्मप्राप्त्य
र्थोगौणः कौंडपायिनामयनइवाग्निहोत्रशब्दःपुष्कलंफलमाप्नोतिइतितुपुष्टतरफलार्थिनोगुणफलविधिःसभोजनस्यांगत्वेपित
दाश्रयोनविरुद्धः आपस्तंबोप्यधान्श्राद्धकर्मैतत्पितृदैवतम् मन्वर्थकथयंस्तस्मान्नेदंब्राह्मणभोजनम् १२९ दूरादिति दूरादेवपि
तृपितामहाद्यभिजनशुद्धिनिरूपणेनकृत्स्नशाखाध्यायिनंब्राह्मणंपरीक्षेतयस्मात्तथाविधोब्राह्मणोहव्यादीनांतीर्थंपात्रंप्रदानेसो
तिथिरेवमहाफलप्राप्तेर्हेतुत्वात् १३० सहेति यत्रश्राद्धेब्राह्मणानामवेदविदांदशलक्षाणिभुंजतेतत्रैकोवेदविद्भोजनेनपरितुष्टो-

धर्मतोधर्मोत्पादनेनतान्सर्वानर्हतिस्वीकर्त्तुंयोग्योभवतितद्भोजनजन्यंफलंजनयतीत्यर्थः छांदसत्वादेकवचनम् अथवाबहुवच नानांस्थानेसहस्त्रमितिमनोरभिमतम् गोविंदराजस्त्वाहसहस्त्रंगच्छंतुभूतानीतिवेदे १२१ ज्ञानेति विद्ययाउत्कृष्टेभ्योहव्यानि कव्यानिचदेयानिनमूर्खेभ्यः अर्थांतरन्यासोनामालंकारः नहिरक्ताक्तौहस्तौरक्तेनैवविशुद्धौभवतः किंतुविमलजलेन एवंमूर्ख भोजनेनजनितंदोषंनमूर्खएवभोजितोपहंतिकिंतुविद्वान् १२२ अविद्वान्निंदयाविद्वद्दानमेवोक्तंवक्रोक्त्यास्तौति यावतइति या वत्संख्यकान्ग्रासान्हव्यकव्येष्वनैर्ज्ञुर्विद्वुक्तेतत्संख्याकानेवप्रकृतश्राद्धकर्त्ताज्वलितशूलर्ष्टीस्त्यासुधलोहपिंडान्ग्रसतेश्राद्ध- कर्त्तुरेवेदमविद्वद्दानफलकथनम् तथाचव्यासः ग्रसतेयावतःपिंडान्यस्यवैहविषोनृपः ग्रसतेतावतःशूलान्गत्वावैवस्वतक्ष यम् १२३ ज्ञानेति केचिदात्मज्ञानपराब्राह्मणाभवंतिअन्येप्राजापत्यादितपःप्रधानाः अपरेतपोध्ययननिरताः इतरेयागादिपराः

ज्ञानोत्कृष्टायदेयानिकव्यानिचहवींषिच नहिहस्तावसृग्दिग्धौरुधिरेणैवशुध्यतः १२२ यावतोग्रसते ग्रासान्हव्यकव्येष्वमंत्रवित् तावतोग्रसतेप्रेत्यदीप्तशूलर्ष्टययोगुडान् १२३ ज्ञाननिष्ठाद्विजाःकेचित्त पोनिष्ठास्तथापरे तपःस्वाध्यायनिष्ठाश्चकर्मनिष्ठास्तथापरे १२४ ज्ञाननिष्ठेषुकव्यानिप्रतिष्ठाप्यानि यत्नतः हव्यानितुयथान्यायंसर्वेष्वेवचतुर्ष्वपि १२५ अश्रोत्रियःपितायस्यपुत्रःस्याद्वेदपारगः अ श्रोत्रियोवापुत्रःस्यात्पितास्याद्वेदपारगः १२६ ज्यायांसमनयोर्विद्याद्यस्यस्याच्छ्रोत्रियःपिता मंत्रसं पूजनार्थंतुसत्कारमितरोर्हति १२७

१२४ ततःकिमतआह ज्ञानेति ज्ञानप्रधानेभ्योपित्र्यर्थान्यानियत्नाद्दातव्यानि देयान्नानिपुनःन्यायावधृतार्थशास्त्रानुसारेणचतुर्भ्योपि १२५ अश्रोत्रियइति योऽश्रोत्रियपितृकःस्वयंचश्रोत्रियः यःश्रोत्रिय- पितृकःस्वयंवाअश्रोत्रियः १२६ तयोःकःश्रेष्ठइत्यपन्यस्यविशेषमाह ज्यायांसमिति अनयोःपूर्वश्लोकनिर्दिष्टयोर्मध्येश्रोत्रियपु त्रंस्वयमश्रोत्रियमपिज्येष्ठंजानीयात्पितृविद्यादरपरमिदम् यःपुनरश्रोत्रियस्यपुत्रःस्वयंचश्रोत्रियःसतदधीतवेदपूजनार्थंपूजा मर्हतिवेदएवतद्द्वारेणपूज्यतइतिपुत्रविद्यादरपरमिदम् तस्माद्वचनभंग्याश्रोत्रियपुत्रःस्वयंचश्रोत्रियःश्राद्धेभोजयितव्यइत्यु-

त्तम् नत्वश्रोत्रियपुत्रस्यस्वयमश्रोत्रियस्यैवाप्यनुज्ञानंश्रोत्रियायैवदेयानीतिविरोधादेवंचदूरादेवपरीक्षेतेतिविद्याव्यतिरिक्ता
चारादिपरीक्षार्थत्वेनावतिष्ठते १३७ नेति श्राद्धेनमित्रंभोजयेत्धनांतरैरस्यमैत्रीसंपादनीया नशत्रुंनचमित्रंयंजानीयात्तंब्रा
ह्मणंश्राद्धेभोजयेत् १३८ यस्येति मित्रशब्दोयंभावप्रधानः यस्यमैत्रीप्रधानानिहव्यकव्यानितस्यपारलौकिकंफलंनभवतीति
फलाभावकथनपरमिदम् प्रेत्येति परलोकेइत्यर्थेशब्दांतरमव्ययमिदंनतुक्त्वांतंतेनासमानकर्तृकत्वेकथंक्त्वाइतिनाशंकनीयम्
१३९ स्वर्गफलंश्राद्धस्यदर्शयितुंपूर्वोक्तफलाभावमेवविशेषेणकथयति यइति योमनुष्यःसंगतानिमित्रभावंशास्त्रानभिज्ञतया
श्राद्धेनकुरुतेश्राद्धमेवमित्रलाभहेतुत्वान्मित्रंयस्यसश्राद्धमित्रोद्विजापसदःसस्वर्गलोकाच्च्यवतेतंनप्राप्नोतीत्यर्थः श्राद्धस्यापिस्व

नश्राद्धेभोजयेन्मित्रंधनैःकार्योस्यसंग्रहः नारिंनमित्रंयंविद्यात्तंश्राद्धेभोजयेद्द्विजम् १३८ यस्यमि
त्रप्रधानानिश्राद्धानिचहवींषिच तस्यप्रेत्यफलंनास्तिश्राद्धेषुचहविःषुच १३९ यःसंगतानिकुरुते
मोहाच्छ्राद्धेनमानवः सस्वर्गाच्च्यवतेलोकाच्छ्राद्धमित्रोद्विजाधमः १४० संभोजनीसाभिहितापैशा
चीदक्षिणाद्विजैः इहैवास्तेतुसालोकेगौरन्धेवैकवेश्मनि १४१ यथेरिणेबीजमुप्त्वानवप्तालभतेफ-
लम् तथानृचेहविर्दत्त्वानदातालभतेफलम् १४२ दातृन्प्रतिग्रहीतॄंश्चकुरुतेफलभागिनः विदुषेद
क्षिणांदत्त्वाविधिवत्प्रेत्यचेहच १४३

र्गफलत्वमाह याज्ञवल्क्यः आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच प्रयच्छं-
तितथाराज्यंप्रीतानृणांपितामहाः १४० संभोजनीति सादक्षिणादानक्रियासंभोजनीसहभुज्यतेययासासंभोजनीगोष्ठीबहुपु
रुषभोजनात्मिकापिशाचधर्मत्वात्पैशाचीमन्वादिभिरुक्ता साचमैत्रीप्रयोजनकत्वान्नपरलोकफलाइहलोकएवास्ते यथाऽन्धा
गौरेकस्मिन्नेवगृहेतिष्ठतिनगृहांतरगमनक्षमा १४१ यथेति ईरिणमूषरदेशोयत्रबीजमुप्तंनप्ररोहतितत्रयथाबीजमुप्त्वाक
र्षकोनफलंप्राप्नोतिएवमविदुषेश्राद्धदानफलंदातानप्राप्नोतीति १४२ दातॄनिति वेदतत्त्वविदेयथाशास्त्रंदत्तंऐहिकामुष्मि
कफलभागिनोदातॄन्करोति ऐहिकंफलंयथाशास्त्रानुष्ठानेनलोकेख्यातिरूपमानुषंगिकमितिमेधातिथिगोविंदराजौ यथंत्वा

सुरादिकमेवैदिकफलंब्रूमः आयुःप्रजाधनविद्याभित्याद्यैहिकामुष्मिकादिफलत्वेनापिश्राद्धस्ययाज्ञवल्क्यादिभिरुक्तत्वात् प
नियमहीनंश्रुत्याद्युलब्धधनानुष्ठितयागादिफलेनपरलोकेसफलांकुरुते अन्यायार्जितधनानुष्ठितयागादेरफलप्रदत्वात् इह
लोकेन्यायार्जितधनारब्धकृष्यादिफलातिशयलाभात्सफलांकुरुते १४३ काममिति वरंविद्वद्ब्राह्मणाभावेगुणवन्मित्रंभोजये
त् नतुविद्वांसमपिशत्रुंयतःशत्रुणाश्राद्धंभुक्तंपरलोकेनिष्फलंभवतियथोक्तपात्रासंभवेमित्रप्रतिप्रसवार्थमिदम् १४४ श्रोत्रि
यायैवदेयानीत्यनेनछंदोमात्राध्यायिनिश्रोत्रियशब्दप्रयोगात्तदाश्रयणमावश्यकमुक्तंइदानींत्वधिकफलार्थंमंत्रब्राह्मणात्मकक्
त्स्नशाखाध्यायिनिश्रोत्रियेदानमाह यत्नेनेति ऋग्वेदिनंमंत्रब्राह्मणात्मकशाखाध्यायिनंयत्नतोभोजयेत् तथाविधमेवयजुर्वेदि
नंवेदस्यपारंगच्छतीतिवेदपारगःशाखायाअंतंगच्छतीतिशाखांतगःसमाप्तिरस्यास्तीतिसमाप्तिकःसर्वैरेवशब्दैर्मंत्रब्राह्मणा

कामंश्राद्धेर्चयेन्मित्रंनाभिरूपमपित्वरिम् द्विषताहिहविर्भुक्तंभवतिप्रेत्यनिष्फलम् १४४ यत्ने
नभोजयेच्छ्राद्धेबह्वृचंवेदपारगम् शाखांतगमथाध्वर्युंछंदोगंतुसमाप्तिकम् १४५ एषामन्यतमो
यस्यभुंजीतश्राद्धमर्चितः पितॄणांतस्यतृप्तिःस्याच्छाश्वतीसाप्तपौरुषी १४६ एषवैप्रथमःकल्पः
प्रदानेहव्यकव्ययोः अनुकल्पस्त्वयंज्ञेयःसदासद्भिरनुष्ठितः १४७ मातामहंमातुलंचस्वस्रीयंश्व
शुरंगुरुम् दौहित्रंविट्पतिंबंधुमृत्विग्याज्यौचभोजयेत् १४८

त्मककृत्स्नशाखाध्येताभिहितः १४५ त
द्भोजनेअधिकंफलमाह एषामिति एषांसंपूर्णशाखाध्यायिनांबह्वृचादीनांमध्यादन्यतमोयस्यसम्यक्पूजितःसन्श्राद्धे
भुक्तेनस्यपुत्रादिसप्तपुरुषाणांशाश्वतीअविच्छिन्नापितॄणांतृप्तिःस्यात् साप्तपौरुषीति अनुशतिकादित्वादुभयपदवृद्धिःतस्य
चाकृतिगणत्वात् १४६ एषइति हव्यकव्ययोरुभयोरेयंप्रदानेयदसंबंधिश्रोत्रियादिभ्योदायतइति अयंमुख्यःकल्पउक्तः अयंतु
मुख्याभावेवक्ष्यमाणोऽनुकल्पोज्ञातव्यःसर्वदासाधुभिरनुष्ठितः १४७ मातामहमिति स्वस्रीयोभागिनेयःगुरुर्विद्यागुरुराचार्यो
विट्दुहितानस्याःपतिःविट्पतिर्जामाता बंधुर्मातृष्वस्रपुत्रादिःएतान्मातामहादीन्दशमुख्यश्रोत्रियाद्यसंभवेभोजयेत् १४८

नेति धर्मज्ञोदैवश्राद्धेभोजनार्थंनब्राह्मणंयत्नतःपरीक्षेत् लोकप्रसिद्धिमात्रेणासौसाधुतयाभोजयितव्यः पित्र्येपुनः कर्मण्युपस्थिते पितृपितामहाद्यभिजनपरीक्षाकर्त्तव्येतिप्रयत्नतः शब्दस्यार्थः १४९ यइति स्तेनश्चौरःसचसुवर्णचौरादन्यः तस्यपतितशब्देनैवब्रह्णात् पतितोमहापातकी क्लीबोनपुंसकः नास्तिकवृत्तिर्नास्तिपरलोकइत्येवंवृत्तिःप्रवर्त्तनंयस्यएतान् दैवपितृकृत्ययोरुभयोरेवायोग्यान्मनुरब्रवीदितिमनुग्रहणंनिषेधादरार्थंसर्वधर्माणामेवमनुनोक्तत्वात् १५० जटिलमिति जटिलोब्रह्मचारी मुंडोवाजटिलोवास्यादित्यक्तब्रह्मचार्युपलक्षणत्वात्जटिलत्वस्यमुंडोपिनिषिध्यते अनधीयानंवेदाध्ययनरहितंयस्योपनयनमात्रंकृतंनवेदादेशः तेनास्वीकृतवेदस्यापिब्रह्मचारिणोवेदाध्ययनकर्तुरभ्यनुज्ञानार्थोयंनिषेध. अतःश्रोत्रियायैवदेयानीतिब्रह्मचारीतरविषयम् दुर्बलोदुश्चर्मा मेधातिथिस्तु दुर्बलमितिपठित्वास्खलतिर्लोहितकेशोवादुश्चर्मावाइत्यर्थत्रयमुक्तवान् कितवोद्यूतकृत् पूगयाजकाव

नब्राह्मणंपरीक्षेतदैवेकर्मणिधर्मवित् पित्र्येकर्मणितुप्राप्तेपरीक्षेतप्रयत्नतः १४९ येस्तेनपतितक्लीबायेचनास्तिकवृत्तयः तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् १५० जटिलंचानधीयानंदुर्बलंकितवंतथा याजयंतिचयेपूगांस्तांश्चश्राद्धेनभोजयेत् १५१ चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा विपणेनचजीवंतोवर्ज्याःस्युर्हव्यकव्ययोः १५२ प्रेष्योग्रामस्यराज्ञश्चकुनखीश्यावदंतकः प्रतिरोद्धागुरोश्चैवत्यक्ताग्निर्वार्धुषिस्तथा १५३

हुयाजकाःपूगःक्रसुकवृंदयोरित्याभिधानिकाः अतएववसिष्ठः यश्चापिबहुयाज्यःस्यात्यश्चोपनयतेबहूनिति तान्श्राद्धेनभोजयेदितिनदैवेनिषेधोमनोरभिमत. तत्रहव्यकव्यग्रहणमुभयत्रेतिवाकरोति १५१ चिकित्सेति चिकित्सकोभिषक् देवलःप्रतिमापरिचारकः वर्त्तनार्थत्वेनैतत्कर्मकुर्वतोयंनिषेधःनतुधर्मार्थम् देवकोशोपभोजीचनाम्नादेवलकोभवेदितिदेवलवचनात् मांसविक्रयिणःसकृदपि सद्यःपततिमांसेनेतिलिंगात् विपणेनेति विपणोवणिज्यातयाजीवंतः हव्यकव्ययोरित्यभिधानात्दैवेपित्र्येचैतेत्याज्याः १५२ प्रेष्यइति भृतिग्रहणपूर्वकंग्रामाणांराज्ञश्चाज्ञाकारीकुत्सितनखकृष्णदंतगुरुप्रतिकूलाचरणशीलत्यक्तश्रौतस्मार्त्ताग्निकलोपजीविनश्चहव्यकव्ययोर्वर्ज्याइतिपूर्वस्यैवात्रानुषंगःउत्तरएवच १५३

यक्ष्मीति यक्ष्मीक्षयरोगी पशुपालोवृत्त्यर्थतयाच्छागमेषादिपोषकः परिवेत्तृपरिवित्तीवक्ष्यमाणलक्षणौ निराकृतिः पंचमहाय
ज्ञानुष्ठानरहितःतथाचछंदोगपरिशिष्टंनिराकर्त्ताभरादीनांसविज्ञेयोनिराकृतिः ब्रह्मद्विट्ब्राह्मणादीनांद्वेष्टा गणाभ्यंतरोगणा
पसृष्टसंबंधिधनाद्युपजीवी १५४ कुशीलवइति कुशीलवोनर्त्तनवृत्तिः अवकीर्णीस्त्रीसंपर्कान्विप्लुतब्रह्मचर्यःप्रथमाश्रमीयति
श्च वृषलीपतिःसवर्णामपरिणीयकृतशूद्राविवाहः पौनर्भवःपुनर्भूपुत्रोवक्ष्यमाणःउपपतिर्यस्यजायाजारोगृहेस्ति १५५ भृतेति
भृतिर्वेतनंतद्ग्राही भृतकःसन्योऽध्यापकःसतथाएवंभृतकाध्यापितः शूद्रशिष्योव्याकरणादौगुरुश्चतस्यैव वाग्दुष्टःपरुषभाष
अभिशस्तइत्यन्ये कुंडगोलकौवक्ष्यमाणौ १५६ अकारणेति मातुः पितुर्गुरूणांचपरित्यागकारणंविनात्यक्ताशुश्रूषादेरकर्त्ता
तितैश्चाध्ययनकन्यादानादिभिः संबंधैःसंपर्कंगतःपतितत्वादेवास्यनिषेधइतिचेत् नसंवत्सरात्प्रागिदंभविष्यतिसंवत्सरेणपतती

यक्ष्मीचपशुपालश्चपरिवेत्तानिराकृतिः ब्रह्मद्विट्परिवित्तिश्चगणाभ्यंतरएवच १५४ कुशीलवोव
कीर्णीचवृषलीपतिरेवच पौनर्भवश्चकाणश्चयस्यचोपपतिर्गृहे १५५ भृतकाध्यापकोयश्चभृतका
ध्यापितस्तथा शूद्रशिष्योगुरुश्चैववाग्दुष्टःकुंडगोलकौ १५६ अकारणपरित्यक्तामातापित्रोर्गुरो-
स्तथा ब्राह्मैर्यौनैश्चसंबंधैःसंयोगंपतितैर्गतः १५७ अगारदाहीगरदःकुंडाशीसोमविक्रयी समु
द्रयायीवंदीचतैलिकःकूटकारकः १५८ पित्राविवदमानश्चकितवोमद्यपस्तथा पापरोग्यभिशस्त
श्चदांभिकोरसविक्रयी १५९

तिवक्ष्यमाणत्वात् १५७ अगारेति गृहदाहकः मरण
माणस्ययोन्नमश्नाति प्रदर्शनार्थत्वात्कुंडस्यगोलकस्यापिग्रहणम् अतएवदेवलः अमृतेजारजःकुं [illegible] रि [illegible] ठकः य-
स्तयोरन्नमश्नातिसकुंडाशीतिकथ्यते सोमलताविक्रेता समुद्रयोवहित्रादिनाद्वीपांतरंगच्छति वंदीस्तुतिपाठकः तैलार्थंति-
लादिबीजानांपेष्टा साक्षिवादेकूटस्यमृषावादकस्यकर्त्ता १५८ पित्रेति पित्रासहशास्त्रार्थेलौकिकेवावस्तुनिनिरर्थयोवि
वदते कितवोयःस्वयंदेवितुमनभिज्ञःस्वार्थंपरान्देवयतिनस्वयंदेवितातस्योक्तत्वात् नचसभिकःतस्यद्यूतवृत्ति
स्यमानत्वात् केकरइतिपाठेतिर्यग्दृष्टिःक्रूराव्यतिरिक्तमद्यपाता कुष्ठी अनिर्णीतेपितस्मिन्महापातकादौजाताभिशापः छ

प्रनाधर्मकारी रसविक्रेता १५९ धनुरिति धनूंषि शरांश्च यः करोति ज्येष्ठायां सोदरभगिन्यामनूढायां याकनिष्ठा विवाहेन दीयते साग्रेदिधिषूस्तस्याः पतिः तथाच लौगाक्षिः ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेनुजा साचाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता गोविंदराजस्तु भ्रातुर्मृतस्य भार्यायामित्यनेनाग्रेदिधिषूपतिरेव वृत्तिवशादग्रेपदलोपेन दिधिषूपतिरिति मनुना वक्ष्यते स इह गृह्यत इत्याह मित्रध्रुक् यो मित्रस्यापकारे वर्त्तते द्यूतवृत्तिः सभिकः पुत्रेणाध्यापितः पिता पुत्राचार्यस्तस्यासंभवात् १६० भ्रामरीति अपस्मारी गंडमालाख्यव्याध्युपेतः श्वेतकुष्ठयुक्तः दुर्जनः उन्मादवान् अन्धश्च वेदनिंदाकरः १६१ हस्तीति हस्तिगवाश्वोष्ट्राणां विनेता नक्षत्रशब्देन ज्योतिःशास्त्रमुपलक्ष्यते तेन यो वर्त्तते पक्षिणां पंजरसंजातानां क्रीडाद्यर्थं पोषिता युद्धार्थमायुधविद्योपदे-

धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च १६० भ्रामरी गंड-
माली च श्वित्र्यथो पिशुनस्तथा उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिंदक एव च १६१ हस्तिगोऽश्वोष्ट्रदमको
नक्षत्रैर्यश्च जीवति पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च १६२ स्रोतसां भेदको यश्च तेषां चावर-
णे रतः गृहसंवेशको दूतो वृक्षारोपक एव च १६३ श्वक्रीडी श्येनजीवी च कन्यादूषक एव च हिंस्रो
वृषलवृत्तिश्च गणानां चैव याजकः १६४ आचारहीनः क्लीबश्च नित्यं याचनकस्तथा कृषिजीवी श्लीप
दी च सद्भिर्निंदित एव च १६५

शकः १६२ स्रोतसामिति प्रवहज्जलानां सेतुभेदादिना देशांतरनेता तेषामेवावरणकर्त्ता निजगतिप्रतिबंधकः गृहसन्निवेशोपदेशको वास्तुविद्योपजीवी दूतो राजग्रामप्रेष्यव्यतिरिक्तोपि वृक्षरोपयिता वेतनग्रहणेन नतु धर्मार्थी पंचाम्ररोपी नरकं न यातीति विधानात् १६३ श्वक्रीडीति क्रीडार्थं शुनः पोषयति श्येनैर्जीवति क्रयविक्रयादिना कन्याभिगंता हिंसारतः शूद्रोपक्रमवृत्तिः वृषलपुत्र इति पाठांतरम् वृषला एव केवलाः पुत्रा यस्येत्यर्थः विनायकादिगणयागकृत् १६४ आचारेति गुर्वातिथिसत्कारादाचारवर्जितः क्लीबो धर्मकृत्यादौ निरुत्साहः नपुंसकस्योक्तत्वात् नित्यं याचनेन परोद्वेजकः स्वयं कृतया कृष्या यो जीवति स्वयं नरेपि वा संभवत्यस्वयंकृतयापि श्लीपदो व्याधिना स्थूलचरणः केनापि निमित्तेन साधूनां निंदाविषयः १६५ ७ ७

औरभ्रिकेति मेषमहिषजीवनः परपूर्वापुनर्भूस्तस्याः पतिः प्रेतनिर्हारकोधनग्रहणेननतुधर्मार्थेएतद्धैपरमंतपोयस्तेतमरण्यंहरंत तिश्रवणस्मृत्याविहितत्वात् १६६ एतानिति एतान्स्तेनादीन्निंदिताचारान्काणादींश्च पूर्वजन्मार्जितनिंदितकर्मशेषलब्धकाणादि भावान्साधुभिःसहैकत्रभोजनाद्यनर्हान्ब्राह्मणापसदान्ब्राह्मणश्रेष्ठःशास्त्रज्ञोदैवेपित्र्येत्यजेत् १६७ ब्राह्मणइति तृणाग्निर्यथा विदहनसमर्थोहविषिप्रक्षिप्तेशाम्यतिनिष्फलस्तत्रहोमः एवंवेदाग्निशून्योब्राह्मणस्तृणाग्निसमस्तस्मैदेवोद्देशेनत्यक्तंहविर्नदातव्यं नेनहूयतेश्रोत्रियायैवदेयानीत्यनेनैवानधीयानस्यापिप्रतिषेधसिद्धौस्तेनादिवत्पंक्तिदूषकत्वज्ञापनार्थंपुनर्वचनम् अन्येतुदै वेअनधीयानएववर्जनीयः अधीयानस्तुकाणादिरपिशारीरदोषयुक्तोग्राह्यइतिएतदर्थंपुनर्वचनम् अतएववसिष्ठः अथचेन्मंत्रविद्यु क्तःशारीरैःपंक्तिदूषणैः अदूष्यंतंयमःप्राहपंक्तिपावनएवसः शारीरैः काणत्वादिभिर्नतुस्वयमुत्पाद्यैस्तेनत्वादिभिः १६८ अपांक्तदाने

औरभ्रिकोमाहिषिकःपरपूर्वापतिस्तथा प्रेतनिर्यातकश्चैववर्जनीयाःप्रयत्नतः १६६ एतान्विगर्हि तान्चारानपांक्तेयान्द्विजाधमान् द्विजातिप्रवरोविद्वानुभयत्रविवर्जयेत् १६७ ब्राह्मणस्त्वनधीयान स्तृणाग्निरिवशाम्यति तस्मैहव्यंनदातव्यंनहिभस्मनिहूयते १६८ अपांक्तदानेयोदातुर्भवत्यूर्ध्व- फलोदयः दैवेहविषिपित्र्येवातत्प्रवक्ष्याम्यशेषतः १६९ अव्रतैर्यद्द्विजैर्भुक्तंपरिवेत्रादिभिस्तथा अ पांक्तेयैर्यदन्यैश्चतद्वैरक्षांसिभुंजते १७० दाराग्निहोत्रसंयोगंकुरुतेयोग्रजे परिवेत्तासविज्ञेयःपरि वित्तिस्तुपूर्वजः १७१ परिवित्तिःपरिवेत्तायया च परिविद्यते सर्वेतेनरकंयांतिदातृयाजकपंचमाः १७२

इति पंक्तिभोजनानर्हब्राह्मणायदैवेहविषिपित्र्येवादत्तेदातुर्योदानादूर्ध्वंफलोदयस्तमशेषमभिधास्यामि १६९ अव्रतैरिति वेद ग्रहणार्थव्रतरहितैस्तथापरिवेत्रादिभिरन्यैश्च अपांक्तेयैःस्तेनादिभिर्यत्हव्यंभुक्तंतत्रक्षांसिभुंजते निष्फलंतच्छ्राद्धंभवतीत्यर्थः १७० अप्रसिद्धत्वात्परिवेत्रादिलक्षणमाह दारेति अग्निहोत्रशब्दोयमग्निहोत्राद्याधानपरः यःसहोदरोज्येष्ठेभ्रातरिअनूढेअनग्नि केचदारपरिग्रहंश्रौतस्मार्ताग्निहरणंचकुरुतेसपरिवेत्ताज्येष्ठश्चपरिवित्तिर्भवति १७१ प्रसंगात्परिवेदनसंबंधिनामप्यनिष्टफलमा ह परीति परिवित्तिःपरिवेत्ताचययाचकन्ययापरिवेदनंक्रियतेकन्याप्रदातायाजकश्चतद्विवाहहोमकर्त्तासपंचमोयेषांसर्वेनरकंव्रजंति १७२

भ्रातुरिति मृतस्य भ्रातुर्वक्ष्यमाणनियोगधर्मेणापि नियुक्तायां भार्यायां सकृत्सकृदृतावृतावित्यादिविधिं हित्वा कामेनानुरागं भावयेदाश्ले
षचुंबनादि कुर्यात् असकृद्वा प्रवर्त्तेत स दिधिषूपतिर्ज्ञातव्यः अतः श्राद्धनिषिद्धपात्रमध्यपाठादस्यापि हव्यकव्यपात्रयोर्निषेधः कल्पनीयः
१७३ परेति परदारेषु कुंडगोलकाख्यौ द्वौ सुतावुत्पद्येते तत्र जीवत्पतिकायामुत्पन्नः कुंडो मृतपतिकायां च गोलकः १७४ ताविति तौ पर
भार्यायां जातौ कुंडगोलकाविहपरत्रानुपयोगात् प्राणिन इति व्यपदिष्टौ प्राणिनौ ब्राह्मणत्वेपि तत्कार्याभावात् प्रेत्य फलाभावात्परलोके चानु
षंगिककीर्त्यादिफलाभावाद्दत्तानि हव्यकव्यानि प्रेत्य फलाभावादिह कीर्त्तेरभावात् नाशयेते नाशयतः प्रदायिभिर्दत्तानि हव्यकव्यानि-
निष्फलानि कुर्वंति १७५ अपांक्त्यमिति सद्भिः सहैकपंक्त्यां भोजनानर्हः स्तेनादिर्यत्संख्यान् भोजनार्हान् पश्यति तावत्संख्यानां भोजन

भ्रातुर्मृतस्य भार्यायां योनुरज्येत कामतः। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः १७३ परदारेषु जायेते द्वौ सुतौ कुंडगोलकौ पत्यौ जीवति कुंडः स्यान्मृते भर्त्तरि गोलकः १७४ तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम् १७५ अपांक्त्यो यावतः पांक्त्यान् भुंजानाननुपश्यति तावतां न फलं प्रेत्य दाता प्राप्नोति बालिशः १७६ वीक्ष्यांधो नवतेः काणः षष्टेः श्वित्री शतस्य तु पापरोगी सहस्रस्य दातुर्नाशयते फलम् १७७ यावतः संस्पृशेदंगैर्ब्राह्मणान् शूद्रयाजकः तावतां न भवेद्दातुः फलं दानस्य पौर्त्तिकम् १७८

स्य फलं तत्र श्राद्धे दाता न प्राप्नोति बालिशोऽज्ञः अतः स्तेनादिर्यथा न प
श्यति तथा कर्त्तव्यम् १७६ वीक्ष्येति अंधस्य वीक्षणासंभवात् वीक्षणयोग्यदेशसन्निहितोऽसौ पांक्त्यानां नवतेर्भोजनफलं नाशय
ति एवं काणः षष्टेः श्वित्री शतस्य पापरोगी रोगराजोपहतः सहस्रस्य इत्यंधादिसन्निधिनिरासार्थं वचनम् गुरुलघुसंख्याभिधानं
चेह संख्योपन्यसे दोषगौरवं तत्र च प्रायश्चित्तगौरवमिति दर्शयितुम् १७७ यावत इति शूद्रस्य यज्ञादौ ऋत्विक् यावत्संख्यान् ब्राह्म
णान् स्पृशति आसने पृथक्कृतेऽपि इति आसनभेदस्य वक्ष्यमाणत्वात् मुख्यस्पर्शासंभवे यावतां श्राद्धभोजिनां पंक्तावुपविशति तावतां संबंधि
पौर्त्तिकं फलं श्राद्धीयं दातुर्न भवति तावतां पौर्त्तिकं फलं बहिर्वेदि दानाद्यत् फलं तन्न भवतीति मेधातिथिगोविंदराजौ अतस्तथैव

निंद्यानिषिद्धगणपठितोपिशूद्रयाजकभोजनेननिषेधःकल्प्यते १७८ प्रसंगाच्चशूद्रयाजकप्रतिग्रहन्निषेधयतिलाघवार्थमन्यत्रनि
षेधकरणेशूद्रयाजकशब्दोच्चारणंकर्तव्यंस्यात् वेदेति वेदज्ञोपिब्राह्मणःशूद्रयाजकस्यलोभात्प्रतिग्रहंकृत्वाशीघ्रंशरीरादिनाविनाशं
गच्छति सुतरामवेदवित् अपक्कमृन्मयशरावादिकमिवोदके १७९ सोमविक्रयिणइति सोमविक्रयिणेयद्दत्तं तद्दातुर्भोजनार्थंवि
ष्ठासंपद्यते जन्मांतरे विष्ठाभोजिनांजातौजायतइत्यर्थः इतरेएवंपूयशोणितेपिव्याख्येयम् नष्टंनाशभागितयानिष्फलंविवक्षितम्
अप्रतिष्ठमनाश्रयतयानिष्फलमेव १८० यत्त्विति वाणिजकायेयद्दत्तंश्राद्धेतत्रेहानुषंगिककीर्त्यादिफलायनापिपारलौकिकफलाय
भवति पुनर्भूसुतायेयद्दत्तंतद्भस्महुतहविःसमंनिष्फलमित्यर्थः १८१ इतरेष्विति इतरेभ्योविशेषेणानुक्तफलेभ्यःपंक्तिभोजनानर्हे
भ्यःस्तेनादिभ्योयथाकीर्तितेभ्योयद्दत्तमन्नंतद्दातुर्भोजनार्थंमेदोरुधिरमांसमज्जास्थिभवतीतिपंडितावदंति अत्रापिजन्मांतरेमेद

वेदविच्चापिविप्रोऽस्यलोभात्कृत्वाप्रतिग्रहम् विनाशंव्रजतिक्षिप्रमामपात्रमिवांभसि १७९ सो
मविक्रयिणेविष्ठाभिषजेपूयशोणितम् नष्टंदेवलकेदत्तमप्रतिष्ठंतुवार्धुषौ १८० यत्तुवाणिजके
दत्तंनेहनामुत्रतद्भवेत् भस्मनीवहुतंहव्यंतथापौनर्भवेद्विजे १८१ इतरेषुत्वपांक्त्येषुयथोद्दिष्टेष्व
साधुषु मेदोसृङ्मांसमज्जास्थिवदंत्यन्नंमनीषिणः १८२ अपांक्त्योपहतापंक्तिःपाव्यतेयैर्द्विजो
त्तमैः तान्निबोधतकार्त्स्न्येनद्विजाग्र्यान्पंक्तिपावनान् १८३ अग्र्याःसर्वेषुवेदेषुसर्वप्रवचनेषुच
श्रोत्रियान्वयजाश्चैवविज्ञेयाःपंक्तिपावनाः १८४

शोणितादिभुजांजातिषुजायंतइत्यर्थः १८२ अपांक्त्यइति एकपं
क्त्युपविष्टस्तेनादिदूषितापंक्तिर्यैर्ब्राह्मणैःपवित्रीक्रियतेतान्पवित्रीकारकान्ब्राह्मणानशेषेणशृणुत निषेधादेकपंक्तिभोजनासंभवे
पिस्तेनादीनांरहस्यकृताज्ञानदोषविषयत्वेनसाधकताऽस्यवचनस्य १८३ अग्र्याइति सर्वेषुवेदेषुचतुर्ष्वपिअग्र्याःश्रेष्ठाःसम्यग्गृ
हीतवेदाःब्राह्मणाःपंक्तिपावनाः अतएवयमः पंक्तिपावनगणनायांचतुर्वेदविदश्चैवेतिपठितवान् तथाप्रकर्षेणोच्यतेवेदार्थएभि
रितिप्रवचनान्यंगानितेष्वप्यग्र्याः षडंगविदस्तेचचतुर्वेदिनोपिपंक्तिपावनाः न्यायविच्चषडंगविदितिपंक्तिपावनमध्येयमेनपृथक्पठि
तत्वात् तथाछंदसांदशपुरुषइत्युशनोवचनाद्दशपुरुषपर्यंतमविच्छिन्नवेदसंप्रदायवंशजाःपंक्तिपावनाः १८४ ७ ७

त्रिणेति त्रिणाचिकेतः अध्वर्युवेदभागः तद्व्रतंच तद्योगात्पुरुषोपि त्रिणाचिकेतः पंचाग्निरग्निहोत्री तथाचहारीतः पवनः पावनस्त्रे
तायस्य पंचाग्नयोगृहे सायंप्रातः प्रदीप्यंते स विप्रः पंक्तिपावनः पवन आवसथ्याग्निः पावनः सभ्योग्निः शीतापनोदाद्यर्थं बहुषु देशेषु
पि विधीयते त्रिसुपर्णो बह्वृचां वेदभागः तद्व्रतंच तद्योगात्पुरुषोपि त्रिसुपर्णः षडंगानि शिक्षादीनि यो व्याचष्टे स षडंगवित् सर्वप्रवचनेन
षडंगाध्येतोक्तः ब्रह्मदेया ब्राह्मविवाहोढा तस्या आत्मसंतानः पुत्रः ज्येष्ठसामानि आरण्यके गीयंते तेषां गाता एते षट् विज्ञेयाः पंक्तिपाव
नाः उत्तरश्लोकेन संबंधः १८५ वेदेति अनधीत्यापि वेदांगानि गुरूपदेशाधिगतवेदार्थः प्रवक्ता वेदार्थस्यैव ब्रह्मचारी प्रथमाश्रमी स
हस्रदः इति देयविशेषानुपादानेपि गावो वै यज्ञस्य मातर इत्यादि विशेषप्रवृत्तश्रुतिदर्शनात् गोसहस्रदाता बहुप्रदो वा शतायुः शतवयाः
श्रोत्रियापेक्षं देयानीति नियमात्स्वतिश्रोत्रियत्वे उक्तगुणयोगात्पंक्तिपावनत्वम् १८६ पूर्वेद्युरिति श्राद्धकर्मणि प्राप्ते श्राद्धाहात्पूर्वदिने त

त्रिणाचिकेतः पंचाग्निस्त्रिसुपर्णः षडंगवित् ब्रह्मदेयात्मसंतानो ज्येष्ठसामग एव च १८५ वेदार्थवि
त्प्रवक्ता च ब्रह्मचारी सहस्रदः शतायुश्चैव विज्ञेया ब्राह्मणाः पंक्तिपावनाः १८६ पूर्वेद्युरपरेद्युर्वा श्राद्ध
कर्मण्युपस्थिते निमंत्रयेत त्र्यवरान्सम्यग्विप्रान्यथोदितान् १८७ निमंत्रितो द्विजः पित्र्ये नियतात्मा भ
वेत्सदा न च छंदांस्यधीयीत यस्य श्राद्धं च तद्भवेत् १८८ निमंत्रितान्हि पितर उपतिष्ठंति तान्द्विजान्
वायुवच्चानुगच्छंति तथासीनानुपासते १८९

दसंभवे श्राद्धदिन एवोक्तलक्षणान् ब्राह्मणान्सम्यगिति सत्कृत्य निमंत्र
येत् त्रयोवरान्न्यूना येषां ते त्र्यवराः नतु तानेव एकैकभोजनस्याप्युक्तत्वात् १८७ निमंत्रित इति श्राद्धे निमंत्रितो ब्राह्मणो निमंत्रणादा
रभ्य श्राद्धाहोरात्रं यावत् मैथुननिवृत्तिसंयमनियमवान्स्यात् अवश्यकर्तव्यजपादिवर्ज्जं वेदाध्ययनं च न कुर्यात् श्राद्धकर्तापि तथैव
स्यात् १८८ निमंत्रितानिति पूर्वनियमविधेरयमनुवादः यस्मात्तान् ब्राह्मणान्निमंत्रितानदृश्यरूपेण पितरोधितिष्ठंति प्राणवायुव
च्च गच्छतोनुगच्छंति तथोपविष्टेषु तेषु समीप उपविशंति तस्मान्नियता भवेयुः १८९ केतित इति हव्यकव्ये यथाशास्त्रं निमंत्रितो
ब्राह्मणः स्त्री कृत्यकेनापि प्रकारेण भोजनमकुर्वाणः तेन पापेन जन्मांतरे सूकरो भवति १९० नियतात्मा भवेत्सदेत्यनेन मैथुननिषेधे

कृतेवृषलीगमनस्याधिकदोषज्ञापनायाहआमंत्रितस्त्विति वृषलीशूद्रातत्रमूढत्वात् श्राद्धेनिमंत्रितःसन् योवृषल्यासार्द्धंस्त्रीपुंसध
र्मेणरमते द्विजोरमतेसदातुर्यत्पापंतत्प्राप्नोतिपापोत्पत्तिमात्रंविवक्षितम् अन्यथादातरिअपापेपापंनजायते नचेददातुःप्रायश्चित्त
तयाविहितंयेनासौपापान्मुच्यते मेधातिथिगोविंदराजौतुसामान्येनब्रह्मचर्यस्यविधानात् वृषस्यंतीचपलयतिभर्त्तारमितियोगा
श्रयणेनश्राद्धभोक्तुरूढाब्राह्मण्यपिवृषल्यभिमतानेत्याहतुः १९१ अक्रोधनाइति क्रोधरहिताबहिःशौचंमृद्वारिभ्यामंतः
रागद्वेषादित्यागस्तद्युक्ताःसर्वदास्त्रीसंयोगादिशून्याःत्यक्तयुद्धाः दयाद्यष्टगुणयोगोमहाभागतातद्वंतः अनादिदेवतारूपाः पितरस्त
स्मात्क्रोधादिरहितेनभोक्त्राकर्त्राचभवितव्यम् १९२ यस्मादिति एषांसर्वेषांपितॄणांयस्मादुत्पत्तिर्येचपितरोयैर्ब्राह्मणादिभिर्यै
र्नियमैःशास्त्रोक्तकर्मभिरुपचरणीयाभवेयुःतान्साकल्येनशृणुत १९३ मनोरिति हिरण्यगर्भापत्यस्यमनोर्येमरीच्यादयःपुत्राः

केतितस्तु यथान्यायंहव्यकव्येद्विजोत्तमः कथंचिदप्यतिक्रामन् पापःसूकरतांव्रजेत् १९० आमंत्रि
तस्तु यःश्राद्धेवृषल्यासहमोदते दातुर्यद्दुष्कृतंकिंचित्तत्सर्वंप्रतिपद्यते १९१ अक्रोधनाःशौचपराः
सततंब्रह्मचारिणः न्यस्तशस्त्रामहाभागाःपितरःपूर्वदेवताः १९२ यस्मादुत्पत्तिरेतेषांसर्वेषामप्यशेष-
तः येचयैरुपचर्याःस्युर्नियमैस्तान्निबोधत १९३ मनोर्हैरण्यगर्भस्ययेमरीच्यादयःसुताः तेषामृषी
णांसर्वेषांपुत्राःपितृगणाःस्मृताः १९४ विराट्सुताःसोमसदःसाध्यानांपितरःस्मृताः अग्निष्वात्ताश्च
देवानांमारीच्यालोकविश्रुताः १९५ दैत्यदानवयक्षाणांगंधर्वोरगरक्षसाम् सुपर्ण
र्हिषदोत्रिजाः १९६ सोमपानामविप्राणांक्षत्रियाणांहविर्भुजः वैश्यानामाज्यपानामशूद्राणांतुसुका
नः १९७

पूर्वमुक्ताःमरीचिरत्र्यंगिरसावित्यादिनातेषामृषीणांसर्वेषांसोमपादयःपितृगणाःपुत्रामन्वादिभिःस्मृताः १९४ विराडिति
विराट्सुताःसोमसदोनामसाध्यानांपितरः अग्निष्वात्तामरीचेःपुत्रालोकविख्यातादेवानांपितरः १९५ दैत्येति दैत्यादीनांप्रथमाध्यायो
दितभेदानांअत्रिपुत्राबर्हिषदोनामपितरःस्मृताः १९६ सोमेति ब्राह्मणप्रभृतीनांचतुर्णांवर्णानांसोमपाप्रभृतयश्चत्वारःपितरःस्मृताः
१९७

सोमेति कवेर्भृगोः सोमपाः पुत्राः हविर्भुज एव हविष्मंत अंगिरसः पुत्राः आज्यपाः पुलस्त्यसुताः सुकालिनो वसिष्ठसुताः. १९८ अग्नीति अग्निदग्धानग्निदग्धकाव्यबर्हिषदग्निष्वात्तसौम्याख्यान्परान्पितॄन्विप्राणामेव जानीयात् १९९ य इति य एते प्रधानभूताः पितृगणाउक्तास्तेषामपीह जगति पितर एव पुत्रपौत्रा अनंता विज्ञेयाः पुत्रपौत्रमिति गवाश्वप्रभृतीनि चेत्येकवद्भाव एतच्छ्लोकसूचिता एव वरोवरेण्य इत्यादयोऽन्येपि पितृगणा मार्कंडेयादिपुराणादिषु श्रूयंते २०० ऋषिभ्य इति ऋषिभ्यो मरीच्यादिभ्य उक्तक्रमेण पितरो जाताः पितृभ्यो देवमानवा जाताः देवेभ्यश्च जंगमस्थावरं जगत्क्रमेण जातं तस्मात्सोमपादिप्रभवत्वात् स्वपितृपितामहप्रपितामहानामेषां श्राद्धे पूजनीयत्वात्सोमपादयोपि पूजिताः संतः श्राद्धफलदानाय कल्प्यंत इति प्रकृतश्चापित्रादिश्राद्धस्तुत्यर्थोयं सोमपादिपितृगणोपन्यासः. अथवा आवाहनका

सोमपास्तु कवेः पुत्रा हविष्मंतोंगिरःसुताः पुलस्त्यस्याज्यपाः पुत्रा वसिष्ठस्य सुकालिनः १९८ अग्निदग्धानग्निदग्धान्काव्यान्बर्हिषदस्तथा, अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्दिशेत् १९९ य एते तु गणा मुख्याः पितॄणां परिकीर्तिताः तेषामपीह विज्ञेयं पुत्रपौत्रमनंतकम् २०० ऋषिभ्यः पितरो जाताः पितृभ्यो देवमानवाः देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः २०१ राजतैर्भाजनैरेषामथो वा रजतान्वितैः वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते २०२ देवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते दैवं हि पितृकार्यस्य पूर्वमाप्यायनं श्रुतम् २०३ तेषामारक्षभूतं तु पूर्वं दैवं नियोजयेत् रक्षांसि हि विलुंपंति श्राद्धमारक्षवर्जितम् २०४

लेनिजपित्रादयो ब्राह्मणादिभिः सोमपादिरूपेण ध्येया एवं व्यवस्थाज्ञानमनुष्ठानपरतावस्यात् २०१ राजतैरिति एषां पितॄणां रूप्यमयपात्रैः रूप्ययुक्तैर्वा ताम्रादिपात्रैर्जलमपि श्रद्धया दत्तमक्षयसुखहेतुः संपद्यते किंपुनः भक्तपायसादीति २०२ देवेति देवानुद्दिश्य यत्क्रियते तद्देवकार्यं ततः पितृकार्यं द्विजातीनां विशेषेण कर्तव्यमुपदिश्यते अनेन पितृश्राद्धस्य प्राधान्यं दैवं तत्रांगमित्याह एतदेव स्पष्टयति यतो दैवकर्म पितृकृत्यस्य पूर्वं सदाप्यायनं परिपूरकं स्मृतम् २०३ तेषामिति आरक्षोरक्षा तेषां पितॄणां रक्षाभूतं दैवं विश्वेदेवब्राह्मणं पूर्वं निमंत्रयेत् यस्मात् रक्षावर्जितं श्राद्धं राक्षसा आछिंदंति २०४ ७ ७

दैवेति यत एवमतः तच्छ्राद्धं दैवाद्यन्तं दैवे कर्मणि आद्यन्तावारंभावसाने यस्य तत्तथा एतेनेदमुक्तं निमंत्रणादि सर्वं दैवपूर्वं विसर्जनं तु दे
वानां शेषे अत एव देवलः यत्तत्र क्रियते कर्म पैतृके ब्राह्मणान्प्रति तत्सर्वं तत्र कर्तव्यं वैश्वदैविकपूर्वकम् न तु तच्छ्राद्धं पित्र्युपक्रमावसानम्
त्राद्यन्तं तदनुतिष्ठन्स संतानः शीघ्रं विनश्यति २०५ शुचिमिति अस्थ्यंगाराद्यनुपहतं देशं निर्जनं च गोमयेनोपलेपयेत् दक्षिणादिगव
नतं च प्रयत्नतः संपादयेत् २०६ अवेति चोक्षाः स्वभावशुचयो ऽरण्यादिप्रदेशास्तेषु नद्यादितीरेषु तथा निर्जनप्रदेशेषु दत्तेन श्राद्धादिना
सर्वदा पितरस्तृप्यंति २०७ आसनेति तत्र च देशे आसनेषु पृथक्पृथग्विन्यस्तेषु सकुशेषु प्रागामंत्रितब्राह्मणान्सम्यक्कृतस्नानाचम
नानुपवेशयेत् अत्र देवब्राह्मणासने कुशद्वयं पित्र्यासनेषु च प्रत्येकं दक्षिणाग्र एकः कुशो देयः तदाह देवलः ये चात्र विश्वेदेवानां विप्राः पू

दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत् पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः २०५ शुचिं देशं वि
विक्तं च गोमयेनोपलेपयेत् दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् २०६ अवकाशेषु चोक्षेषु नदीती
रेषु चैव हि विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा २०७ आसनेषूपक्लृप्तेषु बर्हिष्मत्सु पृथक्पृथक् उ
पस्पृष्टोदकान्सम्यग्विप्रांस्तानुपवेशयेत् २०८ उपवेश्य तु तान्विप्रानासनेष्वजुगुप्सितान् गन्धमाल्यैः
सुरभिभिरर्चयेद्दैवपूर्वकम् २०९ तेषामुदकमानीय सपवित्रांस्तिलानपि अग्नौ कुर्यादनुज्ञातो ब्रा
ह्मणो ब्राह्मणैः सह २१० अग्नेः सोमयमाभ्यां च कृत्वाप्यायनमादितः हविर्दानेन विधिवत्पश्चात्सं
तर्पयेत्पितॄन् २११

र्वं निमंत्रिताः प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च दक्षिणामुखयुक्तानि पितॄणामासना
च दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः दक्षिणामुखयुक्तानि दक्षिणाग्राणि अग्रं कांडमूलापेक्षया २०८ उपेति तान्विप्रानामंत्रि
तानासनेषूपवेश्य कुंकुमादिगंधमाल्यधूपादिभिः स्पृहणीयगंधैर्दैवपूर्वकमर्चयेत् २०९ तेषामिति तेषां ब्राह्मणानामर्घोदकं पवित्रति
लान्संमिश्रान्कृत्वा तैर्ब्राह्मणैः सहानुज्ञातो ऽग्नौ वक्ष्यमाणं होमं कुर्यात् अनुज्ञासामर्थ्याच्च प्रार्थनापि पूर्वं कर्तव्या सा च स्वगृह्यानुसारे
ण करवाणि करिष्य इत्यादिका अनुज्ञापि ओमित्येवंरूपा कुरुष्वेति वा २१० अग्नेरिति अग्नेः सोमयमयोश्च विधिवत्पर्युक्षणादिपूर्वं हवि

दीनेनप्रीणनमादौकृत्वापश्चादन्नादिनापितॄंस्तर्पयेत् सोमयमयोः द्वंद्वनिर्देशेपिपृथगेवदेवतात्वंसहादिशब्दप्रयोगाभावात् यत्र-
साहित्यंविवक्षितंतत्रसहादिशब्दंकरोतीत्युक्तंप्राक् २११ अग्न्यभावेत्विति अग्न्यभावेपुनर्ब्राह्मणहस्तएवउक्ताहुतित्रयंदद्यात् य-
स्माद्यएवाग्निःसएवब्राह्मणइतिवेदविद्भिर्ब्राह्मणैरुक्तः अग्न्यभावश्चानुपनीतस्यसंभवतिउपनीतस्यसमावृत्तस्यचपाणिग्रह-
णात्पूर्वंमृतभार्यस्यवा २१२ अक्रोधेति क्रोधशून्यान्क्षिप्रप्रसादान्प्रसन्नमुखान्प्रवाहानादितयापुरातनान् अग्नौप्रास्ताहुतिरितिन्या-
येनलोकस्यवृद्धयेउपयुक्तान्श्राद्धपात्रभूतान्मन्वादयोवदंतितस्माद्देवतुल्यत्वाच्छ्राद्धब्राह्मणस्यतद्धस्तेदातव्यमितिपूर्वविध्यनुवादः २१३
अपेति अग्नौपर्युक्षणाद्यंगयुक्तंअग्नौकरणहोमानुष्ठानक्रमम् अपसव्यंदक्षिणसंस्थंकृत्वाततोपसव्येनदक्षिणहस्तेनपिंडाधारभूतायां
भुव्युदकंक्षिपेत् २१४ त्रीनिति तस्मादग्न्यादिहोमादुद्धृतादन्नादुद्धृतावशिष्टान्त्रीन्पिंडान्कृत्वा औदकेनैवविधिनादक्षिणहस्तेन

अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेत् योह्यग्निःसद्विजोविप्रैर्मंत्रदर्शिभिरुच्यते २१२ अक्रोध-
नान्सुप्रसादान्वदंत्येतान्पुरातनान् लोकस्याप्यायनेयुक्तान्श्राद्धदेवान्द्विजोत्तमान् २१३ अपसव्य-
मग्नौकृत्वासर्वमावृत्यविक्रमम् अपसव्येनहस्तेननिर्वपेदुदकंभुवि २१४ त्रींस्तुतस्माद्धविःशेषा-
त्पिंडान्कृत्वासमाहितः औदकेनैवविधिनानिर्वपेद्दक्षिणामुखः २१५ न्युप्यपिंडांस्ततस्तांस्तुप्रयतो
विधिपूर्वकम् तेषुदर्भेषुतंहस्तंनिमृज्याल्लेपभागिनाम् २१६ आचम्योदक्परावृत्यत्रिरायम्यशनै-
रसून् षड्ऋतूंश्चनमस्कुर्यात्पितॄनेवचमंत्रवित् २१७

समाहितोऽनन्यमनादक्षिणामुखस्तेषुदर्भेष्वितिनिवपस्यमा-
णत्वाद्दर्भेषुदद्यात् २१५ न्युप्येति विधिपूर्वकंस्वगृह्योक्तविधिनादर्भेषुतान्पिंडान्दत्वादर्भमूलेषुकरावघर्षणमितिविष्णुवचना-
त्तेषुदर्भेषुमूलदेशेहस्तंनिर्लेपंकुर्यात्प्रपितामहपित्रादीनांत्रयाणांलेपभुजांतृप्तये २१६ आचम्येति अनंतरमुपस्पृश्योद-
ङ्मुखोभूत्वायथाशक्तिप्राणायामत्रयंकृत्वावसंतायनमस्तुभ्यमित्यादिनाषड्ऋतून्नमस्कुर्यात्पितॄंश्चनमोवःपितरइत्यादिमंत्रयुक्त-
मङ्गः पर्यावृत्येतिगृह्यदर्शनाद्दक्षिणामुखो नमस्कुर्यात् २१७ उदकमिति पिंडदानात्पूर्वंपिंडाधारदेशदत्तोदकशेषमुदकपात्र-

स्यंप्रतिपिंडसमीपेक्रमेणपुनरुत्सृजेत् तांश्चपिंडान्यथान्युप्तान्येनैवक्रमेणदत्तातेनैवक्रमेणावजिघ्रेत्समाहितोनन्यमनाः २१८ पिंडेभ्यइति अल्पिकेतिअन्नाल्पमात्राअवयवभागाः पिंडेषुउत्पन्नानल्पभागान्पिंडक्रमेणैवगृहीत्वातेनैवपित्रादिब्राह्मणान्भोजनकालेभोजनात्पूर्वंभोजयेत् विधिवत्पिंडानुष्ठानवत्पितरमुद्दिश्ययःपिंडोदत्तस्तदवयवंपितृब्राह्मणंभोजयेत् एवंपितामहप्रपितामहपिंडयोरपि २१९ ध्रियमाणेत्विति ध्रियमाणेजीवतिपितरिमृतानांपितामहादित्रयाणांश्राद्धंकर्त्तव्यम् अथवापितृविप्रस्थानेतमेवस्वपितरंभोजयेत् पितामहप्रपितामहयोश्चब्राह्मणौभोजयेत्पिंडद्वयंचदद्यात् २२० पितेति नामकीर्त्तनमंत्रश्राद्धोपलक्षणार्थं पितृजीवनापेक्षोयंवाशब्दः यस्यपुनःपितामृतस्तस्यपितामहेजीवतिसपितृप्रपितामहयोःश्राद्धंकुर्यात् गोविंदराजस्तुयस्यपितृप्र-

उदकंनिनयेच्छेषंशनैःपिंडांतिकेपुनः अवजिघ्रेच्चतान्पिंडान्यथान्युप्तान्समाहितः २१८ पिंडेभ्यस्त्वल्पिकांमात्रांसमादायानुपूर्वशः तानेवविप्रानासीनान्विधिवत्पूर्वमाशयेत् २१९ ध्रियमाणेतुपितरिपूर्वेषामेवनिर्वपेत् विप्रवद्वापितंश्राद्धेस्वकंपितरमाशयेत् २२० पितायस्यनिवृत्तःस्याज्जीवेच्चापिपितामहः पितुःसनामसंकीर्त्यकीर्त्तयेत्प्रपितामहम् २२१ पितामहोवातच्छ्राद्धंभुंजीतेत्यब्रवीन्मनुः कामंवासमनुज्ञातःस्वयमेवसमाचरेत् २२२ तेषांदत्वातुहस्तेषुसपवित्रंतिलोदकम् तत्पिंडाग्रंप्रयच्छेतस्वधैषामस्त्वितिब्रुवन् २२३ पाणिभ्यांतूपसंगृह्यस्वयमन्नस्यवर्द्धितम् विप्रांतिकेपितॄन्ध्यायन्शनकैरुपनिक्षिपेत् २२४

पितामहौप्रेतौस्यातांसपित्रेपिंडन्निधायपितामहात्परंद्वाभ्यांदद्यात् इतिविष्णुवचनात्प्रपितामहतत्पितृभ्यांदद्यादितिव्याख्यातवान् २२१ पितामहेति यथाजीवत्पिताभोज्यस्तथापितामहोपिपितामहब्राह्मणस्थानेभोज्यःपितृप्रपितामहयोश्चब्राह्मणभोजनंपिंडदानंचकुर्यात् यथावाजीवतापितामहेनत्वमेवयथारुचिकुर्वितिदत्तानुज्ञःस्वरुच्यापितामहंवाभोजयेत्पितृप्रपितामहयोर्वाश्राद्धद्वयंकुर्यादितिविष्णुवचनात्पितृप्रपितामहवृद्धप्रपितामहानांश्राद्धत्रयंकुर्यात् २२२ तेषामिति पिंडेभ्यस्त्वल्पिकामात्रामितियदुक्तंतस्यायंकालविधिःप्रदेयविधिश्चतेषांब्राह्मणानांहस्तेषुसदर्भतिलोदकंदत्वातदितिपूर्वनिर्दिष्टंपिंडाग्रंपित्रेस्वधास्त्वितिएवमादिब्रुवन्पित्रादिब्राह्मणेभ्यस्त्रिभ्यः क्रमेणदद्यात् २२३ पाणिभ्यामिति अन्नस्येतितृतीयार्थेषष्ठी वर्द्धितंपूर्णंपिठरादिपात्रं

स्वयंपाणिभ्यांगृहीत्वापितॄंश्चिंतयन् रसवत्यागारादानीयब्राह्मणानांसमीपेपरिवेषणार्थमत्वरयास्थापयेत् २२४ उभयोरिति अधिकरणसप्तमीयम् उभयोः करयोर्मुक्तमस्थितंयदन्नंब्राह्मणांतिकमानीयतेतदसुराद्दुष्टबुद्धय आछिंदंति तस्मान्नैकहस्तेनानीयपरिवेष्टव्यम् २२५ गुणानिति गुणान्व्यंजनानि अन्नापेक्षया अप्राधान्यात्गुणयुक्तान्वासूपशाकाद्यान्प्रयतः शनैः समाहितः अनन्यमना. सम्यक्पथानविशीर्येततथाभूमावेवस्वपात्रस्थानेस्थापयेन्नदारुफलकादौ २२६ भक्ष्यमिति भक्ष्यंखरविशदमप्यवहरणीयंमोदकादि भोज्यंपायसादि नानाप्रकारफलमूलानिहृदयस्यप्रियाणिमांसानिपानानिसुगंधीनिभूमावेवविन्यसेदिति पूर्वेणसंबंध. २२७ उपेति एतत्सर्वमन्नादिकंब्राह्मणसमीपमानीयप्रयतः शनैः अनन्यमनाः क्रमेणपरिवेषयेत् इदंमधुरमिदमम्ल

उभयोर्हस्तयोर्मुक्तंयदन्नमुपनीयते तद्विप्रलुंपंत्यसुराःसहसादुष्टचेतसः २२५ गुणांश्चसूपशाकाद्यान्पयोदधिघृतंमधु विन्यसेत्प्रयतःपूर्वंभूमावेवसमाहितः २२६ भक्ष्यंभोज्यंचविविधंमूलानिचफलानिच हृद्यानिचैवमांसानिपानानिसुरभीणिच २२७ उपनीयतुतत्सर्वंशनकैःसुसमाहितः परिवेषयेतप्रयतोगुणान्सर्वान्प्रचोदयन् २२८ नास्रमापातयेज्जातुनकुप्येन्नानृतंवदेत् नपादेनस्पृशेदन्नंनचैतदवधूनयेत् २२९ अस्रंगमयतिप्रेतान्कोपोरीननृतंशुनः पादस्पर्शस्तुरक्षांसिदुष्कृतीनवधूननम् २३० यद्यद्रोचेतविप्रेभ्यस्तत्तद्दद्यादमत्सरः ब्रह्मोद्याश्चकथाःकुर्यात्पितॄणामेतदीप्सितम् २३१

मित्येवंमाधुर्यादिगुणान्कथयन् २२८ नास्रमिति रोदनक्रोधमृषाभाषणानिनकुर्यात् पादेनचान्नंनस्पृशेत् नचोत्क्षिप्योत्क्षिप्यान्नंपात्रेक्षिपेत् पुरुषार्थतयाप्रतिषिद्धयोरपिक्रोधानृतयोः श्राद्धांगत्वज्ञापनार्थोयन्निषेधः २२९ अस्रमिति अश्रुक्रियमाणमेतान्प्रेतवेषान्श्राद्धान्नानिप्रापयतिनपितॄणामुपकारकंभवति क्रोधः शत्रून्मृषावादःकुक्कुरान्पादस्पर्शोन्नस्यराक्षसान् अवधूननंपापकारिणःतस्मान्नरोदनादिकुर्यात् २३० यदिति यद्यद्विप्राणामीप्सितंअन्नव्यंजनादितत्तदमत्सरोदद्यात् परमात्मनिरूपणपराःकथाश्चकुर्यात् यतःपितॄणामेतदपेक्षितम् २३१ ७ ७ ७

स्वाध्यायमिति स्वाध्यायंवेदंमानवादीनिधर्मशास्त्राणिआख्यानानिसौपर्णमैत्रावरुणादीनिइतिहासान्महाभारतादीन्पुराणानिब्रह्मपुराणादीनिखिलानिश्रीसूक्तशिवसंकल्पादीनिश्राद्धेब्राह्मणान्श्रावयेत् २३२ हर्षयेदिति स्वयंहृष्टोभूत्वाप्रियवचनादिभिर्ब्राह्मणान्परितोषयेत् अन्नंचासंरुयाभोजयेत्मिष्टान्नेनपायसादिभिः पायसमिदंस्वादु दिगुणाभिधानैःपुनर्ब्राह्मणान्प्रेरयेत् २३३ व्रतेति ब्रह्मचारिणमपिदौहित्रंश्राद्धेप्रयत्नतोभोजयेत् अपिशब्दादब्रह्मचारिणमपिआनुकल्पिकमध्यपठितस्यापिब्रह्मचारिणोयत्नवचनाच्छ्रेष्ठत्वंकथयति नेपालकंबलंचासनेदद्यात्दौहित्रमंतरेणापि तिलांश्चश्राद्धभूमौविकिरेत् २३४ त्रीणीति पूर्वोक्तान्येवत्रीणिदौहित्रादीनिश्राद्धेपवित्राणीतिज्ञाप्यंते त्रीणि

स्वाध्यायंश्रावयेत्पित्र्येधर्मशास्त्राणिचैवहि आख्यानानीतिहासांश्चपुराणानिखिलानिच २३२
हर्षयेद्ब्राह्मणांस्तुष्टोभोजयेच्चशनैःशनैः अन्नाद्येनासकृच्चैतान्गुणैश्चपरिचोदयेत् २३३ व्रतस्थमपिदौहित्रंश्राद्धेयत्नेनभोजयेत् कुतपंचासनंदद्यात्तिलैश्चविकिरेन्महीम् २३४ त्रीणिश्राद्धेपवित्राणिदौहित्रःकुतपस्तिलाः त्रीणिचात्रप्रशंसंतिशौचमक्रोधमत्वराम् २३५ अत्युष्णंसर्वमन्नंस्याद्भुंजीरंस्तेचवाग्यताः नचद्विजातयोब्रूयुर्दात्रापृष्टाहविर्गुणान् २३६ यावदुष्णंभवत्यन्नंयावदश्नंतिवाग्यताः पितरस्तावदश्नंतियावन्नोक्ताहविर्गुणाः २३७ यद्वेष्टितशिराभुंक्तेयद्भुंक्तेदक्षिणामुखः सोपानत्कश्चयद्भुंक्तेतद्वैरक्षांसिभुंजते २३८

दीनिप्रशंसंति २३५ अत्युष्णमिति उष्णमेवात्युष्णंयस्योष्णस्यान्नभोजनसुखितंतदुष्णंदद्यान्नतुफलाद्यपि अतएवशंखः उष्णमन्नंद्विजातिभ्यःश्रद्धयाविनिवेदयेत् अन्यत्रफलमूलेभ्यःपा कें भ्यश्चपंडितः संयतवाचश्चब्राह्मणाअश्नीयुः किमिदंस्वादुस्वादुवेतिदात्राअन्नादिगुणान्पृष्टाअल्पाद्यभिनयेनापिनब्रूयुःश्राद्धकृयतस्यात्रैवविधानात् २३६ यावदिति यावदन्नेउष्णताभवतियावच्चमौनिनोभुंजतेयावच्चहविर्गुणानोच्यंतेतावत्पितरोऽश्नंतीतिपूर्वोक्तस्यैवार्थस्यप्रशंसा २३७ यदिति वस्त्रादिनावेष्टितशिरायदन्नंभुंक्तेतथादक्षिणामुखःसपादुकश्चतत्तद्राक्षसाभ्यं

तेनपितरस्तस्मादेवंरूपंनकर्त्तव्यम् २३८ चांडालइति चांडालग्राम्यसूकरकुक्कुटकुक्कुरोदक्यानपुंसकायथाब्राह्मणान्भोजनं
कालेनपश्येयुस्तथाकार्यम् २३९ होमइति यस्मात्होमेऽग्निहोत्रादौप्रदानेगोहिरण्यादौभोज्येस्वाभ्युदयार्थब्राह्मणभोजनेदै
वेहविषिदर्शपौर्णमासादौपित्र्येश्राद्धादौयदेभिर्वीक्ष्यतेक्रियमाणंकर्मतत्यदर्थंक्रियतेतन्नसाधयति २४० घ्राणेनेति सूकरस्त
दन्नादेर्गंधंघ्रात्वाकर्मनिःफलंकरोति तस्मादन्नघ्राणयोग्यदेशात्निरसनीयः कुक्कुटःपक्षवातेनसोपिपक्षपवनयोग्यदेशादप
गमनीयः श्वादर्शनेन श्वनोन्नादिदर्शनंनिषिद्धमतिदोषभूयस्त्वज्ञापनार्थंपुनरभिहितम् अथवादृष्टिनिपातेनेतिश्राद्धकर्त्तृ
र्भोक्तृणांदृष्टिनिपातविषयत्वेन अवरवर्णःशूद्रस्तस्माज्जातोऽवरवर्णजःशूद्रएव असावन्नादिस्पर्शेनद्विजातिश्राद्धंनिष्फलय
ति २४१ खंजोवेति यद्गतिविकलः काणोवादातुर्दासस्यैवप्रेष्यत्वविधानात् अपिशब्दादन्योपिशूद्रोन्यूनाधिकांगुल्यादि

चांडालश्चवराहश्चकुक्कुटःश्वातथैवच रजस्वलाचषंढश्चनेक्षेरन्नश्नतोद्विजान् २३९ होमेप्रदा
नेभोज्येचयदेभिरभिवीक्ष्यते दैवेकर्मणिपित्र्येवातद्गच्छत्ययथातथम् २४० घ्राणेनसूकरोहंति
पक्षवातेनकुक्कुटः श्वातुदृष्टिनिपातेनस्पर्शेनावरवर्णजः २४१ खंजोवायदिवाकाणोदातुःप्रेष्यो
पिवाभवेत् हीनातिरिक्तगात्रोवातमप्यपनयेत्पुनः २४२ ब्राह्मणंभिक्षुकंवापिभोजनार्थमु
पस्थितम् ब्राह्मणैरभ्यनुज्ञातःशक्तितःप्रतिपूजयेत् २४३ सार्ववर्णिकमन्नाद्यंसन्नीयाप्लाव्य
वारिणा समुत्सृजेद्भुक्तवतामग्रतोविकिरन्भुवि २४४ असंस्कृतप्रमीतानांत्यागिनांकुलयोषि
ताम् उच्छिष्टभागधेयंस्याद्दर्भेषुविकिरश्चयः २४५ र्वस्यात्तदातमपिततःश्राद्धदेशादपसारयेत् २४२ ब्राह्मे
ति ब्राह्मणमतिथिरूपंअन्यंवाभक्षणशीलंभोजनार्थंतत्कालोपस्थितंश्राद्धपात्रब्राह्मणैरनुज्ञातोयथाशक्त्यन्नभोजनेनभि
क्षादानेनवार्हयेत् २४३ सार्वेति वर्णशब्दःप्रकारवाची सर्वप्रकारकमन्नादिकंव्यंजनादिभिरेकीकृत्यउदकेनाप्लावयित्वाकृ
तभोजनानांब्राह्मणानांपुरतोभूमौदर्भेषुविकिरश्चयइतिवक्ष्यमाणत्वाद्दर्भोपरिनिक्षिपेत्त्यजेत् २४४ असंस्कृतेति नास्यकृ
तोग्निसंस्कारइतिनिषेधात्संस्कारानर्हबालानांतथाकुलस्त्रीणांअदृष्टदोषाणांयेत्यक्तारस्तेषांपात्रस्थमुच्छिष्टंदर्भेषुचयो

निकिरः सभागः स्यात् अन्येतु त्यागिनामिति गुर्वादित्यागिनां कुलयोषितामिति स्वातंत्र्येण तु कुलयोषितामनूढकन्यानामिति व्याचक्षते गोविंदराजस्तु त्यागिनां कुलयोषितामिति सामान्योपक्रमादिदं विशेषाभिधानं संस्कृतं भक्ताइतिवक्ततः गतानां कुलस्त्रीणामित्याह २४५ उच्छेषणमिति उच्छिष्टं यद्भूमिगतं तद्दाससमूहस्यावक्रस्यानलसस्याकुटिलस्यच पित्र्येश्राद्धकर्मणि भागधेयं मन्वादयो वदंति २४६ आसपिंडेति मर्यादायोमाङ्नाभिविधौ सपिंडीकरणश्राद्धपर्यंतमचिरमृतस्य द्विजाते श्ववैश्वदेवब्राह्मणभोजनरहितं श्राद्धार्थमन्नं ब्राह्मणं भोजयेत् एकंचपिंडं दद्यात् अस्यच श्राद्धानुष्ठानम् एकोद्दिष्टं देवहीनमेकार्घैकपवित्रकम् आवाहनाग्नौकरणरहितं ह्यपसव्यवदिति याज्ञवल्क्यादिस्मृतिष्ववगंतव्यम् २४७ सहेति अस्येतिय स्येदमेकोद्दिष्टं विहितं तस्य धर्मतः स्वगृह्यादिविधिना सपिंडीकरणश्राद्धे कृते अनयैवावृता उक्तामावास्याश्राद्धेतिकर्तव्यतयापिं

उच्छेषणं भूमिगतमजिह्मस्याशठस्य च। दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते २४६ आसपिंडक्रियाकर्म द्विजातेः संस्थितस्य तु। अदैवं भोजयेच्छ्राद्धं पिंडमेकं तु निर्वपेत्. २४७ सहपिंडक्रियायां तु कृतायामस्य धर्मतः। अनयैवावृता कार्यं पिंडनिर्वपनं सुतैः २४८ श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति। स मूढो नरकं याति कालसूत्रमवाक्शिराः २४९ श्राद्धभुग्वृषलीतल्पं तदहर्योऽधिगच्छति। तस्याः पुरीषे तन्मासं पितरस्तस्य शेरते २५०

डनिर्वपनं पार्वणविधिना श्राद्धं पुत्रैः सर्वत्र मृताहादौ कर्त्तव्यम् नन्वनयैवावृता इत्यनेन प्रकृतमेकोद्दिष्टमेव हि किमिति न परामृश्यते उच्यते तर्हि सपिंडीकरणात् पूर्वमेकोद्दिष्टं सपिंडीकरणे कृते पुनः अनयैवावृता इति भेदनिर्देशो न स्यात् ततोऽमावास्येतिकर्त्तव्यतैव प्रतीयते २४८ श्राद्धमिति आश्रितशूद्राय उच्छिष्टदानप्रसक्तावयं निषेधः श्राद्धभोजनोच्छिष्टं यः शूद्राय ददाति स मूर्खः कालसूत्रं नाम नरकमधोमुखं गच्छति २४९ श्राद्धेति वृषलीशब्दोत्र स्त्रीपर इत्याहुः निरुक्तं च कुर्वंति वृषस्यंती चपलयति भर्त्तारमिति वृषली ब्राह्मणस्य परिणीता ब्राह्मण्यपि वृषलीति श्राद्धं भुक्त्वा तदहोरात्रे यः स्त्रीसंप्रयोगं करोति तस्य पितरस्तस्याः पुरीषे मासं शेरत इति निःसृत्यर्थानिंदा २५० · ५ ५ ५

पृष्ट्वेति तृप्तान्ब्राह्मणान् बुध्वास्वदितमिति पृष्ट्वा तेषामाचमनंकारयेत् कृताचमनांश्च भो इति संबोध्य अभिरम्यतामिति ब्रूया न् अभितइतिपाठे अभितउभयतइह वास्वगृहे वास्यतामित्यर्थः २५१ स्वधेति अनुज्ञानानंतरं ब्राह्मणाः श्राद्धकर्त्तारं स्वधास्त्विइ तिब्रूयुः यस्मात्सर्वेषु श्राद्धतर्पणादिपितृकर्मसु स्वधाशब्दोच्चारणं प्रकृष्टा आशीः २५२ ततइति स्वधाशब्दोच्चारणानंतरं कृतभो जनानां ब्राह्मणानां शेषमन्नमभ्यर्च्य तत्रावशिष्टमन्नं निवेदयेत् तैर्ब्राह्मणैरिदमनेनान्नेन क्रियतामित्यनुज्ञातो यथा ते ब्रूयुः तथा न्नशेषविनियोगं कुर्यात् २५३ इदानीं प्रसंगाच्छ्राद्धांतरेषु विशेषविधिमाह पित्र्येइति पित्र्ये निरपेक्षपितृमातृदेवताके एकोद्दिष्ट श्राद्धे तृप्तिप्रश्नार्थं स्वदितमिति वाच्यम् तथा च गोभिलसांख्यायनौ स्वदितमिति तृप्तिप्रश्नः मेधातिथिगोविंदराजौ तु श्राद्धकालाग

पृष्ट्वा स्वदितमित्येवं तृप्तानाचामयेत्ततः आचांतांश्चानुजानीयादभितो रम्यतामिति २५१ स्वधास्त्वि त्येवतं ब्रूयुर्ब्राह्मणास्तदनंतरम् स्वधाकारः परा ह्याशीः सर्वेषु पितृकर्मसु २५२ ततो भुक्तवतां तेषाम न्नशेषं निवेदयेत् यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्ततो द्विजैः २५३ पित्र्ये स्वदितमित्येव वाच्यं गोष्ठेतु सु श्रुतम् संपन्नमित्यभ्युदये दैवे रुचितमित्यपि २५४ अपराह्णस्तथा दर्भा वास्तुसंपादनं तिलाः सृ ष्टिर्मूर्तिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु संपदः २५५ दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसंपदः २५६

तेनान्येनापि स्वदितमित्येव कर्त्तव्यमिति व्याचक्षतुः श्राद्धे स्वदितमित्येतद्वाच्यमन्येन केन चिन् नानुरुद्धमिदं विद्वद्भिर्नश्रद्धीमहि गोष्ठे गोष्ठश्राद्धे सुश्रुतमिति वाच्यं गोष्ठ्यां शुद्ध्यर्थमष्टममिति द्वादशविधश्राद्धगणना यां गोष्ठीश्राद्धमिति विश्वामित्रेण पठितम् अभ्युदये वृद्धिश्राद्धे संपन्नमिति वाच्यम् दैवे देवतोद्देशेन श्राद्धे रुचितमिति वचनीयम् दै वश्राद्धं तु भविष्यपुराणोक्तम् देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः २५४ अपराह्णइति अमावास्याश्राद्धस्य मुख्यत्वात्तद्विषयोयमपराह्णकालः प्रातर्वृद्धिनिमित्तकमित्यादिना वृद्धिश्राद्धादौ स्मृत्यंतरे प्रातः कालादिविधा नात् विष्टरार्थं दर्भाः गोमयादिना श्राद्धदेशसंशोधनम् तिलाश्च विकिरणाद्यर्थाः सृष्टिरकार्पण्येनान्नादिविसर्गः सृष्टिरन्नादेश्च

संस्कारविशेषः पंक्तिपावनादयश्च ब्राह्मणाः एताः श्राद्धेसंपत्तयइत्यभिधानादंगांतरापेक्षंप्रकृष्टंफलमेषांबोधितम् २५५ दर्भाइति पवित्रंमंत्रा. पूर्वाण्हः कालः हविष्याणिमुन्यन्नादीनिसर्वाणिचयत्त्वपवित्रंपावनंवास्तकसंपादनादिपूर्वमुक्तम् एता श्चदेवार्थस्यकर्मणःसमृद्धयः हव्यशब्दोदैवकर्मोपलक्षणार्थः २५६ मुन्यन्नानीति मुनेर्वानप्रस्थस्यान्नानिनीवारादीनिपयः क्षीरंसोमलतारसः अनुपस्कृतमविकृतंपूतिगंधादिरहितंमांसम् अक्षारलवणमकृत्रिमलवणंसैंधवादिएतत्स्वभावतो मन्वादिभिरभिधीयते २५७ विसृज्येति तान्ब्राह्मणान्विसृज्यानन्यमनाः मौनीपवित्रोदी णां दिशांवीक्ष्यमाणएता णान् अभिलषितानर्थान्पितॄन्प्रार्थयेत् २५८ दातारइति अस्मत्कुलेदातारःसु धनदर्शयागाद्यनुष्ठानैर्वृद्धिमाप्नुवंतु पुत्रपौत्रादिकंचवर्द्धताम् वेदार्थश्रद्धाचास्मत्कुलेनव्यपैतु दातव्यंचधनादिकंबहुभवतु

मुन्यन्नानिपयःसोमोमांसंयच्चानुपस्कृतम् अक्षारलवणंचैवप्रकृत्याहविरुच्यते २५७ विसृज्य ब्राह्मणांस्तांस्तुनियतोवाग्यतःशुचिः दक्षिणांदिशमाकांक्षन्याचेतेमान्वरान्पितॄन् २५८ दातारोनोभिवर्द्धंतांवेदाःसंततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्त्विति २५९ एवंनिर्वपणंकृत्वा पिंडांस्तांस्तदनंतरम् गांविप्रमजमग्निंवाप्राशयेदप्सुवाक्षिपेत् २६० पिंडनिर्वपणंकेचित्पुरस्तादेवकुर्वते वयोभिःखादयंत्यन्येप्रक्षिपंत्यनलेप्सुवा २६१ पतिव्रताधर्मपत्नीपितृपूजनतत्परा मध्यमंतुततःपिंडमद्यात्सम्यक्सुतार्थिनी २६२

२५९ एवमुक्तप्रकारेणपिंडानांप्रदानंकृत्वाप्रकृतवरयाचना नंतरंतान्पिंडान्गांब्राह्मणंछागंवाभोजयेत् अग्नौजलेवाक्षिपेत् २६० पिंडेति पिंडप्रदानंकेचिदाचार्याः नानंतरंकुर्वते अन्येपक्षिभिःपिंडान्खादयंति इयंचपक्षिभोजनरूपाप्रतिपत्तिरग्न्युदकप्रक्षेपयोर्वैकल्पिकीतिद्व मुक्तयोरप्यभिधानम् २६१ पतिव्रतेति धर्मार्थकामेषुमनोवाक्कायकर्मभिःपतिरेवमयापरिचरणीयइतिव्रतंयस्याःसा पतिव्रताधर्मपत्नीसवर्णाप्रथमोढाश्राद्धक्रियाणांश्रद्धाशालिनीपुत्रार्थिनीतेषांपिंडानांमध्यमंपितामहपिंडंभक्षयेत् सम्य गाधत्तपितरोगर्भमित्यादिगृह्योक्तमंत्रेण २६२ आयुष्मंतमिति तेनपिंडभक्षणेनदीर्घायुषंकीर्तिधारणात्मकबुद्धियु

कं धनपुत्रादिसंततिधर्मानुशासनसत्वाख्यगुणान्वितं पुत्रं जनयति २६३ प्रक्षाल्येति तदनु हस्तौ प्रक्षाल्य ज्ञातिप्रायमन्नं कुर्यात् ज्ञातीन्प्रैतिगच्छतीति ज्ञातिप्रायम् कर्मण्यम् ज्ञातीन्भोजयेदित्यर्थः तेभ्यः पूजापूर्वकमन्नं दत्वा मातृपक्षानपि सार्हणं भोजयेत् २६४ उच्छेषणमिति तद्ब्राह्मणोच्छिष्टं तावत्कालं तिष्ठेत् यावत् ब्राह्मणानां विसर्जनं ब्राह्मणेषु तु निर्गतेषु मार्ष्टव्यमित्यर्थः ततः संपन्ने श्राद्धकर्मणि वैश्वदेव बलिहोमकर्म नित्यश्राद्धातिथिभोजनानि कर्त्तव्यानि बलिशब्दस्य प्रदर्शनार्थत्वात् अतएव मत्स्यपुराणे निवृत्य प्रतिपत्त्यर्थं पर्युक्ष्याग्निं च मंत्रवित् वैश्वदेवं प्रकुर्वीत नैत्यकं विधिमेव चेति २६५ पैत्र्यान्नैरिति पूर्वमुक्तमपि व्यवधानाद्बुद्धिस्थं शिष्यस्य प्रतिपत्तये पुनर्वक्तव्यं तथा प्रतिजानीते हविरिति चिररात्राय पदमव्ययं चिरकालवाचि अतएव चिराय चिररात्राय चिरस्याद्याश्चिरा-

आयुष्मंतं सुतं सूते यशोमेधासमन्वितम् धनवंतं प्रजावंतं सात्विकं धार्मिकं तथा २६३ प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् ज्ञातिभ्यः सत्कृतं दत्वा बांधवानपि भोजयेत् २६४ उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः २६५ हविर्यच्चिररात्राय यच्चानंत्याय कल्प्यते पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः २६६ तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा दत्तेन मासं तृप्यंति विधिवत्पितरो नृणाम् २६७ द्वौ मासौ मत्स्यमांसेन त्रीन्मासान्हारिणेन तु औरभ्रेणाथ चतुरः शाकुनेनाथ पंच वै २६८ षण्मासांश्छागमांसेन पार्षतेन च सप्त वै अष्टावेणस्य मांसेन रौरवेण नवैव तु २६९

र्थकाद्याभिधानिकाः यद्यत् हविः पितृभ्यो यथाविधि दत्तं चिरकालतृप्तये अनंततृप्तये च संपद्यते तन्निःशेषेणाभिधास्यामि २६६ तिलैरिति तिलधान्ययवमाषजलमूलफलानामन्यतमेन यथाशास्त्रं श्रद्धया दत्तेन मनुष्याणां मासं पितरस्तृप्यंति कृष्णा माषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः इति वायुपुराणवचनान्माषैरिति कृष्णमाषा बोद्धव्याः २६७ द्वाविति पाठीनादिमत्स्यानां मांसेन द्वौ मासौ पितरः प्रीयंत इति पूर्वेण संबंधः त्रीन्मासान् हारिणेन मांसेन चतुरो मेषमांसेन पंच द्विजातिभक्ष्यपक्षिमांसेन २६८ षण्मासानिति षण्मासान् छागमांसेन प्रीयंते पृषतश्चित्रमृगस्तन्मांसेन सप्त एणमांसेनाष्टौ रुरुमांसेन नव ए

णरुरूर्हरिणजातिविशेषौ २६९ दशेति दशमासानारण्यसूकरमहिषमांसैस्तृप्यंति एकादशशशकच्छपमांसेन २७० संव त्सरमिति गव्यंपुनर्गोपयःक्षीरेणतत्साधितोदनेनचतुष्यंतितत्रैवपायसशब्दप्रसिद्धेः वार्ध्रीणसस्यमांसेनद्वादशवर्षपर्यंतंपितॄ तृप्तिर्भवति वार्ध्रीणसश्चनिगमेव्याख्यातः त्रिपिबंत्विंद्रियक्षीणंश्वेतंवृद्धमजापतिम् वार्ध्रीणसंतुतंप्राहुर्याज्ञिकाःपितृकर्मणि नद्यादौपयःपिबतोपस्यत्रीणिजलंस्पृशंतिकर्णौजिव्हाचत्रिभिःपिबतीतित्रिपिबः २७१ कालेति कालशाकाख्यंशाकंमहाश- ल्काःसशल्कादृतिमेधातिथिः मत्स्यविशेषाइतियुज्यंतेमहाशल्कलिनोमत्स्याइतिवचनात् खड्गोगंडकःलोहोलोहितवर्णःछागए व सर्वलोहेनानंत्यमितिपैठीनसिवचनात्तयोरामिषंमधुमाक्षिकंमुन्यन्नानिनीवारादीनिआरण्यानिसर्वाणिएतान्यनंततृप्तयेसंप द्यंते २७२ यदिति ऋतुनक्षत्रतिथिनामयंसमुच्चयः यत्किंचिदित्यप्रसिद्धम् मधुसंयुक्तंवर्षाकालेमघात्रयोदश्यांदीयतेतदप्य

दशमासांस्तुतृप्यंतिवराहमहिषामिषैः शशकूर्मयोस्तुमांसेनमासानेकादशैवतु २७० संवत्सरंतुग व्येनपयसापायसेनच वार्ध्रीणसस्यमांसेनतृप्तिर्द्वादशवार्षिकी २७१ कालशाकंमहाशल्काःखड्ग लोहामिषंमधु आनंत्यायैवकल्प्यंतेमुन्यन्नानिचसर्वशः २७२ यत्किंचिन्मधुनामिश्रंप्रदद्यात्तुत्र योदशीम् तदप्यक्षयमेवस्याद्वर्षासुचमघासुच २७३ अपिनःसकुलेजायाद्योनोदद्यात्त्रयोदशीं पायसंमधुसर्पिर्भ्यांप्राक्छायेकुंजरस्यच २७४

क्षयमेवभवति त्रयोदश्याअधिकरणत्वेपीप्सितत्वविवक्षया प्राप्येत्यध्याहाराद्वाद्वितीया २७३ अपीति वर्षासुमघासुचत्रयोदशीपूर्वोक्ताविवक्षिता तत्रापिप्रोष्ठपद्यामतीतायांमघासु त्रयोदशीम् प्राप्यश्राद्धंहिकर्तव्यंमधुनापायसेनचेतिशंखवचनात् भाद्रकृष्णत्रयोदशीपूर्वत्रेहचगृह्यते पितरःकिलैवमाशा तेअपिनामतथाविधःकश्चिदस्माकंकुलेभूयात् योअस्मभ्यंप्रकृतायांत्रयोदश्यांतथाविध्यंतरेपिहस्तिनःपूर्वादिशंगतायांछाया यांमधुघृतसंयुक्तंपायसंदद्यात् नतुत्रयोदशीहस्तिच्छाययोःसमुच्चयः यथाहविष्णुः अपिजायेतसोऽस्माकंकुलेकश्चिन्नरोत्तमः प्रावृ- ट्कालेसितपक्षेत्रयोदश्यांसमाहितः मधुप्लुतेनयःश्राद्धंपायसेनसमाचरेत् कार्त्तिकंसकलंवापिप्राक्छायेकुंजरस्यच २७४

यदीति यद्यदिति वीप्सायां सर्वमन्नमप्रतिषिद्धं यथाशास्त्रं सम्यगूपश्रद्धायुक्तः पितृभ्यो ददाति तदनंतकं सर्वकालमक्षयमनपचितं परलोके पितॄन् तृप्तये भवति अनस्तत्फलार्थिना श्रद्धया देयमिति विधीयते २७५ कृष्णेति कृष्णपक्षे दशमीमारभ्य चतुर्दशीन्य-का श्राद्धे यथा तिथयः श्रेष्ठमहाफला न तथैतदन्याः प्रतिपदादयः २७६ युक्ष्विति दिनशब्दोऽत्र तिथिपरः युक्षु युग्मासु तिथिषु द्वितीयाचतुर्थ्यादिषु युग्मनक्षत्रेषु भरणीरोहिण्यादिषु श्राद्धं कुर्वन् सर्वाभिलषितान्प्राप्नोति अयुग्मासु तिथिषु प्रतिपत्तृतीयाप्रभृतिषु अयुग्मेषु च नक्षत्रेषु अश्विनीकृत्तिकादिषु श्राद्धेन पितॄन्पूजयन्पुत्रादिसंततिं लभते पुष्कलां धनविद्यापरिपुष्टाम् २७७ यथेति चै-त्रसिताद्या मासा इति ज्योतिःशास्त्रविधानात् शुक्लपक्षोपक्रमत्वान्मासानां अपरः पक्षः कृष्णपक्षः स यथा शुक्लपक्षात् श्राद्धस्य संबंधी वि-

यद्यद्ददाति विधिवत्सम्यक्श्रद्धासमन्वितः तत्तत्पितॄणां भवति परत्रानंतमक्षयम् २७५ कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः २७६ युक्षु कुर्वन्दिनर्क्षेषु सर्वान्कामान्समश्नुते अयुक्षु तु पितॄन्सर्वान्प्रजां प्राप्नोति पुष्कलाम् २७७ यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते २७८ प्राचीनावीतिना सम्यगपसव्यमतंद्रिणा पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना २७९ रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते २८०

शिष्टफलदो भवति एवं पूर्वार्द्धदिवसादुत्तरार्द्धदिवसः प्रकृष्टफलो विशिष्यत इति वच-नात् पूर्वाह्णेपि श्राद्धकर्तव्यतां बोधयति ननु शुक्लपक्षादनुक्तोत्कर्षस्यापरपक्षस्य कथं दृष्टांतता प्रसिद्धो हि दृष्टांतो भवति उच्यते कृष्णप-क्षे दशम्यादावित्यत्रैव विशिष्टविधानोत्कर्षाभिधानात् २७८ प्राचीति दक्षिणसंस्थितयज्ञोपवीतेनानलसेन दर्भहस्तेन अपसव्यं पितृ-तीर्थेन यथाशास्त्रं सर्वं पितृसंबंधि कर्म आनिधनादासमाप्तेः कर्तव्यम् आनिधनाद्यावज्जीवमिति मेधातिथिगोविंदराजौ २७९ रात्राविति रात्रौ श्राद्धं न कर्तव्यम् यस्माच्छ्राद्धविनाशनगुणयोगात् राक्षसी सन्त्वादिभिरसौ कथिता संध्ययोश्च न कुर्यात् आदित्ये चाचिरोदिते अचिरोदितादित्यकालस्यापेक्षायां त्रिमुहूर्तः प्रातःकालो ग्राह्यः यथोक्तं विष्णुपुराणे रेखाप्रभृत्यथादित्ये त्रिमुहूर्तगते रवौ प्रातःस्ततः स्मृतः कालो भागः सोऽह्नस्तु पंचमः अपराह्णस्य श्राद्धांगतया विधानात् कथमयमप्रसक्तप्रतिषेध इति चेत् नायं प्रतिषेधः स हि रागप्रा-

सस्यवास्यात् विधिप्राप्तस्यवा नायः नात्रागतोनित्यस्यदर्शश्राद्धस्यप्राप्तत्वात् विधिप्राप्तस्यनिषेधे षोडशिग्रहणाग्रहणवत् विकल्पः
तत्स्मात्पर्युदासोयम् रात्र्यादिपर्युदस्तेनरकालेश्राद्धंकुर्यात् अनुयाजेतरयजतिषुयेयजामहइतिमंत्रवत् अपराण्हविधिश्चप्राशस्त्य
र्थः अतएवोक्तम् यथाश्राद्धस्यपूर्वाण्हादपराण्होविशिष्यतइति २८० अनेनेति कुर्यान्मासानुमासिकमितिप्रतिमासंश्राद्धंविहितंत
दसंभवेविधिरयंत्रतुभिर्मासैर्ऋतुरेकः एकस्तत्रतुःसंवत्सरइतीमंपक्षमाश्रित्योच्यते अनेनोक्तविधानेनसंवत्सरमध्येत्रीन्वारान्हे
मंतग्रीष्मवर्षासुश्राद्धंकर्त्तव्यम् तच्चसमयाचारात्कुंभवृषकन्यास्थेर्केपंचमहायज्ञांतर्गतंचएकमप्याशयेद्विप्रमित्यनेनविहितंप्रत्यहंतु
कुर्यादितिपूर्वोक्तादार्थम् २८१ नपैत्रिति अग्नेःसोमयमाभ्यांचेत्यनेनविहितपितृयज्ञांगभूतोहोमोनलौकिकेश्रौतस्मार्त्तव्यतिरि
क्ताग्नौशास्त्रेणविधीयते तस्मान्नलौकिकाग्नावग्नौकरणहोमःकर्त्तव्यः निरग्निनांतु अग्न्यभावेतुविप्रस्यपाणावित्यभिधानात् विप्र

अनेनविधिनाश्राद्धंत्रिरब्दस्येहनिर्वपेत् हेमंतग्रीष्मवर्षासुपांचयज्ञिकमन्वहम् २८१ नपैतृयाज्ञि
योहोमोलौकिकेग्नौविधीयते नदर्शेनविनाश्राद्धमाहिताग्नेर्द्विजन्मनः २८२ यदेवतर्पयत्यद्भिःपितृन्स्ना
त्वाद्विजोत्तमः तेनैवकृत्स्नमाप्नोतिपितृयज्ञक्रियाफलम् २८३ वसून्वदंतितुपितृन्रुद्रांश्चैवपितामहा
न् प्रपितामहांस्तथादित्यान् श्रुतिरेषासनातनी २८४ विघसाशीभवेन्नित्यंनित्यंवामृतभोजनः वि
घसोभुक्तशेषंतुयज्ञशेषंतथामृतम् २८५

पाण्यादौकरणीयः आहिताग्नेर्द्विजस्यनामावास्याव्यतिरेकेणकृष्णा
पक्षेदशम्यादौश्राद्धंविधीयते मृताहश्राद्धंतुनियतत्वात्कृष्णापक्षेपितिथ्यंतरेननिषिध्यते २८२ यदिति पांचयज्ञिकश्रा
यम् यत्रस्नानानंतरमुदकतर्पणंद्विजःकरोतितेनैवसर्वनित्यश्राद्धफलंप्राप्नोति द्विजोत्तमपदंद्विजपरम् २८३ वसूनिति यस्मात्पित्राद
योवस्वादयइत्येषामनादिभूताश्रुतिरस्तिअतःपितृन्वस्वाख्यदेवान्पितामहान्रुद्रान्प्रपितामहानादित्यान्मन्वादयोवदंतिततश्चप्रसि
द्धबोधनवैयर्थ्यात्श्राद्धेपित्रादयोवस्वादिरूपेणध्येयाइतिविधिःकल्प्यते अतएवपैठीनसिःयएवंविद्वान्पितृन्यजतेवसवोरुद्राआ
दित्याश्चास्यप्रीताभवंति मेधातिथिगोविंदराजौतु पितृद्वेषान्नास्तिक्याद्वायःपितृकर्मणिनप्रवर्त्ततेतंप्रत्येतत्प्रवर्त्तनार्थंदेवतात्वाध्या
रोपेणपितृणांस्तुतिवचनम् २८४ विघसाशीति सर्वदाविघसभोजनःस्यात्सर्वदाचामृतभोजनोभवेत् विघसामृतपदयोरप्र

द्रव्यमाकुरुते विप्रादिभक्तशेषं विघसउच्यते दर्शपौर्णमासादियज्ञशिष्टंपुरोडाशाद्यमृतंसामान्याभिधानेपिप्रकृतत्वात्श्राद्धेवि
द्रव्यंवाकुरुते विप्रादिभक्तशेषंविघसउच्यते दर्शपौर्णमासादियज्ञशिष्टंपुरोडाशाद्यमृतंसामान्याभिधानेपि प्रकृतत्वात् अतिथ्यादिविशेषभोजनंत्ववशि
ष्टभक्तशेषभोजनार्थोयंविधिः अतएवभुंजीतातिथिसंयुक्तःसर्वंपितृनिषेवितमितिस्मृत्यंतरम् अतिथ्यादिविशेषभोजनं
ष्टंतुदंपतीइत्यनेनैवविहितंतस्यैवयज्ञशेषतुल्यत्वापादनेनस्तुत्यर्थंपुनर्वचनमितितुगोविंदराजव्याख्यानमनुष्ठानविशेषानर्हंअ
प्राकरणिकंच २८५ एतदिति इदंपंचयज्ञभवमनुष्ठानंसर्वंयुष्माकमुक्तंपार्वणश्राद्धव्यवहितैरपिपंचयज्ञैरुपसंहारस्तेषामभ्यर्हि
तत्वज्ञापनार्थः मंगलार्थइतितुमेधातिथिगोविंदराजौ इदानींद्विजानांमुख्योब्राह्मणस्तस्यवृत्तीनामृतादीनामनुष्ठानंश्रूयतामितिव
क्ष्यमाणाध्यायैकदेशोपन्यासः २८६ इतिवारेंद्रनंदनवासीयभट्टदिवाकरात्मजश्रीकुल्लूकभट्टविरचितायांमन्वर्थमुक्ताव-

एतद्वोभिहितंसर्वंविधानंपांचयज्ञिकम् द्विजातिमुख्यवृत्तीनांविधानंश्रूयतामिति २८६ इति
मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांतृतीयोऽध्यायः ३ ॥ ॥ ॥
चतुर्थमायुषोभागमुषित्वाद्यंगुरौद्विजः द्वितीयमायुषोभागंकृतदारोगृहेवसेत् १ अद्रोहेणैवभू
तानामल्पद्रोहेणवापुनः यावृत्तिस्तांसमास्थायविप्रोजीवेदनापदि २

ल्यांतृतीयोऽध्यायः ३ ॥ ॥ ॥ ॥ श्राद्धकल्पानंतरंवृत्तीनांरक्षणंचैवेतिवृत्तिमुख्यक्तयाभति
ज्ञातासावृत्यधीनत्वात्गार्हस्थ्यस्यानंतरंवक्तव्यास्वब्रह्मचर्यपूर्वकमेवगार्हस्थ्यंतत्रैववक्ष्यमाणावृत्तयइतिदर्शयितुंब्रह्मचर्यकालं
गार्हस्थ्यकालंचात्रवदति चतुर्थमिति चतुर्थमायुषोभागमाद्यमित्युक्तंब्रह्मचर्यकालोपलक्षणार्थम् अनियतपरिमाणत्वादायुष
श्चतुर्थभागस्यदुर्ज्ञानत्वात् नचशतायुर्वैपुरुषइतिश्रुतेः पंचविंशतिवर्षपरत्वम् षट्त्रिंशदाब्दिकंब्रह्मचर्यमित्यादिविरोधात् आ
श्रमसमुच्चयपक्षमाश्रितोब्राह्मणोक्तब्रह्मचर्यकालंजन्मापेक्षाद्यंयथाशक्तिगुरुकुलेस्थित्वाद्वितीयमायुश्चतुर्थभागोगृहस्थाश्रम
मनुतिष्ठेत् गृहस्थस्तुयदापश्येदित्यनियतत्वात्द्वितीयमायुषोभागमित्यपिगार्हस्थ्यकालमेव १ अद्रोहेणेति परस्यापीडाशि
लोंछायाचितादिरद्रोहः नतुहिंसैवद्रोहः तस्यानिषिद्धत्वात् अद्रोहेणतदसंभवेऽल्पद्रोहेणवावृत्तिर्जीवनोपायःतदाश्रयणेन

मार्यादिभृत्यपंचयज्ञानुष्ठानयुक्तोब्राह्मणोनतु क्षत्रियादिरनापदिजीवेत् आपदिदशमेविधिर्भविष्यति अयंचसामान्योपदेशोयाजनाध्यापनविशुद्धप्रतिग्रहादिसंग्रहार्थः वक्ष्यमाणऋतादिविशेषमात्रनिष्ठत्वेसंकुचितस्वरसत्वहानिरनधिकारार्थत्वंयाजनादेर्द्वितीयकरणानिवेशन्मस्यात्तयापिजीवन् २ यात्रेति यात्राप्राणस्थितिः शास्त्रीयकुटुंबसंवर्द्धननित्यकर्मानुष्ठानपूर्वकप्राणस्थितिमात्रार्थन्नभोगार्थंस्वसंबंधितयाशास्त्रविहितार्जनरूपैः कर्मभिः ऋतादिवक्ष्यमाणैः कायक्लेशंविनाऽर्थसंग्रहंकुर्यात् ३ कैः कर्मभिरित्यत्राह ऋतामृताभ्यामिति अनापदीत्यनुवर्त्तते ऋतादिभिरनापदिजीवेत् सेवयात्वनापदिकदाचिन्नवर्त्तेतअप्रसिद्धत्वादृतादीनिव्याचष्टे ४ ऋतमुंछशिलमिति अबाधितस्थानेषुपथिवाक्षेत्रेषुवाप्रतिहतावकाशेषुयत्रयत्रौषधयोविद्यंते तत्रतत्रांगुलीभ्यांएकैकंकणंसमुंछयितेतिबौधायनदर्शनात् एकैकधान्यादिगुडकोच्चयनमुंछः मंजर्यात्मकानेकधान्योच्चयनंशि-

यात्रामात्रप्रसिद्ध्यर्थंस्वैःकर्मभिरगर्हितैः अक्लेशेनशरीरस्यकुर्वीतधनसंचयम् ३ ऋतामृताभ्यां जीवेत्तुमृतेनप्रमृतेनवा सत्यानृताभ्यामपिवानश्ववृत्त्याकदाचन ४ ऋतमुंछशिलंज्ञेयममृतंस्यादयाचितम् मृतंतुयाचितंभैक्षंप्रमृतंकर्षणंस्मृतम् ५ सत्यानृतंतुवाणिज्यंतेनचैवापिजीव्यते सेवाश्ववृत्तिराख्यातातस्मात्तांपरिवर्जयेत् ६

लः उंछश्चशिलश्चेत्येकवद्भावः तत्सत्यसमानफलत्वादृतमित्युच्यते अयाचितोपस्थितममृतमिवसकलसहेतुत्वादमृतम् प्रार्थितंपुनर्भैक्षंभिक्षासमूहरूपंमरणशरणपीडाजननान्मृतम् एतच्चसाग्नेःस्वभैक्षमपक्वतंडुलादिरूपन्नतुसिद्धान्नंपराग्निपक्वेनस्वाग्नौहोमाभावात् कर्षणंचभूमिगतप्रचुरप्राणिमरणनिमित्तत्वात्बहुदुःखफलकंप्रकर्षणमृतमिवप्रमृतम् ५ सत्यानृतंत्विति प्रायेणसत्यानृतव्यवहारसाध्यत्वात्सत्यानृतंवाणिज्यम् कुसीदेअनापदीत्यनुवृत्तेरस्वयंकृतान्येतानिबोद्धव्यानि यथाहगौतमः कृषिवाणिज्येस्वयंचाकृतेकुसीदंच नतुवाणिज्येशास्त्रेणसत्यानृताद्यनुज्ञानातेनचैवापिजीव्यतइतिचशब्देनवाणिज्यकृषिसमवशिष्टत्वात्कुसीदमपिगृह्यते पूर्वश्लोकोक्ताकृषिरेतत्श्लोकेचवाणिज्यम् सेवातुदानदृष्टिसंदर्शनस्वामितर्जननीचक्रियादिधर्मयोगात्श्वनइववृत्तिरतःश्ववृत्तिरुक्तातस्मात्तांप्रकृतोब्राह्मणस्त्यजेत् ६ ५

कुसूलधान्यकइति कुसूलोव्रीह्यागारंस्यादित्याभिधानिकाः इष्टकानिर्मितागारधान्यसंचयोभवेत् अत्रकालविशेषापेक्षायाम् प
स्यत्रैवार्षिकंभक्तंपर्याप्तंभृत्यवृत्तये अधिकंवापिविद्येतससोमंपातुमर्हतिइतिमनूक्तएवकालोग्राह्यः तेननित्यनैमित्तिकधर्मकृत्यपो
ष्यवर्गसहितस्यगृहिणोयावताधान्यादिधनेनवर्षत्रयंसमधिकंवानिर्वाहोभवतितावद्धनःकुसूलधान्यकउच्यते वर्षनिर्वाहोचितधा
न्यादिधनःकुंभीधान्यः प्राक्सौमिकीःक्रियाःकुर्वीतयस्यान्नंवार्षिकंभवेदितियाज्ञवल्क्येनगृहस्थस्यवार्षिकसंचयाभ्यनुज्ञानात् मनुर
पियद्वानप्रस्थस्यैवसमान्निचयएवइत्यनेनसमान्निचयंवक्ष्यति तदपेक्षयाबहुपोष्यवर्गस्यगृहिणःससुचितःसंवत्सरसंचयः मेधा
तिथिस्तु यावताधान्यादिधनेनबहुभृत्यदारादिमतःत्रिसंवत्सरस्थितिर्भवतितावत्सुवर्णादिधनवानपिकुसूलधान्यइत्यभिधायकुं
भीउष्ट्रिकाषाण्मासिकधान्यादिनिचयःकुंभीधान्यकइतिव्याख्यातवान् गोविंदराजस्तुकुसूलधान्यकइत्येतद्याचक्षते कोष्ठममाण

कुसूलधान्यकोवास्यात्कुंभीधान्यकएववा त्र्यहैहिकोवापिभवेदश्वस्तनिकएववा ७ चतुर्णामपिचै
तेषांद्विजानांगृहमेधिनाम् ज्यायान्परःपरोज्ञेयोधर्मतोलोकजित्तमः ८ षट्कर्मैकोभवत्येषांत्रिभिर
न्यःप्रवर्त्तते द्वाभ्यामेकश्चतुर्थस्तुब्रह्मसत्रेणजीवति ९

धान्यसंचयोवास्यात् द्वादशाहमात्रपर्याप्तधनःकुंभीधा
न्यकइत्येतद्यावरे उष्ट्रिकाप्रमाणधान्यादिसंचयोवाषडहमात्रपर्याप्तधनः द्वादशाहंकुसूलेनवृत्तिःकुंभ्यादिनानिषट् इसामनूनां
गोविंदराजोक्तिनानुरुंध्महे ईहान्येद्युस्तस्यांभवंऐहिकंत्र्यहपर्याप्तमैहिकंधनंयस्यसत्र्यहैहिकःतथावास्यात् दिनत्रयनिर्वाहोचितध
नमित्यर्थः श्वोभवंश्वस्तनंभक्तंतदस्यास्तीतिमत्वर्थीयमिकंकृत्वानञ्समासः तथावाभवेत् ७ चतुर्णामपीति एषांचतुर्णामपिकुसू
लधान्यकादीनांब्राह्मणानांगृहस्थानांमध्येयोयःशेषेपठितःसश्रेष्ठोज्ञातव्यः यतोऽसौवृत्तिसंकोचधर्मेणस्वर्गादिलोकजित्तमोभव
ति ८ षट्कर्मेति एषांगृहस्थानांमध्येकश्चिद्गृहस्थोयोबहुपोष्यवर्गःसऋतानृताभ्यांयाचितभैक्षकृषिवाणिज्यैः पंचभिस्तेनचैवेत्य
नेनैवत्रशब्दसमुच्चितेनकुसीदेनचेत्येवंषड्भिःकर्मभिःषट्कर्मासयतिषड्भिरेतैर्जीवति कृषिवाणिज्यकुसीदान्येतानिगौतमोक्तानीत्यक्त
म् अन्यःपुनस्ततोऽल्पपरिकरःत्रिभिर्याजनाध्यापनप्रतिग्रहैरद्रोहेणेत्येतत्श्लोकसंगृहीतैःप्रवर्त्ततेप्रशब्दोऽनर्थकोवर्त्ततइत्यर्थः

अपरःपुनः प्रतिग्रहः प्रत्यवरइतिवक्ष्यमाणत्वात्परित्यागेनद्वाभ्यांयाजनाध्यापनाभ्यांप्रवर्त्तते उक्तत्रयापेक्षयाचतुर्थःपुनर्ब्रह्मस-
त्रेणाध्यापनेनजीवति मेधातिथिस्तु एषांकुसूलधान्यकादीनांमध्यादेकः कुसूलधान्यकः प्रकृतैरुंछशिलायाचितकृषिवाणिज्यैःष
ट्कर्माभवति षड्भिर्जीवति अन्योद्वितीयःकुंभीधान्यकः कृषिवाणिज्ययोर्निंदितत्वात् तत्त्यागेउंछशिलयाचितायाचितानांमध्यादिच्छा
तस्त्रिभिर्वर्त्तेत एकस्त्र्यहैहिकोयाचितलाभंविहायउंछशिलायाचितानांमध्यादिच्छयाद्वाभ्यांवर्त्तेतचतुर्थःपुनरश्वस्तनिकोब्रह्म-
सत्रेणजीवति ब्रह्मसत्रंशिलोंछयोरन्यतरावृत्तिः ब्रह्मणोब्राह्मणस्यसततभवत्वात्सत्रमित्याह ९ वर्त्तयंश्चेति शिलोंच्छाभ्यां
जीवन्धनसाध्यकर्मांतरानुष्ठानासामर्थ्यात् अग्निहोत्रनिष्ठएवस्यात् पार्वायनांतीयाश्चइष्टीःकेवलाअनुतिष्ठेत् पर्वचअयनंच
पर्वायनेतयोरंतस्तत्रभवादर्शपौर्णमासाग्रयणात्मिकाः १० नलोकवृत्तमिति लोकवृत्तमसत्यप्रियाख्यानंविचित्रपरिहासकथादिकं

वर्त्तयंश्चशिलोंच्छाभ्यामग्निहोत्रपरायणः इष्टीःपार्वायनांतीयाःकेवलानिर्वपेत्सदा १० नलोकवृ
त्तंवर्त्तेतवृत्तिहेतोःकथंचन अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ११ संतोषंपरमास्थाय
सुखार्थीसंयतोभवेत् संतोषमूलंहिसुखंदुःखमूलंविपर्ययः १२ अतोऽन्यतमयावृत्त्याजीवंस्तु
स्नातकोद्विजः स्वर्ग्यायुष्ययशस्यानिव्रतानीमानिधारयेत् १३

जीविकार्थंनकुर्यात् अजिह्मांमृषानुगुणार्था
भिधानादिपापरहिताम् अशठांदंभादिव्याजशून्यांशुद्धांवैश्यादिवृत्तेरसंकीर्णांब्राह्मणजीविकामनुतिष्ठेत् अनेकार्थत्वाद्धातूनां
अनुष्ठानार्थोयंजीवतिरितिसकर्मता ११ संतोषमिति यथासंभवभृत्यात्मप्राणधारणावश्यकपंचयज्ञाद्यनुष्ठानमात्रोचितधनान-
धिकास्पृहासंतोषः तमतिशयितमालंब्यप्रचुरधनार्जनेसंयमंकुर्यात् यतःसंतोषहेतुकमितिसुखंपरत्रचाव्यग्रस्यविहितानुष्ठानात्
स्वर्गादिसुखंविपर्ययस्त्वसंतोषोदुःखमूलंबहुधनार्जनप्रयासेनप्रचुरदुःखादसंपत्तौचक्लेशात् १२ अतोन्यतमेति अबहुभृत्यैक
वृत्त्यानिर्वाहसंभवेसत्यन्यतमयेतिविधीयते बहुभृत्यस्यान्नसंभवेषट्कर्मैकोभवत्येषामितिविहितत्वात् अथवाएकवाक्यता-
वगमात्व्रतविधायकतयावृत्त्येत्यनुवादकत्वादेकत्वमविवक्षितम् उक्तवृत्तीनामन्यतमयावृत्त्याजीवन्स्नातकोब्राह्मणइमानिव

माणानियच्चासंभवंस्वर्गसुयशांसिहितानिव्रतानिकुर्यात् इदंमयाकर्त्तव्यमिदंनकर्त्तव्यमित्येवंविधिसंकल्पविशेषाद्रुतम् १३ वे-
दोदितमिति वेदोक्तंस्मार्त्तमपिवेदमूलत्वाद्वेदोक्तमेवस्वकंस्वाश्रमोक्तंयावज्जीवमतंद्रितोऽनलसःकुर्यात् हिहेतौयस्मात्तत्कुर्वन्यथा-
सामर्थ्यंपरमांगतिंमोक्षलक्षणांप्राप्नोतिनित्यकर्मानुष्ठानात्पापक्षयेसतिनिर्मलांतःकरणेनब्रह्मसाक्षात्कारात्मोक्षावाप्तेः तदुक्तं-
मोक्षधर्मे ज्ञानमुत्पद्यतेपुंसांक्षयात्पापस्यकर्मणः तत्रादर्शतलप्रख्येपश्यत्यात्मानमात्मनि आत्मनिअंतःकरणे १४ नेहेतार्थानि
ति प्रसज्यतेयत्रपुरुषःसप्रसंगोगीतवादित्रादिः तेनार्थान्नार्जयेत् नापिशास्त्रनिषिद्धेनकर्मणा अयाज्ययाजनादिनाच नचविद्य-
मानेषुधनेषुनत्वाप्यविद्यमानेष्वपिप्रकारांतरासंभवेयतस्ततःपतितादिभ्योपि १५ इंद्रियार्थेष्विति इंद्रियाणामर्थारूपरसगंध-
स्पर्शादयःतेषुनिषिद्धेष्वपिस्वदारसुरतादिषुनप्रसज्येत नातिप्रसक्तिमत्यंतसेवनात्मिकांकुर्यात् कामतउपभोगार्थंअतिप्रसक्तिनि

वेदोदितंस्वकंकर्मनित्यंकुर्यादतंद्रितः तद्धिकुर्वन्यथाशक्तिप्राप्नोतिपरमांगतिम् १४ नेहेतार्थान्प्रसं
गेननविरुद्धेनकर्मणा नविद्यमानेष्वर्थेषुनार्त्यामपियतस्ततः १५ इंद्रियार्थेषुसर्वेषुनप्रसज्येतकामतः
अतिप्रसक्तिंचैतेषांमनसासन्निवर्त्तयेत् १६ सर्वान्परित्यजेदर्थान्स्वाध्यायस्यविरोधिनः यथातथाध्या
पयंस्तुसाह्यस्यकृतकृत्यता १७ वयसःकर्मणोऽर्थस्यश्रुतस्याभिजनस्यच वेषवाग्बुद्धिसारूप्यमाचरन्
विचरेदिह १८ बुद्धिवृद्धिकराण्याशुधन्यानिचहितानिच नित्यंशास्त्राण्यवेक्षेतनिगमांश्चैववैदिकान्
१९

दृष्टपापमाह अतिप्रसक्तिंचैतेषामिति विषयाणामस्थिरत्वस्वर्गापवर्गार्थश्रेयोविरोधित्वादिभावनयामनसासम्यक्
निवर्त्तयेत् १६ सर्वानिति वेदार्थविरोधिनः अर्थानत्यंतेश्वरगृहोपसर्पणकृषिलोकयात्रादयः तान्सर्वान्परित्यजेत् कथंतर्हिभृत्यात्म
पोषणमित्याशंक्याह यथातथाकेनाप्युपायेनस्वाध्यायाविरोधिनाभृत्यात्मानौजीवयन्यस्मात्साऽस्यस्नातकस्य कृतकृत्यतायन्नि
त्यस्वाध्यायपरता १७ वयसइति वयसःक्रियायाधनस्यश्रुतस्यकुलस्यानुरूपेणवेषवाग्बुद्धीराचरन्लोकेप्रवर्त्तेत यथायौवनेस्र
गंधलेपनादिधारणंप्रवर्णानुसारीवाग्बुद्धिश्चएवंकर्मादिष्वप्युन्नेयम् १८ बुद्धीति वेदाविरुद्धानिशीघ्रंबुद्धिवृद्धिजनकानिव्याक

रणमीमांसास्मृतिपुराणन्यायादीनिशास्त्राणितथाधन्यानिधनायहितानि अर्थशास्त्राणि बार्हस्पत्यौशनसादीनितथाहितानिदृ
ष्टोपकारकाणिवैद्यकज्योतिषादीनितथापर्यायकथनेनवेदार्थावबोधकान्निगमाख्यांश्चग्रंथान्नित्यंपर्यालोचयेत् १९ यथाय
थेति यस्माद्यथायथापुरुषःशास्त्रंसम्यगभ्यस्यति तथातथाविशेषेणजानातिशास्त्रांतरविषयमपिचास्य विज्ञानंरोचतेतदूलं
भवतिदीप्यर्थत्वाद्रुचेरभिलाषार्थत्वाभावाद्रुच्यर्थानांप्रीयमाणइतिनसंप्रदानसंज्ञा २० ऋषियज्ञमिति स्वाध्यायादीन्पंचयज्ञा
न्यथाशक्तिनत्यजेत् तृतीयाध्यायविहितानामपिपंचयज्ञानामिहनिर्देशउत्तरत्रविशेषविधानार्थः स्नातकव्रतत्वबोधनार्थश्च
२१ एतानेवेति एकेगृहस्थाबाह्यांतरयज्ञानुष्ठानशास्त्रज्ञाएतान्पंचमहायज्ञान् ब्रह्मज्ञानप्रकर्षात् बहिरचेष्टमानाः पंचसुबुद्धीं
द्रियेषुएवंपंचरूपज्ञानादिसंयमंकुर्वंतःसंपादयंतियज्ञानांहोमत्वानुपपत्तेःसंपादनार्थेजुहोतिः २२ वाचीति एकेगृहस्थाब्रह्म

यथायथाहिपुरुषःशास्त्रंसमधिगच्छति तथातथाविजानातिविज्ञानंचास्यरोचते २० ऋषियज्ञं
देवयज्ञंभूतयज्ञंचसर्वदा नृयज्ञंपितृयज्ञंचयथाशक्तिनहापयेत् २१ एतानेकेमहायज्ञान्यज्ञशास्त्र
विदोजनाः अनीहमानाःसततमिंद्रियेष्वेवजुह्वति २२ वाच्येकेजुह्वतिप्राणंप्राणेवाचंचसर्वदा वाचि
प्राणेचपश्यंतोयज्ञनिर्वृत्तिमक्षयाम् २३ ज्ञानेनैवापरेविप्रायजंत्येतैर्मखैःसदा ज्ञानमूलांक्रियामेषां
पश्यंतोज्ञानचक्षुषा २४

विदोवाचिप्राणवायौचयज्ञनिर्वृतिमक्षयफलांजानंतः सततंवाचिप्राणंचजुह्वति वाचंचप्रा
णेभाषमाणेनचवाचिप्राणंजुहोतीति अभाषमाणेनोच्छ्वसताप्राणेवाचंजुहोमीतिव्याख्यातव्यमित्यनेनविधीयते यथाकौषीत
करहस्यब्राह्मणम् यावद्वैपुरुषोभाषतेनतावत्प्राणितुंशक्नोतिप्राणंतदावाचिजुहोतियावद्धिपुरुषःप्राणितिनतावद्भाषितुंश-
क्नोतिवाचंतदाप्राणेजुहोतिएतेऽनंतेऽमृतेमृतेआहुतीजाग्रच्चसततंजुहोति अथवाअन्याआहुतयः अनंतरन्यस्ताः कर्म
हिभवंत्येवंहितस्यैतत्पूर्वेविद्वांसोऽग्निहोत्रंजुहवांचक्रुरिति २३ ज्ञानेनैवेति अपरेविप्राब्रह्मनिष्ठाःसर्वथाब्रह्मज्ञानेनैवएतै
र्मखैर्यजंति एतांश्चयज्ञाननुतिष्ठंति कथमेतदित्याह ज्ञानंब्रह्म सत्यंज्ञानमनंतेत्यादिश्रुतिषुप्रसिद्धंज्ञानमूलामेषांज्ञानानां

क्रियासुत्पत्तिंजानंतः ज्ञायतेऽनेनेतिज्ञानंचक्षुरिवचक्षुः ज्ञानचक्षुषाउपरियदास्वल्विदंब्रह्मतज्जनकानित्यादिकपंचयज्ञानपिब्र
ह्मोत्पत्तिकालेब्रह्मात्मकान्ध्यायंतः संपादयंतिपंचयज्ञफलमश्नुवतइत्यर्थः श्लोकत्रयेणब्रह्मनिष्ठानांवेदसंन्यासिनांगृहस्थानाम
विधिः २४ अग्निहोत्रमिति उदितहोमपक्षेदिनस्यादौनिशायाश्चादौ अनुदितहोमपक्षेदिनस्यांतेनिशायाश्चांते यद्वा उदित
होमपक्षेदिनस्यादौदिनांतेच अनुदितहोमपक्षेनिशादौनिशांतेचअग्निहोत्रंकुर्यात् कृष्णपक्षार्द्धमासांतेदर्शाख्येनकर्मणा शुक्ल
पक्षार्द्धेचपौर्णमासाख्येनयजेत् २५ सस्यांतइति पूर्वार्जितधान्यादिसस्येसमाप्तेशरदिनवानामितिसूत्रकारवचनात्असमाप्ते-
पिपूर्वसस्येनवसस्योत्पत्तौआग्रयणेनयजेत् सस्यक्षयस्यानियतत्वात् धनिनांबहुहायनजीवनोचितधान्यसंभवाच्चसस्यांतग्रह
णाच्चनवसस्योत्पत्तिरेवाभिप्रेतानियतत्वात्तस्याः प्रत्यब्दंसनिमित्तत्वोत्पत्तेः ऋतुसंवत्सरइत्येनमताश्रयणेनचत्वारश्चत्वारोमासाऋ
तवस्तदंतेऽध्वरैश्चातुर्मास्याख्यैर्यागैर्यजेत् अयनयोरनयोरुत्तरदक्षिणयोरादौपशुनायजेत् पशुबंधाख्ययागमनुतिष्ठेत् ज्योतिः

अग्निहोत्रंचजुहुयादाद्यंतेद्युनिशोःसदा दर्शेनचार्द्धमासांतेपौर्णमासेनचैवहि २५ सस्यांतेनवस-
स्येष्ट्यातथर्त्वंतेद्विजोऽध्वरैः पशुनात्वयनस्यादौसमांतेसौमिकैर्मखैः २६ नानिष्ट्वानवसस्येष्ट्यापशु
नाचाग्निमान्द्विजः नवान्नमद्यान्मांसंवादीर्घमायुर्जिजीविषुः २७ नवेनानर्चिताह्यस्यपशुहव्येनचाग्न
यः प्राणानेवात्तुमिच्छंतिनवान्नामिषगर्द्धिनः २८ आसनाशनशय्याभिरद्भिर्मूलफलेनवा नास्यकश्चि
द्वसेद्गेहेशक्तितोऽनर्चितोऽतिथिः २९

शास्त्रेचैत्रशुक्लप्रतिपदादिवर्षगणनात् शिशिरेणसमाप्तेवर्षेवसंतेसोमरस
साध्यैरग्निष्टोमादियागैर्यजेत् २६ नानिष्ट्वेति आहिताग्निर्द्विजोदीर्घमायुर्जीवितुमिच्छन् आग्रयणमकृत्वानवान्नंनभक्षयेत् न
नपशुयागमकृत्वामांसमश्नीयात् २७ नवेनेति दोषंकथयन् अनित्यतामनयोराहयस्मान्नवेनहव्येनपशुनावाअनेनानर्चिताअकृत-
यागाअग्नयोनवान्नमांसाभिलाषिणोऽस्याहिताग्नेः प्राणानेवअग्निहोत्रिणःखादितुमिच्छंति गर्द्धोऽभिलाषातिशयः गृधेर्यजंत
स्यरूपंसोऽस्यास्तीतिगर्द्धीमत्वर्थीयइनिः २८ आसनाशनेति यथाशक्त्यासनभोजनादिभिरनर्चितोऽतिथिरस्यगृहस्थस्यगृहे
नवसेत् अनेनशक्तितोऽतिथिंपूजयेदित्युक्तमपिउत्तरार्थमनूद्यते २९ ७ ७ ७ ७

पाषंडिनइति पाषंडिनोवेदबाह्यव्रतलिंगधारिणः शाक्यभिक्षुक्षपणकादयः विकर्मस्थाःप्रतिषिद्धजीविनः बैडालव्रतिकबक वृत्तीवक्ष्यमाणलक्षणौ शठावेदेष्वश्रद्दधानाः हैतुकावेदविरोधितर्कव्यवहारिणः एतानतिथिकालोपस्थितान्वाङ्मात्रेणापि नपूजयेत् पूजारहितेऽन्नदानमात्रंतुशक्तितोऽपचमानेभ्यइत्यनुज्ञानमेव ३० वेदविद्येति वेदविद्याव्रतस्नातानितिविद्या स्नातकव्रतस्नातकोभयस्नातकास्त्रयोपिगृह्यंते यथाहहारीतः यःसमाप्यवेदानसमाप्यव्रतानिसमावर्त्ततेसविद्यास्नातकः यःसमाप्यव्रतानिअसमाप्यवेदान्समावर्त्ततेसव्रतस्नातकःउभयंसमाप्ययःसमावर्त्ततेसविद्याव्रतस्नातकः यद्यपिस्नातकध र्मत्वेनैवस्नातकमात्रप्राप्तिस्तथापिश्रोत्रियत्वंविवक्षितम् तान्स्नातकान्श्रोत्रियान्हव्यकव्येनपूजयेत् विपरीतान्पुनर्व येत् ३१ शक्तितइति अपचमानाब्रह्मचारिपरिव्राजकाःपाषंडादयः ब्रह्मचारिपरिव्राजकानामुक्तमपिअन्नदानंपचमानापे

पाषंडिनोविकर्मस्थान्बैडालव्रतिकान्शठान् हैतुकान्बकवृत्तींश्चवाङ्मात्रेणापिनार्चयेत् ३०
वेदविद्याव्रतस्नातान्श्रोत्रियान्गृहमेधिनः पूजयेद्धव्यकव्येनविपरीतांश्चवर्जयेत् ३१ शक्ति-
तोऽपचमानेभ्योदातव्यंगृहमेधिना संविभागश्चभूतेभ्यःकर्त्तव्योऽनुपरोधतः ३२ राजतोधनम
न्विच्छेत्संसीदन्स्नातकःक्षुधा याज्यांतेवासिनोर्वापिनत्वन्यतइतिस्थितिः ३३

क्षपातिशयार्थं स्नातकव्रतत्वार्थंचपुनरुच्यते मेधातिथिगोविंदराजौतु भिक्षांचभिक्षवेदद्याद्विधिवत्ब्रह्मचारिणइतिब्र ह्मचारीपरिव्राजकयोरुक्तत्वात् पाषण्ड्यादिविषयत्वमेवास्यवचनस्यइत्यूचतुः सकुटुंबानुरोधेनवृक्षादिपर्यंतप्राणिभ्योपि जलादिनापिविभागःकर्त्तव्यः ३२ राजतइति नराज्ञःप्रतिगृह्णीयादराजन्यप्रसूतितइतिनिषेधात्राजशब्दोऽभिषि तिपरःस्नातकःक्षुधाअवसीदन्द्विजातिप्रतिगृहस्थसंभवेपियथाशास्त्रवर्त्तिनःक्षत्रियाद्राज्ञोयाज्यशिष्याभ्यांवाप्रथम मभिलषेत् राज्ञोमहाधनत्वेनपीडाविरहात् याज्यशिष्ययोश्चकृतोपकारतयाप्रत्युपकारप्रवणत्वात्तदसंभवेत्वन्यस्मादपि द्विजादन्नमाददीततदभावेतुसर्वतःप्रतिगृह्णीयादिति यथाधर्मंवक्ष्यति एवंचानापदिप्रथमंक्षत्रियनृपयाज्यशिष्येभ्यःप्रति

ग्रहनियमार्थंवचनम् अतएवाहनत्वन्यतइतिस्थितिः शास्त्रमर्यादानवसंसीदन्नित्यभिधानादापद्धर्मविषयत्वमस्यवाच्यं अव्यभिचारात् अनापत्प्रकरणात् संसीदन्नित्यस्यचोपात्तधनाभावपरत्वात् नचधनाभावआपत् किंतुतस्मिन्सतिविहितोपायासंभवात् अन्यथासद्यःप्रक्षालकोप्यापद्वृत्तिःस्यात् यदिचापद्विषयत्वमस्यभवेत् तदानत्वन्यत इत्यनेनसर्वतःप्रतिगृण्हीयादितिविरुध्येत यच्चापत्प्रकरणात् सीदद्भिःकुप्यमिच्छद्भिर्धनंवापृथिवीपतिः याच्यःस्यादित्युक्तंतच्छूद्रनृपविषयम् एवंराजादिप्रतिग्रहासंभवे ३३ नसीदेदिति विद्यादियोगात्प्रतिग्रहशक्तोपिस्नातकोब्राह्मणउक्तराजप्रतिग्रहादिलाभेसतिनक्षुधावसन्नोभवेत् नचधनेसंभवतिजीर्णमलिनेचवाससीबिभृयात् ३४ क्लृप्तकेशेति कल्पनंछेदनंलूनकेशनखश्मश्रुस्तपःक्लेशसहोदांतः शुक्लवासावाह्याभ्यंतरशौचसंपन्नोवेदाभ्यासयुक्तऔषधोपयोगादिनाचात्महितपरःस्यात् ३५ वैणवीमिति वे

नसीदेत्स्नातकोविप्रःक्षुधाशक्तःकथंचन नजीर्णमलवद्वासा भवेच्चविभवेसति ३४ क्लृप्तकेशनखश्मश्रुर्दान्तःशुक्लांबरःशुचिः स्वाध्यायेचैवयुक्तःस्यान्नित्यमात्महितेषुच ३५ वैणवींधारयेद्यष्टिंसोदकंचकमंडलुम् यज्ञोपवीतंवेदंचशुभेरौक्मेचकुंडले ३६ नेक्षेतोद्यंतमादित्यंनास्तंयांतंकदाचन नोपसृष्टंनवारिस्थंनमध्यंनभसोगतम् ३७ नलंघयेद्वत्सतंत्रींनप्रधावेच्चवर्षति नचोदकेनिरीक्षेतस्वरूपमितिधारणा ३८ मृदंगांदैवतंविप्रंघृतंमधुचतुष्पथम् प्रदक्षिणानिकुर्वीत प्रज्ञातांश्चवनस्पतीन् ३९

णुदंडमुदकसहितंचकमंडलुम् यज्ञोपवीतंकुशमुष्टिंशोभनेसौवर्णकुंडलेधारयेत् ३६ नेक्षेतेति उद्यंतमस्तमयंतंचसूर्यबिंबंसंपूर्णनेक्षेत उपसृष्टंग्रहोपरक्तम् वक्राद्युपसर्गयुक्तंचवारिस्थंजलप्रतिबिंबितम् नभोमध्यगतंमध्यंदिनसमये ३७ नलंघयेदिति वत्सबंधनरज्जुंनलंघयेत् वर्षतिमेघेनधावेत नचस्वदेहप्रतिबिंबंजलेनिरीक्षेतइतिशास्त्रेनिश्चयः ३८ मृदमिति प्रस्थितःसन्संमुखावस्थितान्उद्धृतमृत्तिकांगांपाषाणादिदेवतांब्राह्मणघृतक्षौद्रचतुष्पथप्रमाणज्ञातवृक्षान्दक्षिणहस्तमार्गेणकुर्यात् प्रदक्षिणानीति नपुंसकमनपुंसकेनेकवच्चास्यान्यतरस्यामितिनपुंसकत्वं ३९

नोपगच्छेदिति प्रमत्तः कामार्त्तोपि रजोदर्शने निषिद्धस्पर्शादिनत्रयेण स्त्रियं नोपगच्छेत् स्पर्शनिषेधेनैव तासामाद्यास्वनस्व
इति निषेधसिद्धो प्रायश्चित्तगौरवार्थं स्नातकव्रतत्वार्थं च पुनरारंभः नचागच्छन्नपि तयासह एकशय्यायां स्वप्यात् ४० रजसाभि
प्लुतामिति यस्माद्रजस्वलां स्त्रियं पुरुषस्योपगच्छतः प्रज्ञावीर्यबलचक्षूंषि नश्यंति तस्मात्तां नोपगच्छेत् ४१ तामिति तां तु रज
स्वलां गच्छतस्तस्य प्रज्ञादयो वर्द्धंते तस्मात्तां नोपेयात् ४२ नाश्नीयादिति भार्यया सह एकपात्रेनाश्नीयात् एनां च भुंजानां क्ष
तं जृंभां च कुर्वतीं यथासुखं निर्यंत्रणप्रदेशावस्थितां च नेक्षेत ४३ नांजयंतीमिति तथा स्वनेत्रयोरंजनं कुर्वतीं तैलाद्यभ्यक्तां
अनावृतां स्तनावरणरहितां न तु नग्नाम् नग्नां नेक्षेत च स्त्रियमिति वक्ष्यमाणत्वात् अपत्यं च प्रसवंतीं ब्राह्मणो न निरीक्षेत ४

नोपगच्छेत्प्रमत्तोपि स्त्रियमार्त्तवदर्शने समानशयने चैव न शयीत तया सह ४० रजसाभिप्लुतां ना
रीं नरस्य ह्युपगच्छतः प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रहीयते ४१ तां विवर्जयतस्तस्य रजसा समभि
प्लुताम् प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रवर्द्धते ४२ नाश्नीयाद्भार्यया सार्द्धं नैनामीक्षेत चाश्नतीम् क्षु
वतीं जृंभमाणां वा न चासीनां यथासुखम् ४३ नांजयंतीं स्वके नेत्रे न चाभ्यक्तामनावृताम् न पश्ये
त्प्रसवंतीं च तेजस्कामो द्विजोत्तमः ४४ नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् न मूत्रं पथि कु
र्वीत न भस्मनि न गोव्रजे ४५ न फालकृष्टे न जले न चित्यां न च पर्वते न जीर्णदेवायतने न वल्मीके क
दाचन ४६ न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः न नदीतीरमासाद्य न च पर्वतमस्तके ४७

नान्नमद्यादिति एकवस्त्रो नान्नं भुंजीत उपस्थाच्छादनवासोरहितो न स्नायात् मूत्रग्रहणमधः कायमलविसर्गोपलक्षणार्थं
तेन मूत्रपुरीषे वर्त्मनि भस्मनि गोष्ठे च न कुर्यात् ४५ न फालकृष्ट इति तथा फालकृष्टे क्षेत्रादावुदके अग्न्यर्थं कृतेष्टकाचये पर्व
ते चिरंतनदेवतागारे कृमिकृतमृत्तिकाचये च विण्मूत्रोत्सर्गं न कदाचन कुर्यात् ४६ न ससत्त्वेष्विति तथा सप्राणिषु बिलेषु न त्र
जन्न चोत्थितो न नदीतटमाश्रित्य नापि पर्वतशृंगे मूत्रपुरीषे कुर्यात् पर्वतनिषेधादेव तच्छृंगनिषेधे सिद्धे पुनः पर्वतशृंगनिषे·

व्यवस्थितोऽत्रविकल्पः अत्यंतार्त्तस्यपर्वतेन स्त्रीरतरपर्वतेविकल्पार्थः तत्रेच्छाविकल्पस्यान्यथापिप्राप्तौसामान्यनिषेधवैयर्थ्यात् वायोररूपत्वेनासंभवेवात्य दोषः ४७ वाय्वग्निविप्रमिति वायुमग्निंब्राह्मणंसूर्यंजलंगांचपश्यन्नकदापिमूत्रपुरीषोत्सर्गंकुर्यात् प्रच्छादितांगोऽवगुंठितशिरा ग्रेरितत्तृणकाष्ठादिनिषेधोयम् ४८ तिरस्कृत्योच्चरेदिति अंतर्धायकाष्ठादीनिभूमाववागनुच्छिष्टः अंतर्धायवसुंधरामितिवायुपुराणवचनात् शु मूत्रपुरीषोत्सर्गंकुर्यात् शुष्कैस्तृणैर्वाकाष्ठैर्वापर्णैर्वेणुदलेनवा मृन्मयैर्भाजनैर्वापि दक्षिणामुखः कानिकाष्ठपत्रतृणानिज्ञेयानि ४९ मूत्रोच्चारसमुत्सर्गमिति मूत्रपुरीषोत्सर्गमहनिसंध्यायांचोत्तराभिमुखोरात्रौचे परंपरीयमाम्नायंहि कुर्यात् धरणीधरस्तु स्वस्थोऽनाशायचेतसइतिचतुर्थपदंपठित्वाचेतसो बुद्धेः अनाशायेतिव्याख्यातवान् अहनिच्छायायान्नीहाराद्यंध त्वाविदूद्धुरादृतम् पाठांतरंव्यस्त्वयन्मुधेहधरणीधरः ५० छायायामिति रात्रौछायायामंधकारेवा

वाय्वग्निविप्रमादित्यमपःपश्यंस्तथैवगाः नकदाचनकुर्वीत विण्मूत्रस्य विसर्जनम् ४८ तिरस्कृत्यो च्चरेत्काष्ठलोष्ठपत्रतृणादिना नियम्यप्रयतोवाचंसंवीतांगोऽवगुंठितः ४९ मूत्रोच्चारसमुत्सर्गंदिवा कुर्यादुदङ्मुखः दक्षिणाभिमुखोरात्रौसंध्ययोश्चयथादिवा ५० छायायामंधकारेवारात्रावहनिवा द्विजः यथासुखमुखःकुर्यात्प्राणबाधभयेषुच ५१ प्रत्यग्निंप्रतिसूर्यंचप्रतिसोमोदकद्विजान् प्र तिगांप्रतिवातंचप्रज्ञानश्यतिमेहतः ५२ नाग्निंमुखेनोपधमेन्नग्नांनेक्षेतचस्त्रियम् नामेध्यंप्रक्षि पेदग्नौनचपादौप्रतापयेत् ५३

कारेवादिग्विशेषाज्ञानेसतिचौरव्याघ्रादिकृतप्राणविनाशभयेषुचयथेप्सितमुखो मूत्रपुरीषेकुर्यात् ५१ प्रत्यग्निमिति वाय्वग्निविप्रमित्यनेनमेहतोऽग्न्यादीनांदर्शनंनिषिद्धं अनेनत्वपश्यतोपिसंमुखीनत्वंनि षिध्यते अग्निसूर्यचंद्रजलब्राह्मणगोवाताभिमुखंमूत्रपुरीषेकुर्वतः प्रज्ञानश्यतितस्मादेतन्नकर्त्तव्यंप्रतिवातमित्यस्यस्थानेप्र तिसंध्यमित्यन्येपठंति ५२ नाग्निमिति नाग्निर्मुखेनध्मातव्यः किंतर्हिव्यजनादिना ननग्नांस्त्रियमीक्षेतमैथुनादन्यत्रेतिसांख्या यनदर्शनात् मैथुनव्यतिरेकेणनग्नांस्त्रियंनपश्येत् अमेध्यंमूत्रपुरीषादिकंनाग्नौक्षिपेत् नचपादौप्रतापयेत् प्रशब्दादग्नौ

पादांगुलिक्षिप्य साक्षान्नप्रतापयेत् वस्त्रादितापस्वेदे ऽविरोधः ५३ अधस्तादिति खट्वादिभ्यो ऽधस्तादंगारशकट्यादिकंनकु र्यात् नचाग्निमुत्प्लुत्यगच्छेत् नचकस्तःपाददेशोऽग्निंस्थापयेत् नचप्राणपीडाकरं कर्मकुर्यात् ५४ नाभ्नीयादिति संध्याका लेभोजनंग्रामांतरगमनंनिद्रांचनकुर्यात् नचरेखादिनाभूमिमुल्लिखेत् नचमालांधृतांस्वयमेवापनयेत् अर्थादन्येनापनये दित्युक्तम् ५५ नाप्सुमूत्रमिति मूत्रंपुरीषंश्लेष्माणंमूत्राद्यमेध्यलिप्तवस्त्रं अन्यद्वाकृत्तोच्छिष्टाद्यमेध्यंरुधिरंविषाणिचकृ त्रिमाकृत्रिमभेदभिन्नानिनजलेप्रक्षिपेत् ५६ नैकइति उत्सन्नजनवासगेहेनैकःशयीतवित्तविद्यादि॰ येत् रजस्वलयासंभाषणंनकुर्यात् यज्ञंचाकृतावरणोऽनृत्विक्नगच्छेत् दर्शनायेच्छयागच्छेत् दर्श

अधस्तान्नोपदध्याच्चनचैनमभिलंघयेत् नचैनंपादतःकुर्यान्नप्राणाबाधमाचरेत् ५४ नाश्नीयात्संधिवेलायांनगच्छेन्नापिसंविशेत् नचैवप्रलिखेद्भूमिंनात्मनोपहरेत्स्रजम् ५५ नाप्सुमूत्रंपुरीषंवाष्ठीवनंवासमुत्सृजेत् अमेध्यलिप्तमन्यद्वालोहितंवाविषाणिवा ५६ नैकःस्वपेच्छून्यगेहेशयानंनप्रबोधयेत् नोदक्ययाभिभाषेतयज्ञंगच्छेन्नचावृतः ५७ अग्न्यागारेगवांगोष्ठेब्राह्मणानांचसन्निधौ स्वाध्यायेभोजनेचैवदक्षिणंपाणिमुद्धरेत् ५८ नवारयेद्गांधयंतीनचाचक्षीतकस्यचित् नदिवींद्रायुधंदृष्ट्वाकस्यचिद्दर्शयेद्बुधः ५९ नाधार्मिकेवसेद्ग्रामेनव्याधिबहुलेभृशम् नैकःप्रपद्येताध्वानंनचिरंपर्वतेवसेत् ६०

चनात् ५७ अग्न्यागारइति अग्निगृहेगवांनिवासेब्राह्मणानां गवांसमीपेस्वाध्यायभोजनकालयोश्चदक्षिणपाणिंसबाहंवाउद्धरेदितिबहिःकुर्यात् ५८ नवारयेदिति गांजलंक्षीरंवापिबंतीनं निवारयेत् दोहनार्थवारणादन्यत्रनिषेधः नापिपरकीयक्षीरादिपिबंतींतस्यकथयेत् नचेंद्रधनुराकाशेदृष्ट्वानिषिद्धदर्शन दोषज्ञःकस्यचिद्दर्शयेत् ५९ नाधार्मिकइति अधार्मिकइत्यनेनयत्राधार्मिकावसंतिनतत्रवासोयुक्तः यत्रवानिंदितदुर्भिक्षितव्याधिपीडिताबहवोजनास्तत्रभृशमत्यर्थंवासोनयुक्तः पंथानंएकःकदापिनगच्छेत् ६०

नशूद्रराज्यइति यत्रदेशेशूद्रोराजातत्रनवसेत् अधार्मिकजनैश्चबाह्यतःपरिवृतेग्रामादौनवसेदित्यपुनरुक्तिः पाषंडिभिश्चवे
दबाह्यलिंगधारिभिर्वशीकृते चांडालादिभिश्चांत्यजैरुपद्रुतेनवसेत् ६१ नभुंजीतेति उद्धृतस्नेहंपिण्याकादिनभुंजीत अ
तितृप्तिंवारद्वयेपिनकुर्यात् जठरंपूरयेदर्द्धमन्नैर्भागंजलेनच वायोःसंचरणार्थंतुचतुर्थमवशेषयेदित्यादिविष्णुपुराणवचना
त् सूर्योदयकालेसूर्यास्तमयेभोजनंनकुर्यात् प्रातराशितोऽतितृप्तःसायन्नभुंजीत ६२ नकुर्वीतेति वृथाचेष्टार्थशून्यंव्यापा
रन्नकुर्यात् अंजलिनाचजलंनपिबेत् ऊर्वोरुपरिविन्यस्यमोदकादीन्नभक्षयेत् असतिप्रयोजनेकिमेतदितिजिज्ञासाकुतूह
लंनकुर्यात् ६३ ननृत्येदिति अशास्त्रीयाणिनृत्यगीतवाद्यानिनाचरेत् पाणिनाबाहोर्ध्वनिरूपमास्फोटनंनकुर्यात् अव्य-
क्तदंतशब्दात्मकंक्ष्वेडनंनकुर्यात् नचसानुरागोरासभादिरावंकुर्य्यात् ६४ नपादाविति कांस्यपात्रेकदाचित्पादौनप्रक्षालयेत्

नशूद्रराज्येनिवसेन्नाधार्मिकजनावृते नपाषंडिगणाक्रांतेनोपसृष्टेंत्यजैर्नृभिः ६१ नभुंजीतोद्धृ
तस्नेहंनातिसौहित्यमाचरेत् नातिप्रगेनातिसायंनसायंप्रातराशितः ६२ नकुर्वीतवृथाचेष्टांनवा
र्यंजलिनापिबेत् नोत्संगेभक्षयेद्भक्ष्यान्नजातुस्यात्कुतूहली ६३ ननृत्येदथवागायेन्नवादित्रा
णिवादयेत् नास्फोटयेन्नचक्ष्वेडेन्नचरक्तोविरावयेत् ६४ नपादौधावयेत्कांस्येकदाचिदपिभा
जने नभिन्नभांडेभुंजीतनभावप्रतिदूषिते ६५ उपानहौचवासश्चधृतमन्यैर्नधारयेत् उपवी
तमलंकारंस्रजंकरकमेवच ६६ नाविनीतैर्व्रजेद्धुर्यैर्नचक्षुद्व्याधिपीडितैः नभिन्नशृंगाक्षि
खुरैर्नवालधिविरूपितैः ६७

ताम्ररजतसुवर्णानांभिन्नमभिन्नंवेतिनदोषइतिपैठीनसिवचनादेतद्व्यतिरिक्तभिं
न्नभांडेनभोजनंकुर्यात् यत्रमनोविचिकित्सातितद्भावदुष्टंनतत्रभुंजीत ६५ उपानहाविति उपानहवस्त्रयज्ञोपवीतालंकारपु
ष्पमालाकमंडलून्परोपभुक्तान्नधारयेत् ६६ नाविनीतैरिति क्षुधाव्याधिनाचपीडितैर्भिन्नशृंगाक्षिखुरैश्छिन्नवालधिभि
श्चनयायात् ६७ विनीतैस्त्विति दमितैःशीघ्रगामिभिःशुभसूचकलक्षणोपेतैःशोभनवर्णैर्मनोज्ञाकृतिभिःप्रतोदेनात्य-

र्थमपीउयनाच्छेत् ६८ बालातपमिति प्रथमोदितादित्यतापोबालातपः सच मुहूर्त्तत्रयंयावदितिमेधातिथिः कन्यार्कातपइत्यन्ये प्रेतधूमोदह्यमानशवधूमः भग्नासनंच एतानिवर्जनीयानि नखानिचरोमाणिच भर्त्सना निनछिंद्यात् दंतैश्चनखान्नोत्पाटयेत् ६९ नमृल्लोष्टमिति नाकारणंमृल्लोष्टंमृद्नीयात् तृणानिचनछिंद्यादिति आपस्तंबवचनात् निष्प्रयोजनंमृल्लोष्टमर्द्दनंनखैश्चतृणच्छेदनंनकुर्यात् नकुर्वीतवृथाचेष्टामित्यनेनैवास्यापिप्रतिषेधसिद्धौ दोषरूपत्वंप्रायश्चित्तगौरवंचदर्शयितुंविशेषणनिषेधः अतएवात्रानंतरंलोष्टमर्दीतिनिंदिष्यति दृष्टादृष्टफलशून्यंचकर्मनकुर्यात् ननुनकुर्वीतवृथाचेष्टामित्यनेनपुनरुच्यते देहव्यापारश्चेष्टासवृथाचेष्टाशब्देननिषिद्धः अनेनतुनिष्फलंमनोग्राह्यादिसंकल्पात्मकंयच्च आयत्यामागामिकालेकर्मासुखावहम् यथाअजीर्णभोजनादितदपिनकुर्यात् ७० लोष्टमर्दीति लोष्टमर्दयितातृणच्छेत्तानखखादितान्वयोमनुष्यः

विनीतैस्तुव्रजेन्नित्यमाशुगैर्लक्षणान्वितैः वर्णरूपोपसंपन्नैःप्रतोदेनातुदन्भृशम् ६८ बालातपःप्रेतधूमोवर्ज्यंभिन्नंतथासनम् नच्छिंद्यान्नखलोमानिदंतैर्नोत्पाटयेन्नखान् ६९ नमृल्लोष्टंचमृद्नीयान्नच्छिंद्यात्करजैस्तृणम् नकर्मनिष्फलंकुर्यान्नायत्यामसुखोदयम् ७० लोष्टमर्दीतृणच्छेदीनखखादीचयोनरः सविनाशंव्रजत्याशुसूचकोऽशुचिरेवच ७१ नविगर्ह्यकथांकुर्याद्बहिर्माल्यंनधारयेत् गवांचयानंपृष्ठेनसर्वथैवविगर्हितम् ७२ अद्वारेणचनातीयाद्ग्रामंवावेश्मवावृतम् रात्रौचवृक्षमूलानिदूरतःपरिवर्जयेत् ७३

सूचकःखलोयःपरस्यदोषानसतःसंतोवाख्यापयति बाह्याभ्यंतरशौचरहितः शीघ्रमेतेदेहधनादिनाविनश्यंति ७१ नविगर्ह्यकथामिति नसाभिनिवेशेनकथांशास्त्रीयेष्वर्थेषु लौकिकेषुवाकुर्यात् केशकलापाद्बहिर्माल्यंनधारयेत् गवांचपृष्ठेयानंसर्वथेति पाण्यादिव्यवधानेनाप्यधर्मावहंपृष्ठेनेत्यभिधानादाकृष्टशकटादिनानदोषः ७२ अद्वारेणचेति प्राचीराद्यावृतंगृहंचद्वारव्यतिरिक्तप्रदेशेनप्राकारादिलंघनंकृत्वानविशेत् रात्रौचवृक्षमूलावस्थानंदूरतस्त्यजेत् ७३ नाक्षैरिति कदाचिदपिपरिहासेनापिनाक्षादिभिःक्रीडयेत् स्वयमित्यभिधानात् आत्मोपानहौपादव्यतिरिक्ते

आसनेभोजनपात्रंनिधा
नहस्ताद्भिनादेशांतरंननयेत् शय्याद्यवस्थितश्चनभुंजीतहस्तेचप्रभूतमन्नंकृत्वाक्रमेणनखादयेत्
यनभुंजीत ७४ सर्वमिति यत्किंचित्तिलसंमिश्रंकृसरमोदकादितदस्तमितेऽर्केनाद्यात् उपस्थाच्छादनवासोरहितोनेहकुर्या
त् उच्छिष्टस्तुनान्यतोगच्छेत् ७५ आर्द्रपादइति जलार्द्रपादोभोजनमाचरेत् नार्द्रपादःशय्यात् यस्मादार्द्रपादोभुंजानःश
तायुर्भवति ७६ अचक्षुर्विषयमिति तरुगुल्मलतागहनत्वेनाचक्षुर्गोचरमरण्यादिदेशंदुर्गंनाक्रमेत् सर्पचौरादेस्तर्हित्रस्य-
संभवात् पुरीषंमूत्रंचनमिरीक्षेत् बाहुभ्यांचनदींनतरेत् ७७ अधितिष्ठेदिति दीर्घमायुर्जीवितुमिच्छुःकेशादीन्नाधिरो-
हेत् भग्नमृन्मयभाजनसकलानिकपालिकाः ७८ नसंवसेदिति पतितादिभिर्ग्रामांतरवासिभिरपिसहनसंवसेत् एकतरु

नाद्यैः क्रीडेत्कदाचित्तुस्वयंनोपानहौहरेत् शयनस्थोपिभुंजीतनपाणिस्थंनचासने ७४ सर्वंच
तिलसंबद्धंनाद्यादस्तमितेरवौ नचनग्नःशयीतेहनचोच्छिष्टःक्वचिद्व्रजेत् ७५ आर्द्रपादस्तुभुं
जीतनार्द्रपादस्तुसंविशेत् आर्द्रपादस्तुभुंजानोदीर्घमायुरवाप्नुयात् ७६ अचक्षुर्विषयंदुर्गंनप्र
पद्येतकर्हिचित् नविण्मूत्रमुदीक्षेतनबाहुभ्यांनदींतरेत् ७७ अधितिष्ठेन्नकेशांस्तुनभस्मास्थि
कपालिकाः नकार्पासास्थिनतुषांदीर्घमायुर्जिजीविषुः ७८ नसंवसेच्चपतितैर्नचांडालैर्नपुक्कशैः
नमूर्खैर्नावलिप्तैश्चनांत्यैर्नांत्यावसायिभिः ७९ नशूद्रायमतिंदद्यान्नोच्छिष्टंनहविष्कृतम् नचास्यो
पदिशेद्धर्मंनचास्यव्रतमादिशेत् ८०

च्छायादौनसमीपेवसेत् अतोनाधार्मिकेवसेद्ग्रामइत्यतोभेदः निषादाच्छू
द्रायांजातः पुक्कशःवक्ष्यतिचजातोनिषादाच्छूद्रायांजात्याभवतिपुक्कशइति अवलिप्ताधनादिमदगर्विताः अंत्याअंत्यजारज
कादयः अंत्यावसायिनोनिषादस्त्रियांचांडालाज्जाताः वक्ष्यतिच निषादस्त्रीतुचांडालात्पुत्रमंत्यावसायिनम् ७९ नशूद्रा
येति शूद्रायमतिंदृष्टार्थोपदेशंनदद्यात् धर्मोपदेशस्यपृथङ्निर्देशात् अदासशूद्रायउच्छिष्टंनदद्यात् दासगोचरतयाउच्छि
ष्टमन्नंदातव्यमितिवक्ष्यमाणत्वाददोषः द्विजोच्छिष्टंभोजनमितिभोक्तुर्विधिः दातुरुच्छिष्टदानंनिषेधेपियथासंभवलब्धा

विषयः हविष्कृतमिति यस्यैकदेशोहुतः सहविःशेषोनदातव्यः धर्मोपदेशोनशूद्रस्यकर्त्तव्यः व्रतंचास्यप्रायश्चित्तरूपंसाक्षान्नोपदिशेत् किंतुब्राह्मणंमध्येकृत्वातदुपदेशव्यवधानात् यथाहांगिराः तथाशूद्रंसमासाद्यसदाधर्मपुरःसरम् अंतराब्राह्मणंकृत्वाप्रायश्चित्तंसमादिशेत् प्रायश्चित्तमितिसकलधर्मोपदेशस्योपलक्षणार्थम् ८० योह्यस्येति यस्मात् योऽस्यशूद्रस्यधर्मंब्रूतेयश्चप्रायश्चित्तमुपदिशतिसतेनशूद्रेणैवसह असंवृताख्यंनरकंप्रविशति पंचकपूर्वोक्तेषुद्वयोर्दोषकथनंप्रायश्चित्तगौरवार्थम् ८१ नसंहताभ्यामिति संश्लिष्टाभ्यांपाणिभ्यान्नकंडूयेदात्मनः शिरःउच्छिष्टःस्वशिरोनस्पृशेत् शिरसाविनाउन्मज्जनव्यतिरेकेणनित्यनैमित्तिकस्नानेनकुर्यात् दृष्टार्थेशिरोव्यतिरिक्तगात्रप्रक्षालनेनदोषः स्नानशक्तस्यचायंनिषेधः अशक्तस्यतु अशिरस्कंभवेत्स्नानंस्नानाशक्तौतुकर्मणामितिजाबालिनाविहितमेव ८२ केशग्रहानिति क्रों

योह्यस्यधर्ममाचष्टेयश्चैवादिशतिव्रतम् सोऽसंवृतंनामतमःसहतेनैवमज्जति ८१ नसंहताभ्यांपाणिभ्यांकंडूयेदात्मनःशिरः नस्पृशेच्चैतदुच्छिष्टोनचस्नायाद्विनाततः ८२ केशग्रहान्प्रहारांश्चशिरस्येतान् विवर्जयेत् शिरःस्नातश्चतैलेननांगंकिंचिदपिस्पृशेत् ८३ नराज्ञःप्रतिगृह्णीयादराजन्यप्रसूतितः सूनाचक्रध्वजवतांवेशेनैवचजीवताम् ८४

शिरसिवर्ज्जयेत् कोपनिमित्तत्वाच्चात्मनः परस्यचप्रतिषेधः अतएवसुरतसमयेकामिनीकेशग्रहस्यानिषेधः स्वशिरस्कस्नातस्यतैलेननकिंचिदप्यंगंस्पृशेत् अथवातैलेनेतिकाकाक्षिवदुभयत्रसंबध्यते तैलेनशिरःस्नातः तैलेनपुनःकिंचिदप्यंगंनस्पृशेत् अतोरात्रौशिष्टानामतैलशिरःस्नातानांतैलेनपादाभ्यंगसमाचरणमविरुद्धम् ८३ नराज्ञइति राजन्यशब्दःक्षत्रियवचनः अक्षत्रियप्रसूतस्यराज्ञोप्रतिगृह्णीयात् राजतोधनमन्विच्छेत्तस्यायंविशेषउक्तः सूनाचक्रध्वजवतामिति सूनावतांचक्रवतांध्वजवतांच सूनाप्राणिवधस्थानंतद्यस्यास्तीतिससूनावान् पशुमारणपूर्वकमांसविक्रयजीवी चक्रवान्बीजवधविक्रयजीवीतैलिकः ध्वजवान्मद्यविक्रयजीवीशौंडिकः वेशःपण्यस्त्रियाभृतिः तयायोजीवतिस्त्रीपुमान्वासवेशवान् एतेभ्योनप्रतिगृह्णीयात् ८४ ७

दशसूनेति गोविंदराजस्तु दशवेश्यासमोनृपइतिपठति मेधातिथिप्रभृतयः प्राचोदशवेशसमोनृपइतिपठंति सूनादिशब्दैस्त द्वानुपलक्ष्यते दशसूनावतस्तुयावान्दोषस्तावानेकस्मिन्चक्रवतितैलिके यावान्दशसुतैलिकेषुदोषः तावानेकध्वजवतिशौंडिके यावान्दशसुध्वजवत्सुदोषस्तावानेकत्रवेशवति यावान्दशसुवेशवत्सुदोषस्तावानेकत्रराजनि उत्तरोत्तरनिंदान्वेयंपूर्वदातृसंभवेस्तु त्तरवर्जनार्थमपेक्षयायोज्यते ८५ दशसूनासहस्राणीति सूनयावरतीतिशौनिकः एवंसंकलनयायच्छौनिकोदशसहस्राणि स्वार्थेव्यापादयतितेनतुल्योराजामन्वादिभिःस्मृतः तस्मात्तुल्यप्रतिग्रहोनरकहेतुत्वाद्भयानकः क्षत्रियस्यापिच ८६ योराज्ञइति योराज्ञःकृपणस्यशास्त्रोल्लंघनेनप्रवर्त्तमानस्यप्रतिग्रहंकरोतिसंक्रमेणैतान्वक्ष्यमाणैकविंशतिनरकान्गच्छति ८७ पूर्वश्लोके सामान्यतोनरकानिमानेकविंशतिमित्युक्तमिदानींतानेवनामतोनिर्दिशति तामिस्रमितित्रिभिः एतेषांनरकाणांस्वरूपंमार्कंडेय

दशसूनासमंचक्रंदशचक्रसमोध्वजः दशध्वजसमोवेशोदशवेशसमोनृपः ८५ दशसूनासहस्राणि योवाहयतिशौनिकः तेनतुल्यःस्मृतोराजाघोरस्तस्यप्रतिग्रहः ८६ योराज्ञःप्रतिगृण्हातिलुब्धस्यो च्छास्त्रवर्तिनः सपर्यायेणयातीमान्नरकानेकविंशतिम् ८७ तामिस्रमंधतामिस्रंमहारौरवरौरवौ नरकंकालसूत्रंचमहानरकमेवच ८८ संजीवनंमहावीचिंतपनंसंप्रतापनम् संहातंचसकाकोलंकु ड्मलंप्रतिमूर्त्तिकम् ८९ लोहशंकुमृजीषंचपंथानंशाल्मलींनदीम् असिपत्रवनंचैवलोहदारक मेवच ९० एतद्विदंतोविद्वांसोब्राह्मणाब्रह्मवादिनः नराज्ञःप्रतिगृण्हंतिप्रेत्यश्रेयोभिकांक्षिणः ९१

पुराणादिषुविस्तरेणोक्तंतत्रैवावगंतव्यम् ८८ ८९ ९० एतद्विदंतइति प्रतिग्रहोविविधनरकहेतुरितिजानंतोब्राह्मणाः धर्मशास्त्रपुराणादिविदोवेदाध्यायिनोजन्मांतरेश्रेयःकामवंतोनराज्ञः प्रतिगृण्हीयुः विदुषोहिप्रतिग्रहेनातीवदोषः यतोवक्ष्यति तस्मादविद्वान्बिभियादिति तेषामपिनिषिद्धःराजप्रतिग्रहःप्रचुरप्रत्यवायफलकइतिदर्शयितुंविद्वद्ग्रहणंब्रह्मवादिग्रहणंच ९१ ब्राह्मइति ब्राह्मोमुहूर्त्तोरात्रेःपश्चिमोयामः ब्राह्मीभारतीतत्त्वबोधहेतुत्वात् मुहूर्त्तशब्दोत्रकालमात्रवचनः तत्रबुध्येत दक्षेणापि प्रदोषपश्चिमौयामौवेदाभ्यासेनतौनयेत् प्रहरद्वयंशयानोहिब्रह्मभूयायकल्पते इतिब्रुवतातत्रप्रबोधोऽभ्यनुज्ञा

तः गोविंदराजस्तु रात्रेःपश्चिमेमुहूर्त्तेबुध्येतइत्याह धर्मार्थौचपरस्पराविरोधेनानुष्ठानार्थमवधारयेत् तथाधर्म
नूनूकायक्लेशान्निरूपयेत् यदिमहान्कायक्लेशोऽल्पौचधर्मार्थौवातदातंपरिहरेत् वेदस्यतत्त्वार्थंब्रह्मकर्मात्मकं
तस्मिन्समयेबुद्धिप्रकाशात् ९२ उत्थायेति ततःउषःकालेशय्यायाउत्थायसतिवेगेमूत्रपुरीषोत्सर्गंकृत्वाकृतवक्ष्यमाण
ऽनन्यमनाः पूर्वसंध्यांचिरंगायत्रीजपंकुर्वन्नवर्त्तेतार्कदर्शनादयंविधिःप्रातःसंध्यायामुक्तउदयादूर्ध्वमपिजपेत्
इतिविधानार्थोयमारंभः अपरामपिसंध्यांस्वकालेप्रारभ्यतारकोदयादूर्ध्वमपिजपन्नासीत ९३ ७
तिदर्शयन्नाह ऋषयइति संध्याशब्दोत्रसंध्यानुष्ठेयजपादिपरःयस्माद्दृषयोदीर्घसंध्यानुष्ठानाद्द युःप्रज्ञांज यशो
ऽमृतांचकीर्त्तिमध्ययनादिसंपन्नंयशश्चप्रापुः तस्मादायुरादिकामश्चिरंसंध्यामुपासीत ९४ श्रावण्यामिति श्रावणस्यपौ-

ब्राह्मेमुहूर्त्तेबुध्येतधर्मार्थौचानुचिंतयेत् कायक्लेशांश्चतन्मूलान्वेदतत्त्वार्थमेवच ९२ उत्थाया
वश्यकंकृत्वाकृतशौचःसमाहितः पूर्वांसंध्यांजपंस्तिष्ठेत्स्वकालेचापरांचिरम् ९३ ऋषयोदीर्घसं
ध्यत्वाद्दीर्घमायुरवाप्नुयुः प्रज्ञांयशश्चकीर्त्तिंचब्रह्मवर्चसमेवच ९४ श्रावण्यांप्रौष्ठपद्यांवाप्युपा
कृत्ययथाविधि युक्तश्छंदांस्यधीयीतमासान्विप्रोर्द्धपंचमान् ९५ पुष्येतुच्छंदसांकुर्याद्बहिरु
त्सर्जनंद्विजः माघशुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमेहनि ९६ यथाशास्त्रंतुकृत्वैवमुत्सर्गंछंदसांबहिः
विरमेत्पक्षिणींरात्रिंतदेवैकमहर्निशम् ९७

र्णमास्यांभाद्रपदस्यचस्वगृह्यानुसारेणउपाकर्माख्यंक
श्चतुरोमासान्ब्राह्मणउपक्तोवेदानधीयीत ९५ पुष्येत्विति ततःपक्षाधिकेषुचतुर्षुयःपुष्यस्तत्रग्रामाद्बहिर्गत्वास्वगृह्य
रेणोत्सर्गाख्यंकर्मकुर्यात् अथवामाघशुक्लस्यप्रथमेहनिपूर्वाह्णेकुर्यात् माघशुक्लेचविधिःप्रौष्ठपद्यांयेनोपाकर्मनकृतंतद्वि-
षयः ९६ यथाशास्त्रमिति एवमुक्तशास्त्रानुसारेणग्रामाद्बहिःछंदसामुत्सर्गाख्यंकर्मकृत्वापक्षिणींरात्रिंविरमेत् नाधीयीत
द्वेदिनेपूर्वापरेपक्षाविवयस्यामध्यवर्त्तिन्यारात्रेःसापक्षिणीरात्रिः अस्मिन्पक्षेत्सर्गाहोरात्रेद्वितीयदिनेचाह्निनाध्येतव्यं

द्वितीयरात्रौनाध्येतव्यम् अथवानदेवैकेसुसर्गाहोरात्रमनध्यायंकुर्यात् विधानैपुण्यकामंप्रत्ययमहोरात्रानध्यायविधिः ९७ अतऊर्ध्वमिति उत्सर्गानध्ययनादूर्ध्वंमंत्रब्राह्मणात्मकंवेदंशुक्लपक्षेषुसंयतःपठेत्सर्वाणितुवेदांगादीनिशिक्षाव्याकरणादीनि कृष्णपक्षेषुपठेत् ९८ नाविस्पष्टमिति स्वरवर्णाद्यभिव्यक्तिशून्यंशूद्रसन्निधौचनाधीयीत तथारात्रेःपश्चिमेयामेसुप्तोत्थितो वेदमधीत्यश्रांतोनपुनःस्वप्यात् ९९ यथोदितेनेति यथोक्तविधिनानित्यंछंदस्कृतंगायत्र्यादिछंदोयुक्तंमंत्रमात्रंपठेत् मंत्रा णामेवकर्मांतरंगत्वात् अनापदिसम्यक्करणादौसतिब्रह्मब्राह्मणंमंत्रजातंचयथोक्तविधिनायुक्तःसन्द्विजःपठेत् १०० इमा निति इमान्वक्ष्यमाणाननध्यायान्सर्वथायथोक्तविधिना अधीयानःशिष्याध्ययनंचकुर्वाणोगुरुर्वर्जयेत् १०१ कर्णश्रवइति रा

अतऊर्ध्वंतुछंदांसिशुक्लेषुनियतःपठेत् वेदांगानिचसर्वाणिकृष्णपक्षेषुसंपठेत् ९८ नाविस्पष्टमधीयीतनशूद्रजनसन्निधौ ननिशांतेपरिश्रांतोब्रह्माधीत्यपुनःस्वपेत् ९९ यथोदितेनविधिनानित्यंछंदस्कृतंपठेत् ब्रह्मच्छंदस्कृतंचैवद्विजोयुक्तोह्यनापदि १०० इमान्नित्यमनध्यायानधीयानोविवर्जयेत् अध्यापनंचकुर्वाणःशिष्याणांविधिपूर्वकम् १०१ कर्णश्रवेऽनिलेरात्रौदिवापांसुसमूहने एतौवर्षास्वनध्यायावध्यायज्ञाःप्रचक्षते १०२ विद्युत्स्तनितवर्षेषुमहोल्कानांचसंप्लवे आकालिकमनध्यायमेतेषुमनुरब्रवीत् १०३ एतांस्त्वभ्युदितान्विद्यात्यदाप्रादुष्कृताग्निषु तदाविद्यादनध्यायमनृतौचाभ्रदर्शने १०४

वायौकर्णश्रवणयोग्यशब्दजनकेवायौवाति गोविंदराजस्तु कर्णाभ्यामेवश्रवणो पपत्तेरतिशयविवक्षयाकर्णश्रवइत्युक्तम् तेनातिशब्दवतिवायौवातीत्यभिहितवान् दिवाचधूलिपटलोत्सारणसमर्थेवायौव हति एतौवर्षाकालेअनध्यायौतात्कालिकावध्यापनविधिज्ञामुनयःकथयंति १०२ विद्युदिति विद्युद्गर्जितवर्षेषुद्वंद्वनिर्देशा द्युगपदुपस्थितेषुमहतीनांचोल्कानांसंप्लवेइतस्ततःपातेसति आकालिकमितितुनिमित्तकालादारभ्यापरेद्युर्यावत्सएवकाल स्तावत्पर्यंतमनध्यायमेतेषुमनुरवोचत् १०३ एतानिति एतान्विद्युदादीन्यदाहोमार्थंप्रकटीकृताग्निकालेषुसंध्याक्षणेषु

युगपदुत्पन्नान्जानीयात् तदानध्यायंवर्षासुकुर्यान्नसर्वदातथाऽनृतौप्रादुष्कृताग्निकालेषुमेघदर्शनमात्रेसतिअनध्या
योनवर्षासु १०४ निर्घातेति अंतरीक्षभवोत्पातध्वनौभूकंपेसूर्यचंद्रताराग्रणानांचोपसर्गेसत्यनध्याय इमानाकालिकान्
जानीयात् आकालिकशब्दार्थोव्याकृतएव ऋतावपिवर्षासुकिलभूकंपादयोनदोषावहा इत्यभिप्रायेणात्र तावपी
अपिशब्दादन्यत्रापि १०५ प्रादुष्कृतेति होमार्थंप्रकाशितेष्वग्निषुसंध्यायांयदाविद्युद्गर्जितश
ज्योतिरनध्यायःस्यात् नाकालिकः तत्रयदिप्रातःसंध्यायांतोस्यातांरात्रौस्तनितविद्युद्वर्षेष्वितित्रयाणांपू नां
त्रितयेजातेयथादिवानध्यायस्तथारात्रावपिअहोरात्रएवेत्यर्थः १०६ नित्यानध्यायइति नैपुण्यविषयोधर्मातिशया
नगरयोःसर्वदानध्यायःस्यात् कुत्सितगंधेचसर्वस्मिन्नपिगम्यमानेधर्मनैपुण्यकामंप्रत्ययंविद्यानध्यायोपदेशोविद्या

निर्घातेभूमिचलनेज्योतिषांचोपसर्ज्जने एतानाकालिकान्विद्यादनध्यायानृतावपि १०५ प्रादु-
ष्कृतेष्वग्निषुतुविद्युत्स्तनितनिस्वने सज्योतिःस्यादनध्यायःशेषेरात्रौयथादिवा १०६ नित्यानध्या
यएवस्याद्ग्रामेषुनगरेषुच धर्मनैपुण्यकामानांपूतिगंधेचसर्वदा १०७ अंतर्गतशवेग्रामेवृषल
स्यचसन्निधौ अनध्यायोरुद्यमानेसमवायेजनस्यच १०८ उदकेमध्यरात्रेचविण्मूत्रस्यविसर्ज्ज
ने उच्छिष्टःश्राद्धभुक्चैवमनसापिनचिंतयेत् १०९

मस्यकदाचिदध्ययनमनुजानातियेशिष्याः केचिद्धीनवेद
ध्ययनजन्मादृष्टेच्छवस्तेधर्मनैपुण्यकामाः केचित्स्वयमाध्येतारोविद्यातिशयमात्रार्थिनस्तेविद्यानैपुण्यकामाः १०७ अंतर्गते
ति अंतर्गतःशवोयस्मिन्ग्रामेज्ञायतेतत्र वृषलोऽधार्मिकस्तस्यसन्निधौनतुशूद्रः तस्यनशूद्रजनसन्निधावितिनिषेधात् रु
द्यमानेरोदनध्वनौप्रावेलकारः कार्यांतरार्थंबहुजनमेलकेसत्यनध्यायः १०८ उदकइति उदकमध्येमध्यरात्रेचमुहूर्त्तचतुष्ट
येचनिशायांचतुर्मुहूर्त्तमितिगोतमस्मरणात् गोविंदराजस्तुरात्रिमध्यप्रहरद्वयइत्युक्तवान् तथामूत्रपुरीषोत्सर्गकालेऽन्न
भोजनादिनाचोच्छिष्टोनिमंत्रणसमयादारभ्यश्राद्धभोजनाहोरात्रंयावन्मनसापिवेदंनचिंतयेत् १०९ ७ ७

मतिगृह्येति एकएवोद्दिश्यतेयत्रश्राद्धेतदेकोद्दिष्टन्नवश्राद्धंतत्केतनन्निमंत्रणंगृहीत्वानिमंत्रणादारभ्य क्षत्रियस्यजनपदेश्च
रस्यपुत्रजन्मादिसूतके राहोश्चसूतकंचंद्रसूर्योपरागः तत्रत्रिरात्रंवेदन्नाधीयीत ११० यावदिति यावदेकस्यानुदिष्टस्य
उच्छिष्टस्यसकुंकुमादेर्गंधोलेपश्चब्राह्मणस्यशास्त्रविदोदेहेतिष्ठतितावं त्सहोरात्राणिऊर्द्धमपिवेदन्नाधीयीत १११ शयान
इति शय्यायांपतितांगआसनारूढपादः कृतावसक्थिकोवामांसम् जननमरणशौचिनांचान्नंभुक्त्वानाधीयीत ११२ नीहा
रइति नीहारेधूलिकायाम् बाणशब्देशरध्वनौ बाणोवीणाविशेषइत्यन्ये अतःसायंसंध्ययोरमावास्याचतुर्दशीपौर्णमा-
सीषुनाधीयीत अष्टकासूत्तरत्रनिषेधात्पौर्णमास्यादिसाहचर्यादष्टकाशब्दोऽष्टमीतिथिपरः ११३ विशेषदोषमाह अमावा-

प्रतिगृह्यद्विजोविद्वानेकोद्दिष्टस्यकेतनम् त्र्यहंनकीर्त्तयेद्ब्रह्मराज्ञोराहोश्चसूतके ११० यावदेका
नुदिष्टस्यगंधोलेपश्चतिष्ठति विप्रस्यविदुषोदेहेतावद्ब्रह्मनकीर्त्तयेत् १११ शयानःप्रौढपादश्चकृ
त्वाचैवावसक्थिकाम् नाधीयीतामिषंजग्ध्वासूतकान्नाद्यमेवच ११२ नीहारेबाणशब्देचसंध्ययो
रेवचोभयोः अमावास्याचतुर्दश्योःपौर्णमास्यष्टकासुच ११३ अमावास्यागुरुंहंतिशिष्यंहंतिच
तुर्दशी ब्रह्माष्टकापौर्णमास्यौतस्मात्ताःपरिवर्जयेत् ११४ पांशुवर्षेदिशांदाहेगोमायुविरुतेतथा
श्वखरोष्ट्रेचरुवतिपंक्तौचनपठेद्द्विजः ११५ नाधीयीतश्मशानांतेग्रामांतेगोव्रजेपिवा वसित्वामैथु
नंवासःश्राद्धिकंप्रतिगृह्यच ११६ प्राणिवायदिवाप्राणियत्किंचिच्छ्राद्धिकंभवेत् तदालभ्याप्यनध्या
यःपाण्यास्योहिद्विजःस्मृतः ११७

स्येति यस्मादमावास्यागुरुंहंतिशिष्यंहंतिचतुर्दशी वेदंचाष्टमीपौर्णमास्यौविस्मार
यतः तस्मात्ताअध्ययनाध्यापनयोःपरित्यजेत् ११४ पांशुवर्षइति धूलिवर्षेदिशांदाहे शृगालकुक्कुरगर्दभोष्ट्रेषुचरुवत्सुपंक्तौ
चोपविश्यचकृतत्वात्सृगालश्वखरादीनामेवब्राह्मणोनपठेत् ११५ नाधीयीतेति श्मशानसमीपेग्रामसमीपेगोष्ठेचमैथुनसमय
धृतवासःपरिधायश्राद्धीयंचसिद्धान्नादिप्रतिगृह्यनाधीयीत ११६ प्राणिचेति श्राद्धिकमन्नादिभुक्त्वातावदनध्यायोभवतीत्य

कंभाणिवागवाश्वादिअभाणिवावस्त्रमाल्यादिप्रतिग्रहकालेहस्तेन गृहीत्वानध्यायोभवतियस्मात्पाणिरेवास्यमस्येतिपाण्या स्योहिब्राह्मणःस्मृतः ११७ चौरैरिति चौरैरुपप्लुतेग्रामेगृहादिदाहादिकृतेभयेदिव्यांतरिक्षभौमेषुचाद्भुतेषुउत्पाद्यभयेषुआ कालिकमनध्यायंजानीयात् ११८ उपाकर्मणीति उपाकर्मणिचोत्सर्गेत्रिरात्रमध्ययनक्षेपणम् उत्सर्गेपक्षिण्यहोरात्रावनध्याय युक्तौ तत्रायंधर्मनैपुण्यकामंप्रतित्रिरात्रोपदेशः तथाग्रहायण्याऊर्ध्वंकृष्णपक्षाष्टमीषु तिसृषुचतसृषुचाहोरात्रमनध्यायःदि वाकालमात्रसंज्ञावेपिपौर्णमास्यष्टकास्वच्चेत्यनेनयावदष्टम्येवानध्यायइतराष्टमीषूक्तइत्यपुनरुक्तिः ऋत्वंताहोरात्रेषुचानध्याय ११९ नधीयातेति तुरगतरुकरिनौकाखरोष्ट्रारूढः तयोषरदेशस्थः शकटादियानेनगच्छन्नाधीयीत १२० नविवादइति

चौरैरुपप्लुतेग्रामेसंभ्रमेचाग्निकारिते आकालिकमनध्यायंविद्यात्सर्वाद्भुतेषुच ११८ उपाकर्मणिचोत्सर्गे त्रिरात्रंक्षेपणंस्मृतम् अष्टकासुत्वहोरात्रमृत्वंतासुचरात्रिषु ११९ नाधीयीताश्वमारूढोनवृक्षंनचहस्तिनम् ननावंनखरंनोष्ट्रंनेरिणस्थोनयानगः १२० नविवादेनकलहेनसेनायांनसंगरे नभुक्तमात्रेनाजीर्णेनवमित्वानसूतके १२१ अतिथिंचाननुज्ञाप्यमारुतेवातिवाभृशम् रुधिरेचस्रुतेगात्राच्छस्त्रेणचपरिक्षते १२२ सामध्वनावृग्यजुषीनाधीयीतकदाचन वेदस्याधीत्यवाप्यंतमारण्यकमधीत्यच १२३

देवा कलहेकलहे दंडादंड्यादौसेनायां अभरत्त्पुद्धायांसंगरेयुद्धे भोजनानंतरंचयाव द्दहस्तो यावदार्द्रपाणिरितिवसिष्ठस्मरणात् तथाअजीर्णेऽन्नेवमनंचकृत्वा अम्लोद्गारेचनपठेत् १२१ अतिथिमिति ७ नंकरोमीतियावदतिथिरनुज्ञापितोनभवतिमारुतेचात्यर्थंवातिरुधिरेचगात्रात्स्रुतेरुधिरस्रवंविनापिशस्त्रेणक्षतमात्रेपिनाधी यीत १२२ सामध्वनाविति सामध्वनौचश्रूयमाणेऋग्यजुषोःकदाचिदध्ययनन्नकुर्यात् वेदंचसमाप्यचारण्यकाख्यंचवेदं मधीत्यतदहोरात्रेवेदांतरंनाधीयीत १२३ ऋग्वेदेति सामगानश्रुतौऋग्यजुषोरनध्यायउक्तः तस्यायमनुवादः ऋग्वेदोदेवदेवताअस्येतिदेवदैवत्यः यजुर्वेदोमानुषोमानुषदेवताकत्वात् प्रायेणमानुषकर्मोपदेशाद्वामानुषः सामवेदः पितृदेवताक-

त्वादित्यः पितृकर्मकत्वाजलोपस्पर्शनंस्मरंति तस्मात्तस्याशुचिरिवध्वनिःनत्वशुचिरेव अतस्तस्मिन्श्रूयमाणेऋग्यजुषीना
धीयीत १२४ एतद्विदंतइति एतद्वेदत्रयस्यदेवमनुष्यपितृदेवताकत्वंजानंतः शास्त्रज्ञास्त्रयीनिष्कर्षसारोद्धृतंव्याहृतिसावि-
त्र्यात्मकंप्रणवव्याहृतिसावित्रीःक्रमेणपूर्वमधीत्यपश्चाद्वेदाध्ययनंकुर्युः द्वितीयाध्यायोक्तोप्ययमर्थःपुनरनध्यायप्रकरणेऽभि
हितः यथैतेयथोक्तानध्यायाएवंप्रणवव्याहृतिसावित्रीरूपदिताऽनध्यायइतिदर्शयितुंशिष्यस्याध्यापनमेवंकर्त्तव्यमितिस्ना
तकव्रतलाघवमार्यंच १२५ पशुमंडूकेति पशुर्गवादिःमंडूकविडालकुक्कुरसर्पनकुलमूषिकैः शिष्योपाध्याययोर्मध्यगमनेअ
नध्यायमहोरात्रंजानीयात् १२६ संप्रतिविधानैपुण्यकासंप्रतिपूर्वोक्तानध्यायविकल्पार्थमाह द्वावेवेति स्वाध्यायभूमिंचो-
च्छिष्टाद्यमेध्योपहताम् आत्मानंचयथोक्तशौचरहितमितिद्वावेवानध्यायौनित्यंप्रयत्नतोवर्जयेत् नतुपूर्वोक्तान् तेषामपिय

ऋग्वेदोदेवदैवत्योयजुर्वेदस्तुमानुषः सामवेदःस्मृतःपित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः १२४ एत
द्विदंतोविद्वांसस्त्रयीनिष्कर्षमन्वहम् क्रमतःपूर्वमभ्यस्यपश्चाद्वेदमधीयते १२५ पशुमंडूकमा
र्जारश्वसर्पनकुलाखुभिः अंतरागमनेविद्यादनध्यायमहर्निशम् १२६ द्वावेववर्जयेन्नित्यमन
ध्यायौप्रयत्नतः स्वाध्यायभूमिंचाशुद्धामात्मानंचाशुचिंद्विजः १२७ अमावास्यामष्टमींचपौर्णमा
सींचतुर्दशीम् ब्रह्मचारीभवेन्नित्यमप्यृतौस्नातकोद्विजः १२८ नस्नानमाचरेद्भुक्त्वानातुरोनम-
हानिशि नवासोभिःसहाजस्त्रंनाविज्ञातेजलाशये १२९

अनित्यग्रहणं अनुवादोवानित्यत्वापेक्षकोऽवास्ति-
तानपिनित्यंवर्जयेत् अन्यत्रविकल्पः १२७ अमावास्यामिति अमावास्यादिषुऋतावपिस्नातकोद्विजोनस्त्रियमुपगच्छेत् पर्व
वर्जंभजेच्चैनामित्यनेनैवनिषेधसिद्धौस्नातकव्रतलोपप्रायश्चित्तार्थमिहवर्जनम् १२८ नस्नानमिति नित्यस्नानस्यभोजना
नंतरंप्रसक्तेश्चांडालादिस्पर्शनिमित्तकस्यमुहूर्त्तमपिशक्तिविषयेनाप्रयतःस्यादित्यापस्तंबस्मरणात् निषेद्धुमयोग्यत्वात् यदृ-
च्छास्नानमिदंभोजनानंतरंनिषिध्यते तथारोगीनैमित्तिकमपिस्नानंनकुर्यात् किंतुयथासामर्थ्यम् अशिरस्कंप्रवेत्ना

नंस्नानाशक्तौतुकर्मिणाम् ओर्द्रेणवाससावास्यान्मार्ज्जनंदैहिकंविदुः इत्यादिजाबालाद्युक्तमनुसंधेयम् नथामहानि भविज्ञेयामभ्यस्यंप्रहरद्वयम् तस्मिन्स्नानन्नकुर्वीतकाम्यनैमित्तिकादृतइतिदेवलवचनात्तत्रनस्नायात् बहुवासाश्चनि त्यन्नस्नायात्नैमित्तिकंचांडालादिस्पर्शेसतितुस्नानंबहुवाससोप्यनिषिद्धम् ग्राहाद्याक्रांतागाधरूपतयाविशेषेणाज्ञाते जलाशयेच १२९ देवतानामिति देवतानांपाषाणादिमयीनांगुरोःपित्रादेःनृपतेःस्नातकस्याचार्यस्यचगुरुत्वेप्याचार्यस्यप्रा धान्यविवक्षयापृथङ्निर्देशः बभ्रुणःकपिलस्ययज्ञेदीक्षितस्यचेच्छयाछायांनाक्रामेत्चशब्दाच्चांडालादीनामपि कामतइत्य भिधानात्अबुद्धिपूर्वकेनदोषः १३० मध्यंदिनइति दिवारात्रेचसंपूर्णप्रहरद्वयेसमांसंचश्राद्धंभुक्त्वाप्रातःसायंसंध्ययो र्निसंचतुष्पथंनाधितिष्ठेत् १३१ उद्वर्त्तनमिति उद्वर्त्तनमभ्यंगमलापकर्षणपिष्टकादिअपस्नानंस्नानोदकंमूत्रपुरीषेरुधि

देवतानांगुरोराज्ञःस्नातकाचार्ययोस्तथा नाक्रामेत्कामतश्छायांबभ्रुणोदीक्षितस्यच १३० मध्यंदिनेऽर्द्धरात्रेचश्राद्धंभुक्त्वाचसामिषम् संध्ययोरुभयोश्चैवनसेवेतचतुष्पथम् १३१ उद्वर्त्तनमपस्नानंविण्मूत्रेरक्तमेवच श्लेष्मनिष्ठ्यूतवांतानिनाधितिष्ठेत्तुकामतः १३२ वैरिणंनोपसेवेतसहायंचैववैरिणः अधार्मिकंतस्करंचपरस्यैवचयोषितम् १३३ नहीदृशमनायुष्यंलोकेकिंचनविद्यते यादृशंपुरुषस्येहपरदारोपसेवनम् १३४ क्षत्रियंचैवसर्पंचब्राह्मणंचबहुश्रुतम् नावमन्येतवैभूष्णुःकृशानपिकदाचन १३५

रंचश्लेष्माणंनिष्ठ्यूतमश्लेष्मरूपमपिचर्वितपरित्यक्तरूपतांबुलादि तंभुक्त्वाउद्गीर्णभक्तादिएतानिकामतोनाधितिष्ठेत् अधिष्ठानंतत्रपर्यवस्थानम् १३२ वैरिणमिति शत्रुंतन्मित्रिणमधर्म शीलंचौरंपरदारान्नसेवेत् चौरस्याधार्मिकत्वेप्यत्यंतगर्हितत्वात्पृथङ्निर्देशः १३३ नहीदृशमिति यस्मादीदृशमनायुष्यमि हलोकेपुरुषस्यनकिंचिदस्तियादृशंपरदारगमनम् तस्मादेतन्नकर्त्तव्यम् १३४ क्षत्रियमिति वृद्ध्यर्थेभूधातुःभूष्णुः वर्द्धिष्णुः धनगवादिनावर्द्धनशीलः क्षत्रियंसर्पंबहुश्रुतंचब्राह्मणन्नावजानीयात् कृशानपिकालेप्रतीकाराक्षमान् १३५

एतत्त्रयमिति एतत्त्रयमवमानितंसदवमंतारं विनाशयतिक्षत्रियसर्पौदृष्टशक्त्याब्राह्मणश्चाभिचारादिनादृष्टेनतस्मात्कल्याणबु
द्धिरेतत्त्रयंसर्वदानावजानीयात् १३६ नात्मानमिति प्रथमंधनार्थमुद्यमेकृतेतत्रधनानामसंपत्तिभिर्मंदभाग्योहमितिनात्मान
मवजानीयात् किंतुमरणपर्यंतंश्रीसिद्ध्यर्थमुद्यमंकुर्यात् नतुइमान्दुर्लभांबुध्येत् १३७ सत्यंब्रूयादिति यथादृष्टश्रुतंतत्संब्रू
यात् तथाप्रीतिसाधनंब्रूयात्पुत्रस्तेजातइति यथादृष्टश्रुतमप्यप्रियंपुत्रस्तेमृतइत्यादिनवदेत् एषवेदमूलतयानित्योधर्मः १३८
भद्रमिति प्रथमंभद्रपदंप्रभद्रपदपरंद्वितीयंभद्रशब्दपर्यायपरं अभद्रंपत्तद्भद्रशब्दपर्यायपरंप्रशस्तादिशब्देनप्रब्रूयात् न
श्चात्यपस्तंवःनाभद्रमभद्रंब्रूयात्पुण्यंप्रशस्तमितिब्रूयात् भद्रमित्येवेति भद्रेभद्रपदमेववातत्रयोज्यंशुष्कनिःप्रयोजनंवैरंविवा

एतत्त्रयंहिपुरुषंनिर्दहेदवमानितम् तस्मादेतत्त्रयंनित्यंनावमन्येतबुद्धिमान् १३६ नात्मानमव
मन्येतपूर्वाभिरसमृद्धिभिः आमृत्योःश्रियमन्विच्छेन्नैनांमन्येतदुर्लभाम् १३७ सत्यंब्रूयात्प्रियंब्रूया
न्नब्रूयात्सत्यमप्रियम् प्रियंचनानृतंब्रूयादेषधर्मःसनातनः १३८ भद्रंभद्रमितिब्रूयाद्भद्रमित्येववा
वदेत् शुष्कवैरंविवादंचनकुर्यात्केनचित्सह १३९ नातिकल्यंनातिसायंनातिमध्यंदिनेस्थिते नाज्ञा
तेनसमंगच्छेन्नैकोनवृषलैःसह १४० हीनांगानतिरिक्तांगान्विद्याहीनान्वयोधिकान् रूपद्रव्यवि
हीनांश्चजातिहीनांश्चनाक्षिपेत् १४१ नस्पृशेत्पाणिनोच्छिष्टोविप्रोगोब्राह्मणानलान् नचापिपश्येद
शुचिःसुस्थोज्योतिर्गणान्दिवि १४२

दंनकेनचित्सहकुर्यात् १३९ नातिकल्यमिति उषःसमयेप्रदोषेचादिवासंपू
र्णमहरद्वयेचअज्ञातशीलेनपुरुषेणशूद्रैश्चसहनगच्छेत् नैकःप्रपद्येताध्वानमित्यत्रप्रतिषेधेपिपुनर्नैकइतिप्रतिषेधःस्ना
तकव्रतलोपप्रायश्चित्तगौरवार्थः १४० हीनांगानिति हीनांगाधिकांगमूर्खवृद्धकुरूपहीनजातीन् काणशब्दाह्वानादिनान
निंदेत् १४१ नस्पृशेदिति कृतभोजनःकृतमूत्रपुरीषादिश्चाकृतशौचाचमनोब्राह्मणोहस्तादिनागोब्राह्मणाग्नीन्नस्पृशेत्
नचाशुचिःसन् अनातुरोदिविस्थान्सूर्यचंद्रग्रहादिज्योतिर्गणान्पश्येत् १४२ स्पृशेतानिति एतानावादीनशुचिःसन्-

स्पृष्ट्वाकृताचमनः पाणिनागृहीताभिरद्भिः प्राणांश्चक्षुरादीनींद्रियाणिशिरःस्कंधजानुपादान्नाभिंचस्पृशेत् अप्रकरणेचेदं मापध्वित्ताभिधानंलाघवार्थंतत्रकरणेगवादिग्रहणमपिकर्त्तव्यंस्यात् १४३ अनातुरइति अनातुरःसन्स्वानिखानिइंद्रियणिछिद्राणिरोमाणिचगोप्यानिउपस्थकक्षगतानिनिर्निमित्तंनस्पृशेत् १४४ मंगलाचारयुक्तःस्यादिति अभिप्रेतार्थसिद्धिर्मंगलम् तद्धेतुत्वेनगोरोचनादिधारणमपिमंगलंगुरुसेवादिकमाचारस्तत्रोद्युक्तःस्यात् बाह्याभ्यंतरशौचोपेतोजितेंद्रियोभवेत् गायत्र्यादिजपंविहितहोमंचकुर्यात् अतंद्रितः अनलसः अत्रनाशादियुक्तानामपिविनिपातनिवृत्त्यर्थत्वात्पुनरभिधानम् १४ अतआह मंगलाचारयुक्तानामिति मंगलाचाराभ्यांयुक्तानान्नित्यंशुचीनांजपहोमरतानांदैवमानुषोपद्रवोनजायते १४६

स्पृष्ट्वैतानशुचिर्नित्यमद्भिःप्राणानुपस्पृशेत् गात्राणिचैवसर्वाणिनाभिंपाणितलेनतु १४३ अनातुरःस्वानिखानिनस्पृशेदनिमित्ततः रोमाणिचरहस्यानिसर्वाण्येवविवर्जयेत् १४४ मंगलाचारयुक्तःस्यात्प्रयतात्माजितेंद्रियः जपेच्चजुहुयाच्चैवनित्यमग्निमतंद्रितः १४५ मंगलाचारयुक्तानांनित्यंचप्रयतात्मनाम् जपतांजुह्वतांचैवविनिपातोनविद्यते १४६ वेदमेवाभ्यसेन्नित्यंयथाकालमतंद्रितः तंह्यस्याहुःपरंधर्ममुपधर्मोऽन्यउच्यते १४७ वेदाभ्यासेनसततंशौचेनतपसैवच अद्रोहेणचभूतानांजातिंस्मरतिपौर्विकीम् १४८ पौर्विकींसंस्मरन्जातिंब्रह्मैवाभ्यसतेपुनः ब्रह्माभ्यासेनचाजस्रमनंतंसुखमश्नुते १४९

वेदमेवेति नित्यकृत्यावसरेश्रेयोहेतुतयाप्रणवगायत्र्यादिकंवेदमेवानलसोजपेत् यस्मातंब्राह्मणस्यश्रेष्ठंधर्मंमन्वादयोवदंति अन्यःपुनस्ततोऽपकृष्टोधर्मोमुनिभिरुच्यते उक्तस्यैववेदाभ्यासादेःपूर्वजातिस्मरणद्वारेणमोक्षहेतुत्वंवदितुंपुनरभिधानम् १४७ वेदाभ्यासेनेति सततवेदाभ्यासशौचतपोऽहिंसाभिःपूर्वभवस्यजातिंस्मरति १४८ ततःकिमतआह पौर्विकीमिति पूर्वजातिंस्मरन्जातिमित्येकत्वमनाकांक्षितत्वादविवक्षितम् बहूनिजन्मानिस्मरंस्तेषुचगर्भजन्मजरामरणदुःखान्यपिस्मरन्संसारेविरज्यन्ब्रह्मैवाजस्रमभ्यसतिश्रवणमननध्यानैःसाक्षात्करोतितेनचानंतम

विनाशिपरमानंदाविर्भावलक्षणंमोक्षरूवंप्राप्नोति सावित्रानिति सावित्रीदेवताकान् होमान् अनिष्टनिरस्यर्थं शांतिहोमां
पौर्णमास्यमावास्ययोः सर्वदाकुर्यात् तथा आग्रहायण्याऊर्ध्वंकृष्णाष्टमीषुतिसृषुचाष्टकाख्येन कर्मणाश्राद्धेनचतदंतरित
कृष्णनवमीषुचान्वष्टकाख्येन परलोकगतान् पितॄनुयजेत् १५० दूरादावसथादिति नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं-
क्रवइतिविष्णुपुराणवचनादेवंविधादग्निगृहदूरान्मूत्रपुरीषपादप्रक्षालनसकलोच्छिष्टान्नानिनिषिच्यतइतिनिषेकंरेत-
श्चोत्सृजेत् १५१ मैत्रमिति मित्रदेवताकत्वान्मैत्रः पायुः तद्भवत्वान्मैत्रंपुरीषोत्सर्गम् तथादेहप्रसाधनप्रातःस्नानदंतधा
वनांजनदेवार्चनादिपूर्वाह्णएवकुर्यात् पूर्वाह्णशब्देनरात्रिशेषदिनपूर्वभागाविहविवक्षितोपदार्थमात्रविधिपरत्वाच्चास्यपाठ
क्रमोपिनादरणीयः नहिस्नानानंतरंदंतधावनम् १५२ दैवतानीति पाषाणादिमयानिधर्मप्रधानांश्चब्राह्मणान् रक्षार्थंराजा

सावित्रान् शांतिहोमांश्चकुर्यात्पर्वसुनित्यशः पितॄंश्चैवाष्टकास्सर्वेन्नित्यमन्वष्टकासुच १५० दूरा
दावसथान्मूत्रंदूरात्पादावसेचनम् उच्छिष्टान्ननिषेकंच दूरादेवसमाचरेत् १५१ मैत्रंप्रसाधनंस्नानं
दंतधावनमंजनम् पूर्वाह्णएवकुर्वीत देवतानांचपूजनम् १५२ दैवतान्यभिगच्छेत्तुधार्मिकांश्चद्वि
जोत्तमान् ईश्वरंचैवरक्षार्थंगुरूनेवचपर्वसु १५३ अभिवादयेद्वृद्धांश्चदद्याच्चैवासनंस्वकम् कृ
तांजलिरुपासीतगच्छतःपृष्ठतोन्वियात् १५४ श्रुतिस्मृत्युदितंसम्यङ्निबद्धंस्वेषुकर्मसु धर्ममूलंनि
षेवेतसदाचारमतंद्रितः १५५

दिंगुरूंश्चपित्रादीनमावास्यादिपर्वसुद्रष्टुमभिमुखोगच्छेत् १५३ अभिवाद-
येदिति गृहागतान्गुरूनभिवादयेत्तेषांचस्वीयमासनंउपवेष्टुंचदद्यात् बद्धांजलिश्चगुरुसमीपआसीत् गच्छतश्चपृष्ठ
देशेऽनुगच्छेत् उक्तोप्ययमभिवादनाद्याचारःफलाभिधानायपुनरुच्यते १५४ श्रुतिस्मृत्युदितमिति वेदस्मृतिभ्यांसम्य
गुक्तंस्वेषुकर्मसुअध्ययनादिषुगतेनसंबंधंधर्मस्यहेतुंसाधूनामाचारमनलसःसन्नितांतंसेवेतेतिसामान्येनाचारानुष्ठानो
पदेशःफलकथनाय १५५ आचारादिति आचाराद्वेदोक्तमायुर्लभतेअभिमताश्चप्रजाःपुत्रपौत्रदुहित्रात्मिकाःप्रभूतंच-

धनंअशुभफलसूचकंचदेहस्थमलक्षणमाचारोनिष्फलयति आचारस्यधर्मेणालक्षणसूचितारिष्टनाशात् १५६ दुराचा
रोहीति यस्माद्दुराचारःपुरुषोलोकेगर्हितःस्यात्सर्वदादुःखान्वितोरोगवान् अल्पायुश्चभवति तस्मात्सदाचारयुक्तःस्यात्
१५७ सर्वलक्षणहीनोपीति यःसदाचारवान्श्रद्धान्वितःपरदोषानभिधातासशुभसूचकलक्षणशून्योपिशतायुर्भवति
१५८ यद्यत्परेति यद्यत्कर्मपराधीनंपरप्रार्थनादिसाध्यंतत्तद्यत्नतोवर्जयेत् यद्यत्स्वाधीनदेहव्यापारसाध्यंपरमात्मग्रहा
दितत्तद्यत्नतोऽनुतिष्ठेत् १५९ अत्रहेतुमाह सर्वपरवशमिति सर्वपरप्रार्थनादिसाध्यंदुःखहेतुःसर्वमात्माधीनंसुखहेतुः
एतत्सुखदुःखयोःकारणंजानीयात् १६० यत्कर्मकुर्विति यत्कर्मकुर्वतोऽस्यात्तुष्टात्तुःपुरुषस्यान्तरात्मनःतुष्टिःस्यात्तत्प्रयत्न

आचाराल्लभतेह्यायुराचारादीप्सिताःप्रजाः आचाराद्धनमक्षय्यमाचारोहन्त्यलक्षणम् १५६ दु-
राचारोहिपुरुषोलोकेभवतिनिंदितः दुःखभागीचसततंव्याधितोल्पायुरेवच १५७ सर्वलक्षणही
नोपियःसदाचारवान्नरः श्रद्दधानोनसूयश्चशतंवर्षाणिजीवति १५८ यद्यत्परवशंकर्मतत्तद्यत्नेन
वर्जयेत् यद्यदात्मवशंतुस्यात्तत्तत्सेवेतयत्नतः १५९ सर्वंपरवशंदुःखंसर्वमात्मवशंसुखम् एत
द्विद्यात्समासेनलक्षणंसुखदुःखयोः १६० यत्कर्मकुर्वतोऽस्यस्यात्परितोषोऽन्तरात्मनः तत्प्रयत्नेन
कुर्वीतविपरीतंतुवर्जयेत् १६१ आचार्यंचप्रवक्तारंपितरंमातरंगुरुम् नहिंस्याद्ब्राह्मणान्गाश्च
सर्वांश्चैवतपस्विनः १६२ नास्तिक्यंवेदनिंदांचदेवतानांचकुत्सनम् द्वेषंदंभंचमानंचक्रोधंतैक्ष्ण्यं
चवर्जयेत् १६३

नोऽनुष्ठेयंअतुष्टिकरंवर्जयेत् एतच्चाविहितानिषिद्धगोचरंवैकल्पिकविषयंच १६१ आचार्यंचेति आ
चार्यमुपनयनपूर्वकवेदाध्यापकंप्रवक्तारंवेदार्थव्याख्यातारंगुरुमल्पंवाबहुवायस्येत्युक्तंआचार्यादींस्तन्नहिंसेत् प्रतिकू
लाचरणेऽत्रहिंसाशब्दः गोविंदराजस्तु सामान्येनहिंसानिषेधात् आततायिनोप्येतान्नहिंस्यादितिव्याख्यातवान् तदयुक्तं
गुरुंवाबालवृद्धौवाइत्यनेनविरोधात् १६२ नास्तिक्यमिति नास्तिपरलोकइतिबुद्धिंवेदस्यदेवतानांचनिंदांमात्सर्यंधर्मानुः

हाभिमानकोपक्रौर्याणित्यजेत् १६३ परस्यदंडमिति परस्यहननार्थंक्रुद्धःसन् दंडादिनोत्क्षिपेत् नचपरगात्रेनिपातयेत्पुत्रशि
ष्यभार्यादासादेरन्यत्रकृतापराधानेताननुशासनार्थंरज्वावेणुदलेनवाइत्यादिवक्ष्यमाणप्रकारेणताडयेत् १६४ ब्राह्मणायेति द्वि
जातिरपिब्राह्मणस्यहननार्थंदंडादिकमुद्यम्यैवनतु निपात्यवर्षशतंतामिस्रादिनरकेपरिभ्रमति १६५ ताडयित्वातृणेनापीति तृणे
नापिक्रोधाद्बुद्धिपूर्वकंब्राह्मणंताडयित्वाएकविंशतिजन्मानिपापयोनिषुकुक्कुरादियोनिषुजायते १६६ अयुध्यमानस्येति अयुध्य
मानस्यब्राह्मणस्यांगेशास्त्रानभिज्ञतयाशोणितमुत्पाद्यपरलोकेत्वमहद्दुःखमाप्नोति १६७ शोणितमिति खड्गादिहतब्राह्मणां
गनिर्गतंरुधिरंभूमिपतितंयावतोधूलिह्यणुकान्पिंडीकरोतितावत्संख्यानिवर्षाणिपरलोकेशोणितोत्पादकःमहत्तमन्यैःश्वशृ

परस्यदंडंनोद्यच्छेत्क्रुद्धोनैवनिपातयेत् अन्यत्रपुत्राच्छिष्याद्वाशिष्ट्यर्थंताडयेत्तुतौ १६४ ब्राह्मणा
यावगुर्यैवद्विजातिर्वधकाम्यया शतंवर्षाणितामिस्रेनरकेपरिवर्त्तते १६५ ताडयित्वातृणेनापिसंरं
भान्मतिपूर्वकम् एकविंशतिमाजातीःपापयोनिषुजायते १६६ अयुध्यमानस्योत्पाद्यब्राह्मणस्या
सृगंगतः दुःखंसुमहदाप्नोतिप्रेत्याप्राज्ञतयानरः १६७ शोणितंयावतःपांसून्संगृह्णातिमहीतला
त् तावतोब्दानमुत्रान्यैःशोणितोत्पादकोद्यते १६८ नकदाचिद्द्विजेतस्माद्विद्वानवगुरेदपि नताड
येत्तृणेनापिनगात्रात्स्रावयेदसृक् १६९ अधार्मिकोनरोयोहियस्यचाप्यनृतंधनम् हिंसारतश्चयो
नित्यन्नेहासौसुखमेधते १७०

गालादिभिर्भक्ष्यते १६८ नकदाचिदिति तस्मादवगोरणादिदोषाभिज्ञोब्राह्मणोदं
डाद्युद्यमननिपातरुधिरस्रवणानितृणाद्यपिकुर्यादितिपूर्वोक्तक्रियात्रयस्योपसंहारः १६९ अधार्मिकइति अधर्मेणव्यवहरती
ति अधार्मिकः शास्त्रमतिषिद्धागम्यागमनाद्यनुष्ठातायोमानुषोयस्यचसाक्ष्येव्यवहारनिर्णयादौचमिथ्याभिधानमेवधनोपाय
असत्यमभिधायोत्कोचधनंगृह्णातियश्चपरहिंसाभिरतः नासाविहलोकेसुखयुक्तोवर्त्तते तस्मादेतन्नकर्त्तव्यमितिनिंदानिषे
धःकल्प्यते १७० नसीदन्नपीति शास्त्रविहितमनुतिष्ठन् धनाद्यभावेन अवसीदन्नपिकदाचिन्नाधर्मेबुद्धिंकुर्यात् यस्मा

दधर्मव्यवहारिणोयद्यप्यापाततोधनादिसंपद्भागिनोपिदृश्यंते तथापितेषामधार्मिकाणांअधर्मचौरादिव्यवहारिणांपापिनां तज्जनितदुरितशालिनांशीघ्रंधनादिविपर्ययोपिदृश्यते तंपश्यन्नाधर्मेधियंदद्यादितिशिशिष्यहितायदृष्टमर्थंदर्शितवान् १७१ नाधर्मइति शास्त्रेणानियमितकालपरिपाकत्वात् शुभाशुभकर्मणांनाधर्मोऽनुष्ठितः तत्कालएवफलतिगौरिवइह भूमिपक्षे- साधर्म्यदृष्टांतः यथाभूमिरुप्तबीजमात्रातदेवप्ररुहपचेलिमफलव्रीहिस्तवकसंवलितानभवति किंतुनियमफलपाकसमयमा- साद्य पशुपक्षेवैधर्म्यदृष्टांतः यथागौःपशुर्वाहदोहाभ्यांसद्यःफलतिनैवमधर्मः किंतुक्रमेणावर्त्तमानःफलोन्मुखीभवन्नधर्म कर्त्तुर्मूलानिछिंदंतिमूलच्छेदेनसर्वनाशोलक्ष्यते देहधनाद्यन्वितोनश्यति १७२ यदीति यदिस्वयंकर्त्तुर्देहधनादिनाशंफल भजनयतितदातत्पुत्रेषु नोचेत्पौत्रेषुजनयतिनतुनिष्फलएवभवति ननुअन्यकृतस्यकर्मणःकथमन्यत्रफलजनकत्वंउच्यते

नसीदन्नपिधर्मेणमनोधर्मेनिवेशयेत् अधार्मिकाणांपापानामाशुपश्यन्विपर्ययम् १७१ नाधर्म श्चरितोलोकेसद्यःफलतिगौरिव शनैरावर्त्तमानस्तुकर्त्तुर्मूलानिकृंतति १७२ यदिनात्मनिपुत्रेषु नचेत्पुत्रेषुनप्तृषु नत्वेवतुकृतोऽधर्मः कर्त्तुर्भवतिनिष्फलः १७३ अधर्मेणैधतेतावत्ततोभद्राणि पश्यति ततःसपत्नान्जयतिसमूलस्तुविनश्यति १७४ सत्यधर्मार्यवृत्तेषुशौचेचैवारमेत्सदा शिष्यांश्चशिष्याद्धर्मेणवाग्बाहूदरसंयतः १७५

पुत्रादिनाशस्यपितुःक्लेशहेतुत्वात् शास्त्रीयत्वाच्चास्यार्थस्य नाविश्वासः १७३ अधर्मेणेति अधर्मेणपरद्रोहादिनातावदापाततोग्रामधनादिनावर्द्धते ततोभद्राणिबहुमूल्यगवाश्वादी निलभते ततःशत्रून्स्वस्मादपकृष्टान्जयतिपश्चात्क्रियताकालेनाधर्मपरिपाकवशात् देहधनतनयादिसहितोविनश्यति १७४ सत्यधर्मार्यवृत्तेष्विति सत्यधर्मसदाचारशौचेषुसर्वदारतिंकुर्यात् शिष्यांश्चानुशासनीयान्भार्यापुत्रदासच्छात्रान्रज्जु वेणुदलेनवेतिशासयेत् उक्तानामप्यभिधानादादरार्थंवाग्बाहूदरसंयतश्चस्यात् वाक्संयमःसत्यभाषित्वं बाहुसंयमोवा हुबलेनकस्याप्यपीडनम् उदरसंयमोयथालब्धाल्पभोजनम् १७५ ७ ७ ७ ७

परित्यजेदिति यावर्थकामौधर्मविरोधिनौभवेतांतौपरिहरेत् यथाचौर्यादिनार्थोपपादनम् दीक्षादिनेयजमानस्यपत्न्युपगमः उदर्कउत्तर-
कालः तत्रासुखंयत्रधर्मेतद्धर्ममपिपरित्यजेत् यथापुत्रादिवर्गपोष्ययुक्तस्यसर्वस्वदानम् लोकविक्रुष्टंयत्रलोकानांविक्रोशः यथाकलौमध्य-
माष्टकादिषुगोवधादिः १७६ नपाणिपादचापलइति पाण्यादिचापलंत्यजेत् अनुपयुक्तवस्तूपादानादिपाणिचापलंनिष्प्रयोजनंपत्र
भ्रमणादिपादचापलंपरस्त्रीप्रेक्षणादिरसौनेत्रचापलंबहुगर्ह्यवादितावाक्चापलंअनृजुःकुटिलोनस्यात् परद्रोहोहिंसातदर्थंचेष्टाधियं
चनकुर्यात् १७७ येनेति बहुविधशास्त्रार्थसंभवेपितृपितामहाद्यनुष्ठितएवशास्त्रार्थोऽनुष्ठातव्यः तेनगच्छन्नरिष्यतेनाधर्मेणहिंस्या
त् १७८ ऋत्विगितिवचनद्वयम् ऋत्विगादिभिर्वाक्कलहंनकुर्यात् शांत्यादिकर्त्तापुरोहितः संश्रिताअनुजीविनः ज्ञातयःपितृपक्षाःसं
बंधिनःश्यालकादयः बांधवामातृपक्षाः यामयोभगिनीस्नुषाद्याः १७९ १८० एतैरिति एतैःऋत्विगादिभिःसहविवादान्परित्यज्य

परित्यजेदर्थकामौयौस्यातान्धर्मवर्जितौ धर्मंचाप्यसुखोदर्कंलोकविक्रुष्टमेवच १७६ नपाणिपादच
पलोननेत्रचपलोऽनृजुः नस्याद्वाक्चपलश्चैवनपरद्रोहकर्मधीः १७७ येनास्यपितरोयातायेनयाताःपि
तामहाः तेनयायात्सतांमार्गंतेनगच्छन्नरिष्यते १७८ ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः बा
लवृद्धातुरैर्वैद्यैर्ज्ञातिसंबंधिबांधवैः १७९ मातापितृभ्यांयामीभिर्भ्रात्रापुत्रेणभार्यया दुहित्रादास
वर्गेणविवादंनसमाचरेत् १८० एतैर्विवादान्संत्यज्यसर्वपापैःप्रमुच्यते एभिर्जितैश्चजयतिसर्वान्
लोकानिमान्गृही १८१ आचार्योब्रह्मलोकेशःप्राजापत्येपिताप्रभुः अतिथिस्त्विंद्रलोकेशोदेवलोक
स्यचर्त्विजः १८२

अज्ञातपापैःप्रमुच्यते तथैतैर्विवादैरुपेक्षितैरिमान्वक्ष्यमाणान्लोकान्गृहस्थोजयति १८१ आचा-
र्यइति आचार्योब्रह्मलोकस्यप्रभुःतेनसहविवादपरित्यागेनतत्संतुष्ट्यातुब्रह्मलोकमाप्नोतिगौणंब्रह्मलोकेशत्वम् एवंप्राजापत्यलो
केशः प्राजापत्येपिताचप्रभुः अतिथिरिंद्रलोके देवलोकस्यचऋत्विजः एवमुत्तरत्रापितत्तल्लोकेशत्वंबोद्धव्यम् १८२ यामयइति
अप्सरसांलोकेयामयःप्रभवंति वैश्वदेवलोकेबांधवाः वरुणलोकेसंबंधिनः भूर्लोकेमातृमातुलौ १८३ आकाशेशास्त्विति कृशः

कृशाधनः संश्रितोविवक्षितः बालवृद्धसंश्रितातुरा अंतरिक्षेप्रभवंति भ्राताज्येष्ठः पितृतुल्यः तस्मात्सोपिप्रजापतिलोकप्रभुः भार्या पुत्रौन्तस्वशरीरमेव अतः कथमात्मनैवसहविवादःसंभवति १८४ छायेति स्वदासवर्गश्च नित्यानुगतत्वात् आत्मच्छायेवनविवा हेंदुहितान्चपरं कृपापात्रंतस्मादेतैरधिक्षिप्तःसन् असंतापःसहेतनतुविवदेत् १८५ प्रतिग्रहसमर्थोपीति विद्यातपोवृत्तसंपन्नत यापतिग्रहे॰धिकार्यपितत्रपुनःपुनःप्रसक्तिंत्यजेत् यस्मात्प्रतिग्रहेणवेदाध्ययनादिनिमित्तप्रभावःशीघ्रमेवविनश्यतियात्रामात्रप्र सिद्ध्यर्थमित्युक्तेपिसामान्येनार्जनसंकोचविशेषेणप्रतिग्रहस्यब्राह्मणप्रभावप्रशमनफलत्वकथनार्थंवचनम् १८६ नद्रव्याणामिति द्रव्याणांप्रतिग्रहेधर्मार्थंयहितंविधानंग्राह्यदेवताप्रतिग्रहमंत्रादिकमज्ञात्वाक्षुधावसानंगच्छन्नपिप्राज्ञोनप्रतिगृण्हीयात्किंपुनरनापदि

यामयोऽप्सरसांलोकेवैश्वदेवस्यबांधवाः संबंधिनोह्यपांलोकेपृथिव्यांमातृमातुलौ १८३ आकाशेशास्तुविज्ञेयाबालवृद्धकृशातुराः भ्राताज्येष्ठःसमःपित्राभार्यापुत्रःस्वकातनुः १८४ छायास्वोदासवर्गश्चदुहिताकृपणंपरम् तस्मादेतैरधिक्षिप्तःसहेतासंज्वरःसदा १८५ प्रतिग्रहसमर्थोपिप्रसंगंतत्रवर्जयेत् प्रतिग्रहेणह्यस्याशुब्राह्मंतेजःप्रशाम्यति १८६ नद्रव्याणामविज्ञायविधिंधर्म्यंप्रतिग्रहे प्राज्ञःप्रतिग्रहंकुर्यादवसीदन्नपिक्षुधा १८७ हिरण्यंभूमिमश्वंगामन्नंवासस्तिलान्घृतम् प्रतिगृण्हन्नविद्वांस्तुभस्मीभवतिदारुवत् १८८ हिरण्यमायुरन्नंचभूर्गौश्चाप्योषतस्तनुम् अश्वश्चक्षुस्त्वचंवासोघृतंतेजस्तिलाःप्रजाः १८९ अतपास्त्वनधीयानःप्रतिग्रहरुचिर्द्विजः अंभस्यश्मप्लवेनेवसहतेनैवमज्जति १९०

१८७ हिरण्यमिति स्वर्णादीन्श्रुतस्वाध्यायहीनःप्रतिगृण्हन्नग्निसंयोगेनदारुवद्भस्मीभूतोभवतिपुन रुत्पत्तिंनलभते १८८ हिरण्यमिति अविदुषःप्रतिग्रहीतुर्भूर्गौश्चशरीरंओषतोदहतःउषदाहेभौवादिकस्तस्येदंरूपंभूगवो र्द्वित्वविवक्षायांद्विवचनम् एवंहिरण्यमन्नंचायुरोषतः अश्वश्चक्षुरित्यादिषुविभक्तिविपरिणामादोषतीत्येकवचनांतस्याध्याहारः १८९ अतपास्त्विति यस्तपोविद्याशून्यःप्रतिग्रहेच्छुःब्राह्मणोभवतिसप्रतिग्रहाविनाभावात्बुद्धिस्थेनतेनइतिपरामृष्टेनैवदात्रे वानर्हप्रतिग्रहादानपापयुक्तेनसहनरकेमज्जति यथापाषाणमयेनोडुपेनांभस्तरंतेनैवसहांभसिमग्नोभवति १९० ५ ५

तस्माद्विद्वानिति यस्मादसावल्पद्रव्यप्रतिग्रहेणापिमूर्खः पंकेगौरिवनरकेऽसमर्थोभवतितस्माद्यतः कुतश्चित्कर्षणादिव्यतिरिक्तसं
सकाशसारप्रतिग्रहादपित्रसेत् १९१ नवार्यपीति प्रतिग्रहीतुर्दोषमभिधाय अधुनादातुराह् वायसादिभ्योयद्दीयतेतदपिवैडाल
व्रतिकेभ्योधर्मज्ञोनदद्यादित्यतिशयोक्त्याद्रव्यांतरदानंनिषिध्यते नतुवारिदानमेवपाषंडिनोविकर्मस्थानित्यनेनवैडालव्रतिकाय
अतिथित्वेनसत्कृतार्थदानादिनिषिद्धमिहतुधनदानंनिषिध्यते अतएवविधिनाप्यर्जितंधनमितिवक्ष्यति नावेदविदीतिवेदा
र्थानभिज्ञे एतच्चविद्वत्संभवेनावेदविदीतिनिषिध्यते १९२ त्रिष्वपीति एतेषुत्रिष्वपिवैडालव्रतिकादिषुन्यायार्जितमपिधनंदत्तंदा
तुःप्रतिग्रहीतुश्चपरलोकेनरकहेतुत्वादनर्थायभवति १९३ यथाप्लवेनेति यथापाषाणमयेनोडुपादिनाजलेतरन्तेनैवसहाधोग
च्छति एवंदानप्रतिग्रहशास्त्रानभिज्ञोदातृग्राहकौनरकंगच्छतः अतपास्त्वनधीयानइतिप्रतिग्रहीतृप्राधान्येननिंदोक्ताइहतु

तस्माद्विद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात् स्वल्पकेनाप्यविद्वान्हिपंकेगौरिवसीदति १९१ नवार्यपि
प्रयच्छेत्तुवैडालव्रतिकेद्विजे नवकव्रतिकेविप्रेनावेदविदिधर्मवित् १९२ त्रिष्वप्येतेषुदत्तंहिविधिनाप्यर्जि
तंधनम् दातुर्भवत्यनर्थायपरत्रादातुरेवच १९३ यथाप्लवेनौपलेननिमज्जत्युदकेतरन् तथानिमज्ज
तोधस्तादज्ञौदातृप्रतीच्छकौ १९४ धर्मध्वजीसदालुब्धश्छाद्मिकोलोकदंभकः बैडालव्रतिकोज्ञेयोहिं
स्रःसर्वाभिसंधकः १९५ अधोदृष्टिर्नैष्कृतिकःस्वार्थसाधनतत्परः शठोमिथ्याविनीतश्चबकव्रतचरो
द्विजः १९६

दातृप्राधान्येनइत्यपुनरुक्तिः १९४ धर्मध्वजीति योबहुजनसमक्षंधर्ममाचरतिस्वतःपरतश्चलोकेख्यापयतितस्य
धर्मोध्वजंचिन्हमिवेतिधर्मध्वजी लुब्धःपरधनाभिलाषुकः छद्मनाव्याजेनचरतीतिछाद्मिकः लोकदंभकोनिःक्षेपापहारादिनाजनवंच
कः हिंस्रःपरहिंसाशीलः सर्वाभिसंधकःपरगुणासहनतयासर्वाक्षेपकः विडालव्रतेनचरतीतिवैडालव्रतिकः विडालोहिप्रायेणमूषिका
दिहिंसारुचितयाध्याननिष्ठइवविनीतःसन्नवतिष्ठतइतिउपचाराद्विडालव्रतशब्दः १९५ अधोदृष्टिरिति अधोदृष्टिर्निजविनयख्या-
पनायसततमधएवनिरीक्षते निष्कृतिर्निष्ठुरतातयाचरतीतिनैष्कृतिकः स्वार्थसाधनतत्परःपदार्थखंडनेन शठोवक्रः मिथ्याविनीतःक

पटविनयवान् बकव्रतंचरतीतिबकव्रतचरः बकोहिप्रायेणमीनहननरुचितयामिथ्याविनीतः सन्नेवंशान्तो भवतीतिगौणोबकव्रतशब्दः १९६ येबकव्रतिनइति येबकव्रतंस्तिडालव्रतंचरंतितेब्राह्मणास्तेन पापहेतुनाकर्मणा अंधतामिस्रनाम्निनरकेपतंति १९७ नधर्मस्येति पापंकृत्वाप्रायश्चित्तरूपंप्राजापत्यादिव्रतंपापमपनयतितन्नेदंप्रायश्चित्तम् किंतुधर्मार्थमहमनुतिष्ठामीतिस्त्रीशूद्रमूर्खादिजनमोहनंकुर्वन्नाचरेत् १९८ प्रेत्येहइतिश्लोकद्वयम् प्रथमंसुबोधम् अब्रह्मचारीयोब्राह्मणोब्रह्मचर्य्यादिलिंगंमेखलाजिनदंडादिवेषोपलक्षितस्तद्वृत्त्याभिक्षाभ्रमणादिनाजीवतिसब्रह्मचार्यादीनांयत्पापंतदात्मन्याहरतिकुक्कुरादितिर्यग्योनौउत्पद्यतेतस्मादेतन्नकर्त्तव्यमितिनिषेधःकल्प्यते १९९ २०० परकीयेति निपानंजलाधारःपरकृतपुष्करिण्यादिषुनकदाचित्स्नायात् तत्रस्नात्वापुष्करिण्यादिकर्त्तुर्यत्

येबकव्रतिनोविप्रायेचमार्ज्जारलिंगिनः तेपतंत्यंधतामिस्रेतेनपापेनकर्मणा १९७ नधर्मस्यापदेशेनपापंकृत्वाव्रतंचरेत् व्रतेनपापंप्रच्छाद्यकुर्वन्स्त्रीशूद्रदंभनम् १९८ प्रेत्येहचेदृशाविप्रागर्ह्यंतेब्रह्मवादिभिः छद्मनाचरितंयच्चव्रतंरक्षांसिगच्छति १९९ अलिंगीलिंगिवेषेणयोवृत्तिमुपजीवति सलिंगिनांहरत्येनस्तिर्यग्योनौचजायते २०० परकीयनिपानेषुनस्नायाच्चकदाचन निपानकर्त्तुःस्नात्वातुदुष्कृतांशेनलिप्यते २०१ यानशय्यासनान्यस्यकूपोद्यानगृहाणिच अदत्तान्युपभुंजानएनसःस्यात्तुरीयभाक् २०२

त्पापंतस्यांशेनवक्ष्यमाणचतुर्थभागरूपेणसंबध्यते अकृत्रिमनद्यसंभवेपरकृतेपिपुष्करिण्यादौप्राक्प्रदानात्पंचपिंडानुद्धृत्यस्नातव्यम् तदाहयाज्ञवल्क्यः पंचपिंडाननुद्धृत्यनस्नायात्परवारिषु उद्धृत्यचतुरःपिंडान्पारक्येस्नानमाचरेत् स्नात्वाचतर्पयेद्देवानृषींश्चैवविशेषतः २०१ यानशय्येति अस्येतिप्रकृतःपुनःपरामृश्यते परस्ययानादीन्यदत्तानिउपभुंजानस्तदीयपापचतुर्थभागभागीभवति अदत्तानीतिपरस्यानुमत्यभावश्चविवक्षितः तेनसर्वार्थोत्सृष्टमठकूपादौउपयोगार्थात्मस्नानादौनविरोधः २०२ नदीष्विति नद्यादिषुसर्वदास्नानमाचरेत् देवखातेषितितडागविशेषणंदेवसंबंधित्वेनप्रसिद्धेषुसरःसु गर्त्तेषुअष्टधनुःसहस्रेभ्योन्यूनगतिषु नदुक्तंछंदोगपरिशिष्टे धनुःसहस्राण्यष्टौचगतिर्यासांनविद्यते नतानदीशब्दवहागर्त्तास्ताःपरिकीर्त्तिताः चतुर्हस्तप्रमाणंधनुःप्र

स्रवणेषुनिर्झरेषुचानेनैवपरकीयनिपानव्याप्तिसिद्धौयत्पृथग्वचनंतदात्मीयोत्सृष्टतडागादिषुस्नानाद्यनुज्ञानार्थंतदपिनद्याद्यसंभ
वेद्रष्टव्यम् २०३ यमानिति नियमापेक्षयायमानुष्ठानगौरवज्ञापनार्थमिदम् नतुनियमनिषेधार्थंद्वयोरेवशास्त्रार्थत्वात् यमनि
यमविवेकश्चमुनिभिरेवकृतः तदाहयाज्ञवल्क्यः ब्रह्मचर्यंदयाक्षांतिर्ध्यानंसत्यमकल्कता अहिंसास्तेयमाधुर्येदमश्चेतियमाःस्मृ
ताः स्नानंमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः नियमोगुरुशुश्रूषाशौचाक्रोधाप्रमादता यमनियमस्वरूपज्ञःसमस्तस्नानादि
नियमत्यागेनाप्यहिंसादिरूपंयमममनुतिष्ठेत् नियमाननुतिष्ठन्नपियमानुष्ठानरहितःपततीत्ययंयमस्तुत्यर्थइति मेधातिथि-
गोविंदराजौहिंसादिप्रतिषेधार्थकाःयमाः वेदमेवजपेन्नित्यमित्यादयोऽनुष्ठेयरूपानियमाइतिव्याचक्षेते अहिंसासत्यवचनंब्र-
ह्मचर्यमकल्कता अस्तेयमितिपंचैतेयमावैपरिकीर्त्तिताः अक्रोधोगुरुशुश्रूषाशौचमाहारलाघवम् अप्रमादश्चसततंपंचैते

नदीषुदेवखातेषुतडागेषुसरःसुच स्नानंसमाचरेन्नित्यंगर्त्तप्रस्रवणेषुच २०३ यमान्सेवेतसततं
ननित्यंनियमान्बुधः यमान्पतत्यकुर्वाणोनियमान्केवलान्भजन् २०४ नाश्रोत्रियतते यज्ञेग्रामया
जिकृतेतथा स्त्रियाक्लीवेनचहुतेभुंजीतब्राह्मणःक्वचित् २०५ अश्लीकमेतत्साधूनांयत्रजुह्वत्य
मीहविः प्रतीपमेतद्देवानांतस्मात्तत्परिवर्जयेत् २०६ मत्तक्रुद्धातुराणांचनभुंजीतकदाचन केश
कीटावपन्नंचपदास्पृष्टंचकामतः २०७ भ्रूणघ्नावेक्षितंचैवसंस्पृष्टंचाप्युदक्यया पतत्रिणावली
ढंचशुनासंस्पृष्टमेवच २०८

नियमाःस्मृताः २०४ नाश्रोत्रियेति अनधीतवेदेनोपक्रांतेयज्ञेऽग्नीषोमीयादूर्ध्वम
पिभोजनयोग्यसमयेब्राह्मणोनभुंजीत तथाबहूनांयाजकेनऋत्विजास्त्रियानपुंसकेनचयत्रयज्ञेहूयतेतत्रकदाचिन्नभुंजीत
२०५ अश्लीकमिति पूर्वोक्ताबहुयाजकादयोयत्रहोमंकुर्वंतितत्कर्मशिष्टानाम् अश्लीकमश्रीकंश्रीशब्देरेफस्यस्थानेलकारः दे
वानांप्रतिकूलंतस्मादेतन्नहोमन्नकारयेत् २०६ मत्तक्रुद्धातुराणामिति क्षुब्धक्रुद्धव्याधितानामन्नंतथाकेशकीटसंसर्गदु
ष्टंपादेनचेच्छातस्संस्पृष्टमन्ननभुंजीत २०७ भ्रूणघ्नेति भ्रूणघ्नेत्युपलक्षणात्गोघ्नत्यादिपतितावेक्षितरजस्वलयाचस्पृष्टं

पक्षिणात्र काकादिनास्वादितं कुक्कुरेणचस्पृष्टमन्नन्नभुंजीत २०८ गवेति यदन्नंगवा घ्रातंशुष्टान्नंकोभोक्ताइत्यपहूयान्नंस- भादीयद्दीयते विशेषतइतिभूरिदोषतयाप्रायश्चित्तगौरवार्थम् गणान्नंशठब्राह्मणसंघान्नंगणिकावेश्यातस्या अन्नंतच्चनभुंजी त २०९ स्तेनेति चौरगायनजीविनोस्तथातक्षवृत्तिजीवनस्य वृद्ध्युपजीविनश्चान्नंनभुंजीततथायज्ञेदीक्षितस्यप्रागग्नीषोमी यात् कदर्यस्यकृपणस्यनिगडस्येतितृतीयार्थेषष्ठी गोविंदराजस्तु बद्धशब्दस्यबंधनेविनाप्ययोनिगडैर्निगडितस्यदत्तायोनिग डस्येतिव्याख्यातवान् २१० अभिशस्तस्येति महापातकित्वेनसंजातलोकविक्रोशस्यनपुंसकस्यपुंश्चल्याव्यभिचारिण्याअगणिका याअपिदांभिकस्यछद्मनाधर्मचारिणोवैडालव्रतिकादेरन्नंनभुंजीत शुक्तंयत्स्वभावतोमधुरंदध्यादिसंपर्कवशेनउदकादीनांचा म्लादिभावंगतम् पर्युषितंरात्र्यंतरितंशूद्रस्यान्नंनभुंजीतेतिसंबंधःउच्छिष्टंचभुक्तावशिष्टान्नमविशेषात्कस्यापिनभुंजीत गुरू

गवाचान्नमुपघ्रातंघुष्टान्नंचविशेषतः गणान्नंगणिकान्नंचविदुषांचजुगुप्सितम् २०९ स्तेनगाय नयोश्चान्नंतक्ष्णोवार्धुषिकस्यच दीक्षितस्यकदर्यस्यबद्धस्यनिगडस्यच २१० अभिशस्तस्यषंढ स्यपुंश्चल्यादांभिकस्यच शुक्तंपर्युषितंचैवशूद्रस्योच्छिष्टमेवच २११ चिकित्सकस्यमृगयोःक्रूर- स्योच्छिष्टभोजिनः उग्रान्नंसूतिकान्नंचपर्याचांतमनिर्दशम् २१२ अनर्चितंवृथामांसमवीरायाश्च योषितः द्विषदन्नंनगर्यन्नंपतितान्नमवक्षुतम् २१३

च्छिष्टंचविहितत्वाद्भोज्यम् गोविंदराजस्तु शूद्रस्योच्छि ष्टंतद्भुक्तावशिष्टंचस्थालीस्थमपिनभुंजीतइत्याह २११ चिकित्सकस्येति चिकित्साजीविनः मृगयोर्मांसविक्रयार्थंमृगादिपशु हंतुः क्रूरस्यानृजुप्रकृतेःनिषिद्धोच्छिष्टभोक्तुरन्नंनभुंजीत उग्रोदारुणकर्मातस्यान्नम् गोविंदराजोमंजर्यामुग्रंराजानमुक्त मनुवृत्तोचशूद्रायांक्षत्रियोत्पन्नमभ्यधात् भेदोक्तेर्याज्ञवल्कीयेनोग्रोराजेतिवावदत् आश्चर्यमिदमेतस्यस्वकीयहृदिभूषणम् सूतिकान्नंसूतिकामुद्दिश्ययत्क्रियतेतदन्नंतत्कुलजैरपिनभोक्तव्यम् एकपंक्तिस्थानन्यानवमन्ययत्रान्ने भुज्यमानेकेनचिदाच मनंक्रियतेतत्पर्याचांतम् अनिर्दशंसूतिकान्नंवक्ष्यमाणत्वात्नभुंजीत २१२ अनर्चितमिति अर्चार्हस्ययदवज्ञयादीयते वृथामां

संदेवतादिमुद्दिश्यपन्नकृतम् अवीराया: पतिपुत्ररहितायाः शत्रुनगरपतितानांचउपरिकृतकृतंचान्नंनभुंजीत २१३ पिशुनेति पि शुनः परोक्षेपरापवादभाषणपरः अनृतीति अतिशयेनानृतवादीकूटसाक्ष्यादिः क्रतुविक्रयकःमदीययागस्यफलंतवभवत्विति अभि धाययोधनंगृण्हाति शैलूषोनटः तुन्नवायःसौचिकः कृतघ्नोयः कृतोपकारस्यापकारेप्रवर्त्ततेतस्यान्नंनभुंजीत २१४ कर्मारस्येति कर्मारस्यलोहकारस्य निषादस्यदशमाध्यायोक्तस्य नटगायनव्यतिरिक्तस्यरंगावतरणजीविनः सुवर्णकारस्य वेणोर्भेदनेनयोजीव तिवरुडइतिविख्यातः शस्त्रंलोहः तद्विक्रयिणश्चान्नंनभुंजीत २१५ श्ववतामिति आखेटकाद्यर्थंश्वपोषकानाम् मद्यविक्रयिणा म् वस्त्रधावकस्य कुसुंभादिनावस्त्ररागकृतः निर्दयस्य यस्यचोपपतिर्गृहेजारश्चयस्याज्ञानतोगृहेस्थितस्तस्यगेहेनाद्यात् २१६ मृ ष्यतीति गृहइत्यनुषज्यते गेहेज्ञातंभार्याजारंयेसहंतेतेषामन्नंनभुंजीत तेनगृहान्निःसारितायाजारसहनेनदोषः तथासर्वकर्मसु

पिशुनानृतिनोश्चान्नंक्रतुविक्रयिणस्तथा शैलूषतुन्नवायान्नंकृतघ्नस्यान्नमेवच २१४ कर्मारस्य निषादस्यरंगावतारकस्यच सुवर्णकर्त्तुर्वैणस्यशस्त्रविक्रयिणस्तथा २१५ श्ववतांशौंडिकानांचचै लनिर्णेजकस्यच रंजकस्यनृशंसस्ययस्यचोपपतिर्गृहे २१६ मृष्यंतियेचोपपतिंस्त्रीजितानांचसर्वशः अनिर्दशंचप्रेतान्नमतुष्टिकरमेवच २१७ राजान्नंतेजआदत्तेशूद्रान्नंब्रह्मवर्चसम् आयुःसुवर्णकारा न्नंयशश्चर्मावकर्त्तिनः २१८ कारुकान्नंप्रजांहंतिबलंनिर्णेजकस्यच गणान्नंगणिकान्नंचलोकेभ्यःप रिकृंतति २१९

स्त्रीपरतंत्राणाम् अनिर्गताशौचंचसूतकान्नम् अतुष्टिकरमेवचनभुंजीत २१७ राजान्नमिति राजान्नंते जोनाशयतिइतएवदोषदर्शनात्तदन्नभक्षणनिषेधःकल्प्यते एवमुत्तरत्रापिपूर्वमनिषिद्धस्यदोषदर्शनादेवनिषेधकल्पनंनाद्याच्छूद्र स्यपक्वान्नमितिनिषेधिष्यतितदतिक्रमणफलकथनमिदम् शूद्रस्यपक्वान्नमध्ययनादिनिमित्तंतेजोनाशयतिसुवर्णकारस्यान्नमायुः चर्मकारान्नंख्यातिंनाशयति २१८ कारुकान्नमिति कारुकस्यसूपकारादेरन्नंप्रजांअपत्यंनिहंति चर्मकारादेःकारुकत्वेपिगोबली वर्दन्यायेनपृथङ्निर्देशः निर्णेजकस्यान्नंबलंहंति गणगणिकयोरन्नंकर्मांतरार्जितेभ्यःस्वर्गादिलोकेभ्यआछिनत्ति २१९

पूयमिति चिकित्सकस्यान्नंपूयंपूयभक्षणसमदोषम् एवंपुंश्चल्या अन्नंइंद्रियंशुक्रं वार्द्धुषिकस्यान्नंपुरीषम् लोहविक्रयिणो ऽन्नंविष्ठाव्यतिरिक्तश्लेष्मादि गोविंदराजस्तु चिकित्सकान्नभक्षणेनतथाविधायांजातौजायतेयत्रपूयभक्ष्यभवतीत्याह २२० यएतेऽन्यइति प्रतिपदनिर्दिष्टेभ्योयेऽन्येक्रमेणाभोज्यान्नाअस्मिन्प्रकरणेपठितास्तेषांयदन्नंतत्त्वगस्थिरोमाणियस्तदीयास्त्व चः कीकशस्यरोमांच भक्तानांयोदोषःसएवतदन्नस्यापिभक्तस्यबोद्धव्यः २२१ भक्त्वेति एषांमध्येऽन्यतमसंबंधान्नमज्ञानतो भक्त्वात्र्यहमुपवासः ज्ञानतस्तुकृच्छ्रम् एवंरेतोविण्मूत्रभोजनेपिएतच्चान्यतमस्येतिषष्ठीनिर्देशान्मत्तादिसंबंधिनःपरिग्रहःदुष्टा न्नस्यैवप्रायश्चित्तंनसंसर्गदुष्टस्यकेशकीटावपन्नादेः नापिकालदुष्टस्यपर्युषितान्नादेः नापिनिमित्तदुष्टस्यक्षुशदेः एकप्रकरा देशश्चैषांस्नानलज्ञापनार्थंप्रायश्चित्तंचैतेष्वेकादशोवक्ष्यति यदितुसर्वेष्वेवंप्रायश्चित्तंस्यात्तदाभक्त्वातोन्यतमस्यान्नंदुष्टमित्यभ्य

पूयंचिकित्सकस्यान्नंपुंश्चल्यास्त्वन्नमिंद्रियम् विष्ठावार्द्धुषिकस्यान्नंशस्त्रविक्रयिणोमलम् २२०
यएतेन्येत्वभोज्यान्नाःक्रमशःपरिकीर्तिताः तेषांत्वगस्थिरोमाणिवदंत्यन्नंमनीषिणः २२१ भक्त्वातो न्यतमस्यान्नममत्याक्षपणंत्र्यहम् मत्याभक्त्वाचरेत्कृच्छ्रंरेतोविण्मूत्रमेवच २२२ नाद्याच्छूद्रस्यप क्वान्नंविद्वानश्राद्धिनोद्विजः आददीताममेवास्मादवृत्तावेकरात्रिकम् २२३ श्रोत्रियस्यकदर्यस्यवदा न्यस्यचवार्द्धुषेः मीमांसित्वोभयंदेवाःसममन्नमकल्पयन् २२४

धास्यत् नत्वन्यतमस्यतुभक्त्वेति तस्मादेकप्रकरणाद्यन्मेधातिथिरभ्यधात् प्रायश्चित्तमिदंयुक्तंयुक्तादौतदसुंदरम् अप्र करणेचप्रायश्चित्तस्याभिधानंलाघवार्थंतत्रक्रियमाणेमत्तादिग्रहणमपिकर्तव्यंस्यात् २२२ नाद्यादिति अविशेषेणशूद्रान्नंप्र तिषिद्धंतस्येदानींविशिष्टविषयतोच्यतेअश्राद्धिनः श्राद्धादिपंचयज्ञशून्यस्यशूद्रस्यशास्त्रविद्द्विजःपक्वान्नंनभुंजीत किंत्वन्यां तराभावेसतिएकरात्रनिर्वाहोचितमाममेवान्नमस्माद्गृह्णीयात्ननतुपक्वान्नम् २२३ श्रोत्रियस्येति एकोऽधीतवेदः कृपणश्चप रोदाताद्वृद्धिजीवीचतयोरुभयोरपिगुणदोषवत्त्वंविचार्यदेवास्तुल्यमन्नमनयोरितिनिरूपितवंतःउभयोरपिगुणदोषसाम्यात् २२४ तानिति तान्देवानागत्यब्रह्माप्रोवाचविषममन्नंमासमंकुरुत विषमसमीकरणमनुचितंकःपुनरनयोर्विशेषः इत्यपे-

क्षायांसएवावोचत् दानशीलवार्द्धुषिकस्यापिश्रद्धयान्नंपवित्रंभवति कृपणान्नंपुनरश्रद्धयाहृतंदूषितंअथमंगगुभयमति
येधेपिश्रद्धादत्तविरुद्धार्द्धुषिकान्नविशक्तिबोधनपरमिदम् २२५ अतएवाह श्रद्धयेति इष्टमंतर्वेदियज्ञादिकर्मपूर्त्तंततोन्यत्तु
करिणीकूपप्रपारामादि तदेवमनलसःसन्नित्यकाम्यस्वर्गादिफलरहितंश्रद्धयाकुर्यात् यस्मात्तेइष्टापूर्त्तेन्यायार्जितधनेनश्र
द्धयाकृतेऽक्षयेमोक्षफलेभवतः २२६ दानधर्ममिति दानाख्यंधर्ममैष्टिकंपौर्त्तिकंअंतर्वेदिकंबहिर्वेदिकंचसर्वदाविद्यातपोयुक्तंब्रा
ह्मणमासाद्यपरितोषाख्येनांतःकरणयुक्तंयथाशक्तिकुर्यात् २२७ यत्किंचिदिति प्रार्थितेनपरगुणासत्सरेणान्नमपियथाश-
क्तिदातव्यंयस्मात्सर्वदादानशीलस्यकदाचित्तादृशंपात्रमागमिष्यतितत्सर्वस्मान्नरकहेतोर्मोचयिष्यति २२८ वारिदइति जल

तान्प्रजापतिराहैत्यमाकृध्वंविषमंसमम् श्रद्धापूतंवदान्यस्यहतमश्रद्धयेतरत् २२५ श्रद्धयेष्टंच
पूर्त्तंचनित्यंकुर्यादतंद्रितः श्रद्धाकृतेह्यक्षयेतेभवतःस्वागतैर्धनैः २२६ दानधर्मंनिषेवेतनित्यमैष्टि
कपौर्त्तिकम् परितुष्टेनभावेनपात्रमासाद्यशक्तितः २२७ यत्किंचिदपिदातव्यंयाचितेनानसूयया उ
त्पत्स्यतेहिनत्पात्रंयत्तारयतिसर्वतः २२८ वारिदस्तृप्तिमाप्नोतिसुखमक्षय्यमन्नदः तिलप्रदःप्रजा
मिष्टांदीपदश्चक्षुरुत्तमम् २२९ भूमिदोभूमिमाप्नोतिदीर्घमायुर्हिरण्यदः गृहदोऽग्र्याणिवेश्मानिरू
प्यदोरूपमुत्तमम् २३० वासोदश्चंद्रसालोक्यमश्विसालोक्यमश्वदः अनडुहःश्रियंपुष्टांगोदोब्रध्न
स्यविष्टपम् २३१ यानशय्याप्रदोभार्यामैश्वर्यमभयप्रदः धान्यदःशाश्वतंसौख्यंब्रह्मदोब्रह्मसार्ष्टिता
म् २३२

दःक्षुत्पिपासाविगमात्तृप्तिम् अन्नदोऽत्यंतसुखंतिलप्रदईप्सितान्यपत्यादीनि दीपदोविमलेक्षणादीनिदीर्घचक्षुः
प्राप्नोति २२९ भूमिदइति भूमिदोभूमेराधिपत्यम् सुवर्णदःचिरजीवित्वंगृहदःश्रेष्ठानिवेश्मानि रूप्यदःसकलजननयनमनो
हरंरूपंलभते २३० वासोदइति वस्त्रदश्चंद्रसमानलोकान्प्राप्नोति चंद्रलोकेचंद्रसमविभूतिर्वसतीति एवमेवाश्विलोकंघोटक
दः बलीवर्दस्यदातामहतींश्रियम् स्त्रीगवीप्रदःसूर्यलोकंप्राप्नोति २३१ यानशय्येति रथादियानस्यशय्यायाश्चदाताभार्यामभय

प्रदः प्राणिनामहिंसकः प्रफलम् धान्यदो व्रीहियवमाषमुद्गादिसस्यानांदाताचिरस्थायिसकशिवलम् ब्रह्मवेदस्तत्प्रदो वेदस्याध्यापको व्याख्याताच ब्रह्मणः सार्ष्टितां समानगतितां तत्तुल्यतां प्राप्नोति २३२ सर्वेषामिति उदकान्नधेनुभूमिवस्त्रतिलसुवर्णघृतादीनां सर्वेषामेव यानि दानानि तेषां मध्यात् वेददानं विशिष्यते प्रकृष्टफलदं भवति २३३ येनयेनेति अवधारणे तु शब्दः येनयेनैव भावेनाभिप्रायेण फलाभिसंधिकः स्वर्गो मे स्यादिति मुमुक्षुर्मोक्षाभिप्रायेण निष्कामो यद्यद्दानं ददाति तेनैव भावेनोपलक्षितस्तत्तद्दानफलद्वारेण जन्मांतरे पूजितः सन् प्राप्नोति २३४ योऽर्चितमिति योऽर्चापूर्वकमेव दाता ददाति यश्च प्रतिगृहीताऽर्चापूर्वकमेव दत्तं प्रतिगृह्णाति तावुभौ स्वर्गं गच्छतोऽनर्चितदानप्रतिग्रहणे नरकं पुरुषार्थे तु प्रतिग्रहेऽनर्चितमेव मया ग्रहीतव्यं नान्यथेति नियमात् फललाभो न विरुद्धः २३५

सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते वार्य्यन्नगोमहीवासस्तिलकांचनसर्प्पिषाम् २३३ येनयेन तु भावेन यद्यद्दानं प्रयच्छति तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः २३४ योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये २३५ नविस्मयेत तपसा वदेदिष्ट्वा च नानृतम् नार्त्तोऽप्यपवदेद्विप्रान्न दत्वा परिकीर्त्तयेत् २३६ यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् आयुर्विप्रापवादेन दानं च परिकीर्त्तनात् २३७ धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः परलोकसहायार्थं सर्वभूतान्यपीडयन् २३८ नामुत्र हि सहायार्थं पिता माता च तिष्ठतः न पुत्रदारं न ज्ञातिर्द्धर्मस्तिष्ठति केवलः २३९

नविस्मयेदिति चांद्रायणादितपसा कृतेन कथं ममेदं दुष्करमनुष्ठितमिति विस्मयं न कुर्यात् यागं च कृत्वा नासत्यं वदेत् कृते पिपुरुषार्थतयाऽनृतवदननिषेधे क्रत्वर्थोयं पुनर्निषेधः ब्राह्मणैः पीडितोपि न तान्निंदयेत् गवादिकं च दत्वा मयेदं दत्तमिति परस्य न कथयेत् २३६ यज्ञ इति अनृतेन हेतुना यज्ञः क्षरति सत्येनैव सफलं साधयति एवं तपसि दानेच योज्यम् विप्रनिंदया चायुः क्षीयते २३७ धर्ममिति सर्वप्राणिनां पीडां परिहरन् परलोकसहायार्थं यथाशक्ति शनैः शनैर्द्धर्ममनुतिष्ठेत् यथा पुत्तिकाः पिपीलिकाप्रभेदाः शनैः शनैर्महांतं मृत्तिकाकूटं संचिन्वंति २३८ नामुत्रेति यस्मात्परलोके सहायकार्यसिद्ध्यर्थं न पितृमातृपत्नीज्ञातयस्तिष्ठंति किंतु धर्मए

द्वैकोद्वितीयभावेनोपकारार्थमवतिष्ठतेतस्मात्पुत्रादिभ्योपिमहोपकारकंधर्ममनुतिष्ठेत् २३९ एकइति एकएवप्राण्युत्पद्यतेन
बांधवैःसहितःएकएवचम्रियतेसुकृतफलमपिस्वर्गादिकंचदुरितफलंचनरकादिकमेकएवभुंक्तेनमात्रादिभिःसहतस्मान्मात्राद्य
पेक्षयापिधर्मंनत्यजेत् २४० मृतमिति मृतंशरीरंमनःप्राणादित्यक्तंलोष्टवदचेतनंभूमौत्यक्त्वापराङ्मुखाबांधवायांतिनमृतंजीव
मनुयांतिधर्मस्तुतमनुगच्छति २४१ तस्मादिति यस्माद्धर्मेणसहायेनदुस्तरंतमोनरकादिदुःखंतरतितस्माद्धर्मंसहायभावेनसततं
शनैरनुतिष्ठेत् २४२ धर्मप्रधानमिति धर्मपरंपुरुषंदैवादुपजातेपापेप्राजापत्यादितपोरूपप्रायश्चित्तेनहतपापंदीप्तिमंतंप्रकृतो
धर्मएवशीघ्रंब्रह्मस्वर्गादिरूपंपरलोकंनयति खंब्रह्मेत्याद्युपनिषत्सुखशब्दस्यब्रह्मणिप्रयोगःखशरीरिणंब्रह्मस्वरूपमित्यर्थः

एकःप्रजायतेजंतुरेकएवप्रलीयते एकोऽनुभुंक्तेसुकृतमेकएवचदुष्कृतम् २४० मृतंशरीरमुत्सृ
ज्यकाष्ठलोष्टसमंक्षितौ विमुखाबांधवायांतिधर्मस्तमनुगच्छति २४१ तस्माद्धर्मंसहायार्थंनित्यंस
ञ्चिनुयाच्छनैः धर्मेणहिसहायेनतमस्तरतिदुस्तरम् २४२ धर्मप्रधानंपुरुषंतपसाहतकिल्बिषम्
परलोकंनयत्याशुभास्वंतंखशरीरिणम् २४३ उत्तमैरुत्तमैर्नित्यंसंबंधानाचरेत्सह निनीषुःकुल
मुत्कर्षमधमानधमांस्त्यजेत् २४४ उत्तमानुत्तमान्गच्छन्हीनान्हीनांश्चवर्जयन् ब्राह्मणःश्रेष्ठता
मेतिप्रत्यवायेनशूद्रताम् २४५ दृढकारीमृदुर्दांतःक्रूराचारैरसंवसन् अहिंस्रोदमदानाभ्यांजयेत्
स्वर्गंतथाव्रतः २४६

यद्यपिलिंगशरीरावच्छिन्नोजीवएवगच्छतितथापिब्रह्मांशत्वाद्ब्रह्मस्वरूपमुपपन्नंधर्मएवचेत्परंलोकं
नपतिततोधर्ममनुतिष्ठेत् नहिवेदाःस्वधीताश्चशास्त्राणिविविधानिच तत्रगच्छंतियत्रास्यधर्मएकोनुगच्छति २४३उत्तमैरिति कुल
मुत्कर्षंनेतुमिच्छन्विद्याचारजन्मादिभिरुत्कृष्टैःसहसर्वदाकन्यादानादिसंबंधानाचरेत् अपकृष्टांस्तुसंबंधांस्त्यजेत् उत्तमविधानादे-
वाधमपरित्यागेसिद्धेयत्पुनरधमांस्त्यजेदित्यभिधानंतदुत्तमासंभवेस्वतुल्याद्यनुज्ञानार्थम् २४४उत्तमानिति उत्तमान्गच्छन्तैःस
हसंबंधंकुर्वन्ब्राह्मणःश्रेष्ठतांगच्छतिप्रत्यवायेनविपरीताचारेणहीनैःसहसंबंधेजातेरपकर्षतयाशूद्रतुल्यतामेति २४५ दृढकारीति मा

रथ्यंसंपादयिता मृदुरनिष्ठुरः दमस्यपृथगुपादानाद्दांतइतिशीतातपादिद्वंद्वसहिष्णुर्ग्रहीतव्यः क्रूराचारैःपुरुषैःसंसर्गंपरिहरन् पराहिंसानिरतः तथाव्रतएवनियमदमेंद्रियसंयमाख्येनचदानेनस्वर्गमाप्नोति २४६ एधोदकमिति काष्ठजलफलमूलमधूनिअ न्नंचाभ्युद्यतमयाचितोपनीतम् अन्यत्रकुलटाषंढपतितेभ्यस्तथाद्विषइतियाज्ञवल्क्यवचनात्कुलटादिवर्जंसर्वतःशूद्रादिभ्योपि- प्रतिगृण्हीयात् २४७ आहृताभ्युद्यतामिति आहृतांसंप्रदानदेशमानीताम् अभ्युद्यतामाभिमुख्येनस्थापिताम् अप्रचोदितां प्रतिग्रहीतास्वयमन्यमुखेनवापूर्वमयाचितांदाताचतुभ्यमिदंददानीतिपूर्वमकथितांहिरण्यादिभिक्षांनतुसिद्धान्नरूपांअन्नमभ्यु द्यतंचेत्युक्तत्वात्पापकारिणोपिपतितादिवर्जंग्राह्यामितिविरिंचिरमन्यत २४८ नाश्नंतीति तेनोपकल्पितंश्राद्धेषु कव्यंपंचदशवर्षा णिपितरोनभुंजते नचयज्ञेषुतेनदत्तंपुरोडाशादिहव्यमग्निर्वहतिदेवान्प्रापयतियस्तांभिक्षांनस्वीकरोति २४९ शय्यामिति गं

एधोदकंमूलफलमन्नमभ्युद्यतंचयत् सर्वतःप्रतिगृण्हीयान्मध्वथाभयदक्षिणाम् २४७ आहृता भ्युद्यतांभिक्षांपुरस्तादप्रचोदिताम् मेनेप्रजापतिर्ग्राह्यामपिदुष्कृतकर्मणः २४८ नाश्नंतिपितरस्त स्यदशवर्षाणिपंचच नचहव्यंवहत्यग्निर्यस्तामभ्यवमन्यते २४९ शय्यांगृहान्कुशान्गंधानपःपुष्पं मणीन्दधि धानामत्स्यान्पयोमांसंशाकंचैवननिर्णुदेत् २५० गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवता तिथीन् सर्वतःप्रतिगृण्हीयान्नतुतृप्येत्स्वयंततः २५१ गुरुषुत्वभ्यतीतेषुविनावातैर्गृहेवसन् आ त्मनोवृत्तिमन्विच्छन्गृण्हीयात्साधुतःसदा २५२

धान्गंधवंतिकर्पूरादीनिधानाभृष्टतंडुलान्पयःक्षीरंपूर्वमा हरणोपायनिबंधेनगवादीनामप्रत्याख्यानमुक्तंशय्यादीनिबयाचितान्हृतान्यपिदातारकगृहस्थितानिअयाचितोपकल्पितानिन प्रत्याचक्षीत २५० गुरूनिति मातापित्रादीन्गुरून्भृत्यांश्चभार्यादीन्क्षुधावसन्नानुद्धर्तुमिच्छन्पतितादिवर्जंसर्वतःशू द्रादेरसाधुभ्यश्चप्रतिगृण्हीयान् नतुतेनधनेनस्वयंवर्त्तेत २५१ गुरुष्विति मातापित्रादिषुमृतेषुतैर्वाजीवद्भिरपिस्वयोगावस्थि तैर्विनागृहांतरेवसन्आत्मनोवृत्तिमन्विच्छन्सर्वदासाधुभ्योगृण्हीयादेव २५२ आर्द्धिकइति आर्द्धिकःकार्षिकःसंबंधिश ब्दान्वेतेयोयस्यकृषिंकरोतिसतस्यभोज्यान्नः एवंस्वकुलस्यमित्रंयोयस्यगोपालोयोयस्यनापितःकर्मकरोतियोयस्मिन्नात्मानं

त्तमापेवसामीतियः शूद्रस्तस्यभोज्यान्न. यथात्मनिवेदनंशूद्रेणकर्त्तव्यंतदाह २५३
निवेदयतिदुर्गतिरहंत्वदीयसेवांकुर्वन्नितिचत्वत्समीपेवसामीतियः शूद्रस्तस्यभोज्यान्नं यथाचानेनसेवाकर्त्तव्यातेनप्रकारेणात्मानंकथ
यादृशइति अस्यशूद्रस्यकुलशीलादिभिर्यादृश आत्मास्वरूपंयच्चास्यकर्मकर्त्तुमीप्सितंयथाचानेनसेवाकर्त्तव्यातेनप्रकारेणात्मानंकथयतिस-
येत् २५४ योन्यथेति यइतिसामान्यनिर्देशात्सकृतशूद्रादन्योपियः कश्चित्कुलादिभिरन्यथाभूतमात्मानमन्यथासाधुषुकथयतिस
लोके।तिशयेनपापकारीयस्मादात्मापहारकः अन्यःस्तेनोद्रव्यांतरमपहरतिअयंतुसर्वप्रधानमात्मानमेवापहरेत् २५५ वाच्यर्था
इति सर्वे।र्थाः शब्देषुनियतावाच्यत्वेननियताः वाङ्मूलाश्चशब्दास्तेषांप्रतिपत्तौशब्देभ्यएवप्रतीयंते प्रतीतिद्वारेणशब्दमूलत्वंशब्दे
भ्यएवावगम्यन्तानुष्ठीयंतेइतिवाग्विनिर्गताइत्युच्यंते अतएववेदशब्देभ्यएवादावितिब्रह्मणोपिसृष्टिर्वेदशब्दमूलैवोक्ता अतोय
स्तांवाचंस्तेनयेत्स्वार्थव्यभिचारिणींवाचयतिसनरः सर्वार्थस्तेयकृद्भवति २५६ महर्षीति गृहस्थस्यैवसंन्यासप्रकारोयमुच्यते मह

आर्द्धिकः कुलमित्रंचगोपालोदासनापितौ. एतेशूद्रेषुभोज्यान्नायश्चात्मानंनिवेदयेत् २५३ यादृशो
स्यभवेदात्मायादृशंचचिकीर्षितम् यथाचोपचरेदेनंतथात्मानंनिवेदयेत् २५४ योन्यथासंतमात्मा
नमन्यथासत्सुभाषते सपापकृत्तमोलोकेस्तेन आत्मापहारकः २५५ वाच्यर्थानियताःसर्वेवाङ्मूला
वाग्विनिःसृताः तांस्तुयःस्तेनयेद्वाचंससर्वस्तेयकृन्नरः २५६ महर्षिपितृदेवानांगत्वानृण्यंयथाविधि
पुत्रेसर्वंसमासज्यवसेन्माध्यस्थमाश्रितः. २५७ एकाकीचिंतयेन्नित्यंविविक्तेहितमात्मनः एकाकीचिंत
यानोहिपरंश्रेयोधिगच्छति २५८ एषोदितागृहस्थस्यवृत्तिर्विप्रस्यशाश्वती स्नातकव्रतकल्पश्चसत्त्व
वृद्धिकरः शुभः २५९ र्षीणांस्वाध्यायेनपितृणांपुत्रोत्पादनेनदेवतानांयज्ञैर्यथाशास्त्रमानृण्यंगत्वायोग्यपुत्रेसर्वंकुटुंबचिंता
भारमारोप्यमाध्यस्थमाश्रितः पुत्रदारधनादौत्यक्तममतोब्रह्मबुध्यासर्वत्रसमदर्शनोगृहएववसेत् २५७ एकाकीति काम्यकर्मणां
धनार्जनंस्यचकृतसंन्यासः षष्ठाध्यायेवक्ष्यमाणःपुत्रोपकल्पितवृत्तिरेकाकीनिर्जनदेशेआत्महितंजीवस्यब्रह्मभावंवेदांतोक्तंसर्वदा
ध्यायेत् यस्मात्तध्यायन्ब्रह्मसाक्षात्कारेणपरंश्रेयोमोक्षलक्षणंप्राप्नोति २५८ एषेति अयमध्यायार्थोपसंहारः एषात्रकृतादिवृ-
त्तिर्गृहस्थस्यब्राह्मणस्योक्ताशाश्वतीनित्याआपदित्वनित्यावक्ष्यतेस्नातकव्रतविधिःसत्त्वगुणस्यवृद्धिकरणप्रशस्तउक्तः २५९ ५

अनेनेति सर्वस्योक्तस्य फलकथनमिदं अनेनशास्त्रोक्ताचारेण वेदविद्ब्राह्मणो वर्त्तमानो नित्यकर्मानुष्ठानात्क्षीणपापः सन् ब्रह्म-
ज्ञानप्रकर्षेण ब्रह्मैव लोकः तस्मिन्लीनो महिमानं सर्वोत्कर्षं प्राप्नोति २६० इतिकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां च-
तुर्थोऽध्यायः ४ ७ ७ ७ ७ ७ श्रुत्वेतानिति ऋषयः स्नातकस्यैतान् यथोदितधर्मान् श्रुत्वा महात्मानं
परमार्थपरं भृगुमिदं वचनमब्रुवन् यद्यपि प्रथमाध्याये दशप्रजापतिमध्ये भृगुन्नारदमेवचेति भृगुसृष्टिरपि मनुत एवोक्ता तथापि
कल्पभेदेनाग्निप्रभवत्वमुच्यते तथा च श्रुतिः तस्यपद्रेतसः प्रथमं देदीप्यते तदसावादित्योऽभवत् यद्द्वितीयमासीद्भृगुरिति अत
एव श्रुत्याद्रेतसउत्पन्नत्वाद्भृगुः १ एवं यथोक्तं विप्राणां स्वधर्ममनुतिष्ठताम् कथं मृत्युः प्रभवतीति एवं यथोक्तं स्वधर्मं कु
र्वाणानां श्रुतिशास्त्रज्ञानां वेदोदितायुषः पूर्वं कथं मृत्युः प्रभवति आयुरल्पत्वहेतोरधर्माचरणस्याभावात् सकलसंशयोच्छेदनस-

अनेनविप्रोवृत्तेनवर्त्तयन्वेदशास्त्रवित् व्यपेतकल्मषोनित्यंब्रह्मलोकेमहीयते २६० इति
मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांचतुर्थोऽध्यायः ४ ७ ७ ७ श्रुत्वेतानृषयो
धर्मान्स्नातकस्ययथोदितान् इदमूचुर्महात्मानमनलप्रभवंभृगुम् १ एवंयथोक्तंविप्राणांस्वधर्म
मनुतिष्ठताम् कथंमृत्युःप्रभवतिवेदशास्त्रविदांप्रभो २ सतानुवाचधर्मात्मामहर्षीन्मानवोभृगुः
श्रूयतांयेनदोषेणमृत्युर्विप्रान्जिघांसति ३ अनभ्यासेनवेदानामाचारस्यचवर्जनात् आलस्याद-
न्नदोषाच्चमृत्युर्विप्रान्जिघांसति ४ लशुनंगृञ्जनंचैवपलाण्डुंकवकानिच अभक्ष्याणिद्विजाती
नाममेध्यप्रभवानिच ५

मर्थत्वात्प्रभो इति संबोधनम् २ सतानिति समनोःपुत्रो भृगुर्धर्मस्वभावो येन दोषेणाल्पका-
ले विप्रान्हंतुमिच्छति मृत्युः स दोषः श्रूयतां इत्येवं तान्महर्षीन् जगाद ३ अनभ्यासेति वेदानामनभ्यासात्स्वीयाचारपरित्यागात्
सामर्थ्ये सत्यवश्यकर्त्तव्यकरणानुत्साहलक्षणादालस्यात् अदनीयदोषाच्च मृत्युर्विप्रान् हंतुमिच्छति एतेषामधर्मोत्पादनद्वारे-
णायुःक्षयहेतुत्वादेदानभ्यासादेरुक्तत्वात् अनुक्तमन्नदोषमाह ४ लशुनमिति लशुनं गृञ्जनं पलाण्ड्वाख्यानि स्थूलकंदशाका
निकवकंछत्राकममेध्यप्रभवानि विष्ठादिजातानि तंडुलीयादीनि द्विजातीनामिति याज्ञवल्क्यवचनादेतानि द्विजातीनामभक्ष्या-

णाद्विजातिग्रहणंशूद्रपर्युदासार्थम् ५ लोहितानिति लोहितवर्णान्वृक्षनिर्यासान्वृक्षान्निर्गतरसान्कठिनतांयातान्वृश्च नंच्छेदनंतत्प्रभवानलोहितानपि तथाचतैत्तिरीश्रुतिः अथोखलुयएवलोहितोयोवावृश्चनान्निर्येषवितस्यनाश्यकाममन्यस्येति शेलुंबहुवारकफलंगोभवंपेयूषन्नवप्रसूतायागोः क्षीरमग्निसंयोगात्कठिनंभवतिएतान्यत्नतस्त्यजेत् अनिर्दशायागोः क्षीरमि त्यनेनैवपेयूषस्यापिनिषेधसिद्धावधिकदोषत्वात्प्रायश्चित्तगौरवज्ञापनार्थंपृथङ्निर्देशः अतएवयत्नतइत्युक्तम् ६ वृथाकृसरे ति देवताद्युद्देशेनआत्मार्थंयत्पच्यतेतद्वृथा कृसरस्तिलेनसहसिद्धओदनः तथाचछंदोगपरिशिष्टम् तिलतंडुलसंपक्कः कृसरः सोभिधीयते संयावंघृतक्षीरगुडगोधूमचूर्णसिद्धस्तत्कारिकेतिप्रसिद्धः क्षीरतंडुलमिश्रः पायसः अपूपः पिष्टकः एतान्वृथापक्का न्विवर्जयेत् पशुयागादौमंत्रबहुलेनपशोःस्पर्शनमुपाकरणंतद्रहितःपशुरनुपाकृतः तस्यमांसानिदेवान्नानिनैवेद्यार्थमन्नानि माङ्निवेदनात्हवींषिचपुरोडाशादीनिहोमात्प्राग्वर्जयेत् अनुपाकृतमांसानीत्येतद्विशेषनिषेधदर्शनात् अनर्चितंवृथामांसमिति

लोहितान्वृक्षनिर्यासान्वृश्चनप्रभवांस्तथा शेलुंगव्यंचपेयूषंप्रयत्नेनविवर्जयेत् ६ वृथाकृसर संयावपायसापूपमेवच अनुपाकृतमांसानिदेवान्नानिहवींषिच ७ अनिर्दशाया गोः क्षीरमौष्ट्रमे कशफंतथा आविकंसंधिनीक्षीरंविवत्सायाश्चगोःपयः ८ आरण्यानांचसर्वेषांमृगाणांमाहिषंवि ना स्त्रीक्षीरंचैववर्ज्यानिसर्वशुक्तानिचैवहि ९

सामान्यनिषेधोबलीवर्दन्यायेनानुपाकृतमांसेतरश्राद्धाद्युद्देश्य मांसभक्षणेपर्यवस्यति ७ अनिर्दशायाइति प्रसूतायाअनिर्दशायागोर्दुग्धंगोरितिपेयक्षीरपशूपलक्षणार्थंतेनाजामहिष्योर पिदशाहमध्येप्रतिषेधः तथाचयमः अनिर्दशाहंगोक्षीरमाजंमाहिषमेवच तथोष्ट्रभवंअश्वाद्येकखुरसंबंधिमेषभवंसंधिनी यान्ऋतुमतिवृषमिच्छतीतस्याःक्षीरम् तथाचहारीतः संधिनीवृषस्यंतीतस्याःपयोनपिबेत्ऋतुमतीभवतिविवत्सायामृतव त्सायाः असन्निहितवत्सायाश्चक्षीरंवर्जयेत् धेन्वधिकरणन्यायेनवत्सग्रहणादेवगाविलब्धायांपुनर्गोग्रहणंगोरेवनतुअजामहि ष्योरितिज्ञापनार्थम् ८ आरण्यानांचसर्वेषांमृगाणांमाहिषंविना स्त्रीक्षीरंचैवेति मृगशब्दोत्रमाहिषपर्युदासात्पशुमात्रपरः मा

हिषं क्षीरं वर्जयित्वा सर्वेषामारण्यभक्ष्यपशूनां हस्त्यादीनां क्षीरं स्त्रीक्षीरं च सर्वाणि शुक्तानि वर्जनीयानि स्वभावतो मधुराणि रसानि यानि कालवशेन उदकादिना चाम्लीभवंति तानि शुक्तशब्दवाच्यानि शुक्तं पर्युषितं चैवेति चतुर्थे कृतेपि शुक्तप्रतिषेधे दध्यादिप्रसक्ति प्रसवार्थं पुनरिहोच्यते ९ दधिभक्ष्यं चेति शुक्तेषु मध्ये दधि संभवं तक्रादि यानि तु पुष्पमूलफलैरुदकेन संधीयंते तानि भक्षणीयानि शुभैरिति विशेषणोपादानात् मोहादिविकारकारिभिः कृतसंधानस्य प्रतिषेधः तथा च बृहस्पतिः कंदमूलफलैः पुष्पैः शस्तैः शुक्तान्न वर्जयेत् अविकारि भवेद्भक्ष्यमभक्ष्यं न हि विकारकृत् १० क्रव्यादानिति आमं मांसं ये भक्षयंति ते क्रव्यादास्तान् सर्वान् गृध्रादीन् पक्षिणो वर्जयेत् तथा ग्रामनिवासिनश्च पक्षिणः पारावतादीन् तथा श्रुतौ केचिदेकशफाभक्ष्यत्वेन निर्दिष्टाः तथा चोष्ट्रं वाडवमालभेत तस्य च मांसमश्नीयादिति केचिच्चानिर्दिष्टा रासभादयः तेषां मांसं वर्ज्जयेत् येपि यज्ञांगत्वेन विहितास्तेषामपि यज्ञ एव मांसभ

दधिभक्ष्यं च शुक्तेषु सर्वं च दधिसंभवम् यानि चैवाभिषूयंते पुष्पमूलफलैः शुभैः १० क्रव्यादान् शकुनीन् सर्वान् तथा ग्रामनिवासिनः अनिर्दिष्टांश्चैकशफान् टिट्टिभं च विवर्जयेत् ११ कलविंकं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् सारसं रज्जुवालं च दात्यूहं शुकसारिके १२ प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् निमज्जतश्च मत्स्यादान् शौनं वल्लूरमेव च १३

क्षणं न सर्वदा टिट्टिभाख्यं च पक्षिणं वर्ज्जयेत्
११ कलविंकमिति कलविंकं चटकं तस्य ग्रामारण्योभयवासिन एव निषेधः आरण्यस्याप्यभक्ष्यत्वार्थं जातिशब्देन निषेधः प्लवाख्यं पक्षिणं तथा हंसं चक्रवाकं ग्रामकुक्कुटं सारसं रज्जुवालं दात्यूहं शुकसारिकाख्यान् पक्षिणो वर्जयेत् वक्ष्यमाणजालपादनिषेधेनैव हंसचक्रवाकयोरपि निषेधसिद्धौ पृथङ्निषेधोऽन्येषामापदि जालपादानां विकल्पार्थः स च व्यवस्थितो विज्ञेयः आपदि भक्ष्यात्वार्थं आपद्यर्थं गतप्रयोजनं भवति वाक्यांतरगतविशेषावधारणपरत्वस्यान्याय्यत्वात् १२ प्रतुदानिति प्रतुद्य चंच्वा ये भक्षयंति तान् दार्वाघाटादीन् जालपादानिति जालाकारपादान् शरारिप्रभृतीन् कोयष्ट्याख्यं पक्षिणं नखविष्किरान् नखैर्विकीर्य ये भक्षयं

तितानभ्यनुज्ञातारण्यकुक्कुटादिव्यतिरिक्तान् श्येनादीन् तथानिमज्ज्यये मत्स्यान्खादंतितान्मद्गुप्रभृतीन्शूनांसारणस्थानंतत्र
स्थितंप्रन्मांसमस्यमपिवल्लूरं शुष्कमांसंएतानिवर्ज्जयेत् १३ बकंचैवेति बकबलाकाद्रोणकाकखंजनान् तथामत्स्यादान्पक्षि
व्यतिरिक्तानपिनक्रादीन्विड्वराहांश्चविडितिविशेषणादारण्यसूकराद्यनुज्ञानार्थंमत्स्यांश्चसर्वान्वर्ज्जयेत् १४ मत्स्यभक्षणानि
दमाह योयस्येति योयदीयंमांसंखादतिसतन्मांसादएवपरमुपादिश्यते यथामार्जारोमूषिकादःमत्स्यादःपुनःसर्वमांसभक्षक
त्वेनव्यपदेष्टुंयोग्य.तस्मान्मत्स्यान्नखादेत् १५ इदानींभक्ष्यमत्स्यानाह पाठीनरोहिताविति पाठीनरोहितौमत्स्यभेदौभक्षणी
यौहव्यकव्ययोर्नियुक्ताविति समस्तवक्ष्यमाणभक्षणनिषिद्धोपलक्षणार्थंतेनभोजनात्सप्तावदोषः तथाराजीवाख्यान्सिंहतुंडां
श्चसशल्कांश्चसर्वान्वक्ष्यमाणलक्षणोपेतानद्यात् मेधातिथिगोविंदराजौतु पाठीनरोहितौदैवपैत्र्यादिकर्मणिनियुक्तावेवादनीयौ
नत्वन्यदा राजीवसिंहतुंडसशल्कमत्स्यास्तुहव्यकव्याभ्यामन्यत्रापिभक्षणीया इत्याचक्षतुः नतन्मनोहरम् पाठीनरोहितौश्राद्धे

वकंचैवबलाकांचकाकोलंखंजरीटकम् मत्स्यादान्विड्वराहांश्चमत्स्यानेवचसर्वशः १४ योयस्य
मांसमश्नातिसतन्मांसादउच्यते मत्स्यादःसर्वमांसादस्तस्मान्मत्स्यान्विवर्ज्जयेत् १५ पाठीनरो
हितावाद्यौनियुक्तौहव्यकव्ययोः राजीवान्सिंहतुंडांश्चसशल्कांश्चैवसर्वशः १६ नभक्षयेदेकचरा
नज्ञातांश्चमृगद्विजान् भक्ष्येष्वपिसमुद्दिष्टान्सर्वान्पंचनखांस्तथा १७

कर्मण्यपिराजीवादयोहव्यकव्याभ्यामन्यत्रापिभक्ष्याइत्यस्यासमञ्जसत्वात् नियुक्तोश्राद्धभोक्तैवभक्षणीयौनतुश्राद्ध
नान् तथाचशंखः राजीवाःसिंहतुंडाश्चसशल्काश्चतथैवच पाठीनरोहितौचापिभक्ष्यामत्स्येषुकीर्त्तिताः याज्ञवल्क्यः भक्ष्याःपं
चनखा श्वाविन्गोधाःकच्छपशल्यकाः शशाश्चमत्स्येष्वपितुसिंहतुंडकरोहिताः तथापाठीनराजीवसशल्काश्चद्विजातिभिः हारी
तः सशल्कान्मत्स्यान्न्यायोपपन्नान्भक्षयेत् एवंच भोक्तैवाद्यौनकर्त्रापिश्राद्धेपाठीनरोहितौ राजीवाद्यास्तथानेतिव्याख्यानसु
निसंभमता १६ नभक्षयेदिति येएकाकिनःप्रायेणचरंतिसर्पादयस्तानेकचरान्तथायेअभियुक्तैरपिनामजातिभेदेनावधार्यविभाग

तथ्यमृगपक्षिणोनज्ञायंतेतान्भक्ष्येष्वपिसमुद्दिष्टानितिसामान्यविशेषनिषेधाभावेनभक्ष्यपक्षिनिक्षिप्तान्भक्ष्यत्वेनसमुद्दिष्टानिव तथासर्वान्पंचनखान्वानरादीन्नभक्षयेत् १७ अत्रप्रतिप्रसवमाह श्वाविधमिति श्वाविधंसेधाख्यंप्राणिभेदंशल्यकंतत्सदृशंस्थूललोमानम् तथागोधागंडककच्छपशशान्पंचनखेषुभक्ष्यान्मन्वादयःप्राहुः तथाउष्ट्रवर्जितान्एकदंतपंक्त्युपेतान् १८ छत्राकमिति कवकंग्रामसूकरलशुनादीनांअन्यतमंबुद्धिपूर्वकंगुणप्रायश्चित्तोपदेशात् अभ्यासतोभक्षयित्वाद्विजातिःपततितत्तश्चपतितप्रायश्चित्तंकुर्यात् गर्हितानांतथाजग्धिःकार्यानसमानिषडिति १९ अमत्येति एतानिछत्राकादीनिषड्बुद्धिपूर्वकमेवभक्षयित्वाऽभिधेयभक्षणस्यनिमित्तत्वेनसाहित्यस्याविवक्षितत्वात् एकादशाध्यायवक्ष्यमाणस्वरूपंसांतपनंयतिचांद्रायणंचरेत्एतद्व्यतिरिक्तेषुलोहितवृक्षनिर्यासादिषुप्रत्येकंभक्षणादहोरात्रोपवासंकुर्यात् छत्राकादीनांचप्रायश्चित्तापकर्षविवर्जनार्थः शेषेषूपवसेदहः

श्वाविधंशल्यकंगोधांखड्गकूर्मशशांस्तथा भक्ष्यान्पंचनखेष्वाहुरनुष्ट्रांश्चैकतोदतः १८ छत्राकंविड्वराहंचलसुनंग्रामकुक्कुटम् पलाण्डुंगृंजनंचैवमत्याजग्ध्वापतेद्द्विजः १९ अमत्यैतानिषड्जग्ध्वाकृच्छ्रंसांतपनंचरेत् यतिचांद्रायणंवापिशेषेषूपवसेदहः २० संवत्सरस्यैकमपिचरेत्कृच्छ्रंद्विजोत्तमः अज्ञातभुक्तशुद्ध्यर्थंज्ञातस्यतुविशेषतः २१ यज्ञार्थंब्राह्मणैर्वध्याःप्रशस्तामृगपक्षिणः भृत्यानांचैववृत्त्यर्थमगस्त्योह्याचरत्पुरा २२

रितिलाघवार्थंतत्रहिक्रियमाणेलोहितनिर्यासग्रहणमपिकर्तव्यंस्यात् २० संवत्सरस्येति द्विजोत्तमपदंद्विजातिपरंत्रयाणांप्रकृतत्वात्एतदुक्तंद्विजातीनामित्युपसंहाराच्च द्विजातिःसंवत्सरमध्येएकमपिकृच्छ्रंप्रथमाम्नानात्प्राजापत्याख्यमज्ञातभक्षणदोषोपशमनार्थमनुतिष्ठेत् ज्ञातस्यपुनःअभक्ष्यभक्षणदोषस्यविशेषतोयत्रयद्विहितंतदेवप्रायश्चित्तंकुर्यात् यत्तुत्रीणिदेवाःपवित्राणिब्राह्मणानामकल्पयन् अदृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रशस्यतइतितद्द्रव्यशुद्धिप्रकरणपाठात्प्रायश्चित्तव्यतिरिक्तद्रव्यशुद्धिविशेषेऽवतिष्ठते २१ यज्ञार्थमिति इदानींभक्षणप्रसंगेनयागाद्यर्थंहिंसामप्यनुजानातियथा तब्राह्मणादिभिर्यागार्थंप्रशस्ताःशास्त्रविहितामृगपक्षिणोवध्याःभृत्यानांचावश्यभरणीयानांवृद्धमातापित्रादीनांसंव

स्मादगस्त्योमुनिः पूर्वंतथाकृतवान्भक्षितरूपोयमनुवादः २२ बभूवुरिति यस्मात्पुरातनेष्वपिऋषिकर्त्तृकयज्ञेषुच भक्ष्याणां मृगपक्षिणांमांसेनपुरोडाशा अभवन् तस्माद्यज्ञार्थमधुनातनैरपिमृगपक्षिणोवध्याः २३ इदानींपर्युषितप्रतिप्रसवार्थमाह यत्किंचिदिति यत्किंचित्खरविशदंअभ्यवहार्य्यंमोदकादिभोज्यंपायसादिअगर्हितंउपघातांतररहितंतत्पर्युषितंरात्र्यंतरितमपि तन्घृततैलदध्यादिसंयुक्तंकृत्वाभक्षणीयम् ननुप्रागेवयत्स्नेहसंयुक्तंतत्पर्युषितंभक्षणीयमितिव्याख्येयंतथाचसतिहविःशेष स्यस्नेहसंयोगावश्यंभावात्यत्किंचित्स्नेहसंयुक्तमित्यनेनैवभक्षणेसिद्धेहविःशेषंचयद्भवेदित्यनर्थकंस्यात् स्मृत्यंतरेपिभक्ष णकालएवाभिघारणमुपदिश्यते तथाचयमः मसूरमाषसंयुक्तंतथापर्युषितंचयत् तत्तुप्रक्षालितंकृत्वाभुंजीतह्यभिघारितम् हविःशेषंतुचरुपुरोडाशादिपर्युषितमपिभोजनकालेस्नेहसंयोगशून्यमेवभक्षणीयंपृथगुपदेशात् २४ चिरस्थितमिति

बभूवुर्हिपुरोडाशाभक्ष्याणांमृगपक्षिणाम् पुराणेष्वपियज्ञेषुब्रह्मक्षत्रसवेषुच २३ यत्किंचित्स्नेह संयुक्तंभक्ष्यंभोज्यमगर्हितम् तत्पर्युषितमप्याद्यंहविःशेषंचयद्भवेत् २४ चिरस्थितमपित्वाद्यम स्नेहाक्तंद्विजातिभिः यवगोधूमजंसर्वंपयसश्चैवविक्रिया २५ एतदुक्तंद्विजातीनांभक्ष्याभक्ष्यमशेष तः मांसस्यातःप्रवक्ष्यामिविधिंभक्षणवर्जने २६ प्रोक्षितंभक्षयेन्मांसंब्राह्मणानांचकाम्यया यथा विधिनियुक्तस्तुप्राणानामेवचात्यये २७

अनेकरात्र्यंतरिताअपियवगोधूमदुग्धविकाराःस्नेहसंयोगरहिताअपिद्विजातिभिर्भक्षणीयाः २५ एतदुक्तमिति एतद्द्विजातीनांभक्ष्याभक्ष्यमुक्तम् अतऊर्ध्वंमांसस्यभक्षणेवर्ज्जनेचविधानंनिःशेषंवक्ष्यामि २६ प्रोक्षितमिति प्रोक्षितंभक्षयेदितिपरिसंख्यावास्यात् नियमविधिर्वास्यात्तत्रपरिसंख्यात्वेप्रोक्षितादन्यन्नभक्षणीयमितिवाक्यार्थःस्यात् सचानुपाकृतमांसानीत्यनेनैवनिषेधात्सिद्धः तस्मान्मंत्रकृतप्रोक्षणाख्यसंस्कारयुक्तयज्ञहुतपशुमांसभक्षणमिदंयज्ञांगंविधीयते अतएवासंस्कृतान्पशून्मंत्रैरित्यस्यानुवादंवक्ष्यति ब्राह्मणानांचयदाकामनाभवतितदावश्यंमांसंभोक्तव्यमितितदापिनियमतएकवारंभक्षयेत्सकृद्ब्राह्मणकाम्ययेतियमवचनात् तथाश्राद्धेचमधुपर्केचसमांसोमधुपर्कइतिगृ

स्ववचनात् नियुक्तेननियमान्मांसंभक्षणीयमिति अतएवनियुक्तस्तथान्यायमित्यतिक्रमदोषंवस्थातिप्राणात्ययेचाहारांत
राभावनिमित्तकेव्याधिहेतुकेवानियमतोमांसंभक्षयेत् २७ प्राणात्ययेमांसभक्षणानुवादमाह प्राणस्यान्नमिदमिति प्राणितो
तिप्राणोजीवःशरीरांतर्गतोभोक्तातस्यादनीयंसर्वमिदंब्रह्माकल्पितवान् किंतदाहजंगमंपश्वादिस्थावरंव्रीहियवादिसर्वंतस्यभो
जनंतस्मात्प्राणधारणार्थंजीवोमांसंभक्षयेत्प्राणस्यार्थमिदंसर्वमित्येवंप्रपंचयति २८ चराणामिति जंगमानांहरिणादीनांअजं
गमास्तृणादयः दंष्ट्रिणांव्याघ्रादीनांअदंष्ट्रिणोहरिणादयः सहस्तानांमनुष्यादीनांअहस्तामत्स्यादयः शूराणांसिंहादीनांभीरवोह
ऽदनीयाएतादृश्यांविधातुरेवसृष्टौ २९ नात्तेति भक्षयित्वाभक्षणार्हान्प्राणिनःप्रत्यहमपिभक्षयन्नदोषंप्राप्नोति यस्मा

प्राणस्यान्नमिदंसर्वंप्रजापतिरकल्पयत् स्थावरंजंगमंचैवसर्वंप्राणस्यभोजनम् २८ चराणामन्न
मचरादंष्ट्रिणामप्यदंष्ट्रिणः अहस्ताश्चसहस्तानांशूराणांचैवभीरवः २९ नात्तादुष्यत्यदन्नाद्यान्प्राणि
नोहन्यहन्यपि धात्रैवसृष्टाह्याद्याश्चप्राणिनोऽत्तारएवच ३० यज्ञायजग्धिर्मांसस्येत्येषदैवोविधिःस्मृ
तः अतोन्यथाप्रवृत्तिस्तुराक्षसोविधिरुच्यते ३१ क्रीत्वास्वयंवाप्युत्पाद्यपरोपकृतमेववा देवान्पितॄं
श्चार्चयित्वाखादन्मांसंनदुष्यति ३२ नाद्यादविधिनामांसंविधिज्ञोऽनापदिद्विजः जग्ध्वाह्यविधिनामां
संप्रेत्यतैरद्यतेऽवशः ३३

द्धात्रैवभक्षणार्हाभक्षयितारश्चनिर्मिताइतित्रिभिःश्लोकैःप्राणात्ययेमांसभक्षणस्तुतिरि
यम् ३० अथप्रोक्षितभक्षणनियमार्थमाह यज्ञायेति यज्ञसंपत्त्यर्थंतदंगभूतमांसस्यभक्षणंजग्धिरेतद्दैवमनुष्ठानंउक्तव्यतिरिक्त
प्रकारेणपुनरात्मार्थमेवपशून्व्यापाद्यतन्मांसभक्षणेप्रवृत्तीराक्षसोचितमनुष्ठानं इत्यन्तरार्द्धेवृथामांसभक्षणनिवृत्त्यनुवादः ३१
क्रीत्वेति क्रीत्वाआत्मनाचोत्पाद्यअन्येनवाकेनाप्यानीयदत्तंमांसन्देवपितृभ्योदत्वाशेषंभक्षयन्नपापंप्राप्नोति अतःप्रोक्षितादि
नतुस्वयंभक्षणवन्नेदन्नियतंभक्षणंनदुष्यतीत्यभिधानात् वर्षेवर्षेऽश्वमेधेनइत्यादिवक्ष्यमाणमांसवर्जनविधिरप्येत
एवाविरोधात् ३२ नाद्यादिति मांसभक्षणानुष्ठानदोषज्ञोद्विजातिरनापदितत्त्वदैवाद्यर्चनविधानंविनानमांसंभक्षयेत् य

दविधानेनयोमांसंखादतिसमृतःसन्यन्मांसंतेनभक्षितंतैः प्राणिभिः परलोकेस्वरक्षणाक्षमःस्वीयतइतिसर्वश्लोकानुवादः ३३
ननादृशमिति मृगवधजीविनोव्याधादेर्धनानिमित्तंमृगाणांहंतुर्नतथाविधंपापंभवतियादृशमदेवपितृशेषभूतमांसानिखादतःपर
लोकेभवतीतिपरन्नुवादएव ३४ नियुक्तस्त्विति श्राद्धेमधुपर्केचयथाशास्त्रंनियुक्तःसन्योमनुष्योमांसंनखादतिसंमृतःसन्नेकविं
शतिंजन्मानिपशुर्भवति यथाविधिनियुक्तस्त्वित्येतन्नियमातिक्रमफलविधानमिदम् ३५ असंस्कृतानिति वेदविहितमंत्रवत्प्रोक्ष
णादिसंस्कारशून्यान्पशून्विप्रादिःकदाचिन्नाश्नीयात् शाश्वतंप्रवाहानादितयानित्यंपशुयागादिविधिमास्थितोमंत्रसंस्कृतानेवा
श्नीयादिति प्रोक्षितंभक्षयेन्मांसमित्येतस्यानुवादार्थमेतत् ३६ कुर्यादिति संगेआसक्तोपशुभक्षणानुरागेण घृतमयींपिष्टमयीं

नतादृशंभवत्येनोमृगहंतुर्धनार्थिनः यादृशंभवतिप्रेत्यवृथामांसानिखादतः ३४ नियुक्तस्तुयथान्यायं
योमांसंनात्तिमानवः सप्रेत्यपशुतांयातिसंभवानेकविंशतिम् ३५ असंस्कृतान्पशून्मंत्रैर्नाद्याद्विप्रःकदाच
न मंत्रैस्तुसंस्कृतानद्याच्छाश्वतंविधिमास्थितः ३६ कुर्याद्घृतपशुंसंगेकुर्यात्पिष्टपशुंतथा नत्वेवतुवृथा
हंतुंपशुमिच्छेत्कदाचन ३७ यावंतिपशुरोमाणितावत्कृत्वोहमारणम् वृथापशुघ्नःप्राप्नोतिप्रेत्यजन्मनि
जन्मनि ३८ यज्ञार्थंपशवःसृष्टाःस्वयमेवस्वयंभुवा यज्ञस्यभूत्यैसर्वस्यतस्माद्यज्ञेवधोऽवधः ३९ ओषध्यः
पशवोवृक्षास्तिर्यंचःपक्षिणस्तथा यज्ञार्थंनिधनंप्राप्ताःप्राप्नुवंत्युत्सृतीःपुनः ४०

वापशुप्रतिकृतिंकृत्वाखादये
न्नपुनर्देवताद्युद्देशंविनैवपशून्कदाचिदपिहंतुमिच्छेत् ३७ यावंतीति देवताद्युद्देशमंतरेणआत्मार्थंयःपशून्हंतिसवृथाप
शुघ्नोमृतःसन्यावत्संख्यानिपशुरोमाणितावत्संख्याभूतंजन्मनिजन्मनिमारणंप्राप्नोति तस्माद्वृथापशुन्नहन्यात् तावत्कृत्वइ
तिवत्तंतान्क्रियाभ्यावृत्तिगणनेकृत्वसुप्रत्ययः इहहशब्दआगमप्रसिद्धिसूचनार्थः ३८ यज्ञार्थंतुपशुवधेनदोषइत्याह यज्ञा
र्थंपशवइति यज्ञसिद्ध्यर्थंप्रजापतिनाआत्मनेवादरेणपशवःसृष्टायज्ञश्चाग्नौप्रास्ताहुतिन्यायात्सर्वस्यास्यजगतोविवृद्ध्यर्थःतस्मा
द्यज्ञेवधोऽवधएववधजन्यदोषाभावात् किंच ३९ औषध्यइति ओषध्योव्रीहियवाद्याःवृक्षायूपाद्यर्थाःतिर्यंचकूर्मादयःपक्षिणः

कपिंजलाद्याः यज्ञार्थंविनाशंगताः पुनर्जात्युत्कर्षंप्राप्नुवंति ४० मधुपर्केचेति. समांसोमधुपर्कइतिविधानान्मधुपर्केचयज्ञेचज्यो
तिष्टोमादौ पित्र्येदैवेचकर्मणिश्राद्धादौ पशवोहिंसनीयाः नान्यत्रेतिमनुरभिहितवान् ४१ एष्वर्थेष्विति एषुमधुपर्कादिषुपदार्थे
षु पशून्हिंसन् आत्मानंपशुंचउत्तमांगतिंस्वर्गोपभोगयोग्यविलक्षणदेहदेशादिसंबंधंप्रापयतिवेदतत्त्वार्थविदितिविद्वदधिकार
बोधनार्थम् नन्वन्याधिकारित्वेकर्मणिकथमनधिकृतस्यपश्वादेरुत्तमगतिप्राप्तिः फलमुच्यतेशास्त्रप्रमाणकत्वात् अस्यार्थस्य
धिकारिकायांजातेष्ट्यावनधिकारिणोपिपुत्रस्यफलप्राप्तिवत् इहापिपश्वादिगतफलसंभवात् यजमानएवकारुणिकतयापशुगतफल
विशिष्टमेवफलंकामयिष्यति अतएवात्मानंचपशूंश्चैवेत्यभिधानम् यजमानव्यापारादेवपश्वादिगतफलसिद्धिरुक्ता ४२ गृहेगुरावर-
ण्येवेति गृहेगृहाश्रमेब्रह्मचर्याश्रमेवानप्रस्थाश्रमेचप्रशस्तात्माद्विजोनिवसन्नापद्यपिनाशास्त्रीयांहिंसांसमाचरेत् ४३ कथंतर्हिहिं

**मधुपर्केचयज्ञेचपितृदैवतकर्मणि अत्रैवपशवोहिंस्यान्नान्यत्रेत्यब्रवीन्मनुः ४१ एषर्थेषुपशून्हिं
सन्वेदतत्त्वार्थविद्द्विजः आत्मानंचपशूंश्चैवगमयत्युत्तमांगतिम् ४२ गृहेगुरावरण्येवानिवसन्नात्मवा
न्द्विजः नावेदविहितांहिंसामापद्यपिसमाचरेत् ४३ यावेदविहिताहिंसानियतास्मिंश्चराचरे अहिंसामे
वतांविद्याद्वेदाद्धर्मोहिनिर्बभौ ४४ योऽहिंसकानिभूतानिहिनस्त्यात्मसुखेच्छया सजीवंश्चमृतश्चैवन
क्वचित्सुखमेधते ४५ योबंधनवधक्लेशान्प्राणिनान्नचिकीर्षति ससर्वस्यहितप्रेप्सुःसुखमत्यंतमश्नुते
४६**

स्याद्वैदिकीदीक्षादिपशुहिंसानाधर्मायेत्यतआह यावेदविहितेति याश्रुतिविहिताकर्मविशेषदेशकालादिनियताऽस्मिन्ज
तिस्थावरजंगमात्मनिअहिंसामेवतांजानीयात् हिंसाजन्याधर्मविरहात् ननुपशुहननमधर्मः प्राणिहननत्वात् ब्राह्मणहननवत् इत्याद्य
नुमानंउपजीव्यशास्त्रबाधादेवनप्रवर्त्तते दृष्टांतीकृतब्राह्मणहननस्याप्यधर्मत्वेशास्त्रमेवोपजीव्यंवेदाद्धर्मोहिनिर्बभौयस्मादनन्य
प्रमाणकोधर्मोवेदादेवनिःशेषेणप्रकाशतांगतः ४४ योऽहिंसकानीति योऽनुपघातकान्प्राणिनः हरिणादीनात्मसुखेच्छयामारय
तिसइहलोकेपरलोकेचनसुखेनवर्द्धते ४५ योबंधनेति योबंधनमारणक्लेशादीन् प्राणिनांकर्तुंनेच्छतिससर्वहितप्रेप्सुःसुखं

तंसरवंप्राप्नोतिअन्यच्च ४६ यद्ध्यायतीति यच्चिंतयतिधर्मादिकमिदंमेस्त्विति सर्वश्रेयःसाधनंकर्मकरोतियत्रचपरमार्थध्यानादौधृ
तिंबध्नातितत्सर्वमक्लेशेनलभतेयउपघातनिमित्तंदंशमशकाद्यपिनव्यापादयति मांसभक्षणप्रसंगेनहिंसागुणदोषावभिधायपुनः
प्रकृतेमांसाभक्षणमाह ४७ नाकृत्वेति प्राणिहिंसाव्यतिरेकेणनकश्चिन्मांसमुत्पद्यतेप्राणिवधश्चनस्वर्गनिमित्तंनरकहेतुरेवयाव
त्तस्मादविधिनामांसंनभक्षयेदिति ४८ समुत्पत्तिंचेति शुक्रशोणितपरिणामात्मिकांसमुत्पत्तिंघृणाकरींविज्ञायप्राणिनांवध-
बंधौक्रूरकर्मरूपौनिरूप्यविहितमांसभक्षणादपिनिवर्त्तेतकिमुताविहितमांसभक्षणादिति अविधिनामांसभक्षणनिंदानुवादः
४९ नभक्षयतीति उक्तविधिव्यतिरिक्तेनयोनमांसंभक्षयतिपिशाचवदितियथापिशाचोभक्षयतितथानेतिव्यतिरेकेदृष्टांतः

यद्ध्यायतियत्कुरुतेधृतिंबध्नातियत्रच तदवाप्नोत्ययत्नेनयोहिनस्तिनकिंचन ४७ नाकृत्वाप्राणिनां
हिंसांमांसमुत्पद्यतेक्वचित् नचप्राणिवधःस्वर्ग्यस्तस्मान्मांसंविवर्जयेत् ४८ समुत्पत्तिंचमांसस्यवधबं
धौचदेहिनाम् प्रसमीक्ष्यनिवर्त्तेतसर्वमांसस्यभक्षणात् ४९ नभक्षयतियोमांसंविधिंहित्वापिशाचवत्
सलोकेप्रियतांयातिव्याधिभिश्चनपीड्यते ५० अनुमंताविशसितानिहंताक्रयविक्रयी संस्कर्त्ताचो
पहर्त्ताचखादकश्चेतिघातकाः ५१ स्वमांसंपरमांसेनयोवर्द्धयितुमिच्छति अनभ्यर्च्यपितॄन्देवान्
ततोऽन्योनास्त्यपुण्यकृत् ५२

सलोकस्यप्रियोभवति रोगैश्चनबाध्यतेतस्मादवैधमांसभक्षणाद्व्याधयोभवंतीतिदर्शित
म्. ५० अनुमंतेति यदनुमतिव्यतिरेकेणहननंकर्त्तुंनशक्यतेसोऽनुमंता विशसिता अंगानियःकर्त्तर्यादिनापृथक्पृथक्करोति क्र
यविक्रयीमांसस्यक्रेताविक्रेताच संस्कर्त्तापाचकः खादकोभक्षयिता गोविंदराजस्तुयःक्रीत्वाविक्रीणातिसक्रयविक्रयीत्येकमेवाह
तदयुक्तम् हननेनयथाहंताधनेनक्रयकस्तथा विक्रयीतुधनादानात्संस्कर्त्तातत्सवर्त्तनादितियमवचनेनपृथङ्निर्देशात् घातकत्वव
चनंचेदमशास्त्रीयपशुवधेनुमत्यादयोपिनकर्त्तव्याइत्येवंपरंविधिनिषेधपरत्वाच्छास्त्रस्य खादकादीनांपृथक्प्रायश्चित्तदर्शनात्
५१ स्वमांसमिति स्वशरीरमांसंपरमांसेनदेवपित्राद्यर्चनंविनायोवृद्धिंनेतुमिच्छतितस्मादपरोनापुण्यकर्त्तास्तीत्यविधिमांसभक्षण

निंदानुवादः इदानीमनियतामसिद्धमांसभक्षणस्यनिवृत्तिर्द्धर्मायइत्येतद्दर्शयितुमाह ५२ वर्षेवर्षेइति योवर्षशतंयावत्प्रतिवर्षम-
श्वमेधेनयजेतयश्चयावज्जीवंमांसन्नखादतितयोःपुण्यस्यफलंस्वर्गादितुल्यम् ५३ फलमूलाशनैरिति पवित्रस्यफलमूलभक्षणे
र्वानप्रस्थभोजनानांचनीवाराद्यन्नानांभोजनैर्नतत्फलमवाप्नोतिपुच्छोत्रअनियमितामसिद्धमांसवर्जनाल्लभते ५४ मांसभक्षयितेति
इहलोकेयस्यमांसमहमश्नामिपरलोकेमांसभक्षयिष्यतीतिएतन्मांसशब्दस्यनिरुक्तंपंडिताःप्रवदंति इतिमांसशब्दस्यनिर्वचनमवैध
मांसभक्षणपापफलकथनार्थम् ५५ नमांसभक्षणइति ब्राह्मणादीनांवर्णानांयथाधिकारंमविहितामतिषिद्धभक्षणादौनकश्चि
द्दोषोयस्मात्प्राणिनांभक्षणपानमैथुनादौमवृत्तिःस्वाभाविकोयंधर्मः वर्जनंपुनर्महाफलंअविहिताप्रतिषिद्धमद्यमैथुननिवृत्तेर्महाफ

वर्षेवर्षेऽश्वमेधेनयोयजेतशतंसमाः मांसानिचनखादेद्यस्तयोःपुण्यफलंसमम् ५३ फलमूलाशनैर्मे
ध्यैर्मुन्यन्नानांचभोजनैः नतत्फलमवाप्नोतियन्मांसपरिवर्ज्जनात् ५४ मांसभक्षयितामुत्रयस्यमांस
मिहाद्म्यहम् एतन्मांसस्यमांसत्वंप्रवदंतिमनीषिणः ५५ नमांसभक्षणेदोषोनमद्येनचमैथुने प्रवृ
त्तिरेषाभूतानान्निवृत्तिस्तुमहाफला ५६ प्रेतशुद्धिंप्रवक्ष्यामिद्रव्यशुद्धिंतथैवच चतुर्णामपिवर्णानां
यथावदनुपूर्वशः ५७ दंतजातेऽनुजातेचकृतचूडेचसंस्थिते अशुद्धाबांधवाःसर्वेसूतकेचतथोच्य
ते ५८

लकथनार्थोयंउक्तस्यैवमांसवर्ज्जनमहाफलकथनस्यानुवादः ५६ प्रेतशुद्धिमिति ब्राह्मणादीनांचतुर्णामपिव
र्णानांप्रेतेष्वपिपित्रादीनांशुद्धिंब्राह्मणादिक्रमेणयायस्येतिद्रव्यादीनांचतैजसादीनांशुद्धिमभिधास्यन्तत्रशुद्धेरशुद्धिसापेक्ष
त्वात्तन्निरूपणार्थमाहवक्ष्यमाणेन ५७ दंतजातइति दंतजातेजातदंतइत्यर्थः वाहिताग्न्यादिषित्यनेनपरनिपातः अनुजातेजा
तदंतानंतरेकृतचूडाकरणेचचकारात्कृतोपनयनेचसंस्थितेमृतेसतिबांधवाःसपिंडाःसमानोदकाश्चाशुद्धाभवंतीत्युच्यते
वपोविभागेनोद्देशमात्रमिदंवक्ष्यमाणाशौचकालभेदादिसकलावबोधनार्थम् ५८ दशाहमिति सप्तपुरुषपर्यंतंसपिंडतांव-
क्ष्यति सपिंडेषुशवनिमित्तमाशौचंदशाहोरात्रंब्राह्मणस्योपदिश्यते शुध्येद्विप्रोदशाहेनइतिवक्ष्यमाणत्वात् आर्वाक्संचय

नाद स्थ्नामितिचतुरहोपलक्षणंचतुर्थेदिवसेअस्थिसंचयनंकुर्यादितिविष्णुवचनात्त्र्यहमेकाहोरात्रंवा अहःशब्दोऽहोरात्रपरः
अयंचाग्निवेदादिगुणापेक्षोव्यवस्थितविकल्पः यथाहदक्षः एकाहाच्छुध्यतेविप्रोयोग्निवेदसमन्वितः हीनेहीनंभवेच्चैवत्र्यह
श्चतुरहस्तथा श्रौताग्निमतोमंत्रब्राह्मणात्मककृत्स्नशाखाध्यायिनः एकाहाशौचम् तत्रश्रौताग्निवेदाध्ययनगुणयोरेकगुण
रहितोहीनःतस्यत्र्यहःउभयगुणरहितस्तुहीनतरःकेवलस्मार्त्ताग्निमान्तस्यचतुरहःसकलगुणरहितदशाहःतदाहपराशरःनि
र्गुणोदशभिर्दिनैरिति ५९ सपिंडतात्विति सपिंडलक्षणमाहयंपुरुषंप्रतियोगिनंकृत्वानिरूप्यतेतस्यपितृपितामहप्रभृतीन्षट्
पुरुषानतिक्रम्यसप्तमेपुरुषेप्राप्तेसपिंडत्वंनिवर्त्तते एवंपुत्रपौत्रादिष्वप्यवगंतव्यंपिंडसंबंधिनिबंधनाचेयंसपिंडता तथाहि
पितृपितामहप्रपितामहेभ्यस्त्रिभ्यःपिंडदानंप्रपितामहस्यपित्रादयस्त्रयः पिंडलेपभुजश्चतत्पूर्वस्यतुसप्तमस्यपिंडसंबंधोनास्ती

दशाहंशावमाशौचंसपिंडेषुविधीयते आर्वाक्संचयनादस्थ्नांत्र्यहमेकाहमेवच ५९ सपिंडतातुपुरु
षेसप्तमेविनिवर्त्तते समानोदकभावस्तुजन्मनाम्नोरवेदने ६० यथेदंशावमाशौचंसपिंडेषुविधीय
ते जननेप्येवमेवस्यान्निपुणंशुद्धिमिच्छताम् ६१ सर्वेषांशावमाशौचंमातापित्रोस्तुसूतकम् सूत
कंमातुरेवस्यादुपस्पृश्यपिताशुचिः ६२

त्यसपिंडतायस्यचैतेषट्पुरुषाःसपिंडाःसोपितेषांसपिंडः पिंडदातृत्वेनत
त्पिंडसंबंधात् अतःसाप्तपौरुषीयंसपिंडता तदुक्तंमत्स्यपुराणे लेपभाजश्चतुर्थाद्याःपित्राद्याःपिंडभागिनः पिंडदःसप्तमस्तेषां
सापिंड्यंसाप्तपौरुषम् सगोत्रत्वेचेयंसपिंडता अतएवशंखलिखितौ सपिंडतातुसर्वेषांगोत्रतःसाप्तपौरुषी तेनमातामहादीनां
एकपिंडसंबंधेपिनसपिंडता समानोदकत्वंपुनरस्मत्कुले अमुकनामाभूदितिजन्मनाम्नोभयापरिज्ञानेनिवर्त्तते ६० यथेदमिति
यथेदंदशाहादिकंशवनिमित्तमाशौचंकर्मानर्हत्वलक्षणंसपिंडेषुदशाहंशावमाशौचमित्यनेनविधीयते प्रसवेपिसम्यक्शुद्धि
मिच्छतांसपिंडानांतादृशमेवाशौचंभवेत् अनिर्देशेनतुल्यतायांप्राप्तायांविशेषमाह ६१ सर्वेषामिति मरणनिमित्तमस्पृश्यत्वल
क्षणमशौचंसर्वेषामेवसपिंडानांसमानम् जनननिमित्तंतुमातापित्रोरेवभवतितत्राप्ययंविशेषःजनननिमित्तमस्पृश्यत्वंमातुरेव

दशरात्रं पिता तु स्नानात् स्पृश्यो भवति अयमेव संबंधः सर्वत्रैन व्यक्तीकृतः जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ६२ निरस्येति स्नानं मैथुनिनः स्मृतमिति मैथुने स्नानं विधास्यति तेन मैथुनं विनापि कामतो रेतःस्खलने स्नात्वा पुमान् शुद्धो भवति अकामतस्तु स्वप्नादौ रेतःपाते मूत्रवदेतस उत्सर्गे इत्यापस्तंबोक्तेः स्नानं विनापि गृहस्थस्य शुद्धिः ब्रह्मचारिणस्त्वकामतोऽपि स्वप्ने सिक्त्वा ब्रह्मचारी इत्यनेन स्नानादिना शुद्धिरुक्ता बैजिके तु संबंधे परपूर्वभार्यायामपत्योत्पत्तौ त्र्यहमशौचं भवति तथा च विष्णुः परपूर्वभार्यासु त्रिरात्रं रेतः पातिन अशौचमप्रकृतमपि जननप्रकरणे प्रसंगात्तदनुगुणतयोक्तं यत्र रेतः पातमात्रेण स्नानं तत्रापत्योत्पत्तौ त्रिरात्रमुचितम् ६३ अन्हा चैकेनेति एकेनान्हा एकया च रात्र्या इत्यहोरात्रेण त्रिरात्रैस्त्रिभिरिति निवाहोरात्रैर्मिलित्वा दशाहेनेति वैदग्ध्येनोक्तम् ननु दशाहेनेति वक्तव्ये किमर्थोयं वाग्विस्तारः उच्यते गरीयसीं लघिष्ठां वा

निरस्य तु पुमान् शुक्रमुपस्पृश्यैव शुध्यति बैजिकादभिसंबंधादनुरुंध्यादघं त्र्यहम् ६३ अन्हा चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः शवस्पृशो विशुध्यंति त्र्यहादुदकदायिनः ६४ गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् प्रेतहारैः समं तत्र दशरात्रेण शुध्यति ६५ रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ६६

गिरं निर्मीति वाग्मिनः न चावश्यत्वमेतेषां लघूक्त्यैव नियम्यते वृत्तस्वाध्यायगुणयोगेन ये सपिंडा एकाहादि अल्पाशौचयोगास्ते यदि स्नेहादिना शवस्पृशो भवंति तदा दशाहेनैव शुध्यंति उदकदायिनः पुनः समानोदकाख्य हेण गोविंदराजस्तु धनग्रहणपूर्वकशवनिर्हारकासंबंधिब्राह्मणविषयमिदं दशाहाशौचमाह ६४ गुरोरिति गुरोराचार्यादेरसपिंडस्य मृतस्य शिष्यो ऽंत्येष्टिं कृत्वा प्रेतनिर्हारकैर्गुरुसपिंडैस्तुल्यो दशरात्रेण शुद्धो भवति ६५ रात्रिभिरिति अत्र रात्रिरिति विधेयगामिनो बहुत्वस्याविवक्षितत्वात् तृतीयमासात्प्रभृति गर्भस्रावे गर्भमासतुल्याहोरात्रैर्विशेषाभिधानाच्चातुर्वर्ण्यस्त्री विशुध्यति एतच्च षण्मासपर्यंतम् यथोक्तमादिपुराणे षण्मासाभ्यंतरं यावद्गर्भस्रावो भवेद्यदि तदा मासैस्तासां दिवसैः शुद्धिरिष्यते अत ऊर्ध्वं तु जात्युक्तमाशौचं तासु विद्यते मेधातिथिगोविंदराजादयस्त्वादिपुराणवचनादर्शनात्

नान्सप्तमासादर्वागगर्भस्रावेमासतुल्याहोरात्रैःस्त्रीणांविशुद्धिरित्यतिदिशतिप्रथमद्वितीयमासीयगर्भस्रावेस्त्रीणांत्रिरात्रम् यथा
हहारीतः गर्भस्रावेस्त्रीणांत्रिरात्रंसाधीयोरजोविशेषत्वात् पित्रादिसपिंडानान्त्वत्रसद्यःशौचम् यथाहस्कमंतुः गर्भमासतुल्यादि
वसागर्भसंस्रवणेसद्यःशौचंवाभवति गर्भमासतुल्याइतिस्त्रीविषयंसद्यःशौचंवेतिपित्रादिसपिंडविषयमितिव्यवस्थितविकल्पः
रजस्वलाचस्त्रीरजसिनिवृत्तेसतिपंचमेदिनेस्नानेनादृष्टार्थकल्पनयोग्याभवतिस्पर्शयोग्यातुत्रिरात्रव्यपगमेचतुर्थेहनिकृतस्नानेनै
वशुद्धाभवति ६६ नृणामिति अकृतचूडानांबालानांमरणेसपिंडानामहोरात्रेणशुद्धिर्भवतिकृतचूडानांतुमरणेप्रागुपनयनकालात्त्रि
रात्रेणशुद्धिः ६७ ऊनद्विवार्षिकमिति असंपूर्णद्विवर्षबालंमृतमकृतचूडंमालादिभिरलंकृत्यग्रामाद्बहिः कृत्वाविशुद्धायांभूमौकालां
तरेशीर्णदेहतयायावदस्थिसंचयनवर्जंबांधवाःप्रक्षिपेयुः विश्वरूपस्तुयस्यांभूमौअन्यस्यास्थिसंचयनन्नकृतंतस्यान्निदध्युरिति

नृणामकृतचूडानांविशुद्धिर्नैशिकीस्मृता निर्वृत्तचूडकानांतुत्रिरात्राच्छुद्धिरिष्यते ६७ ऊनद्विवार्षिकंप्रेत
न्निदध्युर्बांधवावहिः अलंकृत्यशुचौभूमावस्थिसंचयनादृते ६८ नास्यकार्योग्निसंस्कारोनचकार्योद
कक्रिया अरण्येकाष्ठवत्त्यक्त्वाक्षपेयुस्त्र्यहमेवच ६९ नात्रिवर्षस्यकर्त्तव्याबांधवैरुदकक्रिया जातदंतस्यवा
कुर्युर्नाम्निवापिकृतेसति ७०

थान्वसते ६८ नास्येति अस्योनद्विवार्षिकस्याग्निसंस्कारोनकर्त्तव्यः नाप्युदकक्रियाकर्त्तव्या
उदकदाननिषेधोयंश्राद्धादिसकलप्रेतकृत्यनिवृत्त्यर्थः किंत्वरण्येकाष्ठवत्परित्यज्यकाष्ठवदितिशोकाभावोऽभिहितः यथाअरण्येकाष्ठं
परित्यज्यशोकोनभवतिएवंत्यक्त्वाव्यहंक्षपेत्त्र्यहाशौचंकुर्यात् अयंचाकृतचूडस्यत्र्यहाशौचविधिः पूर्वोक्तैकाहाशौचविकल्परःसच
व्यवस्थितोरजस्वाध्यायादियुक्तस्यैकाहः तद्रहितस्यत्र्यहः यद्यपिमनुनापरित्यागमात्रंविहितंतथाप्यूनद्विवार्षिकन्निखनेदितियाज्ञव
ल्क्यवचनादिदृष्टभूमौनिखायैवत्यक्तव्यः ६९ नात्रिवर्षस्येति अप्राप्ततृतीयवर्षस्यपित्रादिसपिंडैरुदकक्रियानकर्त्तव्येतिपूर्वत्राभि
हिताप्युत्तरार्थमनूद्यतेजातदंतस्यवाउदकदानंकर्त्तव्यम् नामकरणेवाकृतेउदकक्रियासाहचर्यादग्निसंस्कारोप्यनुज्ञामात्रंप्रेतपिंड
श्राद्धादिकंत्वयद्यप्यकरणसंभवेकरणंक्लेशावहंतथापिकरणाकरणयोराम्नानाज्जातदंतकृतनाम्नोः करणेप्रेतोपकारोभवत्यकरणे

प्रत्यवायाभावइत्यवगम्यते ७० सब्रह्मचारिणीति सहाध्यायिनिमृतेएकरात्रमशौचंकर्त्तव्यंसमानोदकानांपुनःपुत्रजननेसतित्रि रात्रेणशुद्धिर्भवति त्र्यहात्तुदकदायिनइतिमरणविषयमुक्तम् ७१ स्त्रीणामिति स्त्रीणामकृतविवाहानांवाग्दत्तानांमरणेबांधवा भर्त्रादयस्त्र्यहेनशुद्ध्यंतिवाग्दानंविनाभर्तृसंबंधाभावात् अश्रुतमपिवाग्दानांतपर्यंतंबोद्धव्यम् सनाभयःपितृपक्षाः वाग्दत्तानां विवाहादूर्ध्वंमरणेयथोक्तेनैवकल्पेनेत्येतच्छ्लोकपूर्वार्द्धोक्तेनत्रिरात्रेणैवशुध्यंतीत्यर्थः तदुक्तमादिपुराणे आजन्मनस्तुचूडांतं यत्रकन्याविपद्यते सद्यःशौचंभवेत्तत्रसर्ववर्णेषुनित्यशः ततोवाग्दानपर्यंतंयावदेकाहमेवहि अतःपरंप्रवृद्धानांत्रिरात्रमितिनि श्चयः वाग्दानेतुकृतेतत्रज्ञेयंचोभयतस्त्र्यहम् पितुर्वरस्यचततोदत्तानांभर्तुरेवहि स्वजात्युक्तमशौचंस्यात्सूतकेसूतकेपिच मेधा तिथिगोविंदराजौतुयथोक्तेनैवकल्पेनेतिनृणामकृतचूडानामित्येतदुक्तेनविधिनाशुद्ध्यंतीतिव्याचक्षतुः अत्रचव्याख्यानेपुत्रवत्कृ

सब्रह्मचारिण्येकाहमतीतेक्षपणंस्मृतम् जन्मन्येकोदकानांतुत्रिरात्राच्छुद्धिरिष्यते ७१ स्त्रीणामसंस्कृतानांतुत्र्यहाच्छुद्ध्यंतिबांधवाः यथोक्तेनैवकल्पेन शुद्ध्यंतितुसनाभयः ७२ अक्षारलवणान्नाःस्युर्निमज्जेयुश्चतेत्र्यहम् मांसाशनंचनाश्नीयुःशयीरंश्चपृथक्क्षितौ ७३ सन्निधावेषवैकल्पःशावाशौचस्यकीर्तितः असन्निधावयंज्ञेयोविधिःसंबंधिबांधवैः ७४ विगतंतुविदेशस्थंशृणुयाद्योह्यनिर्दशम् यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेत् ७५

न्यायामपिचूडाकरणादूर्ध्वंमरणेत्र्यहाशौ चंस्यात् तच्चादिपुराणाद्यनेकवचनविरुद्धम् ७२ अक्षारेति क्षारलवणंकृत्रिमलवणंतद्रहितमन्नमश्नीयुःत्रिरात्रंनद्यादौस्नानमा चरेयुः मांसंचनभक्षयेयुः भूमौचैकाकिनःशयनंकुर्युः ७३ सन्निधाविति मृतस्यसन्निधावेकस्थानावस्थानादहःपरिज्ञानेशावाशौ चस्यविधिरयमुक्तःस्वदेशांतरावस्थानादज्ञानेसत्ययंवक्ष्यमाणोविधिःसंबंधिबांधवैर्ज्ञातव्यःसंबंधिनःसपिंडाःसमानोदकाबांधवाः ७४ विगतमिति विगतंमृतंविदेशस्थंविप्रकृष्टदेशस्थंअनिर्दशमनिर्गतदशाहाद्यशौचकालंयःशृणोतिसयदवशिष्टंदशरा त्राद्यशौचस्यतावत्कालमविशुद्धोभवतिविगतमित्युपलक्षणंजननेप्येतदवगंतव्यम् तथाचबृहस्पतिः अन्यदेशमृतंज्ञातिंश्रुत्वा

वापुत्रजनमन अनिर्गते दशाहे तु शेषाहोभिर्विशुध्यति ७५ अतिक्रांत इति नाशौचं भसवस्यास्ति व्यतीतेषु दिनेष्वपि इति दे
वलवचनान्मरणविषयं वचनमिदम् सपिंडमरणे दशाहाशौचे अतिक्रांते त्रिरात्रमशुद्धो भवति संवत्सरे पुनरतीते स्नात्वैव विशुध्य
ति एतच्चाविशेषेणाभिधानाच्चातुर्वर्ण्यविषयम् ७६ निर्दशमिति दशाहाशौचव्यपगमे कर्मानर्हत्वलक्षणस्य त्र्यहाशौचस्योक्त-
त्वात् तदंगास्पर्शविषयम् निर्गतदशाहं सपिंडमरणं शुल्वापुत्रस्य जन्म च सचेलं स्नात्वा स्पृश्यो भवति ७७ बाल इति बाले अजात
दंते मृते जातदंते नृणाम कृतचूडानामिति एकाहोरात्राभिधानाद्देशांतरस्थे च सपिंडे मृत इत्येकाहाशौचविषयम् पूर्वश्लोके दशा
हाशौचिनस्त्र्यहविधानात् पृथक्पिंडे समानोदके त्रिरात्रमुक्तम् तत्र त्रिरात्रव्यपगमे सर्वेष्वेषु सचेलं स्नात्वा सद्यो विशुद्धो भवति ७८

अतिक्रांते दशाहे च त्रिरात्रमशुचिर्भवेत् संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ७६ निर्दशं
ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च सवासा जलमाप्लुत्य शुद्धो भवति मानवः ७७ बाले देशांतरस्थे च पृथ
क्पिंडे च संस्थिते सवासा जलमाप्लुत्य सद्य एव विशुध्यति ७८ अंतर्दशाहे स्यातां चेत्पुनर्मरणज
न्मनी तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ७९ त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ८० श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत् मातुले पक्षि
णीं रात्रिं शिष्यर्त्विग्बांधवेषु च ८१ प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः अश्रोत्रिये त्वहः कृत्स्नम
नूचाने तथा गुरौ ८२

अंतर्दशाह इति दशाहादिमध्ये यदि पुनर्मरणे मरणं जनने जननं स्यात् पुनः शब्दात्सजातीयावगमा
त् तदा तावत्कालमेव विप्रादिरशुद्धः स्यात् यावत्पूर्वजातदशाहाद्यशौचं नापगतं स्यात् तस्मात् पूर्वाशौचव्यपगमेनैव द्वितीये पि मृतके सूत
के च शुद्धिरित्यर्थः ७९ त्रिरात्रमिति आचार्ये मृते सति शिष्यस्य त्रिरात्रमाशौचं वदंति तत्पुत्रपत्न्योश्च मृतयोरहोरात्रमित्येषा शास्त्रमर्यादा
८० श्रोत्रिय इति वेदशास्त्राध्यायिनि उपसंपन्ने मैत्र्यादिना तत्समीपवर्तिनि तद्गृहवासिनीत्यर्थः तस्मिन्मृते त्रिरात्रेण शुद्धो भवति मातुल ऋत्वि
क्शिष्यादिषु पक्षिणीं रात्रिं व्याप्याशौचं द्वे अहनी पूर्वोत्तरे पक्षाविव यस्याः सा पक्षिणी ८१ प्रेते राजनीति यस्य देशे ब्राह्मणादि स्थितः त

स्मिन्राजनिकृताभिषेके क्षत्रिये मृते सज्योतिराशौचंस्यात् सहज्योतिषावर्त्ततइतिसज्योतिः यदिदिवातदायावत्सूर्यज्योतिस्तावदाशौचंयदिरात्रौमृतस्तदायावत्तारकाज्योतिस्तावदाशौचम् श्रोत्रियेत्रिरात्रमुक्तम् अश्रोत्रियेपुनस्तगृहेमृते कृत्स्नंदिनमात्रमाशौचम् न तुरात्रावपिरात्रौमृतेरात्रावेवेत्यवगंतव्यंसांगवेदाध्यापिनिस्वल्पंवाबहुवायस्येत्येतन्निर्दिष्टेगुरावप्यहमात्रमेव ८२ शुद्ध्येदिति उपनीतसपिंडमरणेसंपूर्णकालीनजननेचवृत्तस्वाध्यायादिरहितब्राह्मणोदशाहेन शुद्धोभवतिक्षत्रियोद्वादशाहेनवैश्यः पंचदशाहेनशूद्रोमासेनतस्यचोपनयनस्थानेविवाहः ८३ नवर्द्धयेदिति यस्यतुवृत्तस्वाध्यायाद्यपेक्षयापूर्वमर्वाक्संचयनादस्थ्नामित्याद्याशौचसंकोचउक्तः सनिष्कर्मासकृत्वमासिष्येइतिबुद्ध्यानाशौचदिनानिदशाहादिरूपतयावर्द्धयेत् संकुचिताशौचदिनेष्वपिअग्निष्विति बहुवचनात् श्रौताग्निषुह्यग्निहोत्रहोमान्नविघातयेत् सयंकुर्यादशक्तौवापुत्रादीन्कारयेत् अत्रैवहेतुमाहयस्मात्तत्कर्माग्निहोत्ररूपंकुर्वाणः पुत्रादिःसपिंडोनाशुचिर्भवति तदाहपारस्करः नित्यानिविनिवर्त्तंते वैतानवर्जंवैतानंश्रौतोहोमः गार्हपत्यकुंडस्थानग्नीनाहवनीया

शुद्ध्येद्विप्रोदशाहेनद्वादशाहेनभूमिपः वैश्यःपंचदशाहेनशूद्रोमासेनशुध्यति ८३ नवर्द्धयेदघाहानिप्रत्यूहेन्नाग्निषुक्रियाः नचतत्कर्मकुर्वाणःसनाभ्योप्यशुचिर्भवेत् ८४

दिकुंडेषुवितत्यक्रियतेइति तथाचशंखलिखितौ अग्निहोत्रार्थस्नानोपस्पर्शनाच्छुचिः जाबालोप्याह जन्महानौवितानस्यकर्मलोपोनविद्यते शालाग्नौकेवलोहोमः कार्यएवान्यगोत्रजैः छंदोगपरिशिष्टमपि मृतकेकर्मणांत्यागः संध्यादीनांविधीयते होमःश्रौतेतुकर्त्तव्यःशुष्कान्नेनापिवाफलैः तस्मादेकाहत्र्यहाद्याशौचसंकोचेसंध्यादीनामेवपरित्यागोनतुश्रौतहोमस्यएकाहत्र्यहाद्यपगमेतुसंध्यापंचमहायज्ञादिसर्वमेवानुष्ठेयम् अतोयन्मेधातिथिगोविंदराजाभ्यामन्यथाप्यभिधायिएकाहत्र्यहाद्यशौचसंकोचोऽयं स्वाध्यायमात्रविषयःसंध्योपासनादिकंतुतेनापिदशाहमेवनकर्त्तव्यमितितन्निष्प्रमाणकम् यत्तुगौतमेनराज्ञांचकर्मविरोधात् ब्राह्मणस्यस्वाध्यायानिवृत्त्यर्थं याज्ञवल्क्येनच ऋत्विजांदीक्षितानांचेत्यादिनासद्यःशौचमुक्तंतत्सर्वेषामेवदशाहाद्यशौचिनामपितत्तत्कर्मविषयम् यानितूभयत्रदशाहानिकुलस्यान्नंनभुंजीतइत्यादीनिदशाहंतत्तत्कर्मनिषेधकानिवचनानितानिदशाहाशौ

नविषयाणीतिनकश्चिद्विरोधः तस्माद्धोमस्वाध्यायमात्रार्थंसगुणेअशौचलाघवन्नसंध्योपासनार्थमितीदन्निष्प्रमाणम् ८४ दिवेति
चांडालंरजस्वलांब्रह्महादिकंप्रसूतान्दशाहाभ्यंतरेशवंशवस्पृष्टिनंचस्पृष्ट्वास्नानेनशुद्धोभवति केचित्तुतत्स्पृष्टिनमितिचांडालोद
क्यादिभिःसर्वैःसंबंधयंति गोविंदराजस्तुयाज्ञवल्क्यवचनात्शवस्पृष्टिनमेवतत्स्पृष्टिनमाह नोदक्यादिस्पृष्टिनंतत्राचमनविधा
नात् तदाहयाज्ञवल्क्यः उदक्याशुचिभिःस्नायात्संस्पृष्टस्तैरुपस्पृशेत् उदक्याशुचिभिःस्पृष्टःस्नानंकुर्यात्उदक्याशौचिभिःस्पृष्टैः
स्पृष्टस्तूपस्पृशेदाचमेत् ८५ आचम्येति श्राद्धदेवपूजादिसंचिकीर्षुःस्नानाचमनादिनाप्रयतःसम्यक्कृतचांडालाद्यशुचिदर्शनेस
ति ओंउदुत्यंजातवेदसमित्यादिसूर्यदैवतमंत्रान्यथासामर्थ्यंपावमानीश्चशक्त्याजपेत् ८६ नारमिति मानुषास्थिस्नेहसंयुक्तं
स्पृष्ट्वाब्राह्मणादिःस्नानेनविशुध्यति स्नेहशून्यंपुनःस्पृष्ट्वाआचम्यगोस्पर्शार्कावेक्षणयोरन्यतरत्कृत्वाविशुद्धोभवति ८७आ

दिवाकीर्त्तिमुदक्यांचपतितंसूतिकांतथा शवंतत्स्पृष्टिनंचैवस्पृष्ट्वास्नानेनशुध्यति ८५ आच
म्यप्रयतोनित्यंजपेदशुचिदर्शने सौरान्मंत्रान्यथोत्साहंपावमानीश्चशक्तितः ८६ नारंस्पृष्ट्वास्थि
सस्नेहंस्नात्वाविप्रोविशुध्यति आचम्यैवतुनिःस्नेहंगामालभ्यार्कमीक्ष्यवा ८७ आदिष्टीनोदकं
कुर्यादाव्रतस्यसमापनात् समाप्तेतूदकंकृत्वात्रिरात्रेणैवशुध्यति ८८ वृथासंकरजातानांप्र
व्रज्यासुचतिष्ठताम् आत्मनस्त्यागिनांचैवनिवर्त्ततोदकक्रिया ८९

दिष्टीति व्रतादेशनमादिष्टंतदस्यास्तीति
ब्रह्मचारीसमेतोदकमाव्रतसमापनान्नकुर्यात् उदकमितिप्रेतकपिंडषोडशश्राद्धादिसकलप्रेतकृत्योपलक्षणंसमाप्तेपुनर्ब्रह्मच
र्येमृतोदकंकृत्वात्रिरात्रमशौचंकृत्वाविशुद्धोभवति एतच्चमातापित्राचार्यव्यतिरिक्तविषयम् तदाहवसिष्ठः ब्रह्मचारिणःशवकर्म
णाव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोर्वाशवकर्मणेतिशवनिमित्तकेननिर्हरणदहनोदकदानपूर्वकपिंडषोडशश्राद्धादिकर्मणा
व्रतस्यतिन आचार्यस्तुपाध्यायमिति ८८ वृथेति जातशब्दःप्रत्येकमभिसंबध्यतेवृथाजातानांबाहुल्येनत्यक्तस्वधर्माणांसंक
रजातानांहीनवर्णेनोत्कृष्टस्त्रीषूत्पन्नानांवेदबाह्यरक्तपटादिप्रव्रज्यासुवर्त्तमानानांअशास्त्रीयविषोद्बंधनादिनाकामतस्त्वकृत

जीवितत्यागिनामुदकादिक्रियानकर्त्तव्या ८९ पाषंडमिति वेदबाह्यरक्तपटमौंजादिव्रतचर्यापाषंडंतदनुतिष्ठंतीनांस्वच्छंदमेका ऽनेकपुरुषगामिनीनांगर्भपातनभर्तृवधकारिणीनांद्विजातिस्त्रीणांसुरापीनांउदकक्रिया और्ध्वदैहिकन्निवर्त्ततइतिपूर्वेणसंबं धः ९० आचार्यमिति आचार्यउपनयनपूर्वकंसंपूर्णशाखाध्यापयिताउपाध्यायोवेदैकदेशस्यांगस्यवाअध्यापकः वेदस्यवेदा नांचएकदेशस्यापिव्याख्यातागुरुः निर्हरणकत्वात्प्रेतकृत्यस्यनिर्हृत्यइतिदाहदशाहपिंडषोडशश्राद्धादिसकलप्रेतकृत्यस्यप्रद- र्शनार्थमाचार्यादीन्पंचमृतान्निर्हृत्यब्रह्मचारीनलुप्तव्रतोभवति एवंचान्यान्निर्हृत्यव्रतलोपोभवतीतिगम्यतेआचार्यस्वमित्य- भिधानाद्गुरोर्गुरौसन्निहितेगुरुवद्वृत्तिमाचरेत् इतिन्यायान्नाचार्याचार्यमपिस्वमितिसर्वत्रसंबध्यतेतेनोपाध्यायोपाध्यायमपिनि र्हृत्यव्रतलोपएव ९१ दक्षिणेनेति अमांगलिकत्वादत्यंतापकृष्टशूद्रक्रमेणाभिधानंशूद्रंमृतंदक्षिणपुरद्वारेणनिर्हरेत् द्विजातीन्

पाषंडमाश्रितानांचचरंतीनांचकामतः गर्भभर्तृद्रुहांचैवसुरापीनांचयोषिताम् ९० आचा र्यंस्वमुपाध्यायंपितरंमातरंगुरुम् निर्हृत्यतुव्रतीप्रेतान्नव्रतेनवियुज्यते ९१ दक्षिणेनमृतंशूद्रं पुरद्वारेणनिर्हरेत् पश्चिमोत्तरपूर्वैस्तुयथायोगंद्विजन्मनः ९२ नराज्ञामघदोषोस्तिव्रतिनांनचस त्रिणाम् ऐंद्रंस्थानमुपासीनाब्रह्मभूताहितेसदा ९३ राज्ञोमाहात्मिकेस्थानेसद्यःशौचंविधीयते प्र जानांपरिरक्षार्थमासनंचात्रकारणम् ९४

पुनर्यथायोगंयथायुक्त्याअपकृष्टवैश्यक्षत्रियक्रमेणैवपश्चिमोत्तरपूर्व द्वारेणनिर्हरेत् ९२ नराज्ञामिति राज्ञामभिषिक्तक्षत्रियाणांसपिंडमरणादौ अशौचदोषोनास्तियतोराजानऐंद्रंस्थानंराज्याभिषे काख्यंआधिपत्यकारणंमाप्ताः व्रतिनोब्रह्मचारिणश्चांद्रायणादिव्रतकारिणश्च सत्रिणोयागप्रवृत्ताः यतोब्रह्मभूतास्तेब्रह्मैवच- निष्पापाः अशौचाभावश्चायंकर्मविशेषे तदाहविष्णुः अशौचंनराज्ञांराजकर्मणिनव्रतिनांव्रतेनसत्रिणांसत्रे राजकर्मचव्यवहा रदर्शनशांतिहोमादिकर्मणि ९३ राज्ञइति महात्मनइदंस्थानंमाहात्मिकंराज्यपदाख्यंसर्वाधिपत्यलक्षणंमहात्मैवप्रवीणपुण्य राज्यमासादयतितस्मिन्वर्त्तमानस्यसद्यःशौचमुपदिश्यतेनतुराज्यमच्युतस्यक्षत्रियजातेरप्यत्रजातिरविवक्षिताइत्यनेनश्लोकेन

दर्शितं यतोन्यायनिरूपणेन दुर्भिक्षेऽन्नदानेनोपसर्गेषु शांतिहोमादिना प्रजारक्षार्थं राज्यासने व्यवस्थानमशौचाभावेन कारणं तच्चा
क्षत्रियाणामपि तत्कार्यकारिणां विप्रवैश्यशूद्राणामविशिष्टं अतएव सोमकार्यकारिणि चमसे सोमधर्मा अतएव व्रीहिधर्मान्वितत या श्रुतम
प्यवघातादि तत्कार्यकारित्वस्य विवक्षितत्वात् सक्तौ यवे विकृतौ च नीवारादिषु संबध्यत इति कर्ममीमांसायां तत्तदधिकरणेषु निरणायि
९४ डिंबाहवइति डिंबाहवो नृपरहितयुद्धं तत्र हतानां विद्युता वज्रेण पार्थिवेन वधार्हे परार्थे हते गोब्राह्मणरक्षणार्थं विनापि युद्धं जला
ग्निव्याघ्रादिभिर्हतानां यस्य पुरोहितादेः स्वकार्याविघातार्थं नृपतिरशौचाभावमिच्छति तस्यापि सद्यः शौचम् ९५ सोमेति चंद्राग्निसूर्य
वायुशक्रयमानां वित्तस्याणां च पत्योः कुबेरवरुणयोरेवं अष्टानां लोकपालानां संबंधि देहं राजा धारयति ततः किमत आह ९६ लोकेशेति यतो
लोकेशांशाक्रांतो नृपतिस्ततो नास्याशौचमुपदिश्यते यस्मान्मनुष्याणां यच्छौचमशौचं चात तल्लोकेशेभ्यः प्रभवति विनश्यति च अप्यये-

डिंबाहवहतानां च विद्युता पार्थिवेन च गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः ९५ सोमाग्न्यर्का
निलेंद्राणां वित्ताप्पत्योर्यमस्य च अष्टानां लोकपालानां वपुर्धारयते नृपः ९६ लोकेशाधिष्ठितो राजा ना-
स्याशौचं विधीयते शौचाशौचं हि मर्त्यानां लोकेशप्रभवाप्ययम् ९७ उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य
च सद्यः संतिष्ठते यज्ञस्तथाशौचमिति स्थितिः ९८ विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् वै
श्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ९९

विनाशः एतेनान्यदीयशौचाशौचोत्पादनविनाशशक्तस्य लोकेश्वरस्व
रूपस्य नृपतेः कुतः स्वकीयाशौचमिति पूर्वोक्ताशौचाभावस्तुतिः ९७ उद्यतैरिति उद्यतैः शस्त्रैः खड्गादिभिर्न तु लगुडपाषाणादिभिरपराङ्मु
खत्वादि क्षत्रियधर्मयुक्तसंग्रामे हतस्य तत्क्षणादेव ज्योतिष्टोमादियज्ञः संतिष्ठते समाप्तिमेवेति तत्पुण्येन युज्यत इत्यर्थः तथाशौचम
पि तत्क्षणादेव समाप्तिमेति इयं शास्त्रमर्यादा ९८ विप्रइति अशौचांते कृतश्राद्धादिकृत्यो ब्राह्मणः अपः स्पृष्ट्वेति जलस्पर्शमात्रं द
क्षिणहस्तेन कृत्वा शुद्धो भवति न तु संवत्सरे व्यतीते तु स्पृष्टैरद्भिर्विशुध्यतीतिवत् स्नाला वाहनादिस्पर्शसाहचर्यात् स्पृष्ट्वेत्यस्य च सकृदु
च्चरितस्यार्थभेदस्यान्याय्यत्वात् क्षत्रियो हस्त्यादि वाहनं खड्गाद्यायुधं च वैश्यो बलीवर्दादितोदं लोहमोताग्रं योक्त्रं वा शूद्रो यष्टिं वंशदंडिकाम्

एतदिति भोद्विजश्रेष्ठाएतच्छौचंसपिंडेषुप्रेतेषुयुष्माकमुक्तम् इदानीमसपिंडेषुप्रेतेषुशुद्धिंशृणुत १०० असपिंडमिति असपिंडंब्राह्मणंमृतंब्राह्मणोबंधुवत्स्नेहानुबंधेननलदष्टबुद्ध्येत्यर्थादुक्तंमातुश्चाप्तान्सन्निकृष्टान्सहोदरभ्रातृभगिन्यादीन्बांधवान्निर्हृत्यत्रिरात्रेणशुद्धोभवति १०१ यद्यन्नमिति निर्हारकोयदितेषांमृतस्यसपिंडानांआशौचिनामन्नमश्नातितदातद्दशाहेनैवशुध्यतिनत्रिरात्रेणअथतेषामन्नंनाश्नातिगृहेचतेषांनवसतिनिर्हरतिचतदाहोरात्रेणैवशुध्यतिएवंचतद्गृहवासेसतितदन्नाभोजिनोनिर्हारकस्यपूर्वोक्तंत्रिरात्रम् १०२ अनुगम्येति ज्ञातिमज्ञातिंवामृतमिच्छातोऽनुगम्यसचेलस्नानंचकृत्वाततोऽग्निंस्पृष्ट्वाघृतंप्राशनंकृत्वाअनुगमननिमित्ताशौचाद्विशुध्यति १०३ नविप्रमिति ब्राह्मणादिमृतंसमानजातीयेषुस्थितेषुनशूद्रेणपुत्रादि

एतद्वोभिहितंशौचंसपिंडेषुद्विजोत्तमाः असपिंडेषुसर्वेषुप्रेतशुद्धिंनिबोधत १०० असपिंडंद्विजंप्रेतंविप्रोनिर्हृत्यबंधुवत् विशुध्यतित्रिरात्रेणमातुराप्तांश्चबांधवान् १०१ यद्यन्नमत्तितेषांतुदशाहेनैवशुध्यति अनदन्नन्नमन्हैवनचेत्तस्मिन्गृहेवसेत् १०२ अनुगम्येच्छयाप्रेतंज्ञातिमज्ञातिमेवच स्नात्वासचेलःस्पृष्ट्वाग्निंघृतंप्राश्यविशुध्यति १०३ नविप्रंस्वेषुतिष्ठत्सुमृतंशूद्रेणनाययेत् अस्वर्ग्याह्याहुतिःसास्याच्छूद्रसंस्पर्शदूषिता १०४ ज्ञानंतपोग्निराहारोमृन्मनोवार्युपांजनम् वायुःकर्मार्ककालौचशुद्धेःकर्तृणिदेहिनाम् १०५

यस्मात्साशरीराहुतिःशूद्रस्पर्शदुष्टासतीमृतस्यस्वर्गाय-हितानभवतिमृतंस्वर्गंनप्रापयतीत्यर्थः स्वेषुतिष्ठत्स्वित्यभिधानात्ब्राह्मणाभावेक्षत्रियेणतदभावेवैश्येनतदभावेशूद्रेणापिनिर्हार्येदित्युक्तंयथापूर्वंश्रेष्ठत्वादस्वर्ग्यदोषश्चब्राह्मणादिसद्भावेशूद्रेणनिर्हरणेसतिबोद्धव्यः गोविंदराजस्तुदोषनिर्देशात्स्वेषुतिष्ठत्स्वित्यविवक्षितमित्याह तदयुक्तम् संभवत्सुपदद्वयोच्चारणवैयर्थ्यप्रसंगात्उपक्रमावगतेश्चवेदोदितन्यायेनानुबोध्यत्वाद्गुणभूतसुध्यर्थबाधेनप्रधानभूतायाजातेरुपेक्षायांगुणलोपेतुमुख्यस्येत्यपिन्यायेनबाध्येत तस्मात् स्वेषुतिष्ठत्स्वितिपदद्वितयंनविवक्षितम् इमांगोविंदराजस्यवाजाज्ञांनाद्रियामहे १०४ ज्ञानमिति ज्ञानादीनिशुद्धेःसाधनानिभवंति तत्रब्रह्मज्ञानंबुद्धिरूपांतः

करणशब्दः साधनंपथावक्ष्यतिबुद्धिर्ज्ञानेनशुध्यति तपोयथातपसावेदवित्तमाः अग्निर्यथापुनःपाकेनमृण्मयम् आहारोयथाह
विष्येणपयसावाइति मृद्वारिणीयथामृद्वार्यादेयमर्थवदिति मनोयथामनःपूतंसमाचरेदितिसंकल्पविकल्पात्मकंमनोनिश्चयात्मिका
बुद्धिरितिमनोबुध्योर्भेदः उपांजनमुपलेपनंयथासार्जनोपांजनैर्वेश्म कर्मयथायजेद्वाश्वमेधेनइत्यादि अर्कोयथागासालभ्यार्क
मीक्ष्यवा कालोयथाशुध्येद्विप्रोदशाहेन ज्ञायास्तुशुद्धिहेतुत्वंमनुनानुक्तमपि पंथानश्चविशुध्यंतिसोमसूर्यांशुमारुतैरितिवि-
धवादावुक्तंग्राह्यम् १०५ सर्वेषामेवेति सर्वेषांमृद्वारिनिमित्तदेहशौचमनःशौचादीनांमध्यादर्थशौचं अन्यायेनपरधनहरणपरी
हारेणयद्धनेच्छयातत्सर्वश्रेष्ठंमन्वादिभिःस्मृतंयस्माद्योऽर्थेशुद्धःसशुद्धोभवति यःपुनर्मृद्वारिशुचिरर्थेनाशुद्धःसोऽशुद्धएव-१०६
क्षांत्येति परेणापकारेकृतेतस्मिन्प्रत्यपकारबुध्यनुत्पत्तिरूपयापंडिताःशुध्यंतियथाचवक्ष्यति महायज्ञक्रियाःक्षमानाशयंत्या-

सर्वेषामेवशौचानामर्थशौचंपरंस्मृतम् योऽर्थेशुचिर्हिसशुचिर्नमृद्वारिशुचिःशुचिः १०६ क्षांत्याशु-
ध्यंतिविद्वांसोदानेनाकार्यकारिणः प्रच्छन्नपापाजप्येनतपसावेदवित्तमाः १०७ मृत्तोयैःशुध्यतेशो
ध्यंनदीवेगेनशुध्यति रजसास्त्रीमनोदुष्टासंन्यासेनद्विजोत्तमः १०८ अद्भिर्गात्राणिशुध्यंतिमनःस-
त्येनशुध्यति विद्यातपोभ्यांभूतात्माबुद्धिर्ज्ञानेनशुध्यति १०९

शुपापानीति अकार्यकारिणोदानेन यथावक्ष्य
ति सर्वस्वंवावेदविदेब्राह्मणायेति अप्रख्यातपापाजप्येनयथावक्ष्यति जपंस्त्रूपवसेद्दिनमिति वेदवित्तमाःवेदार्थचांद्रायणादितपो
विदः तपसेत्येकादशाध्यायेवक्ष्यमाणेन १०७ मृत्तोयैरिति मलाद्युपहतंशोधनीयंमृज्जलैःशोध्यतेनदीप्रवाहश्चश्लेष्माद्यशुचि
दूषितोवेगेनशुध्यति स्त्रीचपरपुरुषमैथुनसंकल्पादिदूषितमानसाप्रतिमासार्त्तवेनतस्मात्पापाच्छुद्धाभवतिब्राह्मणश्चसंन्यासेनप
ह्याध्यायाभिधेयेनपापाच्छुध्यति १०८ अद्भिरिति स्वेदाद्युपहतान्यंगानिजलेनक्षालितानिशुध्यंतिमनश्चनिषिद्धचिंतनादिनादूषि
तंसत्याभिधानेनशुध्यतिभूतात्मासूक्ष्मादिलिंगशरीरावच्छिन्नोजीवात्माब्रह्मविद्ययापापक्षयहेतुतयातपसाचशुद्धोभवतिशब्द
परमात्मरूपेणावतिष्ठतेबुद्धिश्चविपर्ययज्ञानोपहतायथार्थविषयज्ञानेनशुध्यति १०९ ७ ७ ७

एषइति अयंशारीरसंबंधिनः शौचस्यशुध्याकेनिश्चयउक्तः इदानींनानाप्रकारद्रव्याणांयेनपञ्छुध्यतितस्यनिर्णयंशृणुत ११०
तैजसेति तैजसानांसुवर्णादीनांमरकतादिमणीनांपाषाणमयस्यचसर्वस्यभस्मनाजलेनमृत्तिकयाचमन्वादिभिःशुद्धिरुक्तानि-
र्लेपस्यजलेनैवानंतरंशुद्धेर्वक्ष्यमाणत्वात् इदमुच्छिष्टघृतादिलिप्तविषयंतत्रमृद्भस्मनोर्गंधक्षयेककार्यत्वाद्विकल्पः आपस्तू-
भयत्रसमुच्चीयंते १११ निर्लेपमिति उच्छिष्टादिलेपरहितंसौवर्णभांडंजलभवंचशंखमुक्तादिपाषाणमयंचराजतमनुपस्कृतंरे-
खादिगुणांतराधानरहितंतथाविधमलासंभवाज्जलेनैवभस्मादिरहितेनशुध्यति ११२ अपामग्नेरिति अग्निर्वैवरुणादीन्का-
मयतइत्यादिवेदेश्रूयतेतथाग्नेःसुवर्णमिंद्रियंवरुणादीनांरजतमित्यादिश्रुतिषग्न्यापःसंयोगात्सुवर्णरजतंचोद्भूतंयस्मादतस्तयोः

एषशौचस्यवःप्रोक्तःशारीरस्यविनिर्णयः नानाविधानांद्रव्याणांशुद्धेःशृणुतनिर्णयम् ११० तैजसा
नांमणीनांचसर्वस्याश्ममयस्यच भस्मनाद्भिर्मृदाचैवशुद्धिरुक्तामनीषिभिः १११ निर्लेपंकांचनं
भांडमद्भिरेवविशुध्यति अब्जमश्ममयंचैवराजतंचानुपस्कृतम् ११२ अपामग्नेश्चसंयोगाद्धैमंरौ
प्यंचनिर्बभौ तस्मात्तयोःस्वयोन्यैवनिर्णेकोगुणवत्तरः ११३ ताम्रायःकांस्यरैत्यानां त्रपुणःसीस
कस्यच शौचंयथार्हंकर्त्तव्यंक्षाराम्लोदकवारिभिः ११४ द्रवाणांचैवसर्वेषांशुद्धिराप्लवनंस्मृतम् प्रो
क्षणंसहतानांचदारवाणांचतक्षणम् ११५

स्वेनकारणेनैवजलेनात्यंतोपघातेनाग्निनानिर्णेकःशुद्धिहेतुःगुणव-
त्तरःप्रशस्ततरः ११३ ताम्रायइति अयोलोहंरैतिपित्तलंतद्विकारंपात्रंरैत्यंत्रपुरंगंएषांभस्माम्लोदकैःशोधनंकर्त्तव्यंयथार्हंयस्यय
दर्हति अंभसाहेमरौप्यायःकांस्यंशुध्यतिभस्मना अम्लैस्ताम्रंचरैत्यंचपुनःपाकेनमृण्मयमितिवृहस्पत्यादिवचनाद्विशेषोऽत्र
बोद्धव्यः ११४ द्रवाणांचेति द्रवाणांघृततैलानांकाककीटाद्युपहतानांबौधायनादिवचनात्प्रस्तृतिमात्रप्रमाणानांप्रादेशप्रमा
णकुशपत्रद्वयाभ्यांउत्प्लवनेनशुद्धिः संहतानांचशय्यादीनामुच्छिष्टाद्युपघातेप्रोक्षणंदारवाणांचात्यंतोपघातेतक्षणेन ११५
मार्जनमिति चमसानांग्रहाणांचान्येषांयज्ञपात्राणांपूर्वंपाणिनामार्जनंकार्यंपश्चात्प्रक्षालनेनयज्ञेकर्त्तव्येशुद्धिर्भवति ११६

चरूणामिति स्नेहाक्तानांचरूस्रुक्स्रुवादीनां उष्णजलेन शुद्धिः स्नेहाद्ययुक्तानां तु जलमात्रेण वसुस्फ्यशूर्पादीनाम् ११७ अद्भिस्त्विति ब
हूनां धान्यानां वस्त्राणां च चांडालाद्युपघाते जलेन प्रोक्षणाच्छुद्धिः बहुत्वं च पुरुषभारहार्याधिकत्वमिति व्याचक्ष्यते तदल्पानां तु
प्रक्षालनाच्छुद्धिर्मन्वादिभिरुपदिश्यते ११८ चेलवदिति स्पृश्यपशुचर्मणां वंशादिदलनिर्मितानां च वस्त्रवच्छुद्धिर्भवति शाक
मूलफलानां च धान्यवच्छुद्धिः ११९ कौषेयेति कृमिकोशोद्भवस्य वस्त्रस्य मेषादिलोमप्रभवस्य कंबलादेरूषैः क्षारमृत्तिकाभिः कु
तपानां नेपालकंबलानां अरिष्टकैः अरिष्टचूर्णैः अंशुपट्टानां पट्टशाटकानां बिल्वफलैः क्षौमाणां दुकूलानां क्षुमावल्कलभवानां
वस्त्राणां तु पिष्टश्वेतसर्षपप्रक्षालनाच्छुद्धिः १२० क्षौमवदिति शंखस्य पशुशृंगाणां स्पृश्यपश्वस्थिभवस्य गजादिदंतस्य च क्षौ-

मार्ज्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन तु ११६ चरूणां स्रु
क्स्रुवाणां च शुद्धिरुष्णेन वारिणा स्फ्यशूर्पशकटानां च मुसलोलूखलस्य च ११७ अद्भिस्तु प्रोक्षणं
शौचं बहूनां धान्यवाससाम् प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ११८ चेलवच्चर्मणां शुद्धि
र्वैदलानां तथैव च शाकमूलफलानां च धान्यवच्छुद्धिरिष्यते ११९ कौषेयाविकयोरूषैः कुतपानाम
रिष्टकैः श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः १२० क्षौमवच्छंखशृंगाणामस्थिदंतमयस्य च शु
द्धिर्विजानता कार्या गोमूत्रेणोदकेन वा १२१ प्रोक्षणात्तृणकाष्ठं च पलालं चैव शुध्यति मार्ज्जनोपांज
नैर्वेश्म पुनःपाकेन मृण्मयम् १२२ मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः संस्पृष्टं नैव शुध्येत पुनःपा
केन मृण्मयम् १२३

मवत्पिष्टश्वेतसर्षपकल्केन गोमूत्रजलयोरन्यतरयुक्तेन शास्त्रविदा शुद्धिः कर्त्तव्या १२१ प्रोक्षणात्तृ
णकाष्ठं चेति तृणकाष्ठपलालं च चंडालादिस्पर्शदूषितं प्रोक्षणेन शुध्यति तृणपलालसाहचर्यादिदमिंधनादिकाष्ठविषयम् दारवाणां
तु तक्षणमिति निर्मितदारुमयगृहपात्रविषयम् गृहमुदक्यानिवासादिदूषितम् मार्जनगोमयाद्युपलेपनेन मृन्मयभांडमुच्छिष्टादि
स्पर्शदूषितं पुनःपाकेन शुध्यति १२२ मद्यैरिति मद्यादिभिस्तु संस्पृष्टं मृण्मयपात्रं पुनःपाकेनापि न शुध्यति ष्ठीवनं श्लेष्मा पूय शोणित
तद्विकारः १२३

संमार्जनेति अवकरशोधनेनगोमयाद्युपलेपनेनगोमूत्रोदकादिसेकेनखात्वाकाचिन्मृदपनयनेनगवांअहोरात्रनिवासेनपंचभिरेके कशोभूमिःशुध्यति एषांचोच्छिष्टमूत्रपुरीषचंडालनिवासाद्युपघातगौरवलाघवाभ्यांसमुच्चयविकल्पाववगंतव्यौ १२४ पक्षि जग्धंगवाघ्रातमिति भक्ष्यपक्षिणाकश्चिद्भागोयस्यभक्षितःगवायस्यघ्राणंकृतंपदाचावधूतमुपरिक्षुतंकेशकीटदूषितंजग्ध शब्दलिंगादन्नमल्पंमृत्प्रक्षेपेणशुध्यति १२५ यावदिति विष्ठादिलिप्ताद्द्रव्याद्यावत्संबंधिनोगंधलेपौतिष्ठतःतावद्द्रव्यमुद्धृत्य मृद्वारिभक्षिप्तव्याग्रहीतव्यम् यत्रचसामान्यादौमृदाशुद्धिस्तत्रमृत्सहितंजलग्रहणंकर्त्तव्यंयत्रकर्णमलादौजलेनैवशुद्धिस्तत्र जलमात्रमित्यवगंतव्यम् १२६ त्रीणिदेवाइति केनापिप्रकारेणादृष्टोपघातहेतुसंसर्गमदृष्टंसंजातोपघातशंकायांजलेनप्रक्षा

संमार्जनोपांजनेनसेकेनोल्लेखनेनच गवांचपरिवासेनभूमिःशुध्यतिपंचभिः १२४ पक्षिजग्धंगवाघ्रा तमवधूतमवक्षुतम् दूषितंकेशकीटैश्चमृत्प्रक्षेपेणशुध्यति १२५ यावन्नापैत्यमेध्याक्ताद्गंधोलेपश्चतत्कृतः तावन्मृद्वारिचादेयंसर्वासुद्रव्यशुद्धिषु १२६ त्रीणिदेवाःपवित्राणिब्राह्मणानामकल्पयन् अदृष्ट मद्भिर्निर्णिक्तंयच्चवाचाप्रशस्यते १२७ आपःशुद्धाभूमिगतावैतृष्ण्यंयासुगोर्भवेत् अव्याप्ताश्चेदमे ध्येनगंधवर्णरसान्विताः १२८ नित्यंशुद्धःकारुहस्तःपण्यंयच्चप्रसारितम् ब्रह्मचारिगतंभैक्ष्यंनित्यंमे ध्यमितिस्थितिः १२९

लितम् तदाहहारीतः यद्यन्मीमांसास्यात्तत्तदद्भिःस्पर्शाच्छुद्धिर्भवतिउपघातशंकायामेवपवित्रंभव तिब्राह्मणवाचायत्प्रशस्यतेतानित्रीणिपवित्राणिदेवाःब्राह्मणानांकल्पितवंतः १२७ आपःशुद्धाइति यत्परिमाणास्वप्सुगोःपि पासाविच्छेदोभवतिताआपोगंधवर्णरसशालिन्यःसत्यःयद्यमेध्यलिप्तानभवंतितदाविशुद्धाभूमिगताविशुद्धाःस्युःविशुद्धभूमिग ताइतिभूमिसंबंधप्रदर्शनायनत्वंतरिक्षगतानांनिवृत्त्यर्थः १२८ नित्यंशुद्धइति कारोर्मालाकारादेर्देवब्राह्मणाद्यर्थेपिमाल्यादि ग्रथनेद्रव्यप्रयोजनाद्यपेक्षयाशुद्धिविशेषाकरणेपिस्वभावादेवहस्तःसर्वदाशुद्धः तथाजननमरणयोरपिस्वव्यापारेशुद्धः नखशौचं कारूणांकारुकर्मणीतिवचनात् तथायद्विक्रेतव्यंपण्यवीथिकायांप्रसारितंनापणनीयमन्नमश्नीयादितिशंखवचनात्सिद्धान्न-

व्यतिरिक्तंतदनेकक्रेतृकरस्पर्शेपिशुद्धमेवतथाचब्रह्मचार्यादिगतभैक्ष्यमनाचांतस्त्रीदत्तमपिरथ्यादिक्रमणेपिसर्वदाशुद्धमितिशा
स्त्रमर्यादा १२९ नित्यमास्यमिति सर्वदास्त्रीणांमुखंशुचितथाकाकादिपक्षिणांचंचूपघातपतितंफलंशुचिवत्ससुखंचदोहसमये-
क्षीरप्रक्षरणेशुचिश्वाचपदामृगादीन्हंतुंगृण्हातितदातत्रव्यापारेशुचिःतस्मात् १३० श्वभिरिति कुक्कुरैर्हतस्यमृगादेर्यन्मांसंतं
त्शुचिमनुरब्रवीत् तच्छ्राद्धातिथिभोजनादावेवद्रष्टव्यम् अन्यैश्चाममांसादिभिर्व्याघ्रश्येनादिभिश्चव्याधादिभिश्चमृगवधजी
विभिर्हतस्य १३१ ऊर्ध्वनाभेरिति नाभेरुपरियानींद्रियच्छिद्राणितानिसर्वाणिपवित्राणिभवंतिअतस्तेषांस्पर्शनेनाशौचंयानिनाभेर
धस्तान्यशुचीनिभवंतिअथच्छिद्रेषुनबहुवचनंव्यक्तिबहुत्वापेक्षयावक्ष्यमाणाश्चवसादयोदेहमलादेहान्निःसृताअशुद्धाभवंति
१३२ मक्षिकेति मक्षिकाअमेध्यस्पर्शिन्योपिविप्रुषोमुखनिःसृताअल्पाजलकणाःछायापतितादेर्हीनस्पर्शस्यापिगवादीनिचाग्निपर्यं

नित्यमास्यंशुचिस्त्रीणांशकुनिःफलपातने प्रस्रवेचशुचिर्वत्सःश्वामृगग्रहणेशुचिः १३० श्वभिर्हतस्य
यन्मांसंशुचितन्मनुरब्रवीत् क्रव्याद्भिश्चहतस्यान्यैश्चंडालाद्यैश्चदस्युभिः १३१ ऊर्ध्वनाभेर्यानिखानि
तानिमेध्यानिसर्वशः यान्यधस्तान्यमेध्यानिदेहाच्चैवमलाश्च्युताः १३२ मक्षिकाविप्रुषश्छायागौरश्वः
सूर्यरश्मयः रजोभूर्वायुरग्निश्चस्पर्शेमेध्यानिनिर्दिशेत् १३३ विण्मूत्रोत्सर्गशुद्ध्यर्थंमृद्वार्यादेयमर्थ
वत् दैहिकानांमलानांचशुद्धिषुद्वादशस्वपि १३४ वसाशुक्रमसृङ्मज्जामूत्रविट्घ्राणकर्णविट् श्ले
ष्माश्रुदूषिकास्वेदोद्वादशैतेनृणामलाः १३५

तानिचंडालादिस्पृष्टानिस्पर्शेशुचीनिजानीयात् १३३ विण्मूत्रेति विण्मू
त्रमुत्सृज्यतेयेनसविण्मूत्रोत्सर्गःपाय्वादिस्तस्यशुद्ध्यर्थंमृद्वारिगृहीतव्यंअर्थवद्यावत्प्रयोजनवत्यावतागंधलेपक्षयोभवतितथाशरीराणां
वसादिमलानांसंबंधिषुद्वादशस्वपिगंधलेपक्षयार्थंमृद्वारिग्राह्यंतत्रस्मृत्यंतरात्पूर्वषट्केमृज्जलग्रहणंउत्तरषट्केजलमात्रग्रहणं तदाहबौ
धायनः आददीतमृदोपश्चषट्सुपूर्वेषुशुद्धये उत्तरेषुचषट्स्वद्भिःकेवलाभिर्विशुध्यति ततश्चद्वादशस्वपीतिमानवंमृद्वारिग्रहणवच
नंव्यवस्थयामृद्वारिणोर्ग्रहणेसतिनविरुध्यते गोविंदराजस्तुमनुबौधायनवचनसंदर्शनादुत्तरषट्केपिविकल्पमाह सचव्यवस्थितोदैव
पित्राद्यदृष्टकर्मप्रवृत्तेउत्तरेष्वपिमृदमादद्यान्नान्यदा १३४ वसेति वसाकायस्नेहःशुक्रंरेतःअसृक्रक्तंमज्जाशिरोमध्येपिंडितस्नेहः

दूषिका अक्षिमलः स्वेदः श्रमादिना देहनिःसृतंजलम् वसादयो द्वादशनराणां दैहिका मला भवंति १३५ एकालिंगइति मूत्रपुरीषोत्सर्गे सति शुद्धिमभीप्सता मृद्वार्यादेयमर्थवदित्युक्तत्वाज्जलसहिता मृदेकालिंगे दातव्या गुदे तिस्रो मृदः तथैकस्मिन् करे वामे शौचविद्दक्षिणंहस्तं नाधःशौचे नियोजयेत् तथैव वामहस्तेन नाभेरूर्ध्वं न शोधयेदिति देवलवचनात्तस्यैवाधःशौचसाधनत्वात् तत्रैव दशमृदो दातव्या ततउभयोः करयोः सप्त दातव्याः यदा तूक्तशौचेनापि गंधलेपक्षयो न भवति तदा यावदपैत्यमेध्याक्तादिति वचनादधिकसंख्या अपि मृदो दातव्या एतद्विषयाण्येव मुनीनामधिकमृत्संख्यावचनानि मृत्परिमाणमाह दक्षः लिंगेपि मृत्समाख्याता त्रिपर्वी पूर्यते यया द्वितीया च तृतीया च तदर्द्धार्द्धा प्रकीर्तिता इति यदा तूक्तसंख्यया अल्पेनापि गंधलेपक्षयो भवति तदा संख्यावाक्यारंभसामर्थ्यात्संख्या पूरयितव्यैव १३६ एतच्छौचमिति एकालिंगइत्यादि यच्छौचमुक्तं तद्गृहस्थानामेव ब्रह्मचारिणां द्विगुणं वानप्र

एकालिंगे गुदे तिस्रस्तथैकत्र करे दश उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता १३६ एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् त्रिगुणं स्याद्वनस्थानां यतीनां तु चतुर्गुणम् १३७ कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्वदा १३८ त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् शारीरं शौचमिच्छन्हि स्त्री शूद्रस्तु सकृत्सकृत् १३९ शूद्राणां मासिकं कार्यं वपनं न्यायवर्त्तिनाम् वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं च भोजनम् १४०

स्थानां त्रिगुणं यतीनां पुनश्चतुर्गुणम् १३७ कृत्वेति मूत्रपुरीषं कृत्वा कृतयथोक्तशौचस्त्रिराचांतइंद्रियछिद्राणि शीर्षण्यन्यानि च स्पृशेत् वेदाध्ययनं चिकीर्षन् अन्नं वा अश्नन् यत्तु द्वितीयाध्याये अध्येष्यमाणस्त्वाचांतो निवेद्य गुरवेस्मीयादाचम्येत्युभयमुक्तं न इतांगत्वार्थम् इदंतु पुरुषार्थं शौचार्थमित्यपुनरुक्तिः आचांतइति यदुक्तं तत्र विशेषमाह १३८ त्रिराचामेदिति देहस्य शुद्धिमिच्छन् प्रथमं वारत्रयमपो भक्षयेत् ततो द्विर्मुखं परिमृज्यात् स्त्रीशूद्रश्चैकवारमाचमनार्थमुदकं भक्षयेत् १३९ शूद्राणामिति शूद्राणां कार्यमिति कृत्यानां कर्त्तरि वेति कर्त्तरि षष्ठी यथाशास्त्रव्यवहारिभिर्द्विजशुश्रूषकैः शूद्रैर्मासिमासि मुंडनं कार्यं वैश्यवच्च मृतसूतकादौ शौचकल्पोनुष्ठातव्यः द्विजोच्छिष्टं च भोजनं

भुञ्जीतेति भोजनं कार्यमिति १४० नोच्छिष्टमिति निष्ठीव्योक्त्वानृतानि पीतवताचमनविधानाद्विप्रुषामपि मुखान्निःसरणं निष्ठीव नमेवेति प्रसक्तौ शक्यार्थमपवादमाह मुखभवा विप्रुषो या अंगे निपतंति ता उच्छिष्टं न कुर्वंति तथाश्मश्रु लोमानि मुखप्रविष्टानि नोच्छिष्टतां जनयंति दंतावकाशस्थितं चान्नावयवादि नोच्छिष्टं कुरुते अत्र गौतमीये विशेषः दंतश्लिष्टेषु दंतवदन्यत्र जिह्वाभिमर्षणात्प्राक्च्युतेरि त्येके च्युतेष्वास्रववद्विद्यान्निगिरन्नेव तच्छुचिः १४१ स्पृशंतीति अन्येषामाचमनार्थं जलं ददतां ये विंदवः पादौ स्पृशंति न जंघादि वि शुद्धभूमिष्ठोदकैस्तुल्यास्तेन नाचमनार्हो भवति तदा तत्र च्यवनावस्थैरकृताचमनः शुध्यति द्रव्यं च शुध्यति १४२ उच्छिष्टेनेति द्रव्य हस्तपदेन शरीरसंबंधमात्रं द्रव्यस्य विवक्षितं आमणिबंधात्पाणिं प्रक्षाल्येति द्रव्यहस्तस्याचमनासंभवात्स्कंधादिस्थितद्रव्यो यद्युच्छि ष्टेन संस्पृष्टो भवति तदा द्रव्यमनवस्थाप्यैव कृताचमनः शुध्यति द्रव्यं च शुद्धं भवति १४३ वांत इति कृतवमनः संजातविरेकः स्नात्वा घृ

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गे पतंति याः न श्मश्रूणि गतान्यास्यान्न दंतान्तरधिष्ठितम् १४१ स्पृशंति बिं दवः पादौ य आचामयतः परान् भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् १४२ उच्छिष्टेन तु संस्पृष्टो द्रव्यह स्तः कथंचन अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् १४३ वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाच रेत् आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम् १४४ सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च पीत्वापोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन् १४५ एष शौचविधिः कृत्स्नो द्रव्यशुद्धिस्तथैव च उक्तो वः स र्ववर्णानां स्त्रीणां धर्मान्निबोधत १४६

तप्राशनं कुर्यात् दशविरेकान्विरिक्त इति गोविंदराजः यदि भुक्त्वा अनंतरमेव वम ति तदा आचमनमेव कुर्यान्न स्नानघृतप्राशने मैथुनं च कृत्वा स्नायात् इदं तु ऋतुमतीविषयम् १४४ सुप्त्वेति निद्रां कृत्वा भोजनश्लेष्म निरसनमृषावादजलपानादि कृत्वा अध्ययनं चिकीर्षुः शुचिरप्याचामेत् यत्तु भुक्त्वा चोपस्पृशेत्स्यादिति तथा अध्येष्यमाणस्त्वाचांत इति द्वितीयाध्यायोक्तं तद्भुक्तांगत्वेन इह तु भुक्त्वाचमनविधानं पुरुषार्थं अध्ययनांगतया चमनविधानं गृहस्थादीनामपीति १४५ एष शौच विधिरिति गमवर्णानां जननमरणादौ दशरात्रादिरशौचविधिः समग्रो द्रव्याणां तैजसादीनां चैलादीनां च जलादिना शुद्धिविधिर्युष्माक

युक्तः इदानींस्त्रीणामनुष्ठेयंधर्मंशृणुत १४६ बालयावेति बाल्येयौवनेवार्द्धकेचवर्त्तमानयाकिंचित्सूक्ष्ममपिकार्यंभर्त्राद्यननुमत स्वातंत्र्येणकर्त्तव्यमितिकिंतु १४७ बाल्येपितुरिति बाल्येपितुर्वशेतिष्ठेत् यौवनेभर्त्तुः भर्त्तरिमृतेपुत्राणांतदभावे तत्सपिंडे पुत्रासत्सुपितृपक्षःप्रभुःस्त्रियः पक्षद्वयावसानेतुराजाभर्त्तास्त्रियामतइतिनारदवचनात् ज्ञातिराजादीनामायत्तास्यात्कदाचिन्न स्वतंत्राभवेत् १४८ पित्रामर्त्रेति पित्रापत्यासुतैर्वानात्मनोविरहंकुर्यात् यस्मादेषांवियोगेनस्त्रीबंधकीभावंगताप्युभयकुले निंदितेकरोति १४९ सदाप्रहृष्टेति सर्वदाभर्त्तरिविरुद्धेपिप्रसन्नवदनयागृहकर्मणिचतुरयासुशोधितकुंडकटाहादिगृहभांडया- व्ययेचानवहुमदयास्त्रियाभवितव्यम् १५० यस्मैदद्यादिति यस्मैपिताएनांदद्यात्पितुरनुमत्याभ्रातावातंजीवंतंपरिचरेत् मृतंच

बालयावायुवत्यावा वृद्धयावापियोषिता नस्वातंत्र्येणकर्त्तव्यंकिंचित्कार्यंगृहेष्वपि १४७ बाल्येपितु र्वशेतिष्ठेत्पाणिग्राहस्ययौवने पुत्राणांभर्त्तरिप्रेतेनभजेत्स्त्रीस्वतंत्रताम् १४८ पित्राभर्त्रासुतै- र्वापिनेच्छेद्विरहमात्मनः एषांहिविरहेणस्त्रीगर्ह्येकुर्यादुभेकुले १४९ सदाप्रहृष्टयाभाव्यंगृहका र्येषुदक्षया सुसंस्कृतोपस्करयाव्ययेचामुक्तहस्तया १५० यस्मैदद्यात्पितात्वेनांभ्रातावानुमते पितुः तंशुश्रूषेतजीवंतंसंस्थितंचनलंघयेत् १५१ मंगलार्थंस्वस्त्ययनंयज्ञश्चासांप्रजापतेः प्रयु ज्यतेविवाहेषुप्रदानंस्वाम्यकारणम् १५२ अनृतावृतुकालेचमंत्रसंस्कारकृत्पतिः सुखस्यनित्यं दातेहपरलोकेचयोषितः १५३

नातिक्रामेत् व्यभिचारेणतदीयश्राद्धतर्पणादिविरहितयापारलौकिकसुखखंड नेनच १५१ मंगलार्थमिति यदासांस्वस्त्ययनंशांत्यनुमंत्रवचनादिरूपंयज्ञश्चासांप्रजापतियागःप्रजापत्युद्देशेनाज्यहोमात्मको विवाहेषुक्रियतेतन्मंगलार्थमभीष्टसंपत्त्यर्थंकर्म यत्पुनःप्रथमंप्रदानंवाग्दानात्मकंतदेवभर्त्तुःस्वाम्यजनकंततश्चवाग्दानादार भ्यस्त्रीभर्त्तृपरतंत्रातस्मात्तंश्रयेतेतिपूर्वोक्तशेषः यत्तुनवमेवक्ष्यतेतेषांनिष्ठातुविज्ञेयाविद्वद्भिःसप्तमेपदेइतितद्भार्यात्वसंस्का रार्थमित्यविरोधः यतः १५२ अनृतावृतुकालेति मंत्रसंस्कारोविवाहःतत्कर्त्ताभर्त्ताऋतावृतुपे यात्सर्वत्रवाप्रतिषिद्धवर्जमिति

गोतमवचनात् ऋतुकालेअन्यदानित्यमिहलोकेचसुखस्यदातातदाराधनेनचस्वर्गादिप्राप्तेःपरलोकेऽपिसुखस्यदातेतितत-
स्मात् १५३ विशीलइति सदाचारशून्यःस्त्र्यंतरानुरक्तोवाविद्यादिगुणहीनोवातथापिसाध्व्यास्त्रियादेववत्सततमाराधनीयःयः-
स्माच्च १५४ नास्तिस्त्रीणामिति यथाभर्तुःकस्याश्चित्पत्न्यारजोयोगादिना अनुपस्थितावपिपत्न्यंतरेणयज्ञनिष्पत्तिःनथानस्त्रीणां
भर्त्राविनायज्ञसिद्धिः नापिभर्तुरनुमतिमंतरेणव्रतोपवासौकिंतुभर्तृपरिचर्ययैवस्त्रीस्वर्गलोकेपूज्यते १५५ पाणिग्राहस्येति प-
त्यासहधर्माचरणेनयोर्जितःस्वर्गादिलोकःतमिच्छंतीसाध्वीस्त्रीजीवतोवामृतस्यवाभर्तुर्नकिंचिदप्रियमर्जयेत् मृतस्याप्रियंव्य-
भिचारेणविहितश्राद्धखंडनेनवृत्तिसंभवेपि १५६ कामंत्विति पुष्पमूलफलैःपवित्रैश्चदेहंक्षपयेत् अल्पाहारेणक्षीणंकुर्यात् नचभ-

विशीलःकामवृत्तोवागुणैर्वापरिवर्जितः उपचर्यःस्त्रियासाध्व्यासततंदेववत्पतिः १५४ नास्तिस्त्रीणां
पृथक्यज्ञोनव्रतन्नाप्युपोषितम् पतिंशुश्रूषतेयेनतेनस्वर्गेमहीयते १५५ पाणिग्राहस्यसाध्वीस्त्री
जीवतोवामृतस्यवा पतिलोकमभीप्संतीनाचरेत्किंचिदप्रियम् १५६ कामंतुक्षपयेद्देहंपुष्पमूलफ-
लैःशुभैः नतुनामापिगृह्णीयात्पत्यौप्रेतेपरस्यतु १५७ आसीतामरणात्क्षांतानियताब्रह्मचारिणी
योधर्मएकपत्नीनांकांक्षंतीतमनुत्तमम् १५८ अनेकानिसहस्राणिकुमारब्रह्मचारिणाम् दिवंगतानि
विप्राणामकृत्वाकुलसंततिम् १५९ मृतेभर्तरिसाध्वीस्त्रीब्रह्मचर्येव्यवस्थिता स्वर्गंगच्छत्यपुत्रापि
यथातेब्रह्मचारिणः १६०

र्तरिमृतेव्यभिचारधियापरपुरुषस्यनामाप्युच्चारयेत्एवंचसति १५७ आसीतेति क्षमायुक्तानि-
यमवती एकभर्तृकानांयोधर्मःप्रकृष्टतमःतमिच्छंतीमधुमांसमैथुनाकामाब्रह्मचर्यशालिनीमरणपर्यंतंतिष्ठेत् अपुत्रापिपुत्रार्थंनपर
पुरुषंसेवेतयस्मात् १५८ अनेकानीति बाल्यतएवब्रह्मचारिणामकृतदाराणांसनकवालखिल्यादीनांब्राह्मणानांबहूनिसहस्राणि
कुलवृद्ध्यर्थंसंततिमनुत्पाद्यापिस्वर्गंगतानि १५९ मृतेभर्तरीति साध्व्याचारास्त्रीमृतेभर्तरि अकृतपुरुषांतरमैथुनापुत्ररहितापि
स्वर्गंगच्छति यथातेसनकवालखिल्यादयःपुत्रशून्याःस्वर्गंगताः १६० ७ ७ ७ ७

अपत्यलोभाद्यातुस्त्रीति पुत्रोमेजायतांतेनस्वर्गंप्राप्स्यामीतिलोभेनयास्त्रीभर्त्तारमतिक्रम्यवर्त्ततेव्यभिचरतीत्यर्थःसेहलोकेगर्हां
माप्नोतिपरलोकंचस्वर्गंतेनपुत्रेणनलभतेअत्रैवहेतुमाह १६१ नान्योत्पन्नेति यस्माद्भर्तृव्यतिरिक्तेनपुरुषेणउत्पन्नासाप्रजातस्याः
शास्त्रीयानभवतिनचान्यपत्न्यामुत्पादिताःउत्पादकस्यप्रजाभवतिएतच्चानियोगोत्पादितविषयम् बहुभर्तृकेयमितिलोकप्रसिद्धेःद्वि
तीयोपिभर्त्तेति तस्मादन्योत्पादितत्वमसिद्धमित्याशंक्याहनचलोकेगर्हाप्रसिद्धावपिसाध्व्याचाराणांनक्वचिच्छास्त्रेद्वितीयोपभर्त्तोप-
दिश्यते एवंचसतिपुनर्भूत्वमपिप्रसिद्धम् १६२ पतिमिति अपकृष्टक्षत्रियादिकंस्वकीयंपतिंत्यक्त्वाउत्कृष्टंब्राह्मणादिकंयाआश्रय
तिसालोकेगर्हणीयैवभवति परोऽन्यःपूर्वोभर्त्ताअस्याअभूदितिचलोकेकथ्यते व्यभिचारफलमाह १६३ व्यभिचारेति परपुरुषोप

अपत्यलोभाद्यातुस्त्रीभर्त्तारमतिवर्त्तते सेहनिंदामवाप्नोतिपतिलोकाच्चहीयते १६१ नान्योत्प
न्नाप्रजास्तीहनचाप्यन्यपरिग्रहे नद्वितीयश्चसाध्वीनांक्वचिद्भर्त्तोपदिश्यते १६२ पतिंहित्वापकृष्टं
स्वमुत्कृष्टंयानिषेवते निंद्यैवसाभवेल्लोकेपरपूर्वेतिचोच्यते १६३ व्यभिचारात्तुभर्त्तुःस्त्रीलोकेप्रा
प्नोतिनिंद्यताम् शृगालयोनिंप्राप्नोतिपापरोगैश्चपीड्यते १६४ पतिंयानाभिचरतिमनोवाग्देहसं
यता साभर्तृलोकमाप्नोतिसद्भिःसाध्वीतिचोच्यते १६५ अनेननारीवृत्तेनमनोवाग्देहसंयता इ-
हाग्र्यांकीर्तिमाप्नोतिपतिलोकंपरत्रच १६६ एवंवृत्तांसवर्णांस्त्रींद्विजातिःपूर्वमारिणीम् दाहयेदग्नि
होत्रेणयज्ञपात्रैश्चधर्मवित् १६७

भोगेनस्त्रीइहलोकेगर्हणीयतांलभतेमृताचशृगालीभवतिकुष्ठादिरोगैश्चपीड्यते
१६४ पतिंयेति मनोवाग्देहसंयतेतिविशेषणोपादानात्यामनोवाग्देहैरेवभर्त्तारंनव्यभिचरतिसाभर्तृमात्रनिष्ठमनोवाग्देहव्या
पारत्वात्भर्त्रासहार्जितान्लोकान्प्राप्नोतिइहचशिष्टैःसाध्वीत्युच्यते वाङ्मनोभ्यामपिपतिंनव्यभिचरेदितिविधानार्थंदेहिकव्यभि
चारनिवृत्तेरुक्तायाअप्यनुवादः १६५ अनेनेति अनेनस्त्रीधर्मप्रकारेणउक्तेनाचारेणपतिशुश्रूषाभर्त्रव्यभिचारादिनामनोवा
संयतास्त्रीइहलोकेचप्रकृष्टांकीर्तिंपरत्रपत्यासहार्जितंचस्वर्गादिलोकंप्राप्नोतीतिप्रकरणार्थोपसंहारः १६६ एवंवृत्तामिति द्विजातिः
समानवर्णांयथोक्ताचारयुक्तांपूर्वमृतांश्रौतस्मार्त्ताग्निभिर्यज्ञपात्रैश्चदाहधर्मज्ञोदाहयेत् १६७

भार्यैति पूर्वमृतायै अंत्यकर्मणिदाहनिमित्तमग्नीन्समर्प्यगृहस्थाश्रमनिमित्तंउत्पन्नपुत्रोऽनुत्पन्नपुत्रोवापुनर्विवाहंकुर्यात्स्मार्त्ता
ग्नीन्श्रौताग्नीन्वा आदध्यात् १६८ अनेनेति अनेन तृतीयाध्यायाद्युक्तविधिनाप्रत्यहंपंचयज्ञान्नत्यजेत् द्वितीयमायुर्भागंकृ
तदारपरिग्रहोऽनेनैवयथोक्तविधिनागृहस्थविहितान्धर्माननुतिष्ठेत् गृहस्थधर्मत्वेपिपंचयज्ञानांप्रकृष्टधर्मज्ञापनार्थंपृथङ्निर्देशः
१६९ इतिकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांपंचमोऽध्यायः ५ ७ ७ ७ ७
एवमिति आश्रमसमुच्चयार्थितो द्विजातिः कृतसमावर्त्तनउक्तप्रकारेणयथाशास्त्रंगृहाश्रममनुष्ठायनियतः कृतनिश्चयोयथाविधानं
वक्ष्यमाणधर्मेणयथार्हंविशेषेणजितेंद्रियःपरिपक्वकषायइत्यर्थः वानप्रस्थाश्रममनुतिष्ठेत् १ गृहस्थस्त्विति गृहस्थोयदात्मदेहस्य

भार्यायैपूर्वमारिण्यैदत्वाग्नीनंत्यकर्मणि पुनर्दारक्रियांकुर्यात्पुनराधानमेवच १६८ अनेनविधिना
नित्यंपंचयज्ञान्नहापयेत् द्वितीयमायुषोभागंकृतदारोगृहेवसेत् १६९ इतिमानवेधर्मशास्त्रे
भृगुप्रोक्तायांसंहितायांशौचविधिःपंचमोऽध्यायः ५ ७ ७ ७ एवंगृहाश्रमेस्थित्वा
विधिवत्स्नातकोद्विजः वनेवसेत्तुनियतोयथावद्विजितेंद्रियः १ गृहस्थस्तुयदापश्येद्वलीपलित
मात्मनः अपत्यस्यैवचापत्यंतदारण्यंसमाश्रयेत् २ संत्यज्यग्राम्यमाहारंसर्वंचैवपरिच्छदम् पुत्रे
षुभार्यांनिक्षिप्यवनंगच्छेत्सहैववा ३ अग्निहोत्रंसमादायगृह्यंचाग्निपरिच्छदम् ग्रामादरण्यंनिः
सृत्यनिवसेन्नियतेंद्रियः ४

त्वक्शैथिल्यंकेशधावल्यंपुत्रस्यपुत्रंपश्यतितदाविषयवयोवस्थयाविगतविषयरागतयाव
नमाश्रयेत् २ संत्यज्येत्यादि ग्राम्यंव्रीहियवादिकंभक्ष्यंसर्वंचगवाश्वशय्यादिपरिच्छदंपरित्यज्यविद्यमानभार्यश्चवनवासमनिच्छ
तींभार्यांपुत्रेषुसमर्प्यइच्छंतींतयासहैववनंगच्छेत् ३ अग्निहोत्रमिति श्रौताग्निंआवसथ्यादींश्चाग्न्युपकरणंचस्रुक्स्रुवादीन्
गृहीत्वाग्रामादरण्यंनिःसृत्यगत्वासंयतेंद्रियःसन्निवसेत् ४ मुन्यन्नैरिति मुन्यन्नैर्नीवारादिभिर्नानाप्रकारैःपवित्रैःशाकमू

उफलैर्वारण्योद्भवैरेतानेवेतिगृहस्थस्यपूर्वोक्तान्महायज्ञान्यथाशास्त्रमनुतिष्ठेत् ५ वसीतइति मृगादिचर्मवृक्षवल्कलं
वाआच्छादयेत्हारीतेनतुवल्कलशालीचर्मचीरकुशमुंजफलकवासाइतिविदधतावल्कलादिकमप्यनुज्ञातम्
नजटाश्मश्रुलोमनखानिनित्यंधारयेत् ६ यद्भक्ष्यमिति यद्भुंजीततत्तोयथाशक्तिबलिंभिक्षांचदद्यात्बलिमितितुवैश्वदेवनि-
सभाद्ध्योरुपलक्षणंएतानेवमहायज्ञानितिविहितत्वात् आश्रमागतान्जलफलमूलभिक्षादानेनपूजयेत् ७ स्वाध्यायेति वेदाभ्य
सेनित्ययुक्तःस्यात् शीतातपादिद्वंद्वसहिष्णुःसर्वोपकारकः संयतमनाःसततंदातामतिग्रहनिवृत्तःसर्वभूतेषुकृपावान्भवेत् ८
वैतानिकमिति गार्हपत्यकुंडस्थानामग्नीनामाहवनीयदक्षिणाग्निकुंडयोर्विहारोवितानंतत्रभवंवैतानिकमग्निहोत्रंयथाशास्त्रमनुति

मुन्यन्नैर्विविधैर्मेध्यैःशाकमूलफलेनवा एतानेवमहायज्ञान्निर्वपेद्विधिपूर्वकम् ५ वसीतचर्मचीरं वासायंस्नायात्प्रगेतथा जटाश्चबिभृयान्नित्यंश्मश्रुलोमनखानिच ६ यद्भक्ष्यंस्यात्ततोदद्याद्बलिं भिक्षांचशक्तितः अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ७ स्वाध्यायेनित्ययुक्तःस्याद्दान्तोमैत्रः समाहितः दातानित्यमनादातासर्वभूतानुकंपकः ८ वैतानिकंचजुहुयादग्निहोत्रंयथाविधि दर्शमस्कंदयन्पर्वपौर्णमासंचयोगतः ९ ऋक्षेष्ट्याग्रायणंचैवचातुर्मास्यानिचाहरेत् उत्तरायणंचक्रमशोदाक्षस्यायनमेवच १०

ष्ठेत् दर्शपौर्णमासंचपर्वेतिश्रौतस्मार्त्तदर्शपौर्णमासौयोगतःकालेअस्कंदयन्अपरित्यजन्भा
र्यानिःक्षेपपक्षेत्वरजस्वलायामिवभार्यायामेतेषामनुष्ठानमुचितंविशेषाश्रयणात् ९ ऋक्षेति ऋक्षेष्टिर्नक्षत्रेष्टिःआग्रायणंनवस
स्येष्टिः ऋक्षेष्ट्याग्रायणंचेतिसमाहारद्वंद्वः तथाचातुर्मास्योत्तरायणदाक्षायणानिश्रौतकर्माणिक्रमेणकुर्यात् अत्रकेचित्सर्वमेतत्
श्रौतंदर्शपौर्णमासादिकर्मवानप्रस्थस्यस्तुत्यर्थमुच्यतेनत्वस्यानुष्ठेयंग्राम्यव्रीह्यादिसाध्यत्वादेषांच नचस्मृतिःश्रौतांगबाधनेश
क्ता नदसत्वासतशारदैरित्युत्तरश्लोकेमुन्यन्नैर्नीवारादिभिः वानप्रस्थविषयतयास्पष्टस्यचरुपुरोडाशादिविधेर्बाधनस्यानित्य
त्वात् गोविंदराजस्तुव्रीह्यादिभिरेवकथंचिदरण्यजातैरेतान्निर्वर्त्तयिष्यतइत्याह १०

वासंतेत्यादि वसंतोद्भवैः शरदुद्भवैर्मेध्यैर्यागांगभूतैर्मुन्यन्नैर्नीवारादिभिः स्वयमानीतैः पुरोडाशांश्चरून् यथाशास्त्रं तत्तद्यागादिसिद्धये संपादयेत् ११ देवताभ्य इत्यादि तद्वनोद्भवनीवारादिकसाधितमतिशयेन यागार्हं हविर्देवताभ्य उपकल्प्य शेषान्नमुपभुंजीत आत्मना च कृतं लवणं मूषरलवणाद्युपभुंजीत १२ स्थलजेति स्थलजलोद्भवशाकानि अरण्ययज्ञीयवृक्षोद्भवानि इंगुद्यादि फलोद्भवांश्च स्नेहानद्यात् १३ वर्जयेदित्यादि माक्षिकं मांसं भौमानीति प्रसिद्धदर्शनार्थं भौमानि कवकानि छत्राकाख्यान् भूस्तृणं मालवदेशप्रसिद्धं शाकं शिग्रुकं वाहीकेषु प्रसिद्धं शाकं श्लेष्मातकफलानि वर्जयेत् गोविंदराजस्तु भौमानि कवकानीति अन्यव्यवच्छेदकं विशेषणमिच्छन् भौमानां कवकानां निषेधः वार्क्षाणां तु भक्षणमाह तदयुक्तं मनुनैव द्विजातेरेव कवकमात्रनिषेधात् वनस्थगोचरतया नियमातिशयस्योचितत्वात् यमस्तु भूमिजं वृक्षजं वापि छत्राकं भक्षयंति ये ब्रह्मघ्नांस्तान् विजानीयात् ब्रह्मवादिषु गर्हितानिति

वासंतशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः पुरोडाशांश्चरूंश्चैव विधिवन्निर्वपेत्पृथक् ११ देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः शेषमात्मनि युंजीत लवणं च स्वयं कृतम् १२ स्थलजौदकशाकानि पुष्पमूलफलानि च मेध्यवृक्षोद्भवान्यद्यात्स्नेहांश्च फलसंभवान् १३ वर्जयेन्मधुमांसं च भौमानि कवकानि च भूस्तृणं शिग्रुकं चैव श्लेष्मातकफलानि च १४ त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसंचितम् जीर्णानि चैव वासांसि शाकमूलफलानि च १५ न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् न ग्रामजातान्यार्तोऽपि मूलानि च फलानि च १६

विशेषेण वृक्षजस्यापि निषेधमाह मेधातिथिस्तु भौमानीति स्वतंत्रं पदं वदन् गोजिह्विकानाम कश्चित्पदार्थो वनेचराणां प्रसिद्धः तद्विषयं निषेधमाह तदपि बहुष्वभिधानकोशादिष्वप्रसिद्धत्वान्न श्रद्दधीमहि कवकानां द्विजातिविशेषे पांचमिके निषेधे सत्यपि पुनर्निषेधो भूस्तृणादीनां निषेधेऽपि च समभायश्चित्तविधानार्थः १४ त्यजेदिति सर्वमेव संचयपक्षे पूर्वसंचितनीवाराद्यन्नं जीर्णानि च वासांसि शाकमूलफलानि च आश्विने मासि त्यजेत् १५ न फालइति फालकृष्टप्रदेशे जातं स्वामिनोपेक्षितमपि व्रीह्यादि नाद्यात् तथा ग्रामजातान्यफालकृष्टभूभागोपलतावृक्षमूलफलानि क्षुत्पीडितोऽपि न भक्षयेत् १६

अग्निपक्वेति अग्निपक्वंवन्यमन्नंकालपक्वंवाफलादि यद्वानोदूखलमुसलाभ्यांकिंतुपाषाणेनचूर्णीकृत्यापक्वमेवाद्यात् दंताएवो
दूखलस्थानानियस्यतथाविधोवाभवेत् १७ सद्यइत्यादि एकाहमात्रजीवनोचितंमासकृत्यंवातंवाषण्मासंसंवत्सरनिर्वाहसम-
र्थंवानीवारादिकंसंचिनुयात् यथापूर्वंनियमातिशयः मासवृत्तियोग्यसंचयोमाससंचयः सोऽस्यास्तीति अतइन्नुठनाविनिठन् मत्वर्थे
नमाससंचयिकइतिरूपम् १८ नक्तमित्यादि यथासामर्थ्यमन्नमाहृत्यप्रदोषेभुंजीत अहन्येववाचतुर्थकालाशनोवास्यात्सायं
प्रातर्मनुष्याणामशनंदेवनिर्मितमितिविहितत्वेकस्मिन्नहनिउपोष्यापरेद्युःसायंभुंजीत अष्टमकालिकोवाभवेत् त्रिरात्रमुपोष्य
चतुर्थस्यान्होरात्रौभुंजीत १९ चांद्रायणेति शुक्लकृष्णयोरेकैकंन्हासयेत्पिंडंशुक्लेकृष्णेचवर्द्धयेत् इत्यादिनैकादशाध्याये-
वक्ष्यमाणेश्चांद्रायणैर्वावर्त्तयेत् पक्षांतोपौर्णमास्यमावास्येतत्रशृतांयवागूंवाप्यश्नीयात्सकृदितिसायंप्रातर्वा २० पुष्पमूले

अग्निपक्वाशनोवास्यात्कालपक्वभुगेववा अश्मकुट्टोभवेद्वापिदंतोलूखलिकोपिवा १७ सद्यःप्र
क्षालकोवास्यान्माससंचयिकोपिवा षण्मासनिचयोवास्यात्समानिचयएववा १८ नक्तंचान्नंसम
श्नीयाद्दिवावाहृत्यशक्तितः चतुर्थकालिकोवास्यात्स्याद्वाप्यष्टमकालिकः १९ चांद्रायणविधानैर्वा
शुक्लकृष्णेचवर्त्तयेत् पक्षांतयोर्वाप्यश्नीयाद्यवागूंक्वथितांसकृत् २० पुष्पमूलफलैर्वापिकेवलै
र्वर्त्तयेत्सदा कालपक्वैःस्वयंशीर्णैर्वैखानसमतेस्थितः २१ भूमौविपरिवर्त्तेततिष्ठेद्वाप्रपदैर्दिनम्
स्थानासनाभ्यांविहरेत्सवनेषूपयन्नपः २२

त्यादि पुष्पमूलफलैरेववाकालपक्वैःस्वयंपतितैर्जीवेत् वैखानसोवा
नप्रस्थःतद्धर्मप्रतिपादकशास्त्रदर्शनेस्थितः तेनैतदुक्तंअन्यदपिवैखानसशास्त्रोक्तंधर्ममनुतिष्ठेत् २१ भूमावित्यादि केवला
यांभूमौलुठन्गतागतानिकुर्यात्स्थानासनाद्वाउपविशेत् उत्तिष्ठेत्पर्यटेदित्यर्थः आवश्यकस्नानभोजनादिकालंविहायचाप्यन्यत्र
मः एवमुत्तरत्रापिपादाग्राभ्यांवादिनंतिष्ठेत्कंचित्कालंस्थितएवस्यात्कंचिच्चोपविष्टएवनत्वंतरापर्यटेत्सवनेषुसायंप्रातर्मध्या-
न्हेषुस्नायात् यत्तुसायंप्रगेतथेत्युक्तंतेनसहास्यनियमातिशयापेक्षोविकल्पः २२

ग्रीष्मइत्यादि आत्मतपोवृद्ध्यर्थंग्रीष्मेचतुर्दिगवस्थितैरग्निभिरूर्द्धेचादित्यतेजसा आत्मानंतापयेत् वर्षास्वभ्रावकाशमाश्रयेत् यत्रदेशेदेवोवर्षतितत्रछत्राद्यावरणरहितस्तिष्ठेदित्यर्थः हेमंतेचार्द्रवासाभवेत् ऋतुत्रयसंवत्सरावलंबेनायंसांवत्सरिकएवनियमः २३ उपेति विहितमपित्रिषवणंस्नानंदेवर्षिपितृतर्पणविधानार्थमनूद्यते प्रातर्मध्यंदिनसायंसवनेषुत्रिष्वपिदेवर्षिपितृतर्पणंकुर्वन् अन्यदपिपक्षमासोपवासादकंतीव्रव्रतंतपोऽनुतिष्ठन्यथोक्तयमेनपक्षोपवासिनःकेचिन्मासोपवासिनःइतिस्वशरीरंशोषयेत् २४ अग्नीनित्यादि श्रौतानग्नीन्वैखानसशास्त्रविधानेनभस्मपानादिनाआत्मनिसमारोप्यलौकिकाग्निगृहशून्योयथावत्स्यातिवृक्षमूलनिकेतनइतिमुनिर्मौनव्रतचारीफलमूलाशनएवस्यात्नीवारद्यपिनाश्नीयात् एतच्चोर्ध्वंषण्मासेभ्योऽप्युपरिअनग्निरनिके

ग्रीष्मेपंचतपास्तुस्याद्वर्षास्वभ्रावकाशिकः आर्द्रवासास्तुहेमंतेक्रमशोवर्द्धयंस्तपः २३ उपस्पृशंस्त्रिषवणंपितॄन्देवांश्चतर्पयेत् तपश्चरंश्चोग्रतरंशोषयेद्देहमात्मनः २४ अग्नीनात्मनिवैतानान्समारोप्ययथाविधि अनग्निरनिकेतःस्यान्मुनिर्मूलफलाशनः २५ अप्रयत्नःसुखार्थेषुब्रह्मचारीधराशयः शरणेष्वममश्चैववृक्षमूलनिकेतनः २६ तापसेष्वेवविप्रेषुयात्रिकंभैक्षमाहरेत् गृहमेधिषुचान्येषुद्विजेषुवनवासिषु २७ ग्रामादाहृत्यवाश्नीयादष्टौग्रासान्वनेवसन् प्रतिगृह्यपुटेनैवपाणिनाशकलेनवा २८ एताश्चान्याश्चसेवेतदीक्षाविप्रोवनेवसन् विविधाश्चौपनिषदीरात्मसंसिद्धयेश्रुतीः २९

तनइतिचसिद्धवचनात्षण्मासोपर्यनग्निरनिकेतश्च २५ अप्रयत्नेति सुखप्रयोजनेषुस्वादुफलभक्षणशीतातपपरीहारादिष्वप्रयत्नशून्यः अस्त्रीसंभोगीभूशायीनिवासस्थानेषुममत्वरहितोवृक्षमूलवासीस्यात्फलमूलासंभवेच २६ तापसेति वानप्रस्थेभ्योब्राह्मणेभ्यः प्राणमात्रधारणोचितंभैक्षमाहरेत् तदभावेचान्येभ्योवनवासिभ्योगृहस्थेभ्योद्विजेभ्यस्तस्याप्यसंभवे २७ ग्रामेति ग्रामादानीयग्रामस्यान्नस्याष्टौग्रासान्पर्णशरावादिखंडेनपाणिनैववागृहीत्वावानप्रस्थोभुंजीत २८ एताश्चेति वानप्रस्थएतादीक्षाएतान्नियमान्अन्यांश्चवानप्रस्थशास्त्रोक्तानभ्यसेत् औपनिषदीश्चश्रुतीःउपनिषत्पठिताब्रह्मप्रतिपादकवाक्यानिविविधान्यस्यात्मनोब्रह्मसिद्धयेग्रंथतो

र्थतश्चाभ्यसेत् २९ ऋषिभिरिति यस्मादुक्तमृषिभिर्ब्रह्मदर्शिभिः परिव्राजकैर्गृहस्थैश्चवानप्रस्थैर्ब्रह्माद्वैतज्ञानधर्मयोर्विवृद्ध्यर्थं-
उपनिषत्श्रुतयःसेविताःतस्मादेताःसेवेतेतिपूर्वस्यानुवादः ३० अपरेति अचिकित्सितव्याध्याद्युद्भवे अपराजितामैशानीं दिशमाश्रि
त्याकुटिलगतिर्युक्तोयोगनिष्ठोजलानिलाशनः आशरीरनिपाताद्गच्छेत् महाप्रस्थानस्यशास्त्रेविहितत्वेदंप्रस्थानंमरणंतेननपुरा-
युषःस्वकामीनमेनादितिश्रुत्यापिनविरोधःयतःस्वकामिशब्दप्रयोगात्अवैधंमरणमनयानिषिध्यतेनशास्त्रीयम् ३१ आसामित्या
दि एषांपूर्वोक्तानुष्ठानानामन्यतमेनानुष्ठानेनशरीरंत्यक्त्वाअपगतदुःखभयोब्रह्मलोकस्तत्रपूजांलभतेमोक्षमाप्नोतीत्यर्थः केव-
लकर्मणोवानप्रस्थस्यकथंमोक्षइतिचेन्नविविधाश्चोपनिषदात्मसंशुद्धयेश्रुतीरित्यनेनास्याप्यात्मज्ञानसंभवात् यस्यतुमरणाभा
वस्तस्मात् ३२ वनेष्वित्यादि अनियतपरिमाणत्वात्आयुषस्तृतीयभागस्यदुर्विज्ञानात्तृतीयमायुषोभागमितिरागक्षयावधिवानप्र-

ऋषिभिर्ब्राह्मणैश्चैवगृहस्थैरेवसेविताः विद्यातपोविवृद्ध्यर्थंशरीरस्यचशुद्धये ३० अपराजितां
वास्थायव्रजेद्दिशमजिह्मगः आनिपाताच्छरीरस्ययुक्तोवार्यनिलाशनः ३१ आसांमहर्षिचर्याणांत्य-
क्त्वान्यतमयातनुम् वीतशोकभयोविप्रोब्रह्मलोकेमहीयते ३२ वनेषुचविहृत्यैवन्तृतीयंभागमायु
षः चतुर्थमायुषोभागंत्यक्त्वासङ्गान्परिव्रजेत् ३३ आश्रमादाश्रमंगत्वाहुतहोमोजितेन्द्रियः भिक्षा
बलिपरिश्रान्तःप्रव्रजन्प्रेत्यवर्द्धते ३४ ऋणानित्रीण्यपाकृत्यमनोमोक्षेनिवेशयेत् अनपाकृत्यमोक्षं
तुसेवमानोव्रजत्यधः ३५

स्थकालोपलक्षणार्थंअतएवशंखलिखितौवनवासादूर्ध्वंशान्तस्यपरिगतवयसःपारिव्राज्यमि-
त्याहतुः एवंवनेषुविहृत्यैवंविधिवद्बहुप्रकारतपोनुष्ठानप्रकारेणवानप्रस्थाश्रमंविषयरागोपशमनायकथितकालमनुष्ठ तुर्थ
स्यायुषोभागमितिशेषायुः कालेसर्वथाविषयसंगान्त्यक्त्वापरिव्राजकाश्रममनुतिष्ठेत् ३३ आश्रमादिति पूर्वपूर्वाश्रमादुत्त
श्रमंगत्वाब्रह्मचर्याद्गृहाश्रमंततोवानप्रस्थाश्रममनुष्ठायेत्यर्थःयथाशक्तिगताश्रमहुतहोमोजितेन्द्रियोभिक्षाबलिदानचिरसेवयाश्रान्तः
परिव्रज्याश्रममनुतिष्ठन्परलोकेमोक्षलाभात्ब्रह्मभूतत्वम्त्यतिशयंप्राप्नोति ३४ ऋणानित्यादि आश्रमसमुच्चयपक्षमाश्रितोब्राह्मण

उत्तरश्लोकाभिधेयानि त्रीणि ऋणानि संशोध्य मोक्षे मोक्षांतरंगे परिव्रज्याश्रमे मनो नियोजयेत् तानि ऋणानि असंशोध्य मोक्षं चतुर्थाश्रमम् अनुतिष्ठन् नरकं व्रजति तान्येव ऋणानि दर्शयति ३५ अधीत्येति जायमानो ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्य इति श्रुतेः अतो यथाशास्त्रं वेदानधीत्य पर्ववर्जनादिधर्मेण च पुत्रान् उत्पाद्य यथा सामर्थ्यं ज्योतिष्टोमादियज्ञांश्चानुष्ठाय मोक्षांतरंगे चतुर्थाश्रमे मनो नियोजयेत् ३६ अनधीत्येति वेदाध्ययनम् अकृत्वा पुत्रम् अनुत्पाद्य यज्ञांश्चाननुष्ठाय मोक्षम् इच्छन् नरकं व्रजति ३७ प्राजापत्येति यजुर्वेदीयोपाख्यानग्रंथोक्तां सर्वस्वदक्षिणां प्रजापतिदेवताकाम् इष्टिं कृत्वा तदुक्तविधिना आत्मन्यग्नीन् समारोप्य गृहादित्यभिधानात् वानप्रस्थाश्रमम् अनुष्ठायैव चतुर्थाश्रमम् अनुतिष्ठेत् एतेन मनुना-ऽऽश्रमस्य समुच्चयोपि दर्शितः श्रुतिसिद्धाश्च एकद्वित्रिचतुराश्रमाणां समुच्चयविकल्पिताः तथा जाबालश्रुतिः ब्रह्मचर्यं समा-

अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ३६ अनधीत्य द्विजो वेदान् अनुत्पाद्य तथा सुतान् अनिष्ट्वा चैव यज्ञैश्च मोक्षम् इच्छन् व्रजत्यधः ३७ प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ३८ यो दत्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात् तस्य तेजोमया लोका भवन्ति ब्रह्मवादिनः ३९ यस्माद् अण्वपि भूतानां द्विजान्नोत्पद्यते भयम् तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ४० आगारादभिनिष्क्रान्तः पवित्रोपचितो मुनिः समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ४१

प्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् इतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा ३८ यइत्यादि यः सर्वेभ्यो भूतेभ्यः स्थावरजंगमेभ्यो अभयं दत्वा गृहाश्रमात् प्रव्रजति तस्य ब्रह्मप्रतिपादकोपनिषन्निष्ठस्य सूर्याद्यालोकरहिता हिरण्यगर्भादिलोकाः तत्तेजसैव प्रकाशा भवंति तानाप्नोतीत्यर्थः ३९ यस्मादित्यादि यस्माद् द्विजात् सूक्ष्ममपि भयं भूतानां न भवति तस्य देहाद्विमुक्तस्य देहनाशे कस्मादपि भयं न भवति ४० आगारादित्यादि गृहान्निर्गतः पवित्रैर्दण्डकमण्डल्वादिभिर्युक्तो मुनिर्मौनी समुपोढेषु कामेषु केनचित् स्वस्य कृते समीपं प्रापितेषु स्वाद्वन्नादिषु विगतस्पृहः परिव्रजेत्

मेधातिथिरुक्तपवित्रैर्मन्त्रजपैरथवापावनैः कृच्छ्रैर्युक्तइतिव्याचष्टे ४१ एकइत्यादि एकस्यसर्वसंगविरहिणो मोक्षावाप्तिर्भवतीतिजानन्एकएवसर्वदापिमोक्षार्थंचरेत् एकएवेत्यनेनपूर्वपरिचितपुत्रादित्यागउच्यतेअसहायवान्इत्यत्तरस्यापिएकाकीयादिन्रतिसकिंचिन्नत्यजतिनकस्यापित्यागेनदुःखमनुभवतिनापिकेनापित्यज्यतेनकोप्यनेनत्यागदुःखमनुभाव्यतेततश्चसर्वत्रनिर्ममत्वः स्वरवदुःखेमुक्तिमाप्नोति ४२ अनग्निरित्यादि अनग्निर्लौकिकाग्निसंयोगरहितः शास्त्रीयाग्निसमारोप्यपूर्वमुक्तल निकेतोगृहशून्यः उपेक्षकःशरीरस्यव्याध्याद्युत्पादेतत्प्रतीकाररहितः अशंकुसुकः स्थिरमतिः असंचयिकइति अन्येपठंमननान्मौनस्यपूर्वोक्तत्वात् भावेनब्रह्मणिसमाहितःतदेकतानमनाः अरण्येचदिवारात्रौवसन्भिक्षार्थमेवग्राममंप्रविशेत् ४३

एकएवचरेन्नित्यंसिद्ध्यर्थमसहायवान् सिद्धिमेकस्यसंपश्यन्नजहातिनहीयते ४२ अनग्निरनिकेतःस्याद्ग्राममन्नार्थमाश्रयेत् उपेक्षकोऽशंकुसुकोमुनिर्भावसमाहितः ४३ कपालंवृक्षमूलानिकुचेलमसहायता समताचैवसर्वस्मिन्नेतन्मुक्तस्यलक्षणम् ४४ नाभिनंदेतमरणंनाभिनंदेतजीवितम् कालमेवप्रतीक्षेतनिर्देशंभृतकोयथा ४५ दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंजलंपिबेत् सत्यपूतांवदेद्वाचंमनःपूतंसमाचरेत् ४६ अतिवादांस्तितिक्षेतनावमन्येतकंचन नचेमंदेहमाश्रित्यवैरंकुर्वीतकेनचित् ४७

कपालमित्यादि मृण्मयकर्परादिभिक्षापात्रंवासार्थंवृक्षमूलानिस्थूलजीर्णवस्त्रंकोपीनकं सर्वत्रब्रह्मबुद्ध्याशत्रुमित्राभावः एतन्मुक्तिसाधनत्वान्मुक्तस्यलिंगम् ४४ नेत्यादि मरणंजीवनंचद्वयमपिनकामयेत्किंधीनंमरणकालमेवप्रतीक्षेतनिर्दिश्यतेइतिनिर्देशोभृतिः तत्परिशोधनकालमिवभृतकः ४५ दृष्टिपूतमित्यादि केशास्थ्यादिपरिहारार्थंदृष्टिशोधितपादोभूमौक्षिपेत् जलेषुक्षुद्रजंत्वादिवारणार्थंवस्त्रशोधितंजलंपिबेत् सत्यपवित्रांवाचंवदेत् ततश्चमौनेनसहसत्यस्यविकल्पःप्रतिषिद्धसंकल्पशून्यमनसासर्वदापवित्रात्मास्यात् ४६ अतिवादानित्यादि अतिक्रमवादान्परोक्तान्सहेतनकंचित्परिभवेत्नेमंदेहमस्थिरंव्याध्यायतनमाश्रित्यतदर्थंकेनचित्सहवैरंकुर्यात् ४७

क्रुध्यंतमित्यादि संजातक्रोधायकस्मैचित्प्रतिक्रोधंनकुर्यात् निंदितश्चान्येनवाचंभद्रांवदेन्नतुनिंदेत्सप्तद्वारावकीर्णामितिचक्षु
रादीनिपंचबहिर्बुद्धींद्रियाणिमनोबुद्धिरित्यंतःकरणद्वयंवेदांतदर्शनेएतैर्गृहीतेषुस्वेषुवाचाप्रवृत्तेरेतानिसप्तद्वाराणीत्युच्यंते एतैरव
कीर्णांविक्षिप्तांतद्गृहीतार्थविषयांवाचंनवदेत्किंतुब्रह्ममात्रविषयांवदेत् ननुमनसैवब्रह्मउपास्यतेब्रह्मविषयवागुच्चारणमपिमनो
व्यापारःतत्कथंसप्तद्वारावकीर्णत्वविशेषेपिब्रह्मविषयांवदेदिति अन्यविषयांनवदेदितिलभ्यते उच्यते अतएवानृतामितिविशेषय
तिस्मअनृतमसत्यंविनाशीतियावत्तद्विषयावागप्यनृतोच्यते तेनविनाशिकार्यविषयांवाचंनोच्चारयेत् अविनाशिब्रह्मविषयांतुप्रणवो
पनिषदादिरूपांवदेत् गोविंदराजस्तुधर्मोर्थःकामोधर्मार्थौवर्थकामौधर्मार्थकामाइतिएतानिसप्तवाग्विषयतयावाक्प्रवृत्तेर्द्वाराणिते
ष्ववकीर्णांनिक्षिप्तांसर्वस्यभेदस्यासत्वात् तद्विषयांअसत्यरूपांवाचंनवदेत् अन्येतुसप्तभुवनान्येववाग्विषयत्वात्सप्तद्वाराणितेषां

क्रुध्यंतंनप्रतिक्रुध्येदाक्रुष्टःकुशलंवदेत् सप्तद्वारावकीर्णांचनवाचमनृतांवदेत् ४८ अध्यात्मरति
रासीनोनिरपेक्षोनिरामिषः आत्मनैवसहायेनसुखार्थीविचरेदिह ४९ नचोत्पातनिमित्ताभ्यांनन
क्षत्रांगविद्यया नानुशासनवादाभ्यांभिक्षांलिप्सेतकर्हिचित् ५० नतापसैर्ब्राह्मणैर्वावयोभिरपिवा
श्वभिः आकीर्णंभिक्षुकैर्वान्यैरगारमुपसंव्रजेत् ५१ क्लृप्तकेशनखश्मश्रुःपात्रीदंडीकुसुंभवान् वि
चरेन्नियतोनित्यंसर्वभूतान्यपीडयन् ५२

भेदाद्विनाशित्वाच्च असत्यतयातद्विषयांवाचमसत्यांनवदेत्केवलंब्रह्मवि-
षयांवदेत् ४८ अध्यात्मेति आत्मानंब्रह्माधिकृत्यरतिर्यस्यसोऽध्यात्मरतिःसर्वदाब्रह्मध्यानपरआसीनइतिस्वस्तिकादियोगासन
निष्ठःनिरपेक्षोदंडकमंडल्वादिष्वपिविशेषापेक्षाशून्यःनिरामिषःआमिषंविषयाःतदभिलाषरहितःआत्मनोदेहेनैवसहायेनमोक्ष
सुखार्थीहसंसारेविचरेत् ४९ नेत्यादि भूकंपाद्युत्पातचक्षुःस्पंदादिनिमित्तफलकथनेन अथाश्विनीहस्तरेखादेरीदृशंफलमितिनक्ष
त्रांगविद्ययाईदृशोनीतिमार्गइत्येवंवर्णितव्यं अनुशासनेनशास्त्रार्थकथनेनचकदाचिन्नभिक्षांलब्धुमिच्छेत् ५० नतापसैरित्यादि वा
नप्रस्थैरन्यैर्वाब्राह्मणैर्भक्षणशीलैःपक्षिभिःकुक्कुरैर्वाव्याप्तंगृहंभिक्षार्थंनप्रविशेत् ५१ क्लृप्तेत्यादि क्लृप्तकेशनखश्मश्रुर्भिक्षापात्रवान्

दंडीकुसुंभः कमंडलुस्तद्भक्तः सर्वप्राणिनोऽपीडयन्सर्वदापरिभ्रमेत् ५२ अतैजसेति सौवर्णादिवर्जितानिनिश्छिद्राणिभिक्षोर्भि
क्षापात्राणिभवेयुः तथायमः सुवर्णरूप्यपात्रेषुताम्रकांस्यायसेषुच गृण्हन्भिक्षांनधर्मोऽस्तिगृहीत्वानरकंव्रजेत् तेषांचयतिप
त्राणांजलेनैवतुशुद्धिः यज्ञेचमसानामिव तान्येवदर्शयति ५३ अलाबुमित्यादि अलाबुदारुमृत्तिकावंशादिखंडनिर्मितानियतीनां
भिक्षापात्राणिस्वायंभुवोमनुरवदत् वैदलंतरुत्वक्निर्मितमितिगोविंदराजः ५४ एककालमिति एकवारंप्राणधारणार्थंभैक्षंचरेत्
तत्रापिप्रचुरभिक्षाप्रसंगंनकुर्यात् यतोबहुतरभिक्षाभक्षणप्रसक्तोयतिः प्रधानधातुवृद्ध्यास्त्र्यादिविषयेष्वपिप्रसज्जते ५५ विधूमइ
त्यादि विगतपाकधूमेनिवृत्तावहननमुसलेनिर्वाणापाकांगारेगृहस्थपर्यंतभुक्तवज्जनेउत्सृष्टशरावेषुत्यक्तेषुसर्वदायतिर्भिक्षांचरेत्

अतैजसानिपात्राणितस्यस्युर्निर्व्रणानिच तेषामद्भिःस्मृतंशौचंचमसानामिवाध्वरे ५३ अलाबुंदारु
पात्रंचमृण्मयंवैदलंतथा एतानियतिपात्राणिमनुःस्वायंभुवोऽब्रवीत् ५४ एककालंचरेद्भैक्षंनप्रस
ज्जेतविस्तरे भैक्षेप्रसक्तोहियतिर्विषयेष्वपिसज्जति ५५ विधूमेसन्नमुसलेव्यंगारेभुक्तवज्जने वृ
त्तेशरावसंपातेभिक्षांनित्यंयतिश्चरेत् ५६ अलाभेनविषादीस्याल्लाभेचैवनहर्षयेत् प्राणयात्रिक
मात्रःस्यान्मात्रासंगाद्विनिर्गतः ५७ अभिपूजितलाभांस्तुजुगुप्सेतैवसर्वशः अभिपूजितलाभैश्चय
तिर्मुक्तोपिबध्यते ५८ अल्पान्नाभ्यवहारेणरहःस्थानासनेनच ह्रियमाणानिविषयैरिंद्रियाणिनिव
र्तयेत् ५९

एतच्चदिनशेषमुहूर्त्तत्रयरूपसामान्योपलक्षणम् तथाहयाज्ञवल्क्यः अप्रमत्तश्चरेद्भैक्ष्यंसायान्हेनाभिसंधितः
५६ अलाभेत्वित्यादि भिक्षादेरलाभेनविषादेदिति लाभेचहर्षंनकुर्यात्प्राणस्थितिमात्रोपचितान्नभोजनपरःस्यात् दंडकमंडलु
मात्रास्वपिइदमशोभनंस्रजाभिरदंरुचिरंगृण्हामिइत्यादिप्रसंगंनकुर्यात् ५७ अभीत्यादि पूजापूर्वकभिक्षालाभंसर्वकालंनिंदेत्तुन-
स्वीकुर्यादित्यर्थः यस्मात्पूजापूर्वकलाभस्वीकारेदातृगोचरस्नेहममत्वादिभिः आसन्नमुक्तिरपियतिर्जन्मबंधान्लभते ५८ अल्पे
त्यादि आहारलाघवेननिर्जनदेशस्थानादिनाचरूपादिविषयैराकृष्यमाणानींद्रियाणिनिवर्त्तयेत्यस्मात् ५९

इंद्रियाणामित्यादि इंद्रियाणांनिग्रहेणरागद्वेषाभावेनचप्राणिहिंसाविरतेनचमोक्षयोग्योभवति इदानींइंद्रियनियमोपायंविषय-
वैराग्यायसंसारतत्त्वचिंतनमुपदिशति ६० अवेक्षेतेत्यादि विहिताकरणनिंदिताचरणरूपकर्मदोषजन्यामनुष्याणांपश्वादिदेहप्रा-
प्तिंनरकेषुपतनंयमलोकेनरकस्थस्यनिशितनिस्त्रिंशच्छेदनादिभवास्तीव्रवेदना श्रुतिपुराणादिषूक्ताश्चिंतयेत् ६१ विप्रयोगमि-
त्यादि इष्टपुत्रादिवियोगंअनिष्टहिंसकादियोगंजराभिभवनंव्याध्यादिभिश्चपीडनंकर्मदोषसमुद्भवअनुचिंतयेत् ६२ देहादित्यादि
अस्माद्देहादस्यजीवात्मन.उत्क्रमणंतथाचमर्मभिद्भिर्महारोगपतितस्यश्लेष्मादिदोषनिरुद्धकंठस्यमहतींवेदनांगर्भेचोत्पत्तिंदु.खब-
हुलांश्वसृगालादिनिकृष्टजातियोनिकोटिसहस्रगमनानिस्वकर्मबंधान्यनुचिंतयेत् ६३ अधर्मेत्यादि शरीरवतांजीवात्मनांअधर्महे-

इंद्रियाणान्निरोधेनरागद्वेषक्षयेणच अहिंसयाचभूतानाममृतत्वायकल्पते ६० अवेक्षेतगतीर्नॄ-
णांकर्मदोषसमुद्भवाः निरयेचैवपतनंयातनाश्चयमक्षये ६१ विप्रयोगंप्रियैश्चैवसंयोगंचतथाप्रि-
यैः जरयाचाभिभवनंव्याधिभिश्चोपपीडनम् ६२ देहादुत्क्रमणंचास्मात्पुनर्गर्भेचसंभवम् योनि
कोटिसहस्रेषुसृतीश्चास्यांतरात्मनः ६३ अधर्मप्रभवंचैवदुःखयोगंशरीरिणाम् धर्मार्थप्रभवंचैव
सुखसंयोगमक्षयम् ६४ सूक्ष्मतांचान्ववेक्षेतयोगेनपरमात्मनः देहेषुचसमुत्पत्तिमुत्तमेष्वधमेषु
च ६५ दूषितोपिचरेद्धर्मंयत्रतत्राश्रमेरतः समःसर्वेषुभूतेषुनलिंगंधर्मकारणम् ६६

तुकंदु.खसंबंधंधर्महेतुकोऽर्थोब्रह्मसाक्षात्कारस्तत्प्रभवंमोक्षलक्षणमक्षयब्रह्मसुखसंयोगंचिंतयेत् ६४ सूक्ष्मतामित्यादि
योगेनविषयांतरचित्तवृत्तिनिरोधेनपरमात्मनःस्थूलशरीराद्यपेक्षयासर्वांतर्यामित्वेनसूक्ष्मतांनिरवयवतांतत्त्यागादुत्कृष्टापकृष्टेषु
देवपश्वादिशरीरेषुजीवानांशुभाशुभफलभोगार्थमुत्पत्तिमधिष्ठानमनुचिंतयेत् ६५ दूषितेति यस्मिन्कस्मिंश्चिदाश्रमेस्थित-
स्तदाश्रमविरुद्धाचारदूषितोपिआश्रमलिंगरहितोपिसर्वभूतेषुब्रह्मबुद्ध्यासमदृष्टिःसन्धर्ममनुतिष्ठेन्नहिदंडादिलिंगधारणमात्रं
धर्मकारणंकिंतुविहितानुष्ठानंएतच्चधर्मप्राधान्यबोधनायोक्तंनतुलिंगपरित्यागार्थमत्रदृष्टांतमाह ६६ ५ ५ ५

फलमिति यद्यपिकतकवृक्षस्यफलंकलुषजलस्वच्छताजनकंतथापितन्नामोच्चारणवशान्नप्रसीदतिकिंतुफलप्रक्षेपेणएवंन
लिंगधारणमात्रंधर्मकारणंकिंतुविहितानुष्ठानम् ६७ संरक्षणार्थमित्यादि शरीरस्यापिपीडायांसूक्ष्मपिपीलिकादिप्राणरक्षार्थं
रात्रौदिवसेवासदाभूमिंनिरीक्ष्यपर्यटेत्पूर्वंकेशादिपरिहारार्थंदृष्टिपूतंन्यसेत्पादमित्युक्तंइदंतुहिंसापरिहारार्थमित्यपुनरुक्तिः अत्र
प्रायश्चित्तमाह ६८ अन्हाराव्येति यतिर्यानज्ञानतोदिवसेरात्रौवाप्राणिनोहंतितद्धननजनितपापनाशार्थंस्नात्वाषट्प्राणायामान्
कुर्यात्प्राणायामश्च सव्याहृतिसप्रणवांगायत्रींशिरसासह त्रिःपठेदायतप्राणःप्राणायामःसउच्यतेवसिष्ठोक्त्याअत्रद्रष्टव्यः ६९
प्राणायामाइति ब्राह्मणस्येतिनिर्देशात्ब्राह्मणजातेरयमुपदेशोनयतेरेवत्रयोपिप्राणायामाःसप्तभिर्व्याहृतिभिर्दशभिः प्रणवै
र्युक्ताविधिवदित्यनेनसावित्र्याशिरसाचयुक्ताः पूरककुंभकरेचकविधिनाकृताब्राह्मणस्यश्रेष्ठंतपोज्ञातव्यंपूरकादिस्वरूपंस्मृत्यंतरे

फलंकतकवृक्षस्ययद्यप्यंबुप्रसादकम् ननामग्रहणादेवतस्यवारिप्रसीदति ६७ संरक्षणार्थंजं
तूनांरात्रावहनिवासदा शरीरस्यात्ययेचैवसमीक्ष्यवसुधांचरेत् ६८ अह्नारात्र्याचयान्जंतून्हि
नस्त्यज्ञानतोयतिः तेषांस्नात्वाविशुद्ध्यर्थंप्राणायामान्षडाचरेत् ६९ प्राणायामाब्राह्मणस्यत्रयो
पिविधिवत्कृताः व्याहृतिप्रणवैर्युक्ताविज्ञेयंपरमंतपः ७० दह्यंतेध्मायमानानांधातूनांहियथा
मलाः तथेंद्रियाणांदह्यंतेदोषाःप्राणस्यनिग्रहात् ७१ प्राणायामैर्दहेद्दोषान्धारणाभिश्चकिल्बि
षम् प्रत्याहारेणसंसर्गान्ध्यानेनानीश्वरान्गुणान् ७२

षुज्ञेयम् तथायोगियाज्ञवल्क्यः नासिकोत्कृष्टउच्छ्वा
सोध्मातःपूरकउच्यते कुंभकोनिश्चलश्वासोमुच्यमानस्तुरेचकः त्रयोपीत्यपिशब्देनत्रयोअवश्यंकर्त्तव्याः अधिककरणेत्वधिक
पापक्षयः ७० दह्यंतेति धातूनांस्वर्णरजतादीनांयथामूषायांअग्निनाध्मायमानानांमलद्रव्याणिदह्यंतेएवंमनसोरागादय
रादेश्चविषयप्रवणत्वादयोदोषाःप्राणायामेनविषयानभिध्यानात्दह्यंतेएवंसति ७१ प्राणायामैरित्यादि अनंतरोक्तप्रकारेणं
प्राणायामैरागादिदोषान्दहेत् अपेक्षितदेशेपरंब्रह्मादौयन्मनसोधारणंसाधारणातयापापंनाशयेत् प्रत्याहारेणविषयेभ्यः
इंद्रियाकर्षणैर्विषयसंपर्कान्निवारयेत्ब्रह्मध्यानेनेतिसोहमस्मीतिसजातीयप्रत्ययप्रवाहरूपेणअनीश्वरान्गुणान्ईश्वरस्य

त्मनोपेशुणानभवंतिक्रोधलोभभयादयः ७२ उच्चावचेष्वित्यादि अस्यजीवस्यउत्कृष्टापकृष्टेषुदेवपश्वादिषुजन्मप्राप्तिमकृतात्मभिः शास्त्रैरसंस्कृतांतःकरणैर्दुर्ज्ञेयांध्यानाभ्यासेनसम्यक्सकारणकंजानीयात् ततश्चाविद्याकाम्यनिषिद्धकर्मनिमित्तेयंगतिरितिज्ञा त्वाब्रह्मज्ञाननिष्ठोभवेदितितात्पर्यार्थःततश्च ७३ सम्यग्दर्शनेति ब्रह्मसाक्षात्कारवान्कर्मभिर्ननिबध्यतेकर्माणितस्यपुनर्जन्मानि नभवंतिपूर्वार्जितपापपुण्यस्यब्रह्मज्ञानेननाशात्तथाचश्रुतिः तद्यथाइषीकातूलमग्नौप्रोतंप्रदहेतेवंहास्यसर्वेपाप्मानःप्रदू यंतइतिभ्रमेवेपभवतीतिश्रुत्या तथाक्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरइतिविशेषश्रुत्यापुण्यसंबंधोपिबोध्यतेउत्तरकालेच देवात्प्रापेकर्मणिप्रकृतेपिनपापसंश्लेषः तथाचश्रुतिःपुष्करपलाशमापोनश्लिष्यंतएवमेवंविदेपापकर्मनश्लिष्यतइतिदेहारंभकपाप पुण्यसंबंधः परंनश्यतिअयमेवचार्थोब्रह्ममीमांसायांतदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतस्योपदेशादितिसूत्रेबादरायणेनभि

उच्चावचेषुभूतेषुदुर्ज्ञेयामकृतात्मभिः ध्यानयोगेनसंपश्येद्गतिमस्यांतरात्मनः ७३ सम्यग्दर्शनसंप न्नःकर्मभिर्ननिबध्यते दर्शनेनविहीनस्तुसंसारंप्रतिपद्यते ७४ अहिंसयेंद्रियासंगैर्वैदिकैश्चैव कर्मभिः तपसश्चरणैश्चोग्रैःसाधयंतीहतत्पदम् ७५ अस्थिस्थूणंस्नायुयुतंमांसशोणितलेपनम् चर्मावनद्धंदुर्गंधिपूर्णंमूत्रपुरीषयोः ७६ जराशोकसमाविष्टंरोगायतनमातुरम् रजस्वलमनित्यंच भूतावासमिमंत्यजेत् ७७

रणापिब्रह्मसाक्षात्कारशून्यस्तुजन्ममरणप्रबंधंलभते ७४ अहिंसेति निषिद्धहिंसाव र्जनेनइंद्रियाणांचविषयसंगपरिहारेणवैदिकैर्नित्यैः कर्मभिः काम्यकर्मणांबंधहेतुत्वात् उक्तंचकाम्यकर्मतानप्रशस्तेतितपश्च पयासंभवमुपवासकृच्छ्रचांद्रायणादिभिरनुष्ठानैरिहलोकेतत्पदंब्रह्मात्यंतिकलयलक्षणंप्राप्नुवंतिपूर्वश्लोकेनब्रह्मदर्शनस्य मोक्षहेतुत्वमुक्तंअनेनतत्पदसहकारितयाकर्मणोऽभिहितम् इदानींमोक्षांतरंगोपायसंसारवैराग्यायदेहस्वरूपमाहश्लोकद्वये न ७५ अस्थीत्यादि जरेत्यादिच अस्थीन्येवस्थूणाइवयस्यतंअस्थिस्थूणंस्नायुरज्जुभिरावद्धमांसरुधिराद्युपलिप्तंचर्मा च्छादितंमूत्रपुरीषाभ्यांपूर्णंअतएवदुर्गंधि ७६ जरोपतापाभ्यांआक्रांतंविविधव्याधीनामाश्रयंआतुरंक्षुत्पिपासाशीतोष्णादि

कातरंभार्येणरजोगुणयुक्तंविनश्वरस्वभावंच आवासोगृहंपृथिव्यादिभूतानितेषामावासंदेहमेवजीवस्यगृहत्वेननिरूपितंत्यजेत् यथापुनर्देहसंबंधोनभवेत्तथाकुर्यात्गृहसाम्यमेवाह ७७ नदीकूलमिति ब्रह्मोपासकस्यदेहत्यागसमयेमोक्षः आरब्धस्यकर्मणोभोगेनैवनाशात्तत्रदेहसक्तुद्रें विध्यमाहयः कर्माधीनंदेहपातमवेक्ष्यतेसनदीकूलंयथावृक्षस्त्यजतिस्वपातमजानन्नेवनदीरयेणपात्यतेतथादेहंत्यजन्यश्चज्ञानकर्मप्रकर्षात् भीष्मादिवत्स्वाधीनमृत्युःसयथापक्षीवृक्षंस्वेच्छयात्यजतितथादेमिमंत्यजन्संसारकष्टाद्ग्राहादिवजलचरप्राणिभेदाद्विमुच्यते ७८ प्रियेष्वित्यादि ब्रह्मविदात्मीयेषुप्रियेषुहितकारिषुसुकृतंअप्रियेष्वहितकारिषुदुष्कृतंनिःक्षिप्यध्यानयोगेननित्यंब्रह्माप्येतिब्रह्मणिलीयते तथाचश्रुतिः तस्यपुत्रादायमुपयंतिसुहृदःसाधुकृत्यंद्विषंतः पापकृत्यमित्यपराश्रुतिः ततस्तेषुसुकृतदुष्कृतेषुतुतेतस्यप्रियाज्ञातयःसुकृतमुपपद्योरन्नप्रियादुष्कृतमितिएवमा

नदीकूलंयथावृक्षोवृक्षंवाशकुनिर्यथा तथात्यजन्निमंदेहंकृच्छ्राद्ग्राहाद्विमुच्यते ७८ प्रियेषुस्वेषुसुकृतमप्रियेषुचदुष्कृतम् विसृज्यध्यानयोगेनब्रह्माप्येतिसनातनम् ७९ यदाभावेनभवतिसर्वभावेषुनिस्पृहः तदासुखमवाप्नोतिप्रेत्यचेहचशाश्वतम् ८०

दीन्येववाक्यान्युदाहृत्यसुकृतदुष्कृतयोर्हानिमान्प्रवणेप्युपासनंप्रतिपत्तव्यंइतिब्रह्ममीमांसायांहानौतूपायनशब्दमोक्षार्थकुशाच्छंदस्तुपगायनमित्युक्तमित्यादिसूत्रैर्बादरायणिरगाथिनन्नुपरकीयसुकृतदुष्कृतयोः कथंपरत्रसंक्रांतिःउच्यतेधर्माधर्मव्यवस्थायांशास्त्रमेवप्रमाणंसंक्रामोपितयोःशास्त्रप्रमाणकएव अतःशास्त्रात्संक्रमेणयोग्यावेतौसिध्यतः अतःशास्त्रेणबाधात्नप्रतिपक्षानुमानोदयः क्वचिन्नरशिरःकपालंप्राण्यंगत्वात्शंखादिवदितिवत् मेधातिथिगोविंदराजौतु स्वेषुप्रियेषुकेनचित् कृतेषुध्यानाभ्यासेनात्मीयमेवतत्रकारणत्वेनारोप्यएवमप्रियेष्वपिकेनचित्कृतेषुआत्मीयमेवप्राग्जन्मार्जितंदुष्कृतंकारणत्वेनप्रकल्प्योन्मृत्यतत्संपादयितारोपुरुषोरागद्वेषाख्यौत्यक्तानित्यंब्रह्माप्येतिब्रह्मस्वभावमुपगच्छतीतिव्याचक्षते तन्न विसृज्येतिक्रियायांसुकृतंदुष्कृतमितिकर्मद्वयत्यागेनतत्संपादयितारावित्यश्रुतहानात्कर्मद्वयेचश्रुतक्रियात्यागेनकारणत्वेनप्रकल्प्येत्याद्यश्रुतक्रियाध्याहारात् किंच व्यासव्याख्यातवेदार्थमेवमस्यामनुस्मृतेः

न्येनकल्पितंगर्वादर्वाचीनंविचक्षणैः ७९ यदेति यदापरमार्थतोविषयदोषभावेनसर्वविषयेषुनिरभिलाषोभवतितदेहलोकेसंतो
पजन्यसुखंपरलोकेचमोक्षसुखंअविनाशिप्राप्नोति ८० अनेनेति पुत्रकलत्रक्षेत्रादिषुममत्वरूपान्क्रमेणसंगान्सर्वांस्त्यक्त्वाद्वंद्व
द्वैर्मानापमानादिभिर्निर्मुक्तोअनेनयथोक्तेनज्ञानकर्मानुष्ठानेनब्रह्मण्येवात्यंतिकंलयमाप्नोति ८१ ध्यानिकमिति यदेतदित्यनेन
सन्निधानंपूर्वश्लोकोदितंपरामृश्यतेयदेतदुक्तंपुत्रादिममत्वत्यागोमानापमानादिद्वंद्वानिर्ब्रह्मण्येवावस्थानंसर्वमेवैतत्ध्यानिकंआ
त्मनःपरमात्मत्वेनध्यानेसतिभवतियदात्मानंपरमात्मेतिजानातितदासर्वसत्वान्विशिष्यतेतस्यकुत्रचिन्ममत्वंमानापमानादिकंवा
भवतितथाविधज्ञानात् ब्रह्मात्मत्वंचजायतेध्यानिकविशेषात्ध्येयविशेषलाभेपरमात्मध्यानार्थमाह नह्यनध्यात्मविदितियस्मादा
त्मानंजीवमधिकृत्ययदुक्तंतस्यपरमात्मत्वंतद्योनजानातिनध्यायतिसप्रकृतध्यानक्रियाफलंममत्वत्यागमानापमानादिहानिंमोक्षंचन

अनेनविधिनासर्वांस्त्यक्त्वासंगान्शनैःशनैः सर्वद्वंद्वविनिर्मुक्तोब्रह्मण्येवावतिष्ठते ८१ ध्यानिकं
सर्वमेवैतत्यदेतदभिशब्दितम् नह्यनध्यात्मवित्कश्चित्क्रियाफलमुपाश्नुते ८२ अधियज्ञंब्र
ह्मजपेदाधिदैविकमेवच आध्यात्मिकंचसततंवेदांताभिहितंचयत् ८३ इदंशरणमज्ञानामिदमे
वविजानताम् इदमन्विच्छतांस्वर्गमिदमानंत्यमिच्छताम् ८४ अनेनक्रमयोगेनपरिव्रजतियो
द्विजः सविधूयेहपाप्मानंपरंब्रह्माधिगच्छति ८५

-माप्नोति ८२ अधियज्ञमिति पूर्वंब्रह्मध्यानस्वरूपमुपासन
मुक्तंइदानींतदंगतयावेदजपंविधत्ते तथाचश्रुतिः तमेतंवेदानुवचनेनविविदिषंतीतिविद्यांगतयावेदजपमुपदिशति अधियज्ञमिति
यज्ञमधिकृत्यप्रवृत्तंब्रह्मवेदंतथादेवतामधिकृत्यप्रवृत्तंतथाजीवमधिकृत्यतथावेदांतेषूक्तंसत्यंज्ञानमनंतंब्रह्मइत्यादिब्रह्मप्रतिपाद-
कंसर्वदाजपेत् ८३ इदमिति इदंवेदाख्यंब्रह्मतदर्थानभिज्ञानामपिशरणंगतिपाठमात्रेणापिपापक्षयहेतुत्वात्तत्रतंतज्ज्ञानतांतद-
र्थाभिज्ञानांस्वर्गमपवर्गंचइच्छतामिदमेवशरणंतदुपायोपदेशकत्वेनप्राप्तिहेतुत्वात् ८४ अनेनेति अनेनयथाक्रमोक्तानुष्ठानेनयः
श्रमज्याश्रममाश्रयतिसइहलोकेपापंविसृज्यपरंब्रह्मप्राप्नोतिब्रह्मसाक्षात्कारेणउपाधिशरीरनाशात्ब्रह्मण्यैक्यंगच्छति ८५. ५

एषधर्मइति एषःयतीनांयतात्मनांचतुर्णामेवकुटीचरकबहूदकहंसपरमहंसानांसाधारणोधर्मोवोयुष्माकमुक्तइदानींयतिवि-
शेषाणांकुटीचराख्यानांवेदविहितादिकर्मयोगिनांअसाधारणंवक्ष्यमाणंपुत्रैश्वर्यैसुखंवसेदितिकर्मसंबंधंशृणुतभारतेचतुर्द्धा
भिक्षवउक्ताः चतुर्द्धाभिक्षवस्तस्यःकुटीचरोबहूदकः हंसःपरमहंसश्चयोयःपश्चात्सउत्तमइतिकुटीचरकस्यायंसूत्रभि
रूपासाधारणकर्मोपदेशः गोविंदराजस्तुगृहस्थविशेषमेववेदोदिताग्निहोत्रादिकर्मत्यागिनंज्ञानमात्रसंपादितवैरा…
सन्यासिकमाह तन्नगृहस्थस्याहिताग्नेरंत्येष्टौविनियोगःचतुर्थाश्रमाश्रयणेचात्मनिसमारोपःशास्त्रेणोच्यतेतदुभयाभावेसत्येव-
मेवाग्नीनांत्यागःस्यात् गोविंदराजोगृहस्थंवेदसन्यासिकंब्रुवन् एवमेवाहिताग्नीनांत्यागमर्थादुपेतवान् वेदसन्यासिकंमेधाति-
थिःप्राहनिराश्रमम् तन्मतेचातुराश्रम्यनियमोक्तिःकथंमनोः इदानींवेदसन्यासिकस्यप्रज्ञातकर्मत्यागानंतरंवक्तुमुचितमपिवेदसं

एषधर्मोनुशिष्टोवोयतीनांनियतात्मनाम् वेदसंन्यासिकानांतुकर्मयोगन्निबोधत ८६ ब्रह्मचा
रीगृहस्थश्चवानप्रस्थोयतिस्तथा एतेगृहस्थप्रभवाश्चत्वारःपृथगाश्रमाः ८७ सर्वेपिक्रमशस्त्वे
तेयथाशास्त्रंनिषेविताः यथोक्तकारिणंविप्रंनयंतिपरमांगतिम् ८८ सर्वेषामपिचैतेषांवेद-
स्मृतिविधानतः गृहस्थउच्यतेश्रेष्ठःसत्रीनेतान्बिभर्तिहि ८९

न्यासिकःपंचमाश्रमीनिराश्रमीवाचत्वार-
एवाश्रमानियताइतिदर्शयितुमुक्तानाश्रमाननुवदति ८६ ब्रह्मचारीति ब्रह्मचर्यादयोयएतेपृथगाश्रमाउक्ताएतेचत्वारए
जन्याभवंति ८७ सर्वेपीत्यादि एतेसर्वेचत्वारोप्याश्रमाः शास्त्रानतिक्रमेणानुष्ठिताः अपिशब्दात्त्रयोद्वावेकोपियथोक्त
विप्रंमोक्षलक्षणांगतिंप्रापयंतिप्रकृतवेदसन्यासिकस्यगृहेपुत्रैश्वर्येवासंवक्ष्यतितदर्थंगृहस्थोत्कर्षमाह ८८ सर्वेषामि
षामेतेषांब्रह्मचार्यादीनांमध्येगृहस्थस्याश्रयमाणत्वेनप्रायशोऽग्निहोत्रादिविधानात्गृहस्थोमन्वादिभिःश्रेष्ठउच्यतेतथायस्मा
द्ब्रह्मचारिवानप्रस्थयतीनसौभिक्षादानेनपोषयतितेनाप्यसौश्रेष्ठःयथोक्तम् यस्मात्त्रयोप्याश्रमिणोज्ञानेनान्नेनचान्वहमि
ति ८९ यथेत्यादि यथासर्वेनदीनदागंगाशोणाद्याःसमुद्रेअवस्थितिंलभंतेएवंगृहस्थादपरेसर्वाश्रमिणःतदधीनजीवनत्व

न्गृहस्थसमीपेअवस्थितिंलभंते ९० चतुर्भिरित्यादि एतैर्ब्रह्मचार्यादिभिराश्रमिभिश्चतुर्भिरपिद्विजातिभिः वक्ष्यमाणोदशविध-
स्वरूपोधर्मः प्रयत्नतः सततमनुष्ठेयः तमेवस्वरूपतःसंख्यादिभिश्चदर्शयति ९१ धृतिरित्यादि संतोषोधृतिः परेणापकारे कृतेतस्यप्र
त्युपकाराचरणंक्षमाविकारहेतुविषयसन्निधानेप्यविक्रियत्वंमनसोदमनंदमइतिसनंदनवचनात् शीतातपादिद्वंद्वसहिष्णुतादमइति
गोविंदराजः अन्यायेनधनादिग्रहणंस्तेयंतद्भिन्नंअस्तेयंयथाशास्त्रंमृज्जलाभ्यांदेहशोधनंशौचंविषयेभ्यश्चक्षुरादिधारणमिंद्रियनि
ग्रहः शास्त्रादितत्त्वज्ञानंधीः आत्मज्ञानंविद्यायथार्थाभिधानंसत्यंक्रोधहेतौसत्यपिक्रोधानुत्पत्तिरक्रोधः एतद्दशविधंधर्मस्वरूपम्
९२ दशलक्षणानीति येविप्राएतानिदशविधकर्मरूपाणिपठंतिपठित्वाचात्मज्ञानसांनिध्येनानुतिष्ठंतेतेच स्वज्ञानसमुत्कर्षात्परमांग

यथानदीनदाःसर्वेसागरेयांतिसंस्थितिम् तथैवाश्रमिणःसर्वेगृहस्थेयांतिसंस्थितिम् ९० चतुर्भि
रपिचैवैतैर्नित्यमाश्रमिभिर्द्विजैः दशलक्षणकोधर्मः सेवितव्यः प्रयत्नतः ९१ धृतिःक्षमादमोऽस्तेयं
शौचमिंद्रियनिग्रहः धीर्विद्यासत्यमक्रोधोदशकंधर्मलक्षणम् ९२ दशलक्षणानिधर्मस्ययेविप्राःस
मधीयते अधीत्यचानुवर्त्ततेतेयांतिपरमांगतिम् ९३ दशलक्षणकंधर्ममनुतिष्ठन्समाहितः वेदांतं
विधिवच्छ्रुत्वासंन्यसेदनृणोद्विजः ९४ संन्यस्यसर्वकर्माणिकर्मदोषानपानुदन् नियतोवेदमभ्यस्य
पुत्रैश्वर्येसुखंवसेत् ९५ एवंसंन्यस्यकर्माणिस्वकार्यपरमोऽस्पृहः संन्यासेनापहत्यैनःप्राप्नोतिपर
मांगतिम् ९६

तिंमोक्षलक्षणांप्राप्नुवंति ९३ दशलक्षणकमिति उक्तंदशलक्षणकंधर्मंसंयतमनाः सन्ननुतिष्ठन् उपनिष
दाद्यर्थंगृहस्थावस्थायांयथोक्ताध्ययनधर्मान्गुरुमुखादवगम्यपरिशोधितदेवादिऋणत्रयःसंन्यासमनुतिष्ठेत् ९४ संन्यस्येति सर्वा
णिगृहस्थानुष्ठेयाग्निहोत्रादिकर्माणिपरित्यज्य अज्ञातजंतुवधादिकर्मजनितपापानिचप्राणायामादिनानाशयन्नियतेंद्रियउपनिष-
दोग्रंथतोऽर्थतश्चाभ्यस्यपुत्रैश्वर्येइतिपुत्रगृहेपुत्रोपकल्पितभोजनाच्छादनत्वेनवृत्तिचिंतारहितःसुखंवसेत् अयमेवासाधारणोध
र्मः कुटीचरकस्योक्तः इदमेववक्तुंवेदसंन्यासिनोस्तीतिपूर्वमुक्तम् ९५ एवमिति एवमुक्तप्रकारेणवर्त्तमानोऽग्निहोत्रादिगृहस्थकर्मा

णिपरित्यज्यात्मसाक्षात्कारस्वरूपस्वकार्यप्रधानः स्वर्गादावपिबंधहेतुतयानिस्पृहःप्रव्रज्ययापापानिविनाश्यब्रह्मसाक्षात्कारेणप
रमांगतिंमोक्षलक्षणंप्राप्नोति ९६ एषइति ऋषीन्संबोध्यउच्यतेएषयुष्माकंब्राह्मणस्यसंबंधीक्रियाकलापोधर्मस्तस्यैवब्रह्मचा-
रिगृहस्थवानप्रस्थादिभेदेनचतुर्विधःपरत्राक्षयफलउक्तः इदानींराजसंबंधिनंधर्मंशृणुतअत्रचश्लोकेब्राह्मणस्यचातुराश्रम्योप
देशात् ब्राह्मणःप्रव्रजेदितिपूर्वमभिधानात् ९७ इतिश्रीकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांषष्ठोऽध्यायः ६ ७
राजधर्मानिति धर्मशब्दोऽत्रदृष्टादृष्टार्थानुष्ठेयपरः षाड्गुण्यादेरपिवक्ष्यमाणत्वात्राजशब्दोपिनात्रक्षत्रियजातिवचनः किंत्व-
भिषिक्तजनपदपुरपालयितृपुरुषवचनः अतएवाहयथावृत्तोभवेन्नृपःयथावदाचारोनृपतिर्भवेत्तथातस्यानुष्ठेयानिकथयि

एषवोभिहितोधर्मोब्राह्मणस्यचतुर्विधः पुण्योऽक्षयफलःप्रेत्यराज्ञांधर्मंनिबोधत ९७ इति
मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांषष्ठोऽध्यायः ६ ७ ७ ७ ७ ७
राजधर्मान्प्रवक्ष्यामियथावृत्तोभवेन्नृपः संभवश्चयथातस्यसिद्धिश्चपरमायथा १ ब्राह्मंप्राप्तेन
संस्कारंक्षत्रियेणयथाविधि सर्वस्यास्ययथान्यायंकर्त्तव्यंपरिरक्षणम् २ अराजकेहिलोकेऽस्मि
न्सर्वतोविद्रुतेभयात् रक्षार्थमस्यसर्वस्यराजानमसृजत्प्रभुः ३

ष्यामियथायेनप्रकारेणवाराजानमसृजत्प्र
भुः इत्यादिनातस्योत्पत्तिः यथाचदृष्टादृष्टफलसंपत्तिः तदपिवक्ष्यामि १ ब्राह्ममित्यादि ब्रह्मवेदस्तत्प्राप्त्यर्थतयाउपनयनसं
यथाशास्त्रंप्राप्तवताक्षत्रियेणास्यसर्वस्यस्वविषयावस्थितस्यशास्त्रानुसारेणनियमतोरक्षणंकर्त्तव्यं एतेनक्षत्रियएवनान्योराज्या
धिकारीतिदर्शितंअतएवशास्त्रार्थतत्त्वंक्षत्रियस्यजीवनार्थंतथाक्षत्रियस्यतुरक्षणंस्वकर्मसुश्रेष्ठंचवक्ष्यतिब्राह्मणस्यस्वापदिजीवे
क्षत्रियधर्मेणेत्यभिधास्यतिवैश्यस्यापिक्षत्रियधर्मंशूद्रस्यचक्षत्रियवैश्यकर्मणीजीवनार्थमापदिजगादनारदः नकथंचनकुर्वीत
ब्राह्मणःकर्मवार्षलम् वृषलःकर्मचब्राह्मंपतनीयेहितेतयोःउत्कृष्टंचापकृष्टंचतयोःकर्मनविद्यते मध्यमेकर्मणीहित्वासर्वसाधार
णेहितं रक्षणंवेदधर्मार्थंतपःक्षत्रस्यरक्षणमिति सर्वतोधर्मषड्भागोराज्ञोभवतिरक्षतइतिचवक्ष्यमाणत्वात् रक्षितुर्बलिषड्भागग्रहण

त्दृ शर्थमपियोरक्षन् बलिमादत्तइतिनरकपातंवक्ष्यति २ अराजकेति यस्मादराजकेजगतिबलवद्भयात्सर्वतः प्रचलितेसर्वस्यास्य
चराचरस्यरक्षार्थराजानंसृष्टवान्तस्मात्तेनरक्षणंकार्यंकथंसृष्टवानित्याह ३ इंद्रानिलयमार्काणामित्यादि इंद्रवातयमसूर्याग्नि
वरुणचंद्रकुबेराणांमात्राअंशान्सारभूतान् आकृष्यराजानमसृजत् ४ यस्मादिति यस्मादिंद्रादीनांदेवश्रेष्ठानामंशेभ्योनृपतिः
सृष्टस्तस्मादेषसर्वप्राणिनोवीर्येणातिशेते ५ तपतीत्यादि अयंचराजास्वतेजसासूर्यइवपश्यतांचक्षूंषिमनांसिचसंतापयतिन
चैनंराजानंपृथिव्यांकश्चिदप्याभिमुख्येनद्रष्टुंक्षमते ६ सइत्यादि एवंचाग्न्यादीनांपूर्वोक्तांशभवत्वात्तत्कर्मकारित्वाच्चपर्याप्तसुक्तं
तेजस्वीत्यादिनानवमाध्यायेवक्ष्यमाणत्वात् सराजाशक्त्यतिशयेनाग्न्यादिरूपोभवतिलतश्च ७ बालइत्यादि मनुष्यइतिबुद्ध्या

इंद्रानिलयमार्काणामग्नेश्चवरुणस्यच चंद्रवित्तेशयोश्चैवमात्रानिर्हृत्यशाश्वतीः ४ यस्मादे
षांसुरेंद्राणांमात्राभ्योनिर्मितोनृपः तस्मादभिभवत्येषसर्वभूतानितेजसा ५ तपत्यादित्यवच्चै
षचक्षूंषिचमनांसिच नचैनंभुविशक्नोतिकश्चिदप्यभिवीक्षितुम् ६ सोऽग्निर्भवतिवायुश्चसो
ऽर्कःसोमःसधर्मराट् सकुबेरःसवरुणःसमहेंद्रःप्रभावतः ७ बालोपिनावमंतव्योमनुष्यइ
तिभूमिपः महतीदेवताह्येषानररूपेणतिष्ठति ८ एकमेवदहत्यग्निर्नरंदुरुपसर्पिणम् कु
लंदहतिराजाग्निःसपशुद्रव्यसंचयम् ९ कार्यंसोवेक्ष्यशक्तिंचदेशकालौचतत्त्वतः कुरुतेध
र्मसिद्ध्यर्थंविश्वरूपंपुनःपुनः १०

बालोपिराजानावमंतव्यःयस्मान्महतीयंकाचिद्देवतामानुषरूपेणावतिष्ठतेएते
नदेवतावज्ञायांअधर्मादयोऽदृष्टदोषाउक्ताः संप्रतिदृष्टदोषमाह ८ एकेत्यादि योऽग्नेरतिसमीपंअनभिहितःसन्उपसर्प
तिसदुरुपसर्पीतमेकमेवाग्निर्दहतिनतत्पुत्रादिकंक्रुद्धोराजाग्नि पुत्रदारभ्रात्रादिरूपंकुलमेवगवाश्वादिपशुकसुवर्णादिधन
संचयसहितंसापराधंन्निहंति ९ कार्यमित्यादि सराजाप्रयोजनापेक्षयास्वशक्तिंदेशकालौचावेक्ष्यकार्यसिद्ध्यर्थंतत्त्वतोविश्व
रूपंबहूनिरूपाणिकरोतिजातिविवक्षयाबहुत्वेकवचनंअशक्तिदशायांक्षमतेशक्तिंप्राप्योन्मूलयतिएवमेकस्मिन्नपिदेशेकाले

चप्रयोजनानुरोधेनशत्रुर्वामित्रोवाउदासीनोवाभवतिततोराजवह्लभोहमितिबुध्यानावज्ञेयः १० यस्येत्यादि पद्माशब्दः श्री पर्यायोपिशहस्तविवक्षयाऽत्रप्रयुक्तः यस्यप्रसादान्महतीश्रीर्भवतिअतः श्रीकामेनसेव्यः यस्यशत्रवः संतितानपिसंतोषितोहंति तेनन्नशत्रुवधकामेनाप्याराधनीयः यस्मैक्रुध्यतितस्यमृत्युंकरोतितस्माज्जीवनार्थिनानक्रोधनीयः यस्मात्सर्वेषांसूर्याग्निसो- मादीनांतेजोबिभर्त्ति ११ तमित्यादि तंराजानमज्ञतयायोद्वेष्टिनस्याप्रीतिमुत्पादयतिसनिश्चितंक्रोधान्नश्यतियस्मात्तस्यविना शायशीघ्रंराजामनोनियुंक्ते १२ तस्मादित्यादि यतःसर्वतेजोमयोनृपतिस्तस्मादपेक्षितेषुयमिष्टंशास्त्रानुष्ठेयंशास्त्राविरुद्धं निश्चित्यव्यवस्थापयतिअनपेक्षितेषुचानिष्टंनियमंनातिक्रामेत् १३ तस्यार्थेसर्वेति तस्यराज्ञःप्रयोजनसिद्ध्यर्थंसर्वप्राणिनां रक्षितारंधर्मस्वरूपंपुत्रंब्रह्मणोयत्केवलंतेजस्तेननिर्मितंनपांचभौतिकंदेहंब्रह्मापूर्वंसृष्टवान् १४ तस्येत्यादि तस्यदंडस्य

यस्यप्रसादेपद्माश्रीर्विजयश्चपराक्रमे मृत्युश्चवसतिक्रोधेसर्वतेजोमयोहिसः ११ तंयस्तुद्वेष्टिसं मोहात्सविनश्यत्यसंशयम् तस्यह्याशुविनाशायराजाप्रकुरुतेमनः १२ तस्माद्धर्मंयमिष्टेषुसव्यव- स्येन्नराधिपः अनिष्टंचाप्यनिष्टेषुतधर्मंनविचालयेत् १३ तस्यार्थेसर्वभूतानांगोप्तारंधर्ममात्मज म् ब्रह्मतेजोमयंदंडमसृजत्पूर्वमीश्वरः १४ तस्यसर्वाणिभूतानिस्थावराणिचराणिच भयाद्भो- गायकल्पंतेस्वधर्मान्नचलंतिच १५ तंदेशकालौशक्तिंचविद्यांचावेक्ष्यतत्त्वतः यथार्हतःसंप्रणये न्नरेष्वन्यायवर्त्तिषु १६ सराजापुरुषोदंडःसनेताशासिताचसः चतुर्णामाश्रमाणांचधर्मस्यप्रतिभूः स्मृतः १७

भयेनचराचराःसर्वेप्राणिनःभोगंकर्तुंसमर्थाभवंति अन्यथाबलवतादुर्बलस्यधनदारादिग्रहणेतस्यापितदपे- क्ष्यबलिनेतिकस्यापिभोगोनसिध्येत्वृक्षादीनांस्थावरादीनांछेदनेभोगासिद्धिः तथासतामपिनित्यनैमित्तिकस्वधर्मानुष्ठाना करणेयाम्ययातनाभयाच्चेति १५ तमित्यादि तंदंडंदेशकालौदंडस्यचशक्तिंविद्यादिकंयस्मिन्नपराधेयोदंडोर्हतिइत्यादिकंशा स्त्रानुसारेणतत्त्वतोनिरूप्यापराधिषुप्रवर्त्तयेत् १६ सइत्यादि सएवदंडोवस्तुतोराजातस्मिन्सतिराजशक्तियोगात्सएवपुरु

स्ततोन्ये स्त्रियइवतद्धेयत्वात् सएवनेतातेन कार्याणिनायंते शाप्यंतेसएवशासिताउदाहृतत्वात् सएवचतुर्णामप्याश्रमाणांयोधर्म स्तस्यसंपादनेप्रतिभूरिवप्रतिभूर्मुनिभिःस्मृतः १७ दंडःशास्तीति यस्माद्दंडः सर्वाःप्रजाआज्ञांकरोतितस्मात्साधूक्तंशासितेति ज्ञेयंयस्मात् सएवप्रजारक्षतिततोयुक्तंराजेतिनिद्राणेष्वपिरक्षिषुदंडएवजागर्त्तितद्भयेनैवचौरादीनामप्रवृत्तेः दंडमेवधर्महेतुत्वात् धर्मंजानंतिकारणेकार्योपचारः ऐहिकपारत्रिकदंडभयादेवधर्मानुष्ठानात् १८ समीक्ष्येत्यादि सदंडःशास्त्रतः सम्यङ्निरूप्यापराधा नुरूपेणदेहधनादिषुधृतः सर्वाःप्रजाःसानुरागाः करोतिअविचार्यतुलोभादिनाप्रयुक्तः सर्वाणिबाह्यार्थपुत्रादीनिनाशयतिसर्वत इतिद्वितीयार्थेतसिः १९ यदीत्यादि यदिराजाऽनलसोभूत्वादंडप्रणयनंनकुर्यात्तदाशूले कृत्वामत्स्यानिव बलवंतोदुर्बलान् अप क्ष्यन् लृङन्तस्यपचिधातोरूपमिदंबलिनोऽल्पबलानांहिंसामकरिष्यन् इत्यर्थः शूलेमत्स्यानिवापक्ष्यन् इत्येषमेधातिथिगोविंदरा

दंडःशास्तिप्रजाःसर्वादंडएवाभिरक्षति दंडःसुप्तेषुजागर्तिदंडंधर्मंविदुर्बुधाः १८ समीक्ष्यसधृतः सम्यक्सर्वारंजयतिप्रजाः असमीक्ष्यप्रणीतस्तुविनाशयतिसर्वतः १९ यदिनप्रणयेद्राजा दंडंद ण्ड्येष्वतंद्रितः शूलेमत्स्यानिवापक्ष्यन् दुर्बलान्बलवत्तराः २० अद्यात्काकःपुरोडाशंश्वाचलिह्यात् हविस्तथा स्वाम्यंचनस्यात्कस्मिंश्चित्प्रवर्त्तताधरोत्तरम् २१ सर्वोदंडजितोलोकोदुर्लभोहिशुचिर्न रः दंडस्यहिभयात्सर्वंजगद्भोगायकल्पते २२

जलिखितः पाठः जलेमत्स्यानिवाहिंस्युरितिचपाठांतरं अत्रबलवंतो दुर्बलान्हिंस्युरितिमत्स्यन्यायएवस्यादित्युक्तम् २० अद्यादित्यादि यदिराजादंडंनाचरिष्यत् तदायज्ञेषुसर्वथाहविरनर्हःका कः पुरोडाशमखादिष्यन् तथाकुक्कुरः पायसादिहविरलेक्ष्यन् नकस्यचित् कुत्रचित् स्वाम्यमभविष्यत् ततोबलिनातद्ग्रहणात् ब्रा ह्मणादिवर्णानांचप्रध्येपदवरंशूद्रादितदेवोत्तरंप्रधानंप्रावर्त्तिष्यत् २१ सर्वेति सर्वोयंलोकः दंडेनैवनियमितः सन्मार्गेऽवति ष्ठतेस्वभावविशुद्धोहिमानुषः कष्टेनलभ्यतेतथासर्वमिदंजगत् दंडस्यैवभयादावश्यकभोजनादिरूपेपिभोगेसमर्थंभवति २२ देवेति उक्तमपिदंडस्यभोगसंपादकत्वंदार्ढ्यार्थंपुनरुच्यते इंद्राग्निसूर्यवाय्वादयोदेवाः तथादानवगंधर्वराक्षसपक्षिसर्पाअपिज

गदीश्वर परमार्थभयपीडिताएवचर्षदानाद्युपकारायप्रवर्त्तंते तथाचश्रुतिः भयादस्याग्निस्तपति भयात्तपतिसूर्यः भयादिंद्रश्चवा
युश्चमृत्युर्धावतिपंचमइति २२ दुष्येयुरिति दंडस्यानाचरणात् अनुचितेनवाप्रवर्त्तनात् सर्वेब्राह्मणादिवर्णाइतरेतरस्त्रीगम
नेनसंकीर्येरन् सर्वशास्त्रीयनियमाश्चतुर्वर्गफलाउत्सीदेयुः चौर्यसाहसादिनाचपरस्यापकारात्सर्वलोकसंक्षोभश्चजायेत २४ य-
त्रेति यत्रदेशेशास्त्रप्रमाणावगतः श्यामवर्णः लोहितवर्णअधिष्ठातृदेवताकोदंडोविचरतितत्रप्रजाव्याकुलानभवंतिदंडप्रणेता
यदिविषयानुरूपंसम्यग्जानाति २५ तस्येत्यादि तस्यदंडस्यप्रवर्त्तयितारं अभिषेकादिगुणयुक्तंनृपतिमवितथवादिनंसमीक्ष्य
कारिणंतत्तानत्तद्विचारोचितंप्रज्ञाशालिनंधर्मार्थकामानांज्ञातारंमन्वादयोप्याहुः २६ तमिति तंदंडंराजासम्यक्प्रवर्त्तयन्धर्मार्थक

देवदानवगंधर्वारक्षांसिपतगोरगाः तेपिभोगायकल्पंतेदंडेनैवनिपीडिताः २३ दुष्येयुःसर्ववर्णाश्च
भिद्येरन्सर्वसेतवः सर्वलोकप्रकोपश्चभवेद्दंडस्यविभ्रमात् २४ यत्रश्यामोलोहिताक्षोदंडश्च
रतिपापहा प्रजास्तत्रनमुह्यंतिनेताचेत्साधुपश्यति २५ तस्याहुःसंप्रणेतारंराजानंसत्यवादिनम्
समीक्ष्यकारिणंप्राज्ञंधर्मकामार्थकोविदम् २६ तंराजाप्रणयन्सम्यक्त्रिवर्गेणाभिवर्द्धते कामा
त्माविषमःक्षुद्रोदंडेनैवनिहन्यते २७ दंडोहिसुमहत्तेजोदुर्धरश्चाकृतात्मभिः धर्माद्विचलितंह
तिनृपमेवसबांधवम् २८ ततोदुर्गंचराष्ट्रंचलोकंचसचराचरम् अंतरिक्षगतांश्चैवमुनीन्देवांश्च
पीडयेत् २९ सोऽसहायेनमूढेनलुब्धेनाकृतबुद्धिना नशक्योन्यायतोनेतुंसक्तेनविषयेषुच ३०

तिपुनर्विषयाभिलाषीविषमः कोपनः क्षुद्रः छलान्वेषीनृपः सप्रकृतेनैवदंडेनामात्यादिनाकोपादधर्माद्वाविनाश्यते २७ दंडइति
यतोदंडः प्रकृष्टतेजःस्वरूपः सशास्त्रैरसंस्कृतात्मभिः दुःखेनध्रियतेअतोराजधर्मरहितंनृपमेवपुत्रबंधुसहितंनाशयति २८ ततइ
ति दोषाद्यनपेक्षयायोदंडःक्रियतेसबंधुनृपनाशानंतरंधन्व्यादिदुर्गंराष्ट्रंदेशंपृथिवीलोकंजंगमस्थावरसहितंहविःप्रदानजीवना
देवाइतिश्रुत्याहविःप्रदानाभावेअंतरिक्षगतान्ऋषीन्देवांश्चपीडयेदिति २९ सइत्यादि सदंडोमंत्रिसेनापतिपुरोहितादिसहायर-

(right margin, beside line 1 of the lower commentary: मैर्बुद्धिंगच्छ)

हितेनमूर्खेणलोभवताशास्त्रासंस्कृतबुद्धिपरेणनृपतिनाशास्त्रतोनप्रणेतुंशक्यते ३० शुचिनेति अर्थादिशौचयुक्तेनसत्य प्रतिज्ञेनयथाशास्त्रव्यवहारिणाशोभनसहायेनतत्त्वज्ञेनकर्त्तुंशक्यतेइतिपूर्वोक्तदोषप्रतिपक्षेगुणाअनेनश्लोकेनोक्ता. ३१ स्व राष्ट्रइति आत्मदेशेयथाशास्त्रव्यवहारीस्यात् शत्रुविषयेषुतीक्ष्णदंडोभवेन्निसर्गस्नेहविषयेषुमित्रेष्वकुटिलःस्यात्नकार्यमित्रे षु ब्राह्मणेषुचकृताल्पापराधेषुच क्षमावान्भवेत् ३२ एवमित्यादि शिलोंछेनेति क्षीणकोषत्वंविवक्षितंक्षीणकोषस्यापिनृपते रुक्ताचारवतोजलेतैलबिंदुरिवकीर्त्तिर्लोकेविस्तारयति३३ अतइति उक्ताचाराद्विपरीताचारवतोनृपतेरजितेंद्रियस्यजलेघृतबिंदु रिवकीर्त्ति.संकोचयति ३४ स्वेस्वेइत्यादि क्रमेणस्वधर्मानुष्ठातॄणांब्राह्मणादिवर्णानांब्रह्मचार्याद्याश्रमाणांचविश्वसृजाराजार

शुचिनासत्यसंधेनयथाशास्त्रानुसारिणा प्रणेतुंशक्यतेदंडःसुसहायेनधीमता ३१ स्वराष्ट्रे न्यायवृत्तःस्याद्भृशदंडश्चशत्रुषु सुहृत्स्वजिह्मःस्निग्धेषुब्राह्मणेषुक्षमान्वितः ३२ एवंवृत्त स्यनृपतेःशिलोंच्छेनापिजीवतः विस्तीर्यतेयशोलोकेतैलबिंदुरिवांभसि ३३ अतस्तुविपरीत स्यनृपतेरजितात्मनः संक्षिप्यतेयशोलोकेघृतबिंदुरिवांभसि ३४ स्वेस्वेधर्मेनिविष्टानांसर्वेषा मनुपूर्वशः वर्णानामाश्रमाणांचराजासृष्टोऽभिरक्षिता ३५ तेनयद्यत्सभृत्येनकर्त्तव्यंरक्षताप्र जाः तत्तद्वोऽहंप्रवक्ष्यामियथावदनुपूर्वशः ३६ ब्राह्मणान्पर्युपासीतप्रातरुत्थायपार्थिवः त्रै विद्यवृद्धान्विदुषस्तिष्ठेत्तेषांचशासने ३७

क्षितासृष्टः तस्मात्तेषांरक्षणमकुर्वतोराज्ञःप्रत्यवाय.स्वधर्मविर- हिणांत्वरक्षणेपिनप्रत्यवायइत्यस्यतात्पर्यार्थः ३५ तेनेत्यादि वक्ष्यमाणावतारार्थोयंश्लोकः तेनराज्ञाप्रजारक्षणंकुर्वतासा- मान्येनयद्यत्कर्त्तव्यंतत्तत्समग्रंयुष्माकमभिधास्यामि ३६ ब्राह्मणानिति प्रत्यहंप्रातरुत्थायब्राह्मणान्ऋग्यजुःसामाख्यविद्या त्रयग्रंथाभिज्ञान्विदुषइतिनीतिशास्त्राभिज्ञान्सेवेततदाज्ञांकुर्यात् ३७ वृद्धानित्यादि तांश्चब्राह्मणान्वयस्तपस्यादिवृद्धा- न् अर्थतोग्रंथतश्च वेदज्ञान्बहिरंतश्चार्थदानादिनाशुचीन्नित्यंसेवेतयस्माद्वृद्धसेवीसततंहिंस्रैराक्षसैरपिपूज्यतेतैरपितस्य

हितंक्रियतेस्मनरांमनुष्यैः ३८ तेभ्यइत्यादि सहजप्रज्ञया अर्थशास्त्रादिज्ञानेनचविनीतोप्यतिशयार्थंतेभ्योविनयमभ्यसेत्
यस्माद्विनीतात्माराजानकदाचिन्नश्यति ३९ बहवइत्यादि करितुरगकोषादिपरिच्छदयुक्ता अपिराजानः विनयरहितानष्टाःब
हवश्चवनस्थानिष्परिच्छदा अपिविनयेनराज्यंप्राप्नुवन् उभयत्रैवश्लोकद्वयेनदृष्टांतमाह ४० वेनइत्यादि वेनोनहुषश्चराजा
यवनस्तनुत्रः सुदासोनामासुमुखोनिमिश्चाविनयादनश्यन् ४१ पृथुरिति पृथुर्मनुश्चविनयाद्राज्यंप्रापतुः कुबेरश्चविनया
द्धनाधिपत्यंलेभेगाधिपुत्रोविश्वामित्रश्चक्षत्रियः सन्तेनैवदेहेनब्राह्मण्यंप्राप्तवान् राज्यलाभावसरेब्राह्मण्यप्राप्तिरप्रस्तुता
पिविनयोत्कर्षार्थमुक्ता ईदृशोयंशास्त्रानुष्ठाननिषिद्धवर्जनरूपोविनयोयदनेनक्षत्रियोपिदुर्लभंब्राह्मण्यंलभते ४२ त्रैविद्ये

वृद्धांश्चनित्यंसेवेतविप्रान्वेदविदःशुचीन् वृद्धसेवीहिसततंरक्षोभिरपिपूज्यते ३८ तेभ्योऽ
धिगच्छेद्विनयंविनीतात्मापिनित्यशः विनीतात्माहिनृपतिर्नविनश्यतिकर्हिचित् ३९ बहवोविन
यान्नष्टाराजानःसपरिच्छदाः वनस्थाअपिराज्यानिविनयात्प्रतिपेदिरे ४० वेनोविनष्टोऽविनयान्न
हुषश्चैवपार्थिवः सुदासोयवनश्चैवसुमुखोनिमिरेवच ४१ पृथुस्तुविनयाद्राज्यंप्राप्तवान्मनुरेवच
कुबेरश्चधनैश्वर्यंब्राह्मण्यंचैवगाधिजः ४२ त्रैविद्येभ्यस्त्रयींविद्यांदण्डनीतिंचशाश्वतीम् आ
न्वीक्षिकींचात्मविद्यांवार्त्तारंभांश्चलोकतः ४३ इंद्रियाणांजयेयोगंसमातिष्ठेद्दिवानिशम् जितेंद्रि
योहिशक्नोतिवशेस्थापयितुंप्रजाः ४४

भ्य इति त्रिवेदीरूपविद्याविज्ञःत्रिवेदीमर्थतोग्रंथतश्चाभ्यासेनब्रह्मचर्यदशा
यामेववेदग्रहणात्समाप्तस्यचराज्याधिकारात् अभ्यासार्थोयमुपदेशः दंडनीतिंचार्थशास्त्ररूपांअनुयोगक्षेमोपदेशिनींपारं
पर्यागतत्वेननित्यांतद्विद्भ्योऽधिगच्छेत्तथा आन्वीक्षिकींतर्कविद्यांप्रमाणप्रवृत्तिप्रयुक्त्युपयोगिनींब्रह्मविद्यांचाभ्युदयव्यसनयो
र्हर्षविषादप्रशमनहेतुंशिक्षेत् कृषिवाणिज्यपशुपालनादिवार्त्तातदारंभांश्चनोपायार्थान् तदभिज्ञकर्षकादिभ्यः शिक्षेत् ४३
इंद्रियाणामित्यादि चक्षुरादीनामिंद्रियाणांविषयासक्तिवारणेसर्वकालंयत्नंकुर्यात् यस्माज्जितेंद्रियः प्रजानियंतुंशक्नोति

तुविषयोपभोगव्यग्रः ब्रह्मचारिधर्मेषुसर्वपुरुषार्थउपादेयतया अभिहितोपींद्रियजयोराजधर्मेषुमुख्यत्वज्ञानार्थमनंतरवक्ष्यमा-
णव्यसननिवृत्तिहेतुत्वाच्चपुनरुक्तः ४४ दशेत्यादि दशकामसंभवानिअष्टौक्रोधजानिवक्ष्यमाणव्यसनानियत्नतस्त्यजेत् दुरंतानि
दुःखावसानानि आदौसुखयंति अंतेदुःखानिकुर्वंतियद्वा दुर्लभोअंतोयेषांतानिदुरंतानिनहिव्यसनिनस्ततोनिवर्त्तयितुंशक्यंतेव
र्जनप्रयोजनमाह ४५ कामजेष्विति यस्मात्कामजनितेषुव्यसनेषुप्रसक्तोराजाधर्मार्थाभ्यांहीयतेक्रोधजेषुप्रसक्तः प्रकृतिकोपाद्देह
नाशंप्राप्नोतितानिव्यसनानिनामतोदर्शयति ४६ मृगयेत्यादि आखेटकाख्योमृगवधोमृगयाअक्षादिक्रीडासकलकार्यविघातिनो
दिवानिद्रापरदोषकथनंस्त्रीसंभोगोमद्यपानजनितोमदः तौर्यत्रिकंनृत्यगीतवादित्राणिवृथाभ्रमणंएषदशपरिमाणोदशकःसुखे

दशकामसमुत्थानितथाष्टौक्रोधजानिच व्यसनानिदुरंतानिप्रयत्नेनविवर्जयेत् ४५ कामजेषु
प्रसक्तोहिव्यसनेषुमहीपतिः वियुज्यतेऽर्थधर्माभ्यांक्रोधजेष्वात्मनैवतु ४६ मृगयाक्षादिवा
स्वप्नःपरिवादःस्त्रियोमदः तौर्यत्रिकंवृथाट्याचकामजोदशकोगणः ४७ पैशून्यंसाहसंद्रो
हईर्ष्यासूयार्थदूषणम् वाग्दंडजंचपारुष्यंक्रोधजोपिगणोष्टकः ४८ द्वयोरप्येतयोर्मूलंयंसर्वे
कवयोविदुः तंयत्नेनजयेल्लोभंतज्जावेतावुभौगणौ ४९ पानमक्षाःस्त्रियश्चैवमृगयाचय-
थाक्रमम् एतत्कष्टतमंविद्याच्चतुष्कंकामजेगणे ५०

-ख्यामभवोगणः ४७ पैशून्यमिति पैशून्यमविज्ञातदो
षाविष्करणंसाहसंसाधोर्वधनादिनिग्रहः द्रोहश्छद्मवधः ईर्ष्याऽन्यगुणासहिष्णुतापरगुणेषुदोषाविष्करणमसूयाअर्थदूष-
णमर्थानामपहरणंदेयानामदानंचवाक्पारुष्यमाक्रोशादिदंडपारुष्यंताडनादिएषोष्टपरिमाणोव्यसनगणःक्रोधाद्भवति ४८
द्वयोरिति एतयोर्द्वयोरपिकामक्रोधजव्यसनसंघयोः कारणंस्मृतिकाराजानंतितंयत्नतोलोभंत्यजेत् यस्मादेतद्गुणद्वयंलोभाज्जा
यते कश्चिद्धनलोभतः कश्चित्सुखांतरलोभेनप्रवृत्तेः ४९ पानमिति मद्यपानमक्षैःक्रीडास्त्रीसंभोगोमृगयाचेतिक्रमपठितमेत
च्चतुष्कंकामजव्यसनमध्येबहुदोषत्वादतिशयेनदुःखहेतुंजानीयात् ५० ७ ७ ७ ७

दंडस्येत्यादि दंडपातनंवाक्पारुष्यंअर्थदूषणंचेतिक्रोधजेपिव्यसनगणेदोषबहुलत्वादतिशयितदुःखसाधनंमन्येत् ५१ स-
प्तकेति अस्यपानादेःकामक्रोधसंभवस्यसप्तपरिमाणस्यव्यसनवर्गस्यसर्वस्मिन्नेवराजमंडलेप्रायेणावस्थितस्यपूर्वपूर्वव्यसनमु
त्तरोत्तरान्कष्टतरंप्रशस्तात्माजानीयात्तथाहिद्यूतात्पानंकष्टतरंमद्यपानेनमत्तस्यसंज्ञाप्रणाशात्यथेष्टचेष्टयादेहधनादिविरोधद्
त्यादयोदोषाः द्यूतेतुपाक्षिकीधनावाप्तिरप्यस्तिस्त्रीव्यसनात्द्यूतंदुष्टंद्यूतेहिवैरोद्भवादयोनीतिशास्त्रोक्तादोषाः मूत्रपुरीषवेग
धारणाच्चव्याध्युत्पत्तिःस्त्रीव्यसनेपुनःअपत्योत्पत्त्यादिगुणयोगोप्यस्तिमृगयास्त्रीव्यसनयोःस्त्रीव्यसनंदुष्टंतत्रादर्शनंकार्याणांकाला
तिपातेनधर्मलोपादयोदोषाः मृगयायांतुव्यायामेनारोग्यादिगुणयोगोप्यस्तीत्येवंकामजचतुष्कस्यपूर्वगुणदोषंक्रोधजेष्वपित्रिषु
वाक्पारुष्याद्दंडपारुष्यंदुष्टंअंगच्छेदादेरशक्यसमाधानत्वात् वाक्पारुष्येतुकोपानलोदानमानपानीयसेकैःनशक्यःशमयि
अर्थदूषणाद्वाक्पारुष्यंदोषवन्मर्मपीडाकरंवाक्प्रहारस्यदुश्चिकित्स्यत्वात् नदुक्तन्नसंरोहयतिवाक्क्षतंअर्थदूषणंतुप्रचुरतर

दंडस्यपातनंचैववाक्पारुष्यार्थदूषणे क्रोधजेपिगणेविद्यात्कष्टमेतत्त्रिकंसदा ५१ सप्तकस्या
स्यवर्गस्यसर्वत्रैवानुषंगिणः पूर्वपूर्वंगुरुतरंविद्याद्व्यसनमात्मवान् ५२ व्यसनस्यचमृत्योश्च
व्यसनंकष्टमुच्यते व्यसन्यधोधोव्रजतिस्वर्यात्यव्यसनीमृतः ५३ मौलान्शास्त्रविदःशूरान्
लब्धलक्षान्कुलोद्गतान् सचिवान्सप्तचाष्टौवाप्रकुर्वीतपरीक्षितान् ५४

दानाच्छक्यसमाधानंएवंक्रोधज-
त्रिकस्यापिपूर्वपूर्वंदुष्टतरंयत्नतस्त्यजेत् ५२ व्यसनेति यद्यपिमृत्युव्यसनेद्वे अपीहलोकेसंज्ञाप्रणाशादिदुःखहेतुतयाशास्त्रा
नुष्ठानविरोधितयाचतुल्येतथापिव्यसनंकष्टतरंपरत्रापिनरकपातहेतुत्वात्तदाहव्यसन्यधोधोव्रजतिबहून्नरकान्गच्छतिइत्य
र्थः अव्यसनीतुमृतःशास्त्रानुष्ठानप्रतिपक्षव्यसनाभावात्स्वर्गंगच्छतिएतेनातिसक्तिर्व्यसनेषुनिषिध्यतेनतुतस्यसेवनमपि
५३ मौलानिति मौलानपीहपितामहक्रमेणसेवकान्तेषामपिद्रोहादिनाव्यभिचारात् दृष्टादृष्टार्थशास्त्रज्ञान्विक्रांतान्ल-
ब्धलक्षान्लक्षादप्रच्युतशरीरशल्यादीन्आयुधविद इत्यर्थः विशुद्धकुलभवान्देवतास्पर्शादिनियतान्अमात्यान्ससा-

ष्ठेवामंत्रादौकुर्वीतयस्मात् ५४ अपीत्यादि सुकरेणापियत्क्रियतेकर्मतदप्येकेनदुष्करंभवतिविशेषतोयन्महाफलंतत्कथमसहा
येनक्रियते ५५ तैरित्यादि तैःसचिवैःसहसामान्यंमंत्रेष्वगोपनीयंसंधिविग्रहादितान्निरूपयेत्तथातिष्ठत्यनेनेतिस्थानंदंडकोषपुर
राष्ट्रात्मकंचतुर्विधंचिंतयेत् दंड्यतेनेनेतिदंडोहस्त्यश्वरथपादातयः तेषांपोषणारक्षणादितच्चिंत्यकोशोर्थनिचयः तस्यायव्ययादि
पुरस्यरक्षणादिराष्ट्रंदेशःतद्वासिमनुष्यपश्वादिधारणक्षमत्वादिचिंतयेत्तथासमुदयंस्फस्यंते अस्मादर्था इतिसमुदयोधान्यहि
रण्याद्युत्पत्तिस्थानंतन्निरूपयेत्तथागुप्तिंरक्षामात्मगतांराष्ट्रगतांचस्वपरीक्षितमन्त्राद्यभयात्परीक्षिताः स्त्रियश्चैवमित्यादिनात्म
रक्षणंराष्ट्रस्यसंग्रहेनित्यमित्यादिनाराष्ट्ररक्षांचवक्ष्यतिलब्धस्यचधनस्यप्रशमनानिसत्पात्रेप्रतिपादनादीनिचिंतयेत्तथाचवक्ष्य
ति जित्वासंपूजयेद्देवानित्यादि ५६ तेषामिति तेषांसचिवानांरहसिनिष्प्रतिपक्षतयाहृदयगतभावज्ञानसंभवात्प्रत्येकमभि

अपियत्सुकरंकर्मतदप्येकेनदुष्करम् । विशेषतोऽसहायेनकिंतुराज्यंमहोदयम् ५५ तैःसार्द्धंचिंत
येन्नित्यंसामान्यंसंधिविग्रहम् । स्थानंसमुदयंगुप्तिंलब्धप्रशमनानिच ५६ तेषांस्वंस्वमभिप्रायमु
पलभ्यपृथक्पृथक् । समस्तानांचकार्येषुविदध्याद्धितमात्मनः ५७ सर्वेषांतुविशिष्टेनब्राह्मणेनविप
श्चिता । मंत्रयेत्परमंमंत्रंराजाषाड्गुण्यसंयुतम् ५८ नित्यंतस्मिन्समाश्वस्तःसर्वकार्याणिनिःक्षिपेत् ।
तेनसार्द्धंविनिश्चित्यततःकर्मसमारभेत् ५९ अन्यानपिप्रकुर्वीतशुचीन्प्राज्ञानवस्थितान् । सम्यगर्थ
समाहर्तॄनमात्यान्सुपरीक्षितान् ६०

प्रायंसमस्तानामपियुगपदभिप्रायंबुद्ध्वाकार्येयदात्मनोहितंतत्कुर्यात् ५७
सर्वेषामिति एषामेवसर्वेषांसचिवानांमध्यादन्यतमेनधार्मिकत्वादिनाविशिष्टेनविदुषाब्राह्मणेनसहसंधिविग्रहादिवक्ष्यमाणगु
णषट्कोपेतंप्रकृष्टंमंत्रंनिरूपयेत् ५८ नित्यमिति सर्वदातस्मिन्ब्राह्मणेसंजातविश्वासोमूलायानिकुर्यात्तानिसर्वकार्याणिसम
र्पयेत् तेनसहनिश्चित्यसर्वकर्मारभेत् ५९ अनित्यादि अन्यानपिअर्थदानादिनाशुचीन्प्रज्ञाशालिनःसम्यग्धनार्जनशीलान्धर्मा-
दिनापरीक्षितान्कर्मसचिवान्कुर्यात् ६० निर्वर्त्तेतेति अस्यराज्ञोयत्संख्याकैर्मनुष्यैःकर्मजातंसंपद्यतेतत्संख्याकान्मनुष्याना-

लस्यशून्यान्क्रियासुसोत्साहान्तत्कर्मज्ञान्तत्रकुर्यात् ६१ तेषामिति तेषांसचिवानांमध्येविक्रांतांश्चतुरान्कुलांकुशनियमिता
न्सुज्ञीन्अर्थनिःस्पृहान्धनोत्पत्तिस्थानेनियुंजीत अस्यैवोदाहरणंआकरकर्मांतइतिआकरेषुसुवर्णाद्युत्पत्तिस्थानेषुकर्मांतेषुच
इक्षुधान्यादिसंग्रहस्थानेषु अंतर्निवेशनेभोजनशयनगृहांतःपुरादौभीरूंनियुंजीतशूराहितत्रराजानंप्रायेणैकाकिनंस्त्रीवृतंवाक
दाचित्शत्रूपजापदूषिताहन्युरपि ६२ दूतमिति दूतंचद्दष्टाद्दष्टार्थशास्त्रज्ञंइंगितज्ञमभिप्रायसूचकंवचनस्वरादिआकारोदेहध
र्मादिसुखप्रसादवैवर्ण्यादिरूपःप्रीत्यप्रीतिसूचकःचेष्टाकरास्फालनादिक्रियाकोपादिसूचिकातदीयतत्त्वज्ञंअर्थदानस्त्रीव्यसनाद्य
भावात्मकंशौचयुक्तंचतुरंकुलीनंकुर्य्यात्यस्मात् ६३ अनुरक्तइति जनेषुअनुरागवान्तेनप्रतिराजादेरपिअद्वेषविषयः अर्थस्त्री

निर्वर्त्तेतास्ययावद्भिरितिकर्त्तव्यतानृभिः तावतोतंद्रितान्दक्षान्प्रकुर्वीतविचक्षणान् ६१ तेषाम
र्थेनियुंजीतशूरान्दक्षान्कुलोद्गतान् शुचीनाकरकर्मांतेभीरूनंतर्निवेशने ६२ दूतंचैवप्रकुर्वीत
सर्वशास्त्रविशारदम् इंगिताकारचेष्टज्ञंशुचिंदक्षंकुलोद्गतम् ६३ अनुरक्तःशुचिर्दक्षःस्मृतिमा
न्देशकालवित् वपुष्मान्वीतभीर्वाग्मीदूतोराज्ञःप्रशस्यते ६४ अमात्येदंडआयत्तोदंडेवैनयि
कीक्रिया नृपतौकोशराष्ट्रेचदूतेसंधिविपर्य्ययौ ६५ दूतएवहिसंधत्तेभिनत्त्येवचसंहतान् दूतस्त
त्कुरुतेकर्मभिद्यंतेयेनवानवा ६६

शौचयुक्तः तेनधनस्त्रीदानादिनाऽभेद्यः दक्षश्चतुरः तेनकार्यकालन्नातिक्राम
तिस्मृतिमान्तेनसंदेशंनविस्मरतिदेशकालज्ञः तेनदेशकालौज्ञात्वाअन्यदपिसंदिष्टंदेशकालोचितमन्यथाकथयतिस्वरूपःतेना
देयवचनःविगतभयःतेनाप्रियसंदेशस्यापिवक्तावाग्मीतेनसंस्कृतायुक्तिक्षमःएवंविधोदूतोराज्ञःप्रशस्योभवति ६४ अमात्यद
ति अमात्येसेनापतौहस्त्यश्वरथपादाताद्यात्मकोदंडआयत्तः तदिच्छयातस्यकार्य्येषुप्रवृत्तेःविनययोगात्वैनयिकीयोविनयःस
दंडआयत्तःनृपतावर्थसंचयस्थानदेशावायत्तौराज्ञापराधीनौनकर्त्तव्यौस्वयमेवचिंतनीयंधनंग्रामश्चदूतेसंधिविग्रहावायत्तौत
दिच्छयातत्प्रवृत्तेः ६५ दूतएवेति यस्माद्दूतएवहिभिन्नानांसंधिसंपादनेक्षमः संहतानांचभेदनेतथापरदेशेदूतःतत्कर्मकरोति

येनसंहताभिद्यंतेतस्माद्दूतेसंधिविग्रहौविपर्य्ययावायत्तावितियदुक्तंतस्यैवायंप्रपंचः दूतस्यकार्यांतरमाह ६६ सविद्यादिति सदूतोऽस्यप्रतिराजस्यकर्त्तव्येआकारेंगितचेष्टांजानीयात् निगूढाअनुचराः प्रतिपक्षनृपस्यैवपरिजनाः तस्मिन्प्रयुक्ताः तत्सन्निधावपितेषामिंगितचेष्टितैः भृत्येषुनक्रुब्धलुब्धापमानितेषुप्रतिराजस्यकर्त्तुमीप्सितंजानीयात् ६७ बुद्ध्वानेति उक्तलक्षणदूतद्वारेणप्रतिपक्षराजस्यकर्त्तुमिष्टंसर्वंतत्त्वतोज्ञात्वातथाप्रयत्नंकुर्यात् यथात्मनः पीडानभवति ६८ जांगलमिति अल्पोदकतृणोयस्तुप्रवातःप्रचुरातपः सज्ञेयोजांगलोदेशोबहुधान्यादिसंयुतः प्रचुरधार्मिकजनंरोगोपसर्गादिरनाकुलंफलपुष्पतरुलतादिमनोहरंप्रणतसमीपचारत्वाद्वणिकादिजनंसकलप्रकृतिवाणिज्याद्याजीवनमाश्रित्यावासंकुर्यात् ६९ धनुर्दुर्गमिति धनुर्दुर्गंमरुवेष्टितंचतुर्दिशंपंचयोजनमनुदकंमहीदुर्गंपाषाणेनइष्टकेनवाविस्ताराद्द्विगुण्योच्छ्रायेणद्वादशहस्ताद्युच्छ्रितेनयुद्धार्थंसुपरिभ्रमणयोग्येनसावरणगवाक्षादियुक्तेनप्राकारेणवेष्टितंजलदुर्गंअगाधोदकेनसर्वतःपरिप्लुतंवार्क्षदुर्गंबहिःसर्वतोयोजनमात्रंव्याप्यतिष्ठन्महारूक्षकंटकिगुल्मलताद्याचितंनृदुर्गंचतुर्दिगवस्थायिहस्त्यश्वरथयुक्तबहुपादातरक्षितंगिरिदुर्गंसर्वतः पृष्ठमतिदुरारोहंसंकीर्णैकमार्गोपेतं अंतर्नदीप्रस्रवणाद्युदकयुक्तंबहुसस्योत्पन्नक्षेत्ररक्षान्वितं एतेषुदुर्गेषुमध्यादन्यतमंदुर्गमाश्रित्यपुरंविरचयेत् ७० सर्वेणेति यस्मादेषांदुर्गाणांमध्यात्दुर्गगुणबहुत्वेनगिरिदुर्गमतिरिच्यते तस्मात्सर्वप्रयत्नेनतदाश्रयेत् गिरिदुर्गंशत्रुदुरारोहत्वंमहत्प्रदेशादल्पप्रयत्नप्रेरितशिलादिनाबहुविपक्षसैन्यव्यापादनमित्यादयोबहवोगुणाः ७१ त्रीणीति एषांदुर्गाणांमध्यात्प्रथमोक्तानित्रीणिदुर्गाणिमृगादयआश्रिताः तत्रधनुर्दुर्गंमृगैराश्रितंमहीदुर्गं

सविद्यादस्यकृत्येषुनिगूढेंगितचेष्टितैः आकारमिंगितंचेष्टांभृत्येषुचचिकीर्षितम् ६७ बुद्ध्वाच सर्वंतत्त्वेनपरराजचिकीर्षितम् तथाप्रयत्नमातिष्ठेद्यथात्मानंनपीडयेत् ६८ जांगलंसस्यसंपन्नमार्यप्रायमनाविलम् रम्यमानतसामंतस्वाजीव्यंदेशमावसेत् ६९ धनुर्दुर्गंमहीदुर्गमब्दुर्गंवार्क्षमेववा नृदुर्गंगिरिदुर्गंवासमाश्रित्यवसेत्पुरम् ७० सर्वेणतुप्रयत्नेनगिरिदुर्गंसमाश्रयेत् एषांहिबाहुगुण्येनगिरिदुर्गंविशिष्यते ७१ त्रीण्याद्यान्याश्रितास्त्वेषांमृगगर्त्ताश्रयाऽप्सराः त्रीण्युत्तराणिक्रमशः प्लवंगमनरामराः ७२

गर्त्ताश्रितैर्मूषिकादिभिः अब्दुर्गं जलचरैर्नक्रादिभिः इतराणि त्रीणि वृक्षदुर्गादीनि वानरादय आश्रिताः तत्र वृक्षदुर्गं वानरैराश्रितं नृ
दुर्गं मानुषैः गिरिदुर्गं देवैः ७२ यथेत्यादि यथैतान्दुर्गवासिनो मृगादीन् व्याधादयः शत्रवो न हिंसन्ति एवं दुर्गाश्रितं राजानं न शत्रवः
७३ एकेति यस्मादेको धानुष्कः प्राकारस्थः शत्रूणां शतं योधयति प्राकारस्थं धानुष्कशतं च शत्रूणां दशसहस्राणि तस्मा [illegible] कर्त्तु
मुपदिश्यते ७४ तमित्यादि तं दुर्गं खड्गाद्यायुधसुवर्णादिधनधान्यकरितुरगादिवाहनब्राह्मणभक्ष्यादिशिल्पि [illegible] स
मृद्धं कुर्यात् ७५ तस्येत्यादि तस्य दुर्गस्य मध्ये पर्याप्तं पृथक्पृथक् स्त्रीगृहदेवागारायुधागाराग्निशालादियुक्तं परिख [illegible]
सर्वर्त्तुकफलपुष्पादियोगेन सर्वर्त्तुकं सुधाधवलितं वाप्यादिजलयुक्तं वृक्षान्वितमात्मनो गृहं कारयेत् ७६ तदित्यादि तद्गृहमाश्रित्य

यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः तथारयो न हिंसन्ति नृपं दुर्गसमाश्रितम् ७३ एकः शतं यो
धयति प्राकारस्थो धनुर्धरः शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ७४ तत्स्यादायुधसंपन्नं धनधा
न्येन वाहनैः ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च ७५ तस्य मध्ये सुपर्याप्तं कारयेद्गृहमात्मनः
गुप्तं सर्वर्त्तुकं शुभ्रं जलवृक्षसमन्वितम् ७६ तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम् कुले मह
ति संभूतां हृद्यां रूपगुणान्विताम् ७७ पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजम् तेऽस्य गृह्याणि कर्मा
णि कुर्युर्वैतानिकानि च ७८ यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः धर्मार्थं चैव विप्रेभ्यो दद्याद्भोगा
न्धनानि च ७९ सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन्नृषु ८०

समानवर्णां शुभसूचकलक्षणोपेतां महाकुलप्रसूतां मनोहारिणीं सुरूपां गुणवतीं भार्यामुद्वहेत् ७७ पुरोहितमिति पुरोहितं चाथ्या-
थर्वणविधिना कुर्वीत ऋत्विजं च कर्माणि कर्त्तुं वृणुयात्ते चास्य राज्ञो गृह्योक्तानि त्रेतासंपाद्यानि कर्माणि कुर्युः ७८ यजेतेति राजा नाना
प्रकारान् बहुदक्षिणान् अश्वमेधादियज्ञान्कुर्यात् ब्राह्मणेभ्यश्च स्त्रीगृहशय्यादीन् भोगान् सुवर्णवस्त्रादीनि धनानि दद्यात् ७९
सांवत्सरिकमिति राजा सक्तैरमात्यैर्वर्षग्राह्यं धान्यादिभागमानाययेत् लोके च करादिग्रहणे शास्त्रनिष्ठः स्यात् स्वदेशवासिषु नरेषु

पितृवत्स्नेहादिनावर्त्तेत ८० अध्यक्षानिति तत्रतत्रहस्त्यश्वरथपदाताद्यर्थादिस्थानेषु अध्यक्षानवेक्षितॄन् विविधान् पृथक्पृथक् विपश्चितः कर्मकुशलान् कुर्यात् तेअस्यराज्ञः तेषु हस्त्यश्वादिस्थानेषु मनुष्याणां कुर्वतां सर्वाणिकार्याणि सम्यक्कार्यार्थमवेक्षेरन् ८१ आवृत्तानामिति गुरुकुलान्निवृत्तानां अधीतवेदानां ब्राह्मणानां गार्हस्थ्यार्थिनां नियमतो धनधान्येन पूजां कुर्यात् यस्माद्योयं ब्राह्मो ब्राह्मणेषु स्थापितधनधान्यादिनिधिरिव निधिः अक्षयो ब्रह्मफलत्वात् अविनाशी राज्ञां शास्त्रेणोपदिश्यते अतएव ८२ नतमिति तं ब्राह्मणस्थापितनिधिं न चौरो नापि शत्रवो हरंति अन्यनिधिवत् भूम्यादिस्थापितः स्थानभ्रांत्या वा दर्शनमुपैति तस्माद्योयमक्षयो अनंतफलो निधिरिव निधिः धनौघः स राज्ञा ब्राह्मणेषु निधातव्यः तेभ्यो देयमित्यर्थः ८३ नेत्यादि अग्नौ यत् हविर्हूयते तत् कदा

अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः ते ऽस्य सर्वाण्यवेक्षेरन्नृणां कार्याणि कुर्वताम् ८१
आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत् नृपाणामक्षयो ह्येष निधिर्ब्राह्मोभिधीयते ८२ न तं स्ते
नान्चामित्रा हरन्ति न च नश्यति तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिः ८३ न स्कंदते न व्यथ
ते न विनश्यति कर्हिचित् वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम् ८४ सममब्राह्मणे दानं द्विगु
णं ब्राह्मणब्रुवे प्राधीते शतसाहस्रमनंतं वेदपारगे ८५ पात्रस्य हि विशेषेण श्रद्दधानतयैव च अ
ल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ८६

चित् स्कंदते स्रवत्यधः पतति कदाचिद्व्यथते शुष्यति कदाचिद्दाहादिना न श्यति ब्राह्मणस्य मुखे यत् हुतं पाण्यास्यो हि द्विजः स्मृत इति ब्राह्मणहस्तदत्तमित्यर्थः तस्य नोक्ता दोषाः तस्मादग्निहोत्रादिभ्यः श्रेष्ठं ब्राह्मणाय दानमित्यर्थः ८४ सममित्यादि ब्राह्मणेतरक्षत्रादिविषये यद्दानं तत्समफलं श्रुतं ततो नाधिकं न च न्यूनं भवति यो ब्राह्मणः क्रियारहित आत्मानं ब्राह्मणं ब्रवीति स ब्राह्मणब्रुवः तद्विषयदानं पूर्वापेक्षया द्विगुणफलं एवं प्राधीते प्रक्रांताध्ययने ब्राह्मणे लक्षगुणं फलं समस्तशाखाध्यायिन्यनंतफलं सहस्रगुणमाचार्य इति वा तृतीयपदस्य पाठः ८५ पात्रस्येति विद्यातपोवृत्तियुक्ततया पात्रस्य तारतम्यमपेक्ष्य शास्त्रोक्ततयेति प्रत्ययरूपाया श्रद्धायास्तारतम्यपात्रमासाद्य दानस्याल्पं महाफलं परलोके लभ्यते ८६ ७ ७

समोत्तमाधमैरिति समबलेनाधिकबलेनहीनबलेनचराज्ञायुद्धार्थमाहूतोराजारक्षणंकुर्वन्युद्धान्ननिवर्त्तेत क्षत्रियेणयुद्धा
र्थमाहूतेनावश्यंयोद्धव्यमितिक्षात्रंधर्मंस्मरन्यस्मात् ८७ संग्रामेष्विति युद्धेष्वपराङ्मुखत्वंप्रजानांचरक्षणंब्राह्मणपरिचर्याए
तद्राज्ञामतिशयितंस्वर्गादिश्रेयःस्थानंअतएव ८८ आहवेष्विति राजानोमिथःस्पर्द्धमानायुद्धेऽन्योन्यंहंतुमिच्छंतःप्रकृष्टया
शक्त्यासंमुखीभूययुध्यमानाःस्वर्गंगच्छंतियद्यपिशत्रुजयधनलाभादिरूपंदृष्टमेवफलंनस्वर्गःतथापियुद्धाश्रिताऽपराङ्मुखत्व
नियमस्यस्वर्गःफलमितिनदोषः ८९ नेत्यादि कूटान्यायुधानिबहिःकाष्ठादिमयानिअंतर्गुप्तनिशितशस्त्राणिएतैःसमरेयुध्यमा
नःशत्रुन्नहन्यात्नापिकर्ण्याकारफलकैर्बाणैःनापिविषाक्तैःनाप्यग्निदीप्तफलकैः ९० नचेति स्वयंरथस्थोरथंत्यक्त्वास्थलारूढं

समोत्तमाधमैराजात्वाहूतःपालयन्प्रजाः ननिवर्त्तेतसंग्रामात्क्षात्रंधर्ममनुस्मरन् ८७ संग्रामे
ष्वनिवर्त्तित्वंप्रजानांचैवपालनम् शुश्रूषाब्राह्मणानांचराज्ञांश्रेयस्करंपरम् ८८ आहवेषुमिथो
ऽन्योन्यंजिघांसन्तोमहीक्षितः युध्यमानाःपरंशक्त्यास्वर्गंयान्त्यपराङ्मुखाः ८९ नकूटैरायुधै-
र्हन्यात्युध्यमानोरणेरिपून् नकर्णिभिर्नापिदिग्धैर्नाग्निज्वलिततेजनैः ९० नचहन्यात्स्थला
रूढंनक्लीबंनकृतांजलिम् नमुक्तकेशंनासीनंनतवास्मीतिवादिनम् ९१ नसुप्तंनविसन्नाह
ंननग्नंननिरायुधम् नायुध्यमानंपश्यन्तंनपरेणसमागतम् ९२ नायुधव्यसनप्राप्तंनार्त्तंना
तिपरिक्षतम् नभीतंनपरावृत्तंसतांधर्ममनुस्मरन् ९३

नहन्यात् तथानपुंसकंबद्धांजलिंमुक्तकेशंउपविष्टं-
त्वदीयोहमित्येवंवादिनंनहन्यात् ९१ नसुप्तमिति नसुप्तंमुक्तसन्नाहंविवस्त्रंअनायुधमयुध्यमानंप्रेक्षकमन्येनसहयुध्यमानंच
नहन्यात् ९२ नेत्यादि भग्नखड्गाद्यायुधंपुत्रशोकादिनाआर्त्तंबहुप्रहाराकुलंभीतंयुद्धपराङ्मुखंशिष्टक्षत्रियाणांधर्मंस्मरन्
नहन्यात् ९३ यस्त्विति यस्तुयोधोभीतःपराङ्मुखस्सन्युद्धेशत्रुभिर्हन्यतेसपोषणकर्त्तुःप्रभोर्दुष्कृतंतत्सर्वंप्राप्नोतिशास्त्रप्रमाण-
केनचकृतेनदुष्कृतेयथाशास्त्रंसंक्रमयोग्येएवसिध्यतःअतएवोपजीव्यशास्त्रेणबाधनात्नप्रतिपक्षानुमानोदयोपिएतच्चषष्ठेपि

येषुसुकृतमित्यत्रापिस्कृतमस्माभिः पराङ्मुखहतस्यस्यात्पापमेतद्विवक्षितम् नत्वन्यप्रक्षपापंस्यादितिगोविंदराजकः मेधातिथिस्त्व
र्थवादमात्रमेतन्निरूपयन् मन्येनेतद्युक्तंव्यक्तमन्यर्थवर्जनात् अन्यदीयपुण्यपापे अन्यत्रसंक्रमेतेइतिशास्त्रप्रामाण्याद्वेदांतसू
त्रकृतावादरायणेननिर्ध्यातोयमर्थः इतियथोक्तमेवरमणीयम् ९४ यच्चेत्यादि पराङ्मुखहतस्ययत्किंचित्सुकृतंपरलोकार्थमर्जि
तंअनेनास्तितत्सर्वंप्रभुर्लभते ९५ रथाश्वमित्यादि राज्ञः स्वामिनः सर्वधनग्रहणेप्राप्तेतदपवादार्थमाह रथाश्वहस्तिछत्रवस्त्रा
दिधनधान्यगवादिस्त्रियः सर्वाणिद्रव्याणिगुडलवणादीनिकुप्यंचसुवर्णरजतव्यतिरिक्तंताम्रादिधनंयः पृथग्जित्वासततमानयति
तस्यैवतत्सुवर्णरजतभूमिरत्नाधनप्रकृष्टधनंतुराज्ञ एवसमर्पणीयंएतदर्थमेवात्रपरिगणनीयंअतएवाह ९६ राज्ञइत्यादि उ-
द्धारंपोद्धारोराज्ञेदद्युः उद्ध्रियतइत्युद्धारः जितधनादुत्कृष्टधनंसुवर्णरजतकुप्यादिराज्ञेसमर्पणीयंकरितुरगादिवाहनमपिराज्ञेदेयं

यस्तुभीतः परावृत्तः संग्रामेहन्यतेपरैः भर्तुर्यद्दुष्कृतंकिंचित्तत्सर्वंप्रतिपद्यते ९४ यच्चास्यसुकृतंकिं
चिदमुत्रार्थमुपार्जितम् भर्तातत्सर्वमादत्तेपरावृत्तहतस्यतु ९५ रथाश्वंहस्तिनंछत्रंधनंधान्यंपशू
न्स्त्रियः सर्वद्रव्याणिकुप्यंचयोयज्जयतितस्यतत् ९६ राज्ञश्चदद्युरुद्धारमित्येषावैदिकीश्रुतिः
राज्ञाचसर्वयोधेभ्योदातव्यमपृथग्जितम् ९७ एषोऽनुपस्कृतः प्रोक्तोयोधधर्मः सनातनः अस्माद्ध
र्मान्नच्यवेतक्षत्रियोघ्नन्रणेरिपून् ९८ अलब्धंचैवलिप्सेतलब्धंरक्षेत्प्रयत्नतः रक्षितंवर्द्धयेच्चैव
वृद्धंपात्रेषुनिःक्षिपेत् ९९

वाहनंचराज्ञउद्धारंचेतिगौतमवचनात्उद्धारदानेचश्रुतिः इंद्रोवैवृत्रंहत्वेत्युपक्रम्यसमहा
न्भूत्वादेवताअब्रवीत्उद्धारंसमुद्धरतेतिराज्ञाचापृथग्जितंसहजितंसर्वयोधेभ्योयथापौरुषंसंविभजनीयम् ९७ एषइत्यादि
अविगर्हितएषोऽनादिसर्गप्रवाहसंभवतयानित्योयोधधर्मउक्तः युद्धेशत्रून्हिंसन् क्षत्रियएतंधर्मंनत्यजेत्युद्धाधिकारित्वात्क्षत्रिय
ग्रहणंअन्योपितत्स्थानपतितोनत्यजेत् ९८ अलब्धमिति अजितंभूमिहिरण्यादिजेतुमिच्छेत् जितंप्रयत्नतोरक्षेत् रक्षितं
वाणिज्यादिनावर्द्धयेत् वृद्धंचपात्रेभ्योदद्यात् ९९ एतदिति एतच्चतुःप्रकारंपुरुषार्थोयः स्वर्गादिस्तत्प्रयोजनंयस्मादेवंरूपं

जानीयात् अतो अनलसः सन्सर्वदा अनुष्ठानं कुर्यात् १०० अलब्धमिति अलब्धं पत्तिहस्त्यश्वरथपादातात्मकेन दंडेन जेतुमि
च्छेत् जितं च प्रत्यवेक्षणेन रक्षेत् रक्षितं च वृद्ध्युपायेन स्थलजलपथवाणिज्यादिना वर्द्धयेत् वृद्धं शास्त्रीयविभागेन पात्रेभ्यो दद्या
त् १०१ नित्यमिति नित्यं हस्त्यश्वादिषु खड्गादिशिक्षाभ्यासो दंडो यस्य स तथा स्यात् नित्यं च प्रकाशीकृतमस्त्रविद्यादिना पौरुषं यस्य
स तथा स्यात् नित्यं संवृतं संवरणीयं मंत्राचारचेष्टादिकं यस्य स तथा स्यात् नित्यं च शत्रोर्व्यसनादिरूपछिद्रानुसंधानं तत्परः स्यात्
१०२ नित्यमिति यस्मान्नित्योद्यतदंडस्य जगदुद्विजेदिति तस्मात्सर्वप्राणिनो दंडेनैवात्मसात्कुर्यात् १०३ अमाययेति मायया छ
द्मतया अमात्यादिषु न वर्त्तेत तथा सति सर्वेषामविश्वसनीयः स्यात् धर्मरक्षार्थं यथातत्त्वेनैव व्यवहरेत् यत्नकृतात्मपक्षरक्षश्च शत्रु-

एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम् अस्य नित्यमनुष्ठानं सम्यक्कुर्यादतंद्रितः १०० अलब्धमि
च्छेद्दंडेन लब्धं रक्षेदवेक्षया रक्षितं वर्द्धयेद्वृद्ध्या वृद्धं दानेन निःक्षिपेत् १०१ नित्यमुद्यतदंडः स्यान्नि
त्यं विवृतपौरुषः नित्यं संवृतसंवार्यो नित्यं छिद्रानुसार्य्यरेः १०२ नित्यमुद्यतदंडस्य कृत्स्नमुद्विजते
जगत् तस्मात्सर्वाणि भूतानि दंडेनैव प्रसाधयेत् १०३ अमाययैव वर्त्तेत न कथंचन मायया बुध्येता
रिप्रयुक्तां च मायां नित्यं स्वसंवृतः १०४ नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु गूहेत्कूर्म इवा
ङ्गानि रक्षेद्विवरमात्मनः १०५ बकवच्चिंतयेदर्थान्सिंहवच्च पराक्रमेत् वृकवच्चावलुंपेत शशवच्च वि
निष्पतेत् १०६

कृतां प्रकृतिभेदरूपां मायां चारद्वारेण जानीयात् १०४ नेत्यादि तथा यत्नं कुर्याद्यथास्य प्रकृतिभेदादि
छिद्रं शत्रुर्न जानाति शत्रोस्तु प्रकृतिभेदादिकं चारैर्जानीयात् कूर्मो यथा मुखचरणादीनि आत्मदेहे गोपयत्येवं राज्यांगान्यमात्या
दीनि दानसंमानादिना आत्मसात्कुर्यात् दैवाच्च प्रकृतिभेदादिरूपे छिद्रे जाते यत्नतः प्रतीकारं कुर्यात् १०५ बकवदिति यथा ब
कोजले मीनमतिचंचलस्वभावमपि मत्स्यग्रहणात् एकतानांतःकरणश्चिंतयत्येवं रहसि स्कृविहितरक्षस्यापि विपक्षस्य देशग्रह
णादीनर्थांश्चिंतयेत् यथा च सिंहः प्रबलमतिस्थूलमपि दंतिबलं हंतुमाक्रमत्येवं अल्पबलो बलवतोपक्रांतः संश्रयाद्युपायांतरा

स्थिं संभवेसर्वशक्त्याशत्रुंहंतुमाक्रामेत् यथाचवृकःपालकृतरक्षणमपिपशुंदैवात्प्रमादंचावधानमासाद्यव्यापादयत्येवंदुर्गाद्यवस्थितमपिरिपुंकथंचिद्प्रमादमासाद्यव्यापादयेत् यथाशशःवधोद्युरविविधव्याधमध्यगतोपिकुटिलगतिरुत्प्लुत्यपलायतेएवंस्वयमबलोबलवदरिपरिवृतोपिकथंचिदरिव्यामोहमाधायशुणवत्सार्थिवांतरंसंश्रयितुमुपसर्पेत् १०६ एवमित्यादि एवमुक्तप्रकारेणविजयप्रवृत्तस्यनृपतेःयेविजयविरोधिनोभवेयुः तान्सर्वान्सामदानभेददंडैरुपायैःवशमानयेत् १०७ यदीत्यादि तेचविजयविरोधिनोयद्याद्यैस्त्रिभिरुपायैर्ननिवर्त्तंतेतदाबलाद्देशोपमर्दादिनायुद्धेनशनकैर्लघुगुरुदंडक्रमेणदंडेनवशीकुर्यात् १०८ सामादीति चतुर्णामपिसामादीनामुपायानांमध्यात्सामदंडावेवराष्ट्रवृद्ध्यर्थंपंडिताःप्रशंसंतिसाम्निप्रयासधनव्ययसैन्यक्षया

एवंविजयमानस्ययेऽस्यस्युःपरिपंथिनः तानानयेद्वशंसर्वान्सामादिभिरुपक्रमैः १०७ यदितेतुनतिष्ठेयुरुपायैःप्रथमैस्त्रिभिः दंडेनैवप्रसह्यैताञ्छनकैर्वशमानयेत् १०८ सामादीनामुपायानांचतुर्णामपिपंडिताः सामदंडौप्रशंसंतिनित्यंराष्ट्राभिवृद्धये १०९ यथोद्धरतिनिर्दाताकक्षंधान्यंचरक्षति तथारक्षेन्नृपोराष्ट्रंहन्याच्चपरिपंथिनः ११० मोहाद्राजास्वराष्ट्रंयःकर्षयत्यनवेक्षया सोचिराद्भ्रश्यतेराज्याज्जीविताच्चसबांधवः १११ शरीरकर्षणात्प्राणाःक्षीयंतेप्राणिनांयथा तथाराज्ञामपिप्राणाःक्षीयंतेराष्ट्रकर्षणात् ११२

द्दोषाभावात्दंडेतुतत्सद्भावेपिकार्यसिद्ध्यतिशयात् १०९ यथेत्यादि यथाक्षेत्रेधान्यतृणादिकयोःसहोत्पन्नयोरपिधान्यानिलवनकर्त्ताररक्षतितृणादिकंचोद्धरतिएवंनृपतिःराष्ट्रेदुष्टान् हन्यात्नलदुष्टान्तदीयसहजान्स्वात्मनपिनिर्हन्तिदृष्टांतादवसीयतेशिष्टसहितंचराष्ट्रंरक्षेत् ११० मोहादित्यादि योराजाअनवेक्षयादुष्टशिष्टाज्ञानेनसर्वानेवस्वराष्ट्रीयजनान्शास्त्रायधनग्रहणमारणादिकष्टेनपीडयतिसशीघ्रमेवजनपदवैरात्प्रकृतिकोपाधर्मैराजाराज्याज्जीविताच्चपुत्रादिसहितोभ्रश्यते १११ शरीरकर्षणेति यथाप्राणभृतामाहारनिरोधादिनाशरीरशोषणात्प्राणाःक्षीयंतेएवंराज्ञामपिराष्ट्रपीडनात्प्रकृतिकोपादिनाप्राणाविनश्यंतितस्मात्स्वशरीरवद्राज्ञाराष्ट्रंरक्षणीयमित्युक्तम् ११२ ५

राष्ट्रस्येत्यादि राष्ट्रस्यरक्षणेचवक्ष्यमाणमिममुपायमनुतिष्ठेत् यस्मात्संरक्षितराष्ट्रोराजाअनायासेनवर्द्धते ११३ द्वयोरिति
द्वयोर्ग्रामयोर्मध्येत्रयाणांवाग्रामाणांपञ्चानांवाशतानांगुल्मंरक्षितृपुरुषसमूहंसत्यप्रधानपुरुषाधिष्ठितंराष्ट्रस्यसंग्रहंरक्षास्थानं-
कुर्यात् अस्यलाघवगौरवापेक्षश्चोक्तविकल्पः ११४ ग्रामस्येति एकग्रामदशग्रामाद्यधिपतीन्कुर्यात् ११५ ग्रामइति विंश
तीशाइति ग्रामाधिपतिश्चौरादिदोषान्ग्रामेसंजातान् आत्मनाप्रतिकर्त्तुमक्षमो अनु त्कृष्टतयास्वयंदशग्रामाधिपतयेकथयेत्ए
वंदशग्रामपतयोविंशतिग्रामस्वाम्यादिभ्यः कथयेयुः तथाचसतिसम्यक्चोरादिकंटकोद्धारोभवति ११६ ११७ यानीति एक
ग्रामाधिकृतस्यवृत्तिमाह यान्यन्नपानेंधनादीनिग्रामवासिभिःप्रत्यहंराज्ञेदेयानिनत्वब्दकरंधान्यानामष्टमोभागइत्यादिकंतानि

राष्ट्रस्यसंग्रहेनित्यंविधानमिदमाचरेत् सुसंगृहीतराष्ट्रोहिपार्थिवःसुखमेधते ११३ द्वयोस्त्रयाणां
पञ्चानामध्येगुल्ममधिष्ठितम् तथाग्रामशतानांचकुर्याद्राष्ट्रस्यसंग्रहम् ११४ ग्रामस्याधिपतिंकुर्या
द्दशग्रामपतिंतथा विंशतीशंशतेशंचसहस्रपतिमेवच ११५ ग्रामदोषान्समुत्पन्नान्ग्रामिकःशन
कैःस्वयम् शंसेद्ग्रामदशेशायदशेशोविंशतीशिनम् ११६ विंशतीशस्तुतत्सर्वंशतेशायनिवेदयेत् श
सेद्ग्रामशतेशस्तुसहस्रपतयेस्वयम् ११७ यानिराजप्रदेयानिप्रत्यहंग्रामवासिभिः अन्नपानेंधना
दीनिग्रामिकस्तान्यवाप्नुयात् ११८ दशीकुलंतुभुंजीतविंशीपञ्चकुलानिच ग्रामंग्रामशताध्यक्षःस
हस्राधिपतिःपुरम् ११९ तेषांग्राम्याणिकार्याणिपृथक्कार्याणिचैवहि राज्ञोन्यःसचिवःस्निग्धस्तानिप
श्येदतन्द्रितः १२०

ग्रामाधिपतिर्दैनंदिनंगृह्णीयात् ११८ दशीकुलमिति अष्टागवंधर्महलंषड्गवंजीवितार्थिनाम् चतुर्गवंगृ
हस्थानांत्रिगवंब्रह्मघातिनामितिहारीतस्मरणात् षड्गवंमध्यमंहलमिति तथाविधहलद्वयेनयावतीभूमिर्वाह्यतेतत्कुलमितिवदंति त
द्दशग्रामाधिपतिर्वृत्त्यर्थंभुंजीतएवंविंशत्यधिपतिःपंचकुलानिशताधिपतिर्मध्यमंग्रामंसहस्राधिपतिर्मध्यमंपुरम् ११९ तेषामित्या
दि तेषांग्रामनिवासिप्रभृतीनांपरस्परविप्रतिपत्तौयानिग्रामभवानिकार्याणिकृताकृतानिचपृथक्कार्याणितान्यन्योराज्ञोत्यिलकृत

तन्नियुक्तोऽनलसः कुर्वीत १२० नगरेति प्रतिनगरमेकैकमुच्चैःस्थानंकुलादिनामहान्तंप्रधानरूपंघोररूपंहस्त्यश्वादिसामग्र्या
भयजनकन्नक्षत्रादिमध्ये भार्गवादिग्रहमिव तेजस्विनं कार्यद्रष्टारन्नगराधिपतिंकुर्यात् १२१ सइत्यादि सनगराधिकृतस्तान्स
र्वान्ग्रामाधिपत्यादीन् असतिप्रयोजनेसर्वदास्वयंसबलेनानुगच्छेत्तेषांचनगराधिकृतपर्यंतानांसर्वेषामेवयद्राष्ट्रेस्वचेष्टितंतत्तद्विष-
यनियुक्तैश्चरैः सम्यक्प्रजाः परिणयेदवगच्छेत् १२२ राज्ञोहीत्यादि यस्मात्येराज्ञोरक्षाधिकृतास्तेबाहुल्येनपरस्वग्रहणशीला
वंचकाश्चभवंति तस्मात्तेभ्य इमाःस्वात्मीयाःप्रजाराजारक्षेत् १२३ यइत्यादि येरक्षाधिकृताःकार्यार्थिभ्यएववाकुछलादिकमुद्भा
व्यलोभादशास्त्रीयधनग्रहणपापबुद्धयःकुर्वीततेषांसर्वस्वंराजागृहीत्वादेशान्निःसारणंकुर्यात् १२४ राजकर्मेत्यादि राजोपयु

नगरेनगरेचैकंकुर्यात्सर्वार्थचिंतकम् उच्चैःस्थानंघोररूपन्नक्षत्राणामिवग्रहम् १२१ सतानतुप
रिक्रामेत्सर्वानेवसदास्वयम् तेषांवृत्तंपरिणयेत्सम्यग्राष्ट्रेषुतच्चरैः १२२ राज्ञोहिरक्षाधिकृताःपरस्वादा
यिनःशठाः भृत्याभवंतिप्रायेणतेभ्योरक्षेदिमाःप्रजाः १२३ येकार्यिकेभ्योऽर्थमेवगृण्हीयुःपापचेतसः
तेषांसर्वस्वमादायराजाकुर्यात्प्रवासनम् १२४ राजाकर्मसुयुक्तानांस्त्रीणांप्रेष्यजनस्यच प्रत्यहंकल्प
येद्वृत्तिंस्थानंकर्मानुरूपतः १२५ पणोदेयोऽवकृष्टस्यषडुत्कृष्टस्यवेतनम् षाण्मासिकस्तथाच्छादो
धान्यद्रोणस्तुमासिकः १२६

क्तकर्मनियुक्तानांस्त्रीणांदास्यादीनांकर्मकरजनस्यचउत्कृष्टमध्यमापकृष्टस्थानयोग्या
नुरूपेणप्रत्यहंकर्मानुरूपेणवृत्तिंकुर्यात्तामेवदर्शयति १२५ पणइति अवकृष्टस्यगृहादिसंमार्जकोदकवाहादेः कर्मकरस्यव-
क्ष्यमाणलक्षणःपणोभृतिरूपःप्रत्यहंदातव्यः षाण्मासिकश्चाच्छादोवस्त्रयुगंदातव्यम् अष्टमुष्टिर्भवेत्किंचित्किंचिदष्टौचपुष्क
लम् पुष्कलानितुचत्वारिआढकःपरिकीर्तितः चतुराढकोभवेद्द्रोणइतिगणनयाधान्यद्रोणश्चप्रतिमासंदेयः उत्कृष्टस्यतुभृति
रूपाश्चषट्पणादेयाः अनयैवकल्पनयाषाण्मासिकानिषड्वस्त्रयुगानिप्रतिमासंषाण्मास्याद्रोणादेयाः अनयैवातिदिशामध्यम-
स्यपणत्रयंभृतिरूपंदातव्यंषाण्मासिकंचवस्त्रयुगत्रयंमासिकंचधान्यद्रोणत्रयंदेयम् १२६ ७ ७ ७

क्रयविक्रयमित्यादि कियत्तामूल्येनक्रीतमिदवस्त्रंलवणादिद्रव्यंविक्रीयमाणंचात्रकियल्लभ्यतेकियद्दूरादानीतंकिमस्यवणिजो
भक्तव्ययेनशाकसूपादिनापरिव्ययेनलग्नंकिमस्यारण्यादौचौरादिभ्योरक्षारूपेणक्षेमप्रतिविधानेनगतंकोऽस्यइदानींलाभयोग
इत्येतदवेक्ष्यवणिजःकरान्दापयेत् १२७ यथेति यथाराजाऽवेक्षणादिकर्मणःफलेनयथाचवार्षिकवणिगादयःकृषिवाणिज्या
दिकर्मणांफलेनसंबध्यते तथानिरूप्यराजासर्वदाराष्ट्रेकरान्गृण्हीयात् अत्रदृष्टांतमाह १२८ यथेत्यादि यथाजलौकोवत्स
भ्रमराःस्तोकस्तोकानिरक्तक्षीरमधूनिअदंत्येवंराज्ञामूलधनमनुछिंदताऽल्पोऽल्पोराष्ट्रादब्दिकःकरोग्राह्यःतमाह १२९ पंचा
शद्भागइत्यादि मूलादधिकयोःपशुहिरण्ययोःपंचाशद्भागोराज्ञाग्रहीतव्यःएवंधान्यानांषष्ठोऽष्टमोद्वादशोवाभागोराज्ञाग्राह्य

क्रयविक्रयमध्वानंभक्तंचसपरिव्ययम् योगक्षेमंचसंप्रेक्ष्यवणिजोदापयेत्करान् १२७ यथाफलेनयु
ज्येतराजाकर्त्ताचकर्मणाम् तथावेक्ष्यनृपोराष्ट्रेकल्पयेत्सततंकरान् १२८ यथाल्पाल्पमदंत्याद्यंवा
र्योकोवत्सषट्पदाः तथाल्पाल्पोग्रहीतव्योराष्ट्राद्राज्ञाब्दिकःकरः १२९ पंचाशद्भागआदेयोराज्ञाप
शुहिरण्ययोः धान्यानामष्टमोभागःषष्ठोद्वादशएववा १३० आददीताथषड्भागंद्रुमांसमधुसर्पिषां
गंधौषधिरसानांचपुष्पमूलफलस्यच १३१ पत्रशाकतृणानांचचर्मणांवैदलस्यच मृन्मयानांचभांडा
नांसर्वस्याश्ममयस्यच १३२ म्रियमाणोप्याददीतनराजाश्रोत्रियात्करम् नचक्षुधाऽस्यसंसीदेच्छ्रो
त्रियोविषयेवसन् १३३ यस्यराज्ञस्तुविषयेश्रोत्रियःसीदतिक्षुधा तस्यापितत्क्षुधाराष्ट्रमचिरेणै
वसीदति १३४

भूम्युत्कर्षापकर्षापेक्षयाकर्षणादिक्लेशलाघवगौरवापेक्षश्चायंबहल्पग्रहणविकल्पः १३० आददीते
त्यादि पत्रशाकतृणानामित्यादि द्रुमशब्दोत्रवृक्षवाचकः वृक्षादीनांसप्तदशानांअश्ममयानांषष्ठोभागोलाभाद्ग्रहीतव्यः१३१
१३२ म्रियमाणेति क्षीणधनोपिराजाश्रोत्रियब्राह्मणात्करंनगृण्हीयात् नचतदीयदेशेवसन्श्रोत्रियःक्षुधाक्षयाअवसा
दंगच्छेत् १३३ यस्येत्यादि यस्यराज्ञोदेशेश्रोत्रियःक्षुधावसन्नोभवतितस्यराष्ट्रमपिदुर्भिक्षादिभिःक्षुधाशीघ्रमवसादं

च्छतियतएवमतः १३४ कृतेति शास्त्राज्ञानानुष्ठानेज्ञात्वाअस्यतदनुरूपांधर्मादनपेतांजीविकामुपकल्पयेत्चौरादिभ्यश्चैनं-
औरसंपुत्रमिवपितारक्षेत्यस्मात् १३५ संरक्ष्यमाणइत्यादि सचश्रोत्रियोराज्ञासम्यग्रक्षमाणोयंधर्मप्रत्यहंकरोतितेनराज्ञ-
आयुर्द्रव्यंराष्ट्रंणिवर्द्धते १३६ यदिति राजास्वदेशेशाकपर्णादिस्वल्पवस्तुक्रयविक्रयादिनाजीवंतंनिकृष्टजनंस्वल्पकराख्यंवर्षे
णदापयेत् १३७ कारुकानिति कारुकान्सूपकारादीन्शिल्पिभ्यईषदुत्कृष्टान्शिल्पिनश्चलोहकारादीन्शूद्रांश्चदेहक्ले-
शोपजीविनोभारिकादीन्मासिमास्येकंदिनंकर्मकारयेत् १३८ नोच्छिंद्यादिति प्रजास्नेहात्करशुल्कादेरग्रहणमात्मनो
मूलच्छेदः अतिभद्गुरकरादिग्रहणंपरेषांमूलोच्छेदःएतदुभयंनकुर्यात्आत्मनोमूलमुच्छिद्यकोशक्षयादात्मानंपीडयेत्पूर्वर्द्धो

कृतवृत्तेविदित्वास्यवृत्तिंधर्म्यांप्रकल्पयेत् संरक्षेत्सर्वतश्चैनंपित्रापुत्रमिवौरसम् १३५ संरक्ष्यमा-
णोराज्ञायंकुरुतेधर्ममन्वहम् तेनायुर्वर्द्धतेराज्ञोद्रविणंराष्ट्रमेवच १३६ यत्किंचिदपिवर्षस्यदापयेत्क
रसंज्ञितम् व्यवहारेणजीवंतंराजाराष्ट्रेपृथग्जनम् १३७ कारुकान्शिल्पिनश्चैवशूद्रांश्चात्मोपजीवि
नः एकैकंकारयेत्कर्ममासिमासिमहीपतिः १३८ नोच्छिंद्यादात्मनोमूलंपरेषांचातितृष्णया उच्छिंद
न्ह्यात्मनोमूलमात्मानंतांश्चपीडयेत् १३९ तीक्ष्णश्चैवमृदुश्चस्यात्कार्यंवीक्ष्यमहीपतिः तीक्ष्णश्चै
वमृदुश्चैवराजाभवतिसंमतः १४० अमात्यमुख्यंधर्मज्ञंप्राज्ञंदांतंकुलोद्गतम् स्थापयेदासनेतस्मि
न्खिन्नःकार्येक्षणेनृणाम् १४१ एवंसर्वंविधायेदमितिकर्त्तव्यमात्मनः युक्तश्चैवाप्रमत्तश्चपरिरक्षे
दिमाःप्रजाः १४२

त्परेषांचेत्यपिसंबध्यते परेषांमूलमुच्छिद्यतांश्चपीडयेत् १३९ तीक्ष्णेति विशेषमवगम्यक्वचित्कार्ये-
तीक्ष्णःक्वचिन्मृदुश्चभवेत् नत्वेकरूपमालंबेत्यस्मादुक्तरूपोराजासर्वेषामभिमतोभवति १४० अमात्येति स्वयंकार्यदर्शनेखिन्नः
श्रेष्ठामात्यंधर्मविदंप्राज्ञंजितेंद्रियंकुलीनंतस्मिन्कार्यदर्शनस्थानेनियुंजीत १४१ एवमित्यादि एवमुक्तप्रकारेणसर्वमात्मनःकार्य
जातंसंपाद्योद्युक्तःप्रमादरहितआत्मीयाःप्रजारक्षेत् १४२ विक्रोशंतिमिति यस्यराज्ञोअमात्यादिसहितस्यपश्यतएवराष्ट्राद्राक्रोशं

सः प्रजाः तस्करादिभिरपिह्रियंते स मृत एव न तु जीवति जीवनकार्याभावात् जीवनमपि तस्य मरणमेवेत्यर्थः तस्मादप्रमत्तः प्रजार-
क्षेदिति पूर्वोक्तशेषं तदेव द्रढयति १४३ क्षत्रियेति धर्मांतरेभ्यः श्रेष्ठः क्षत्रियस्य प्रजारक्षणमेव प्रकृष्टो धर्मः यस्माद्यथोक्तलक्षण
फलकरादिभोक्ता राजा धर्मेण संबध्यते १४४ उत्थायेति समूपः रात्रेः पश्चिमयाम उत्थाय कृतमूत्रपुरीषोत्सर्गादिशौचोऽनन्यमनाः
कृताग्निहोत्रावसथ्यहोमो ब्राह्मणान् पूजयित्वा वास्तुलक्षणाद्युपेतां सभाममात्यादिदर्शनगृहं प्रविशेत् १४५ तत्रेति तस्यां सभायां
स्थितो दर्शनार्थमागताः प्रजाः सर्वाः संभाषणदर्शनादिभिः प्रतिनंद्य प्रस्थापयेत् तांश्च प्रस्थाप्य मंत्रिभिः सह संधिविग्रहादि चिंतयेत्
१४६ गिरिपृष्ठमिति पर्वतपृष्ठमारुह्य निर्जनवनगृहस्थितो अरण्यदेशे वा विविक्ते मंत्रभेदकारिभिरनुपलक्षितः कर्मणामारंभो-

विक्रोशंत्यो यस्य राष्ट्राद्ध्रियंते दस्युभिः प्रजाः संपश्यतः सभृत्यस्य मृतः स न तु जीवति १४३ क्षत्रियस्य
परो धर्मः प्रजानामेव पालनम् निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते १४४ उत्थाय पश्चिमे यामे कृ
तशौचः समाहितः हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् १४५ तत्र स्थितः प्रजाः सर्वाः प्रति
नंद्य विसर्जयेत् विसृज्य च प्रजाः सर्वा मंत्रयेत्सह मंत्रिभिः १४६ गिरिपृष्ठं समारुह्य प्रासादं वा रहोग
तः अरण्ये निःशलाके वा मंत्रयेदविभावितः १४७ यस्य मंत्रं न जानंति समागम्य पृथग्जनाः स कृ-
त्स्नां पृथिवीं भुंक्ते कोशहीनोऽपि पार्थिवः १४८ जडमूकांधबधिरांस्तिर्यग्योनान्वयोतिगान् स्त्रीम्ले
च्छव्याधितव्यंगान्मंत्रकालेऽपसारयेत् १४९ भिंदंत्यवमता मंत्रं तिर्यग्योनास्तथैव च स्त्रियश्चै
व विशेषेण तस्मात्तत्रादृतो भवेत् १५०

पायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिरित्ये
वं पंचांगं मंत्रं चिंतयेत् १४७ यस्येति यस्य राज्ञो मंत्रिभ्यः पृथगन्ये जना मिलित्वास्य मंत्रं न जानंति स क्षीणकोशोऽपि सर्वां पृथि
वीं भुनक्ति १४८ जडांधबधिरेति बुद्धिवाक्चक्षुःश्रोत्रविकलान् तिर्यग्योनिभवांश्च शुकसारिकादीन् अतिवृद्धस्त्रीम्लेच्छरो
ग्यंगहीनांश्च मंत्रसमये अपसारयेत् यस्मात् १४९ भिंदंतीत्यादि एते जडादयोऽपि प्राचीनदुष्कृतवशेन प्राप्तजडादिभावा अव

र्भिकतयैवावमानितामंत्रभेदंकुर्वंतितथाशकादयोऽतिवृद्धाश्चस्त्रियश्चविशेषेणास्थिरबुद्धितयामंत्रंभिंदंतितस्मात्तदपसारणे यत्नवान्स्यात् १५० मध्यंदिनेति दिनमध्येरात्रिमध्येवाविगतचित्तखेदः शरीरक्लेशरहितश्चमंत्रिभिःसहएकाकीवाधर्मार्थकामा नंसंतुष्टातुंचिंतयेत् १५१ परस्परेति तेषांचधर्मार्थकामानांप्रायिकविरोधवतांविरोधपरिहारेणार्जनोपायंचिंतयेत् दुहितॄणांचदा नंस्वकार्यसिद्ध्यर्थंनिरूपयेत् कुमाराणांचपुत्राणांविनयाधाननीतिशिक्षार्थंरक्षणंचिंतयेत् १५२ दूतेति दूतानांसंगुप्तार्थले खहारित्वादिनापरराष्ट्रप्रस्थानंचिंतयेत् तथाप्रारब्धकार्यशेषंसमापयितुंचिंतयेत्स्त्रीणांचातिविषमचेष्टितत्वात् तथाहिश- स्त्रेणवेणीविनिगूहितेनविदूरथंवैमहिषीजघान विषप्रदिग्धेनचनूपुरेणदेवीविरक्ताकिलकाशिराजमित्याद्यवगम्यात्मरक्षार्थं चांतःपुरस्त्रीणांचेष्टितंसखीदास्यादिनानिरूपयेत् चराणांचप्रतिराजादिषुनियुक्तानांचरांतरैश्चेष्टितमवधारयेत् १५३ कृ-

मध्यंदिनेऽर्द्धरात्रेवाविश्रांतोविगतक्लमः चिंतयेद्धर्मकामार्थान्सार्द्धंतैरेकएववा १५१ परस्परवि रुद्धानांतेषांचसमुपार्ज्जनम् कन्यानांसंप्रदानंचकुमाराणांचरक्षणम् १५२ दूतसंप्रेषणंचैवका र्यशेषंतथैवच अंतःपुरप्रचारंचप्रणिधीनांचचेष्टितम् १५३ कृत्स्नंचाष्टविधंकर्मपंचवर्गंचतत्त्व तः

स्नमिति अष्टविधंकर्मसमग्रंचिंतयेत्तच्चोशनसोक्तम् आदानेचविसर्गेचतथाप्रेषनिषेधयोः पंचमेचार्थवचनेव्य वहारस्यचेक्षणे दंडशुद्ध्योःसदायुक्तस्तेनाष्टगतिकोनृपः अष्टकर्मादिवंयातिराजाशक्राभिपूजितः तत्रादानंकरादीनांविसर्गो भृत्यादिभ्योधनदानंप्रेषोमात्यादीनांदृष्टादृष्टानुष्ठानेननिषेधोदृष्टादृष्टविरुद्धक्रियासुअर्थवचनंकार्यसंदेहेराजाज्ञयैवतत्रनियमा त् व्यवहारईक्षणंप्रजानामृणादिविप्रतिपत्तौदंडः पराजितानांशास्त्रोक्तधनग्रहणंशुद्धिः पापेकर्मणिजातेतत्रप्रायश्चित्तसंपादन म् मेधातिथिस्तुअकृतारंभःकृतानुष्ठानमनुष्ठितविशेषणंकर्मफलसंग्रहः तथासामदानदंडभेदाएतदष्टविधंकर्मअथवावणि क्पथउदकसेतुबंधनंदुर्गकरणंकृतस्यसंस्कारनिर्णयः हस्तिबंधनंखनिखननंशून्यनिवेशनंदारुवनच्छेदनंचेत्याहतथाकापटि कोदास्थितगृहपतिवैदिकतापसव्यंजनात्मकंपंचविधंचारवर्गंपंचवर्गशब्दवाच्यंतत्त्वतश्चिंतयेत् तत्रपरमर्मज्ञःप्रगल्भश्छात्रः

कपटव्यवहारित्वात्कापटिकस्तंवृत्त्यर्थिनमर्थमानाभ्यामुपगृह्यरहसिराजाब्रूयात् यस्यदुर्वृत्तंपश्यसितत्तदानीमेवमयिवक्तव्यमितिप्र
भज्यारूढपतितउदास्थितः तंलोकेषुविदितदोषंप्रज्ञाशौचयुक्तंवृत्त्यर्थिनंसत्काररहसिराजापूर्ववद्ब्रूयात् बहूनसत्तिकमठेस्थापयेत्सचुर
सस्योत्पत्तिकंभूम्यंतरंचतद्दत्त्वार्थमुपकल्पयेत्सचान्येषामपिप्रव्रजितानांराजचारकर्मकारिणांग्रासाच्छादनादिकंदद्यात् कर्षकःक्षीण
वृत्तिःप्रज्ञाशौचयुक्तोगृहपतिःव्यंजनस्तमपिपूर्ववदुक्तास्वभूमौकृषिकर्मकारयेत् वाणिजकः क्षीणवृत्तिःवैदेहिकव्यंजनस्तंपूर्वव
धनमानाभ्यामात्मीकृत्यवाणिज्यंकारयेत् मुंडोजटिलोवावृत्तिकामस्तापसव्यंजकःसोपिक्वचिदाश्रमेवसन्बहुमुंडजटिलांतरेकपट-
शिष्यगणवृतोगुप्तराजोपकल्पितवृत्तिःतापस्यंकुर्यात् मासद्विमासांतरितंप्रकाशंबदरादिमुष्टिमश्नीयात् रहसिचराजोपकल्पितंआ
हारंकल्पयेत् शिष्याश्चास्यातीतानागतज्ञानादिकंख्यापयेयुः तेनबहुलोकवेष्टनमासाद्यसर्वेषांविश्वसनीयत्वात्सर्वकार्यमकार्यंचपृष्ठं

अनुरागापरागौचप्रचारंमंडलस्यच १५४ मध्यमस्यप्रचारंचविजिगीषोश्चचेष्टितम् उदासीनप्रचारंच
शत्रोश्चैवप्रयत्नतः १५५ एताःप्रकृतयोमूलंमंडलस्यसमासतः अष्टौचान्याःसमाख्याताद्वादशैवतुताः
स्मृताः १५६

तिअन्यस्यकुक्रियादिकंकथयंस्तेचंरूपंपंचवर्गंयथावच्चिंतयेत् एवंपंचवर्गप्रकल्पनेनैवपंचवर्गद्वारेणप्रतिराज
स्यातीयानांचामात्यादीनांचअनुरागविरागौज्ञात्वातदनुरूपंचिंतयेत् वक्ष्यमाणस्यराजमंडलस्यप्रचारंकःसंध्यर्थीकोवाविग्रहार्थी
त्यादिकंचिंतयेत् तंचज्ञात्वातदनुगुणंचिंतयेत् १५४ मध्यमंचेति अरिविजिगीषोर्भूम्यनंतरःसंहतयोरनुग्रहसमर्थो
संहतयोःसमर्थःसमध्यमः तस्यप्रचारंचिंतयेत् तथाप्रज्ञोत्साहगुणप्रकृतिसमर्थोविजिगीषुस्तस्यचेष्टितंचिंतयेत् तथाविजि
मध्यमानांसंहतानामनुग्रहेसमर्थोनिग्रहेचासंहतानांसमर्थःउदासीनः तत्रप्रचारंचिंतयेत् शत्रोश्चत्रिविधस्यापिसहजस्यप्रकृत्रि
मस्यभूम्यनंतरस्यचपूर्वापेक्षयाप्रयत्नतःप्रचारंचिंतयेत् १५५ एताइत्यादि एतामध्यमाद्याश्चतस्रःप्रकृतयःसंक्षेपेणमंडलमू
अपरासामभिधास्यमानप्रकृतीनामाद्याःप्रस्तुतामूलमित्युच्यते अन्याश्चाष्टौसमाख्याताः तद्यथाअग्रतोऽरिभूमीनांमित्रमरिमित्र
मित्रमित्रंअरिमित्रमित्रंचेति एवंचतस्रःप्रकृतयोभवंतिपश्चाच्चपार्ष्णिग्राहआक्रंदःपार्ष्णिग्राहासारःआक्रंदासारइतिचतस्रःएव

मध्येप्रकृतयोभवंतिपूर्वोक्ताभिश्चमध्यमारिविजिगीषूदासीनशत्रुरूपाभिः मूलप्रकृतिभिःसहद्वादशैताःप्रकृतयःस्मृताः १५६
अमात्येति आसांमूलप्रकृतीनांचतसृणांअष्टानांशाखाप्रकृतीनांउक्तानांएकैकस्याः प्रकृतेः अमात्यदेशदुर्गकोशदंडाख्याःपंच-
द्रव्यप्रकृतयोभवंतिएताश्चपंचद्वादशानांप्रत्येकंभवंत्योद्वादशगुणजाताः षष्ठिरेवद्रव्यप्रकृतयोभवंतितथामूलप्रकृतिभिश्चतसृभिः
शाखाप्रकृतिभिश्चाष्टाभिःसहसंक्षेपतोद्विसप्ततिप्रकृतयोमुनिभिःकथिताः १५७ अनंतरमिति विजिगीषोर्नृपस्यांतरितंच
तुर्दिशमप्यरिप्रकृतिंविजानीयात् तथातत्सेविनमपि अरिमेवविद्यात् अरेरनंतरंविजिगीषोर्नृपस्यैकांतरंमित्रप्रकृतिंविद्यात्त
योश्चारिमित्रयोःपरंविजिगीषोरुदासीनप्रकृतिंविद्यात् आसामेवप्रकृतीनामग्रपश्चाद्भावभेदेनव्यपदेशभेदः अत्राग्रवर्त्तिनोअरि
व्यपदेशएवपश्चाद्वर्त्तिनस्तस्मिन्नपिपार्ष्णिग्राहव्यपदेशः १५८ तानिति तान्सर्वान्नृपतीन्सामभेददानदंडैरुपायैर्यथासंभवंव्यस्तैः
समस्तैर्वशीकुर्यात् अथवापौरुषेणदंडेनैवकेवलेननयेनसाम्नैववाकेवलेनात्मवशान्कुर्यात्तथाचोक्तम् सामदंडौप्रशंसंतिनित्यं

अमात्यराष्ट्रदुर्गार्थदंडाख्याःपंचचापराः प्रत्येकंकथितास्त्वेताःसंक्षेपेणद्विसप्ततिः १५७
अनंतरमरिंविद्यादरिसेविनमेवच अरेरनंतरंमित्रमुदासीनंतयोःपरम् १५८ तान्सर्वानभिसंद
ध्यात्सामादिभिरुपक्रमैः व्यस्तैश्चैवसमस्तैश्चपौरुषेणनयेनच १५९ संधिंचविग्रहंचैवयानमास
नमेवच द्वैधीभावंसंश्रयंचषड्गुणांश्चिंतयेत्सदा १६० आसनंचैवयानंचसंधिविग्रहमेवच कार्य्यं
वीक्ष्यप्रयुंजीतद्वैधंसंश्रयमेवच १६१ संधिंतुद्विविधंविद्याद्राजाविग्रहमेवच उभेयानासनेचैवद्वि
विधःसंश्रयःस्मृतः १६२

राष्ट्रभिवृद्धये- १५९ संधिमिति तत्रोभयानुग्रहार्थंहस्त्यश्वरथहिरण्यादिनिबंधनेनावाभ्याम-
न्योन्यस्योपकर्त्तव्यमितिनियमबंधःसंधिःवैरंविग्रहाचरणाद्याधिक्येनयानंशत्रुप्रतिगमनमुपेक्षणमासनंस्वार्थसिद्धयेबलस्यद्वि-
धाकरणंद्वैधीभावःशत्रुपीडितस्यप्रबलतरराजांतराश्रयणंसंश्रयः एतान्गुणानुपकारकान्सर्वदाचिंतयेत्षड्गुणाश्रयणेसत्यात्मन
उपचयःपरस्यापचयःतंगुणमाश्रयेत् १६० आसनमिति संध्यादिगुणानांन्नैरपेक्ष्येणानुष्ठानमनंतरमुक्तंतदुचितानुष्ठानार्थोय-
मारंभः आत्मसमृद्धिपरहान्यादिकंकार्यंवीक्ष्यसंधायासनंविगृह्यवायानंद्वैधीभावसंश्रयेचकेनचित्संधिंकेनचित्विग्रहंइत्यादिक
मनुतिष्ठेत् १६१ संधिंत्विति संध्यादीन्षडेवगुणान्द्विप्रकारान्जानीयात्इत्यविवक्षार्थम् १६२ ७- ७ ७

समानेति तात्कालिकफललाभार्थमुत्तरकालीनफललाभार्थंवायत्रराजांतरेणसहान्यंप्रतियानादिकर्मक्रियतेससमानयान कर्मासंधिः यःपुनस्त्वमत्रयाहि अहमत्रयास्यामिइतिसांप्रतिकोत्तरकालीनफलार्थितयैवक्रियतेसोऽसमानयानकर्मेत्येवंद्विःप्रकारः संधिर्ज्ञातव्यः १६३ स्वयमित्यादि शत्रुजयरूपप्रयोजनार्थंशत्रोर्व्यसनादिकंआकलय्यवक्ष्यमाणमार्गशीर्षादिकालादन्यदायथोक्तकालएववास्वयंकृतइतिएकोविग्रहः अपकृतमपकारः मित्रस्यापकारेराजांतरेणकृतेमित्ररक्षार्थमपरोविग्रहइत्येवं द्विविधोविग्रहः गोविंदराजेनतुमित्रेणचैवापकृतइतिपठितंव्याख्यातंचयः परस्यशत्रुःसविजिगीषोर्मित्रंतेनापकारेक्रियमाणेव्यसनिनिराजावितितस्माल्लिखितपाठार्थौवृद्धैर्गोविंदराजतः मेधातिथिप्रभृतिभिर्लिखितोस्त्रीकृतोमया १६४ एकाकिनइत्यादि आत्ययिकंकार्यंशत्रोर्व्यसनादिकंतस्मिन् अकस्माज्जातेशक्तस्यैकाकिनोयानमशक्तस्यमित्रसहितस्यइत्येवंयानंद्विविध

समानयानकर्माचविपरीतस्तथैवच तदात्वायतिसंयुक्तःसंधिर्ज्ञेयोद्विलक्षणः १६३ स्वयंकृतश्चकार्यार्थमकालेकालएववा मित्रस्यचैवापकृतेद्विविधोविग्रहःस्मृतः १६४ एकाकिनश्चात्ययिकेकार्येप्राप्तेयदृच्छया संहतस्यचमित्रेणद्विविधंयानमुच्यते १६५ क्षीणस्यचैवक्रमशोदैवात्पूर्वकृतेनवा मित्रस्यचानुरोधेनद्विविधंस्मृतमासनम् १६६ बलस्यस्वामिनश्चैवस्थितिःकार्यार्थसिद्धये द्विविधंकीर्त्यतेद्वैधंषाड्गुण्यगुणवेदिभिः १६७ अर्थसंपादनार्थंचपीड्यमानस्यशत्रुभिः साधुषुव्यपदेशार्थंद्विविधःसंश्रयःस्मृतः १६८

मभिधीयते १६५ क्षीणस्येति मान्जन्मार्जितेनदुष्कृतेनऐहिकेनवापूर्वकृतेनक्रमशःक्षीणहस्त्यश्वकोशादिकस्यसमृद्धस्यापिवामित्रानुरोधेनतत्कार्यरक्षार्थमित्येवंद्विविधमासनंमुनिभिःस्मृतम् १६६ बलस्येति साध्यस्वप्रयोजनसिध्यर्थंबलस्यहस्त्यश्वादेःसेनाधिपत्याधिष्ठितस्यएकत्रशत्रुनृपोपद्रववारणार्थमवस्थानमन्यत्रदुर्गदेशेराज्ञःकतिपयबलाधिष्ठितस्यावस्थानमेवंसंध्यादिगुणषट्कोपकारज्ञैःद्विविधंद्वैधंकीर्त्यते १६७ अर्थेति शत्रुभिःपीड्यमानस्यशत्रुपीडानिवृत्त्याख्यप्रयोजनसिध्यर्थमसत्यामपिवातत्कालेपीडायांभाविशत्रुपीडनशंकयाअमुकमयंमहाबलंनृपतिमाश्रि

तद्रतिसर्वत्रव्यपदेशोत्पादनार्थंबलवंतसुपाश्रयणमेवांद्विविध संश्रयःस्मृतः १६८ यदेत्यादि यदोत्तरकालेनिश्चितमात्मनआधिक्यं
जानीयात्तदातत्काले अल्पधनाद्युपक्षयः तदातल्पसंगीकृत्यापिसंधिमाश्रयेत् १६९ यदेति यदामात्यादिकाःसर्वाःप्रकृतीःदानसंमा
नाद्यैरतीवतुष्टामन्येत आत्मानंचहस्त्यश्वकोशाद्यैःशक्तित्रयेणउपचितंतदाविग्रहमाश्रयेत् १७० यदेत्यादि यदात्मीयममात्यादिसैन्यं
हर्षयुक्तंधनादिनापुष्टंतत्वतोजानीयात्शत्रोश्चामात्यादिबलंविपरीतंतदातलसीकृत्ययायात् १७१ यदेत्यादि यदापुनर्वाहनेनहस्त्य
श्वादिनाबलेनचामात्यादिविपत्यादिपरिक्षीणोभवेत्तदासामोपदाभदानादिनाशत्रूनुपसांत्वयन्प्रयत्नेनासनमाश्रयेत् १७२ मन्ये
तेति यदायदाराजासर्वप्रकारेणबलीयांसमशक्यसंधानंचशत्रुंबुध्येततदाकतिचिद्बलसहितःस्वयंदुर्गमाश्रयेत् बलैकदेशेनचशत्रु

यदावगच्छेदायत्यामाधिक्यंध्रुवमात्मनः तदात्वेचाल्पिकांपीडांतदासंधिंसमाश्रयेत् १६९ यदाप्रकृ
ष्टामन्येतसर्वास्तुप्रकृतीर्भृशाम् अत्युच्छ्रितंतथात्मानंतदाकुर्वीतविग्रहम् १७० यदामन्येतभावेन
हृष्टंपुष्टंबलंस्वकम् परस्यविपरीतंचतदायायाद्रिपुंप्रति १७१ यदातुस्यात्परिक्षीणोवाहनेनबलेनच
तदासीतप्रयत्नेनशनकैःसांत्वयन्नरीन् १७२ मन्यतारियदाराजासर्वथाबलवत्तरम् तदाद्विधाबलं
कृत्वासाधयेत्कार्यमात्मनः १७३ यदापरबलानांतुगमनीयतमोभवेत् तदातुसंश्रयेत्क्षिप्रंधार्मिकंब
लिनंनृपम् १७४ निग्रहंप्रकृतीनांचकुर्याद्योरिबलस्यच उपसेवेततन्नित्यंसर्वयत्नैर्गुरुंयथा १७५
यदितत्रापिसंपश्येद्दोषंसंश्रयकारितम् सुयुद्धमेवतत्रापिनिर्विशंकःसमाचरेत् १७६

विरोधमाचरेत् एवंद्विधाबलं
कृत्वामित्रसंग्रहादिकंस्वकार्यंसाधयेत् १७३ यदेति यदातुसैन्यानाममात्यादिप्रकृतिदोषादिनातिशयेनग्राह्योभवतिबलंद्वैधविधाप्दु
र्गाश्रयणेनापिनात्मरक्षाक्षमः तदाशीघ्रमेवधार्मिकंबलवंतंचराजानमाश्रयेत्कीदृशंतंबलवंतमित्याह १७४ निग्रहमिति यासांदो
षेणासौगमनीयतमोजातस्तासांप्रकृतीनांयस्माच्चशत्रुबलादस्यभयमुत्पन्नंतयोर्द्वयोरपियःसंश्रितोनिग्रहक्षमस्तंनृपंसर्वयत्नैर्गु
रुमिवनित्यंसेवेत १७५ यदीति अगतिकाहिगतिःसंश्रयोनामतत्रापियदिसंश्रयकृतंदोषंपश्येत्तदानिःसंशयोमूलाशोभनमेव

युद्धंतस्मिन्कालेसमाचरेत् दुर्बलेनापिबलवतोजयदर्शनात् निहतस्यचस्वर्गप्राप्तिः १७६ सर्वोपायैरिति सर्वैःसामादिभिरु
पायैःनीतिज्ञोराजातथायतेतयथास्यमित्रोदासीनशत्रवोऽभ्यधिकानभवंतिआधिक्येहितेषामसौग्राह्योभवति धनलोभेनमि-
त्रस्यापिशात्रवापत्तेः १७७ आयतिरिति सर्वेषांकार्याणामल्पानामपिआयतिमुत्तरकालेगुणंदोषंविचारयेत् वर्त्तमानकालं
चशीघ्रसंपादनार्थंविचारयेत् अतीतानांचसर्वकार्याणांगुणदोषौकिमेषांकृतंविघटितंवाकिंवावशिष्टमित्येवंयथावद्विचारयेत्
यस्मात् १७८ आयेति यःकार्याणांआगामिकगुणदोषज्ञःसगुणवत्कार्यमारभतेदोषवत्परित्यजतियश्चवर्त्तमानकालो
ऽवधार्येकार्यंकरोतिअतीतेकार्येयःकार्यशेषज्ञःसतत्कार्यसमाप्तौतत्फलंलभतेयस्मादेवंविधकालत्रयसावधानत्वान्नकदाचित्

सर्वोपायैस्तथाकुर्यान्नीतिज्ञःपृथिवीपतिः यथास्याभ्यधिकानस्युर्मित्रोदासीनशत्रवः १७७ आ
यतिंसर्वकार्याणांतदात्वंचविचारयेत् अतीतानांचसर्वेषांगुणदोषौचतत्त्वतः १७८ आयत्यां
गुणदोषज्ञस्तदात्वेक्षिप्रनिश्चयः अतीतेकार्यशेषज्ञःशत्रुभिर्नाभिभूयते १७९ यथैनंनाभि
संदध्युर्मित्रोदासीनशत्रवः तथासर्वंसंविदध्यादेषसामासिकोनयः १८० यदातुयानमातिष्ठेद
रिराष्ट्रंप्रतिप्रभुः तदानेनविधानेनयायादरिपुरंशनैः १८१ मार्गशीर्षेशुभेमासियायाद्यात्रांमही
पतिः फाल्गुनंवाथचैत्रंवामासौप्रतियथाबलम् १८२

शत्रुभिरभिभूयतेकिंबहुना १७९ यथेत्यादि यथै
नंराजानंमित्रादयउक्तानबाधेरन्तथासर्वसंविधानंकुर्यात् इत्येषसांक्षेपिकोनयोनीतिः १८० यदेति यदापुनःशक्तःसन्श
त्रुराष्ट्रंप्रतियात्रामारभेत्तदाअनेनवक्ष्यमाणप्रकारेणशत्रुदेशमल्परमाणोगच्छेत् १८१ मार्गशीर्षइति यश्चतुरंगबलोपेतोराजा
करिरथादिगमनविलंबेनविलंबितप्रयाणःतथाहैमंतिकसस्यबहुलंचपरराष्ट्रंजिगमिषुःसमुपगमनायशोभनेमार्गशीर्षेमासि
यात्रांकुर्यात् यःपुनश्चलप्रायोनृपतिःशीघ्रगतिर्वासर्वसस्यबहुलंपरराष्ट्रंयियासुःसफाल्गुनेचैत्रेवामासेस्वबलयोग्यकालानति
क्रमेणयायात् अतएवमन्वर्थव्यापारपरंसंक्षेपेणयाज्ञवल्क्यवचनम् यदासस्यगुणोपेतंपरराष्ट्रंतदाव्रजेत् १८२ ७ ७

अन्येष्विति उक्तकालव्यतिरिक्तेषु यदात्मनो निश्चितं जयमवगच्छेत् तदा स्वबलयोग्यकाले ग्रीष्मादावपि हस्त्यश्वादिबलआयोवि गृह्यैव यात्रां कुर्यात् शत्रोश्चामात्यादिप्रकृतिगोचरदंडपारुष्यादिव्यसने जाते रिपक्षभूतायां तदकृतावपि उक्तकालादन्यत्रापि- यायात् १८३ कृत्वेत्यादि संशोध्येति मूले स्वीयदुर्गराष्ट्ररूपे पार्ष्णिग्राहसंविधानं प्रधानपुरुषाधिष्ठितरक्षार्थसैन्यैकदेशस्था पनरूपं प्रतिविधानं कृत्वा यात्रोपयोगि च वाहनायुधवर्मयात्राविधानं यथाशास्त्रं कृत्वा परमंडलगतस्य च येनास्यावस्थानं भवति त दुपगृह्य तदीयान् मृत्यपक्षानात्मसात् कृत्वा चारांश्च कापटिकादीन् शत्रुदेशवार्त्ताज्ञापनार्थं प्रस्थाप्य सम्यक्कृतया जांगलानूपाटवि कविषयभेदेन त्रिविधं पंथानं मार्गं शोधित तरुगुल्मादिच्छेदनिम्नोन्नतादिसमीकरणादिना संशोध्य तथा हस्त्यश्वरथपदातिसेना- कर्मकरात्मकं षड्विधं बलं यथोपयोगमाहारौषधसत्कारादिना संशोध्य सांपरायिकं संपरायः संग्रामः तदुपचितविधिना शत्रुदेशम

अन्येष्वपि तु कालेषु यदा पश्येद्ध्रुवं जयम् तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः १८३ कृत्वा विधानं मूले तु यात्रिकं च यथाविधि उपगृह्यास्पदं चैव चारान्सम्यग्विधाय च १८४ संशोध्य त्रिवि धं मार्गं षड्विधं च बलं स्वकम् सांपरायिककल्पेन यायादरिपुरं शनैः १८५ शत्रुसेविनि मित्रे च गूढे यु क्ततरो भवेत् गतप्रत्यागते चैव स हि कष्टतरो रिपुः १८६ दंडव्यूहेन तन्मार्गं यायात्तु शकटेन वा व राहमकराभ्यां वा सूच्या वा गरुडेन वा १८७

त्सरया गच्छेत् १८४ १८५ शत्रुसेविनीति यन्मित्रं गूढं कृत्वा शत्रुं सेवते यश्च भृत्यादिः पूर्वं विरागाद्गतः पश्चादागतः तयोः सावधानो भवेत् यस्मात्तावतिशयेन दुर्निग्रहो रिपुः १८६ दंडेति दंडाकृ तिव्यूहरचनादिदंडव्यूहः एवं शकटादिव्यूहा अपि तत्राग्रे बलाध्यक्षो मध्ये राजा पश्चात्सेनापतिः पार्श्वयोर्हस्तिनस्तत्समीपे घोटकाः ततः पदातयः इत्येवं कृतरचनो दीर्घः सर्वतः समविन्यासो दंडव्यूहस्तेन तद्यातव्यं मार्गं सर्वतो भये सति यायात् सूच्याकाराग्रः पश्चा त्पृथुलः शकटव्यूहस्तेन पृष्ठतो भये सति गच्छेत् सूक्ष्ममुखः पश्चाद्भागः पृथुमध्यो वराहव्यूहः एष एव पृथुतरमध्यो गरुडव्यूहः ताभ्यां पार्श्वयोर्भये सति व्रजेत् वराहविपर्ययेण मकरव्यूहः तेनाग्रे पश्चाच्च उभयत्र भये सति गच्छेत् पिपीलिकापंक्तिरिव अग्रप

श्वाङ्गावेनसंहतरूपतयायत्रयत्रसैनिकावस्थानंसशीघ्रप्रवीरपुरुषमुखः सूचीव्यूहः तेनाग्रतोभयेसतियायात् १८७ यतइत्या
दि यस्यादिशः शत्रुभयमाशंकेततस्यामेवबलंविस्तारयेत्समविस्तृतपरिमंडलोमध्योपविष्टजिगीषुः पद्मव्यूहः तेनपुरान्निर्ग-
त्यसर्वदाकपटनिवेशनंकुर्यात् १८८ सेनापतीति हस्त्यश्वरथपदात्यात्मकस्यांगदशकस्यैकः पतिः कार्यः सचपत्तिकउच्यते पत्तिकद
शकस्यैकः पतिः सेनापतिरुच्यतेतद्दशकस्यैकः सेनानायकः सएवच बलाध्यक्षः सेनापतिबलाध्यक्षौसमस्तासुदिक्षुसंघर्षयुद्धार्थं
नियोजयेत् यस्याश्चदिशोयदाभयमाशंकेत्तदातामग्रेदिशंकुर्यात् १८९ गुल्मानित्यादि गुल्मान्सैन्यैकदेशान्आप्तपुरुषाधि
ष्ठान्स्थानापसरणसुखार्थंकृतभेरीपटहशंखादिसंकेतान्अवस्थानयुद्धयोः प्रवीणान्निर्भयान् अव्यभिचारिणः सेनापतिबलाद
न दूरतः सर्वदिक्षुपरक्यप्रवेशवारणायशत्रुचेष्टापरिज्ञानायचनियोजयेत् १९० संहतेति अल्पान्योधान्संहतान्कृत्वायुद्धंसुन-

यतश्चभयमाशंकेत्ततोविस्तारयेद्बलम् पद्मेनचैवव्यूहेननिविशेतसदास्वयम् १८८ सेनापति
बलाध्यक्षौसर्वदिक्षुनिवेशयेत् यतश्चभयमाशंकेत्प्राचींतांकल्पयेद्दिशम् १८९ गुल्मांश्चस्थापये
दाप्तान्कृतसंज्ञान्समंततः स्थानेयुद्धेचकुशलानभीरूनविकारिणः १९० संहतान्योधयेदल्पान्
कामंविस्तारयेद्बहून् सूच्यावज्रेणचैवैतान्व्यूहेनव्यूह्ययोधयेत् १९१ स्यंदनाश्वैःसमेयुद्ध्येदनूपेनौ
द्विपैस्तथा वृक्षगुल्मावृतेचापैरसिचर्मायुधैःस्थले १९२ कुरुक्षेत्रांश्चमत्स्यांश्चपंचालान्शूरसेनजा
न् दीर्घाल्लघूंश्चैवनरानग्रानीकेषुयोजयेत् १९३

र्यथेष्टंविस्तारयेत् सूच्यापूर्वोक्तयावज्राख्येनव्यूहेनत्रिधा
व्यवस्थितबलेनरचयित्वायोधान्योधयेत् १९१ स्यंदनाश्वैरित्यादि समभूभागेरथाश्वेनयुध्येततत्रतेनयुद्धसामर्थ्यात्तदा
नुगतोदकेनौकाहस्तिभिः तरुगुल्मावृतेधन्विभिर्गर्त्तकंटकपाषाणादिरहितस्थलेखड्गफलककुंताद्यैरायुधैर्युध्येत १९२
रुक्षेत्रानिति कुरुक्षेत्रभवान्मत्स्यान्विराटदेशनिवासिनः पंचालान् कान्यकुब्जाहिच्छत्रोद्भवान् शूरसेनजान्माथुरान्प्रायेण
पृथुशरीरत्वोर्य्याहंकारयोगात्सेनाग्रेयोजयेत् तथान्यदेशोद्भवानपिदीर्घलघुदेहान्मनुष्यान्युद्धाभिमानिनः सेनाग्रएवयो
जयेत् १९३ महर्षयेदित्यादि बलंरचयित्वाजयेधर्मलाभः अभिमुखहतस्यस्वर्गप्राप्तिः पलायनेतुप्रभुदुरितग्रहणंनरकगमनं

चइत्याद्यर्थवादैः युद्धार्थं प्रोत्साहयेत् तांश्च योधान् केनाभिप्रायेण हृष्यंति कुप्यंति वेति परीक्षयेत् तथा योधानामरिभिः सहयु
ध्यमानानामपि सोपध्यनुपधि चेष्टां बुध्येत १९४ उपेत्यादि दुर्गाश्रयमदुर्गाश्रयगतं रिपुमयुध्यमानमप्यावेष्ट्यासीत अस्य च
देशमुत्सादयेत् तथा यवसान्नोदकेंधनानि सर्वदा उस्यापद्रव्यसंमिश्रणादिना दूषयेत् १९५ भिंद्यादित्यादि शत्रोरुपजीव्यानि तडा
गादीनि नाशयेत् तथा दुर्गप्राकारादीन् भिंद्यात् तत्परिखाश्च भेदेन पूरणादिना निरुदकाः कुर्यात् एवं च शत्रून् शंकितमेव सस्य गव-
स्कंदयेत् यथाशक्तिगृहीतान् रात्रौ च ढक्काकाहलिकादिशब्देन वित्रासयेत्तदानीं च १९६ उपेत्यादि उपजापार्हान् रिपुवंश्यान् राज्या
र्थिनः कुपितान् अमात्यादींश्च भेदयेत् उपजपेनात्मोपकृतांश्च तेषां चेष्टां जानीयात् क्रमभग्नहदशादिना क्रमफलयुक्ते दैवे वगते निर्भयो
जयेप्सुर्युध्येत् १९७ साम्नेत्यादि प्रीत्यादरदर्शनहितकथनाद्यात्मकेन साम्ना हस्त्यश्वरथहिरण्यादीनां च दानेन तत्प्रकृतीनां

प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत् चेष्टाश्चैव विजानीयादरीन् योधयतामपि १९४ उपरु
ध्यारिमासीत राष्ट्रं चास्योपपीडयेत् दूषयेच्चास्य सततं यवसान्नोदकेंधनम् १९५ भिंद्याच्चैव तडा
गानि प्राकारपरिखास्तथा समवस्कंदयेच्चैनं रात्रौ वित्रासयेत्तथा १९६ उपजप्यानुपजपेद्बुध्येतैव
च तत्कृतम् युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः १९७ साम्ना दानेन भेदेन समस्तैरथवा पृथ
क् विजेतुं प्रयतेतारीन्न युद्धेन कदाचन १९८ अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः प
राजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत् १९९ त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे तथा युध्ये
त संपन्नो विजयेत रिपून् यथा २०० दनुयायिनां च राज्यार्थिनां भेदेन एतैः समस्तैर्व्यस्तैर्वा यथासामर्थ्यमरीन् जेतुं

यत्नं कुर्यात् न पुनः कदाचिद्युद्धेन १९८ अनित्येति यस्माद्युध्यमानयोर्बहुबलत्वादल्पबलत्वाद्यनपेक्ष्यमेवानियमेन जय
पराजयौ दृश्येते तस्मात्सत्युपायांतरे युद्धं परिहरेत् १९९ त्रयाणामित्यादि पूर्वोक्तानां त्रयाणामपि सामादीनामुपायानामसं
भवे सति जयपराजयसंदेहेऽपि तथा प्रयत्नवान् सम्यग्युध्येत यथा शत्रून् जयेत् यतो जये ऽर्थलाभो अभिमुखमरणे च स्वर्गप्रा
प्तिः निःसंदिग्धे तु पराजये युद्धादपसरणं साध्वी यो यथा वक्ष्यति आत्मानं सर्वदा रक्षेदिति मेधातिथिगोविंदराजौ २०० ६७

जित्वेति परराष्ट्रं जित्वातत्रयेदेवाः तान् धर्मप्रधानांश्च ब्राह्मणान् भूमिसुवर्णादिदानसंमानादिभिः
दानादिनैवचेदं पूजनं तदाह याज्ञवल्क्यः नातःपरतरो धर्मो नृपाणां यद्रुपार्जितम् विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा त-
थादेव ब्राह्मणार्थं मयैत द्दत्तमिति तद्देशवासिनां परिहारान् दद्यात् तथास्वामिभक्त्या येरस्माकमपकृतं तेषां मयाक्षांतमिदानीन्नि
र्भयाः संतः स्वस्वंस्वव्यापारमनुतिष्ठंत्विति अभयानि ख्यापयेत् २०१ सर्वेषामिति एषां शत्रुनृपामात्यानां सर्वेषामेव संक्षेपतोऽभि
प्रायं ज्ञात्वा तस्मिन् राष्ट्रे बलनिहतराजवंश्यमेव राज्येऽभिषेचयेत् इदं कार्यं त्वया इदन्नेति तस्य तदमात्यानां च नियमं कुर्यात् २०२
प्रमाणानीति तेषां च परकीयानां धर्मादनपेतानाचारान् देशधर्मतया शास्त्रेणाभ्युपेतान् प्रमाणीकुर्यात् एनं चाभिषिक्तममा-
त्यादिभिः सह रत्नादिदानेन पूजयेद्यस्मात् २०३ आदानमिति यद्यप्यभिलषितानां द्रव्याणां ग्रहणं अप्रियकरं दानं च प्रिय

जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च २०१ स
र्वेषां तु विदित्वैषां समासेन चिकीर्षितम् स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् २०२ प्रमाणा
नि च कुर्वीत तेषां धर्म्यान्यथोदितान् रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह २०३ आदानमप्रिय-
करं दानं च प्रियकारकम् अभीप्सितानामर्थानां काले युक्तं प्रशस्यते २०४ सर्वं कर्मेदमायत्तं विधा
नेदैवमानुषे तयोर्दैवमचिन्त्यं तु मानुषे विद्यते क्रिया २०५ सह वापि व्रजेद्युक्तः संधिं कृत्वा प्रयत्न
तः मित्रं हिरण्यं भूमिं वा संपश्यंस्त्रिविधं फलम् २०६

कारकमित्युत्सर्गः तथापि समयविशेषे दानमादानं च
प्रशस्यते तस्मात्तस्मिन् काल एवं पूजयेत् २०४ सर्वमित्यादि यत्किंचित्संपाद्यं तत् प्राग्जन्मार्जितसुकृतदुष्कृतरूपे कर्मणि दै
वशब्दाभिधेये तथेहलोकार्जितमानुषशब्दवाच्ये व्यापार आयत्तं तयोर्मध्ये दैवं चिंतयितुमशक्यं मानुषे तु पर्यालोचनमस्ति
अतो मानुषद्वारेणैव कार्यसिद्धये यतितव्यम् २०५ सहेत्यादि एवमुपक्रमणीयेन शत्रुणा युद्धं कार्यं यदि वा स एव मित्रं तेन च
दत्तं हिरण्यं भूम्येकदेशो वार्पितं एतत्त्रयं यात्राफलम् तेन सह संधिं कृत्वा यत्नवान् व्रजेत् २०६

पार्ष्णिग्राहमित्यादि विजिगीषोररिंप्रतिनिर्यातस्ययः पृष्ठवर्त्तीनृपतिः देशाक्रमणाद्याचरतिसपार्ष्णिग्राहः तस्यतथाकुर्वतोयो
नियामकः तस्यानंतरोनृपतिःसआक्रंदः तावपेक्ष्ययात्तव्यंमित्रीभूतादमित्राद्वायात्राफलंगृह्णीयात्तावनपेक्ष्यगृण्हन्कदाचि
त्तत्कृतेनदोषेणगृह्यते २०७ हिरण्यभूमीति सुवर्णभूमिलाभेनतथाराजानवृद्धिमेतियथेदानींकृशमप्यागामिकालेवृद्धियुतं
स्थिरंमित्रंलब्ध्वावर्द्धते २०८ धर्मज्ञमिति धर्मज्ञंकृतोपकारस्यस्मर्त्तृसानुरागमनुरक्तंस्थिरकार्यारंभमितिमह्यं कृतिकंयत्त-
न्मित्रमतिशयेनशस्यते २०९ प्राज्ञमित्यादि विद्वांसंमहाकुलंविक्रांतंचतुरंदातारंउपकारसमर्त्तारंसुखदुःखयोरेकरूपंशत्रुंदु
ष्कृच्छ्रेदंपंडितावदंतितेनैवंविधशत्रुणासहसंधातव्यम् २१० आर्यतेत्यादि साधुत्वंपुरुषविशेषज्ञताविक्रांतत्वंकृपालुत्वंसर्वदा

पार्ष्णिग्राहंचसंप्रेक्ष्यतथाक्रंदंचमंडले मित्राद्वाप्यमित्राद्वायात्राफलमवाप्नुयात् २०७ हिरण्य
भूमिसंप्राप्त्यापार्थिवोनतथैधते यथामित्रंध्रुवंलब्ध्वाकृशमप्यायतिक्षमम् २०८ धर्मज्ञंचकृत-
ज्ञंचतुष्टप्रकृतिमेवच अनुरक्तंस्थिरारंभंलघुमित्रंप्रशस्यते २०९ प्राज्ञंकुलीनंशूरंचदक्षंदातारमे
वच कृतज्ञंधृतिमंतंचकष्टमाहुररिंबुधाः २१० आर्यतापुरुषज्ञानंशौर्यंकरुणवेदिता स्थौलल
क्ष्यंचसततमुदासीनगुणोदयः २११ क्षेम्यांसस्यप्रदांनित्यंपशुवृद्धिकरीमपि परित्यजेन्नृपोभू
मिमात्मार्थमविचारयन् २१२ आपदर्थंधनंरक्षेद्दारान्रक्षेद्धनैरपि आत्मानंसततंरक्षेद्दारैर
पिधनैरपि २१३

चस्थौललक्ष्यंबहुप्रदत्वंअतएवस्फुर्ववदान्यः स्थूललक्ष्यदानशौंडाबहुप्रदेइत्याभिधानिकाः स्थौल
लक्ष्यमर्थेअसूक्ष्मदर्शित्वमितितुमेधातिथिगोविंदराजयोःपदार्थकथनमनोगमं एतदुदासीनगुणसामग्र्यंतस्मादेवंविधमुदा
सीनमाश्रित्यउक्तलक्षणेनाप्यरिणासहयोद्धव्यम् २११ क्षेम्यामिति अनामयादिकल्याणक्षमामपिनदीमातृकतयासर्वदासर्व
सस्यप्रदामपिप्रचुरतृणादियोगात्पशुवृद्धिकरीमपिभूमिमात्मरक्षार्थंअविलंबमानोराजानिजरक्षाप्रकारांतराभावात्परित्यजेत्
परमात्मर्यविषयोयंधर्मःस्मर्यते २१२ आपदर्थमित्यादि आपन्निवारणार्थंधनंरक्षणीयंधनपरित्यागेनापिदारान्रक्षेत् आ

त्मानंपुनः सर्वदादाराधनपरित्यागेनापिरक्षेत्सर्वत एवात्मानंगोपायीतमितिश्रुतेःशास्त्रीयमरणव्यतिरेकेणात्मरक्षाइत्युप
देशात् २१३ सहेत्यादि कोशक्षयप्रकृतिकोशामित्रस्यव्यसनादिकाःसर्वाआपदोयुगपदतिशयेनउत्पन्नाज्ञात्वानमोहमुपे
यात् अपितुव्यस्तान्समस्तान्वासामादीनुपायान्शास्त्रज्ञःसंप्रयुंजीत २१४ उपेतारमिति उपेतारंआत्मानंउपेयंप्रासव्यंउ
पायाःसामादयःसर्वेतेनचपरिपूर्णाएतत्त्रयमवलंब्ययथासामर्थ्यंप्रयोजनसिद्धयेयत्नंकुर्यात् २१५ एवमिति एवमुक्तप्रकारेण
सर्वराजवृत्तंमंत्रिभिःसहविचार्यअनंतरमायुधाभ्यासादिनाव्यायामंकृत्वामध्यान्हेस्नानादिकमाध्यान्हिकंकृत्वानिर्वाह्यभोक्तुमं
तःपुरंविशेत् २१६ तत्रेति तत्रांतःपुरेआत्मतुल्यैर्भोजनकालवेदिभिरभेद्यैःसूपकारादिभिःकृतंसुष्ठुचपरीक्षितंचकोशादिद

सहसर्वाःसमुत्पन्नाःप्रसमीक्ष्यापदोभृशम् संयुक्तांश्चवियुक्तांश्चसर्वोपायान्सृजेद्बुधः २१४
उपेतारमुपेयंचसर्वोपायांश्चकृत्स्नशः एतत्त्रयंसमाश्रित्यप्रयतेतार्थसिद्धये २१५ एवंसर्वमिदं
राजासहसंमंत्र्यमंत्रिभिः व्यायाम्याप्लुत्यमध्यान्हेभोक्तुमंतःपुरंविशेत् २१६ तत्रात्मभूतैःकाल
ज्ञैरहार्यैःपरिचारकैः सुपरीक्षितमन्नाद्यमद्यान्मंत्रैर्विषापहैः २१७ विषघ्नैरगदैश्चास्यसर्वद्रव्या
णियोजयेत् विषघ्नानिचरत्नानिनियतोधारयेत्सदा २१८ परीक्षिताःस्त्रियश्चैनंव्यजनोदकधू
पनैः वेषाभरणसंशुद्धाःस्पृशेयुःसुसमाहिताः २१९ एवंप्रयत्नंकुर्वीतयानशय्यासनाशने स्नाने
प्रसाधनेचैवसर्वालंकारकेषुच २२०

मद्यात् २१७ विषघ्नैरिति विषनाशिभिरौषधैःसर्वाणिभोज्यद्रव्याणियोजयेत् विषहरणानिचरत्नानियत्नवान्सर्वदाधारये
त् २१८ परीक्षिताइति स्त्रियश्चगूढचारद्वारेणकृतपरीक्षाशुद्धाआयुधग्रहणविषलिप्ताभरणशंकयानिरूपितवेषाभरणाअन
न्यमनसःचामरव्यजनपानोदकधूपनैःएवंराजानंपरिचरेयुः २१९ एवमिति एवंविधपरीक्षादिप्रयत्नंवाहनशय्यासनाशन
स्नानानुलेपनेषुसर्वेषुचालंकरणार्थेषुकुर्यात् २२०

शनिनसविषमन्नंदृष्ट्वाचकोराक्षिणीरक्तेभवतः विषापहैर्मंत्रैर्जपितमन्न

भुक्तवानिति कृतभोजनश्चतत्रैवांतःपुरेभार्याभिःसहक्रीडेत्कालानतिक्रमेणचसप्तमेदिवसस्यभागेतत्रविहृत्याष्टमेभागेपु
नःकार्याणिचिंतयेत् २२१ अलंकृतइति कृतालंकारःसन्नायुधजीविनंवाहनानिहस्त्यश्वादीनिसर्वाणिचशस्त्राणिखड्गादी
निअलंकाररत्नादीनिपश्येत् २२२ संध्यांति गत्वेति ततःसंध्योपासनंकृत्वातस्मात्प्रदेशात्कक्षांतरंविविक्तप्रकोष्ठावकाशम
न्यङ्गत्वागृहाभ्यंतरेधृतशस्त्रोरहस्याभिधायिनांचराणांस्वव्यापारंशृणुयात्ततस्तंचरंसंप्रेष्यपरिचारिकस्त्रीवृतःपुनर्भोक्तुमंतः
पुरंविशेत् २२३ २२४ तत्रेत्यादि तत्रांतःपुरेवादित्रशब्दैःश्रुतिसुखैःप्रहर्षितःपुनःकिंचिद्भुक्त्वानातितृप्तःकालानतिक्रमे
णगतार्द्धप्रहरायांरात्रौस्वप्यात् ततोरात्रेःपश्चिमयामेचविश्रांतःसन्नुत्तिष्ठेत् २२५ एतदिति एतद्यथोक्तप्रकारंप्रजारक्षणा

भुक्तवान्विहरेच्चैवस्त्रीभिरंतःपुरेसह विहृत्यतुयथाकालंपुनःकार्याणिचिंतयेत् २२१ अलं
कृतश्चसंपश्येदायुधीयंपुनर्जनम् वाहनानिचसर्वाणिशस्त्राण्याभरणानिच २२२ संध्यांचोपा
स्यशृणुयादंतर्वेश्मनिशस्त्रभृत् रहस्याख्यायिनांचैवप्रणिधीनांचचेष्टितम् २२३ गत्वाकक्षां
तरंत्वन्यत्समनुज्ञाप्यतंजनम् प्रविशेद्भोजनार्थंचस्त्रीवृतोऽन्तःपुरंपुनः २२४ तत्रभुक्त्वापुनःकिं
चित्तूर्यघोषैःप्रहर्षितः संविशेत्तुयथाकालमुत्तिष्ठेच्चगतक्लमः २२५ एतद्विधानमातिष्ठेदरोगः
पृथिवीपतिः अस्वस्थःसर्वमेतत्तुभृत्येषुविनियोजयेत् २२६ इतिमानवेधर्मशास्त्रेभृगु
प्रोक्तायांसंहितायांराजधर्मोनामसप्तमोऽध्यायः ७
व्यवहारान्दिदृक्षुस्तुब्राह्मणैःसहपार्थिवः मंत्रज्ञैर्मंत्रिभिश्चैवविनीतःप्रविशेत्सभाम् १

दिनीरोगोराजास्वयमनुतिष्ठेत् अस्वस्थःपुनःसर्वमेतद्योग्यश्रेष्ठामात्येषुसमर्पयेत् २२६ इतिश्रीकुल्लूकभट्टवि
रचितायांमन्वर्थमुक्तावल्यांसप्तमोऽध्यायः ७ व्यवहारानिति एवंविधविपक्षमहीक्षिद्भ्यः
प्रजानांरक्षणाद्वासवृत्तिस्तासामेवेतरेतरविवादजपीडापरिहारार्थम् ऋणादानाद्यष्टादशविवादेविरुद्धार्थार्थिप्रत्यर्थिवा

स्यजनितसंदेहहारी विचारएवव्यवहारः तदाहकात्यायनः विनानार्थेहसंदेहेहरणंहारउच्यते नानासंदेहहरणाद्व्यवहार इतिस्मृतः तान्व्यवहारान्द्रष्टुमिच्छन्पृथिवीपतिर्वक्ष्यमाणैरमात्यैश्चसप्तमाध्यायोक्तपंचांगमंत्रैःसहविनीतोदात्त्याणिपा दचापलविरहादनुद्धतः अविनीतोहिनृपेवादिप्रतिवादिनांप्रतिभाक्षयादसम्यगभिधानेतत्त्वनिर्णयोनस्यात् तादृशोवक्ष्यमाणां सभांप्रविशेत् व्यवहारदर्शनंचेदंप्रजानामितरेतरपीडायांतत्त्वनिर्णयेरक्षणार्थंवक्ष्यमाणदृष्टादृष्टात्मककरणफलेनैवफलवत् १ तत्रेत्यादि तस्यांचसभायांकार्यगौरवापेक्षायामुपविष्टोलघुनिकार्येउत्थितोपिवापाणिशब्दोबाहुपरः दक्षिणपाणिमुद्यम्य अनुद्ध तवेषालंकारः पूर्वंत्रागोद्दियानोद्धत्ययुक्तंतादृशःकार्याणिविचारयेत् २ प्रत्यहमित्यादि तानिचऋणादानादीनिकार्याणि अष्टाद शसुव्यवहारमार्गेषु विषयेषुपठितानिदेशजातिकुलव्यवहारगतैःशास्त्रावगतैःसाक्षिद्रव्यादिभिर्हेतुभिःपृथक्पृथक्प्रत्यहंविचा रयेत् तान्येवाष्टादशगणयति ३ तेषामिति वेतनस्यैवचेति सीमेति स्त्रीपुंसेति तेषामष्टादशानांमध्येआदाविहऋणादानंक्वचि

तत्रासीनःस्थितोवापिपाणिमुद्यम्यदक्षिणम् विनीतवेषाभरणःपश्येत्कार्याणिकार्यिणाम् २ प्रत्यहंदेशदृष्टैश्चशास्त्रदृष्टैश्चहेतुभिः अष्टादशसुमार्गेषुनिबद्धानिपृथक्पृथक् ३ तेषामाद्यमृ- णादानंनिक्षेपोऽस्वामिविक्रयः संभूयचसमुत्थानंदत्तस्यानपकर्मच ४ वेतनस्यैवचादानंसंविद- श्चव्यतिक्रमः क्रयविक्रयानुशयोविवादःस्वामिपालयोः ५

र्णते तस्यस्वरूपमुक्तंनारदेन ऋणंदेयमदेयंचयेन यत्रयथाचरेत् दानग्रहणधर्माश्चतदृणादानमुच्यते ततश्चस्वधनस्यान्यस्मिन्अर्पणरूपोनिःक्षेपः अस्वामिनात्वकृतोविक्र- यः संभूयवणिगादीनांक्रियानुष्ठानम् दत्तस्यधनस्यापात्रबुद्ध्याक्रोधादिनावाग्रहणम् कर्मकरस्यभृतेरदानम् कृतव्यवस्थाति- क्रमः क्रयेविक्रयेचकृतेपश्चात्तापाद्विप्रतिपत्तिः स्वामिपशुपालयोर्विवादः ग्रामादिसीमाविप्रतिपत्तिः वाक्पारुष्यमाक्रोशनादि दं- डपारुष्यंताडनादि स्तेयन्निन्ह्वेनधनग्रहणम् साहसंप्रसह्यधनहरणादि स्त्रियाश्चपरपुरुषसंपर्कः स्त्रीसहितस्य व्यवस्था पैतृकादिधनस्यचविभागः अक्षादिक्रीडाधर्मव्यवस्थापनपूर्वकंपक्षिमेषादिप्राणियोधनम् इत्येवअष्टादशएतानि व्यवहारप्रवृत्तेःस्थानानिसमाह्वयस्यप्राणिद्यूतरूपत्वेनद्यूतावांतरशेषत्वात् अष्टादशसंख्योपपत्तिः ४ ५ ६ ७

६ ७ एषित्यादि एषुऋणादानादिषुव्यवहारस्थानेषुबाहुल्येनविवादंकुर्वतांमनुष्याणांअनादिपारंपर्यागतत्वेननित्यंधर्मम वलम्ब्यकार्यनिर्णयंकुर्यात् भूयिष्ठशब्देनान्यान्यपिविवादपदानिसंतीतिसूचयति तानिचप्रकीर्णकशब्देननारदाद्युक्तानि अत-
एवनारदः नदृष्टंयच्चपूर्वेषुसर्वंतत्स्यात्प्रकीर्णकमिति ८ यदेत्यादि यदाकार्यांतराकुलतयारोगादिनावाराजास्वयंकार्यदर्शनंन
कुर्यात्तदातद्दर्शनार्थंकार्यदर्शनाभिज्ञंब्राह्मणंनियुंजीत ९ सोऽस्येति सब्राह्मणोऽस्यराज्ञोद्रष्टव्यानिकार्याणित्रिभिर्ब्राह्मणैःस
भ्यांसाधुभिर्धार्मिकैः कार्यदर्शनाभिज्ञैर्वृतः तामेवसभांप्रविश्योपविश्यस्थितोवानतुचंक्रम्यमाणः तस्यचित्तव्याक्षेपसंभवत्वात्ता
दृशऋणादानादीनिकार्याणिपश्येत् १० यस्मिन्निति यस्मिन्स्थानेऋग्यजुःसामवेदिनस्त्रयोपिब्राह्मणाअवतिष्ठंतेराज्ञाधि

सीमाविवादधर्मश्चपारुष्येदंडवाचिके स्तेयंचसाहसंचैवस्त्रीसंग्रहणमेवच ६ स्त्रीपुंधर्मोविभा
गश्चद्यूतमाह्वयएवच पदान्यष्टादशैतानिव्यवहारस्थिताविह ७ एषुस्थानेषुभूयिष्ठंविवादंचरतां
नृणाम् धर्मंशाश्वतमाश्रित्यकुर्यात्कार्यविनिर्णयम् ८ यदास्वयंनकुर्यात्तुनृपतिःकार्यदर्शनम्
तदानियुंज्याद्विद्वांसंब्राह्मणंकार्यदर्शने ९ सोऽस्यकार्याणिसंपश्येत्सभ्यैरेवत्रिभिर्वृतः सभामेवप्र-
विश्याग्र्यामासीनःस्थितएववा १० यस्मिन्देशेनिषीदंतिविप्रावेदविदस्त्रयः राज्ञश्चाधिकृतोविद्वान्
ब्रह्मणस्तांसभांविदुः ११ धर्मोविद्धस्त्वधर्मेणसभांयत्रोपतिष्ठते शल्यंचास्यनकृंततिविद्धास्तत्रस-
भासदः १२ सभांवानप्रवेष्टव्यंवक्तव्यंवासमंजसम् अब्रुवन्विब्रुवन्वापिनरोभवतिकिल्बिषी १३

कृतश्चविद्वान्ब्राह्मणएवप्रकृतत्वादवतिष्ठतेतांसभांचतुर्मुखसभामिवमन्यते ११ धर्मइति भाःप्रकाशाः तयासहवर्त्तंतइति
विद्वत्संहतिरेवात्रसभाशब्देनाभिमतायत्रदेशेसभांविद्वत्संहतिरूपांधर्मःसत्याभिधानजन्योअनृताभिधानजन्येनाधर्मेण
पीडितआगच्छतिअर्थिप्रत्यर्थिनोर्मध्येएकस्यसत्याभिधानादपरस्यमृषावादात्तेनसभासदोअस्यधर्मस्यपीडाकरत्वात्शल्य
मिवाधर्मंनोद्धरंतितदातेएवतेनाधर्मशल्येनविद्धाभवंति यतएवमतः १२ सभामिति सभामवगम्यव्यवहारार्थंतत्प्रवेशोनक

र्तव्यः पृष्टश्चेत्तदासत्यमेववक्तव्यम् अन्यथातूष्णीभवतिष्ठमानोमृषावदन्उभयथापिसद्यःपापीभवति मेधातिथिनातु स
भायानप्रवेष्टव्याइतिऋग्वेदपठितम् १३ यत्रेत्यादि यस्यांसभायांअर्थिप्रत्यर्थिभ्यांअधर्मेणधर्मोनिहन्यतेयत्रचसाक्षिभिः
सत्यमनृतेननाश्यतेसभासदांप्रेक्षमाणानांताननादृत्यतेप्रतीकारक्षमानभवंतीत्यर्थः षष्ठीचानादरइतिअनेनषष्ठी तत्रतएव
सभासदस्तेनपापेनहताभवंति १४ धर्मइत्यादि यस्माद्धर्मएवातिक्रांतोइष्टानिष्टाभ्यांसहनाशयति नार्थिप्रत्यर्थ्यादिसएवना
तिक्रांतः ताभ्यांसहरक्षतितस्माद्धर्मोनातिक्रमणीयः माऽस्मान्त्वत्सहितान्अतिक्रांतोधर्मोऽवधीदितिसभ्यानासुत्स
भाड्विवाकस्यसंबोधनमिदम् १५ वृषइत्यादि कामान्वर्षतीतिवृषः वृषशब्देनधर्मएवाभिधीयतइति अलंशब्दोवारणार्थः य
स्माद्धर्मस्ययोवारणंकरोतितंदेवावृषलंजानंतिनजातिवृषलम् तस्माद्धर्मन्नोच्छिंद्यादितिधर्मव्यतिक्रमखंडनार्थंवृषलशब्दार्थ

यत्रधर्मोह्यधर्मेणसत्यंयत्रानृतेनच हन्यतेप्रेक्ष्यमाणानांहतास्तत्रसभासदः १४ धर्मएवहतोहंति
धर्मोरक्षतिरक्षितः तस्माद्धर्मोनहंतव्योमानोधर्मोहतोऽवधीत् १५ वृषोहिभगवान्धर्मस्तस्ययःकुरु
तेह्यलम् वृषलंतंविदुर्देवास्तस्माद्धर्मंनलोपयेत् १६ एकएवसुहृद्धर्मोनिधनेप्यनुयातियः शरी
रेणसमंनाशंसर्वमन्यद्धिगच्छति १७ पादोधर्मस्यकर्त्तारंपादःसाक्षिणमृच्छति पादःसभासदःस
र्वान्पादोराजानमृच्छति १८ राजाभवत्यनेनास्तुमुच्यंतेचसभासदः एनोगच्छतिकर्त्तारंनिंदार्हो
यत्रनिंद्यते १९

निर्वचनम् १६ एकइत्यादि धर्मएवैकोमित्रंयोमरणेपिअभीष्टफलदानार्थमनुगच्छति यस्मादन्यत्स
र्वंभार्यापुत्रादिशरीरेणैवसहादर्शनंगच्छति तस्मात्पुत्रादिस्नेहापेक्षयापिधर्मोनहातव्यः १७ पादइत्यादि दुर्व्यवहारदर्शनाद
धर्मसंबंधीचतुर्थभागोऽर्थिनमधर्मकर्त्तारंप्रत्यर्थिनंवागच्छति परश्चतुर्थभागःसाक्षिणमसत्यवादिनम् अन्यपादःसभास
दस्सर्वान् अधर्मप्रवृत्तनिवारकान्व्याप्नोति पादश्चराजानंव्रजति सर्वेषांपापसंबंधोभवतीत्यत्रविवक्षितम् १८ राजेत्यादि
यस्यांपुनःसभायामसत्यवादिनिंदार्होऽर्थीप्रत्यर्थीवासम्यक्न्यायदर्शनेननिंद्यते तत्रराजानिष्पापोभवति सभासदश्चपापेन

नसंबध्यंते अर्थ्यादिकमेवकर्त्तारमुपैति १९ जातिमात्रेति ब्राह्मणजातिमात्रंयस्यविद्यतेनतुब्राह्मणकर्मानुष्ठानंवाणिगादिव
त्तास्यादिद्वारेणस्फुटन्यायान्यायनिरूपणक्षमोब्राह्मणजातिरपिचायस्यसंदिग्धार्थानांब्राह्मणंब्रवीतिसवरंउक्तयोग्यब्राह्मणा
भावेनक्वचित्कार्यदर्शनेनृपतेर्भवेन्नतुधार्मिकोपिव्यवहारज्ञोपिशूद्रः ब्राह्मणोधर्मप्रवक्तेतिविधानादेवशूद्रनिवृत्तिःसिद्धातु
नर्नतुशूद्रइतिशूद्रनिषेधोयोग्यब्राह्मणाभावेक्षत्रियवैश्ययोरभ्यनुज्ञानार्थः अतएवकात्यायनः यत्रविप्रोनविद्वान्स्यात्क्षत्रि
यंतत्रयोजयेत् वैश्यंवाधर्मशास्त्रज्ञंशूद्रंयत्नेनवर्जयेत्यस्मात् २० यस्येत्यादि यस्यराज्ञोधर्मविवेचनंशूद्रःकुरुतेतस्यपश्यत
एवपंकेगोरिवतद्राष्ट्रमवसन्नंभवति २१ यदित्यादि यद्राष्ट्रंशूद्रबहुलंबहुलपरलोकाभाववाद्याक्रांतंद्विजशून्यंतत्सर्वंदुर्भि

जातिमात्रोपजीवीवाकामंस्याद्ब्राह्मणब्रुवः धर्मप्रवक्तानृपतेर्नतुशूद्रःकथंचन २० यस्यशूद्रस्तुकुरु
तेराज्ञोधर्मविवेचनम् तस्यसीदतितद्राष्ट्रंपंकेगोरिवपश्यतः २१ यद्राष्ट्रंशूद्रभूयिष्ठंनास्तिकाक्रांत
मद्विजम् विनश्यत्याशुतत्कृत्स्नंदुर्भिक्षव्याधिपीडितम् २२ धर्मासनमधिष्ठायसंवीतांगसमाहितः
प्रणम्यलोकपालेभ्यःकार्यदर्शनमारभेत् २३ अर्थानर्थावुभौबुद्ध्वाधर्माधर्मौचकेवलौ वर्णक्रमेण
सर्वाणिपश्येत्कार्याणिकार्यिणाम् २४ बाह्यैर्विभावयेल्लिंगैर्भावमंतर्गतंनृणाम् स्वरवर्णेंगिताका
रैश्चक्षुषाचेष्टितेनच २५

क्षरोगपीडितंतत्शीघ्रंविनश्यति अग्नौप्रास्ताहुतिःसम्यगित्यस्याभावेनवृष्टिविरहात् उ
पजातदुर्भिक्षरोगाद्युपजातशांत्यर्थकर्माभावाच्च २२ धर्मासनमिति धर्मदर्शनार्थमासनउपविश्यआच्छादितदेहोऽनन्यमना
लोकपालेभ्यःप्रणामंकृत्वाकार्यदर्शनमनुतिष्ठेत् २३ अर्थानिति प्रजारक्षणोच्छेदाद्यात्मकावैहिकावर्थानर्थौबुद्ध्वापरलोका
र्थंधर्माधर्मौकेवलावनुरुध्ययथाविरोधोनभवतितथाकार्यार्थिनांकार्याणिपश्येत् बहुवर्णमेलकेब्राह्मणादिक्रमेणपश्येत् २४
बाह्यैरिति बाह्यैःस्वरादिलिंगैरित्यभिधानादेवावधारितव्यापारैः अर्थिप्रत्यर्थिनामंतर्गतमभिप्रायंनिरूपयेत् स्वरोगद्गदादिः व
र्णःस्वाभाविकवर्णादन्यादृशोमुखकालिमादिः इंगितमधोनिरीक्षणादिः आकारोदेहभवस्वेदरोमांचादिः चेष्टाहस्तस्फालनादिर्यस्मा
त् २५

आकारैरिति आकारादिभिः पूर्वोक्तैः गत्यास्वलसादादिकया अंतर्गतमनोबुद्धिरूपेण परिणतमवधार्यते २६ बालदायेति अनाथबालस्वामिकंपितृव्यादिभिरन्यायेनगृह्यमाणंतावद्राजारक्षेत्यावदसौषट्त्रिंशदब्दादिकंब्रह्मचर्यमित्याद्युक्तेनप्रकारेणगुरुकुलात्समावृत्तोनभवति तादृशस्यावश्यकबाल्यविगमात् यस्तुशक्त्यादिनाबालएवसमावर्त्ततेसोपियावदतीवबाल्योभवतितावत्तस्यधनंरक्षेत् बाल्यंचषोडशवर्षपर्यंतम् बालआषोडशाद्वर्षादितिनारदवचनात् २७ वशेत्यादि वशास्ववंध्यास्वकृतदारांतरपरिग्रहः स्वामीनिर्वाहार्थोपकल्पितधनोपायास्वनिरपेक्षः अपुत्रास्वचस्त्रीषु प्रोषितभर्तृकास्वनिष्कुलास्वसपिंडरहितास्वसाध्वीषुचस्त्रीषुविधवास्वरोगिणीषुचयद्धनंतस्यापिबालधनस्येवराज्ञारक्षणंकर्त्तव्यम् अत्रचानेकशब्दोपादानेगोबलीवर्दन्यायेनपुनरुक्ति

आकारैरिंगितैर्गत्याचेष्टयाभाषितेनच नेत्रवक्त्रविकारैश्चगृह्यतेंऽतर्गतंमनः २६ बालदायादिकंरिक्थंतावद्राजानुपालयेत् यावत्सस्यात्समावृत्तोयावच्चातीतशैशवः २७ वशाऽपुत्रासुचैवस्याद्रक्षणंनिष्कुलासुच पतिव्रतासुचस्त्रीषुविधवास्वातुरासुच २८ जीवंतीनांतुतासांयेतद्धरेयुःस्वबांधवाः तांच्छिष्याच्चौरदंडेनधार्मिकःपृथिवीपतिः २९ प्रणष्टस्वामिकंरिक्थंराजात्र्यब्दंनिधापयेत् अर्वाक्त्र्यब्दाद्धरेत्स्वामीपरेणनृपतिर्हरेत् ३० ममेदमितियोब्रूयात्सोनुयोज्योयथाविधि संवाद्यरूपसंख्यादीन्स्वामीतद्द्रव्यमर्हति ३१

परीहारः २८ जीवंतीनामिति वयमत्रानंतराधिकारिणोरस्यामद्धनमित्यादिव्याजेनयेबांधवास्तासांजीवंतीनांतद्धनंगृण्हंतितान्वक्ष्यमाणचौरदंडेननधार्मिकोराजादंडयेत् २९ प्रणष्टेति आज्ञातस्वामिकधनंराजाकस्यकिंप्रनष्टमित्येवंपटहादिनाउद्घोष्यराजद्वारादौरक्षितंवर्षत्रयंस्थापयेत् वर्षत्रयमध्येयदिधनस्वाम्यागच्छेत्तदासएवगृण्हीयात् तदूर्ध्वंतुनृपतिर्विनीयुंजीत ३० ममेदमित्यादि मदीयंधनमितियोवदतिसकिंरूपंकिंसंख्याकंकुत्रणष्टंतद्धनमित्यादिविधानेनप्रष्टव्यः ततोयदिरूपसंख्यादीन्सत्यान्वदतितदासतत्रधनस्वामीतद्धनंग्रहीतुमर्हति ३१ अवेदयानइत्यादि नष्टद्रव्यस्यदेशकालौ अस्मिन्देशे अस्मिन्कालेनष्टमिति तथावर्णस्वरूपाद्याकारकटकत्वादिपरिमाणंचयथावदजानन्नष्टद्

व्यसमदंडमर्हति देशकालादिसंवादेःपुनः ३२ आददीतेति यदेतद्राज्ञाप्रनष्टद्रव्यंप्राप्तंतस्मात्षड्भागंदशमंद्वादशंवारक्षादिनि मित्तंपूर्वेषांसाधूनामयंधर्मइतिजानन्राजागृण्हीयात् धनस्वामिनोनिर्गुणत्वापेक्षश्चायंषड्भागादिग्रहणविकल्पः अवशिष्टंस्वामिनेसमर्पयेत् ३३ प्रनष्टेति यद्द्रव्यंकस्यापिप्रनष्टंसत्राजपुरुषैःप्राप्तंरक्षायुक्तैःरक्षितंकृत्वास्थाप्यंतस्मिन्द्रव्येयांश्चौरान्गृण्हीयात्तान्हस्तिनाघातयेत् गोविंदराजस्तु शताभ्यधिकेवधइतिदर्शनात्अत्रापिशतसुवर्णस्यमौल्यादिकत्रयहरणेवधमाह तन्न तत्रसंधिकृत्वायच्चौर्यमितियत्त्वान्येपिप्रनष्टराजरक्षितद्रव्यहरणेनैवविशेषेणवधविधानात्शतादभ्यधिकेवधइत्यस्याविशेषोपदिष्टवधतरविषयत्वात् ३४ ममायमितीति योमानुष स्वयन्निधिलब्ध्वाअन्येनवानिधौप्राप्तेममायन्निधिरितिवदतिसत्येनप्रमाणे

अवेदयानोनष्टस्यदेशंकालंचतत्त्वतः वर्णंरूपंप्रमाणंचतत्समंदंडमर्हति ३२ आददीताथषड्भागं प्रनष्टाधिगतान्नृपः दशमंद्वादशंवापिसतांधर्ममनुस्मरन् ३३ प्रनष्टाधिगतंद्रव्यंतिष्ठेद्युक्तैरधिष्ठितम् यांस्तत्रचौरान्गृण्हीयात्तान्राजेभेनघातयेत् ३४ ममायमितियोब्रूयान्निधिंसत्येनमानवः तस्याददीतषड्भागंराजाद्वादशमेववा ३५ अनृतंतुवदन्दंड्यःस्ववित्तस्यांशमष्टमम् तस्यैववानिधानस्यसंख्यायाल्पीयसींकलाम् ३६ विद्वांस्तुब्राह्मणोदृष्ट्वापूर्वोपनिहितंनिधिम् अशेषतोप्याददीतसर्वस्याधिपतिर्हिसः ३७ यंतुपश्येन्निधिंराजापुराणंनिहितंक्षितौ तस्माद्द्विजेभ्योदत्त्वार्धमर्धंकोशेप्रवेशयेत् ३८

नन्वस्वसंबंधंबोधयतितस्यपुरुषस्यनिर्गुणत्वसगुणत्वापेक्षयाततोनिधानात्अष्टभागंद्वादशभागंवाराजागृण्हीयात् अवशिष्टंतस्यार्पयेत् ३५ अनृतमिति अस्मीयंस्वीयमितिब्रुवन्स्वधनस्याष्टभागंदंड्यः यद्वा तस्यैवनिधेरल्पंतात्पभागंगणयित्वायेनावसादन्नगच्छतिनविपर्ययश्चल्पभतेतद्दंड्यः अल्पीयसीमितीयस्कुनंतनिर्देशात्पूर्वस्मादन्योयंदंडःविकल्पश्चनिर्गुणसगुणापेक्षः ३६ विद्वानित्यादि विद्वान्पुनर्ब्राह्मणःपूर्वमुपहितंनिधिंदृष्ट्वासर्वंगृण्हीयात् नषड्भागंदद्यात् यस्मात्सर्वस्यधनजातस्यप्रभुः अतएवोक्तम् सर्वस्वंब्राह्मणस्येदमिति तस्मात्परनिहितविषयमेतद्वचनम् तथाचनारदः परेणनिहितंलब्ध्वाराजाप्यपहरेन्निधिम् रा

जा स्वामीनिधेः सर्वस्नैर्यां ब्राह्मणादृते याज्ञवल्क्योप्याह राजालब्ध्वानिधिंदद्यात्द्विजेभ्योर्द्धंद्विजःपुनः विद्वानशेषमादद्यात्ससर्व
स्यप्रभुर्यतः अतोयन्मेधातिथिगोविंदराजाभ्यांममायमितियोब्रूयादित्युक्तंराजदेयार्थनिरासार्थंपित्रादिनिहितविषयत्वमेवास्य-
व्याख्यातम् तदनार्षम् नारदादिमुनिव्याख्याविपरीतंस्वकल्पितम् नमेधातिथिगोविंदराजव्याख्यानमाद्रिये ३७ यत्विति यत्पुनर
स्वामिकंपुरातनंभूम्यंतर्गतंनिधिंराजालभतेतस्माद्ब्राह्मणेभ्योऽर्द्धंदत्वाऽर्द्धमात्मीयधनागारेचप्रवेशयेत् ३८ निधीनामिति निधीनां
पुरातनानांअस्वकीयानांविद्वद्ब्राह्मणेतरलब्धानांसुवर्णाद्युत्पत्तिस्थानानांचार्द्धहरोराजायस्मादसौरक्षतिभूमेश्चप्रभुः ३९ दातव्य-
मिति पहृतंचौरैर्लोकानामपहृतंतद्राज्ञाचौरेभ्य आहृत्यधनस्वामिभ्योदेयम् तद्धनंराजास्वयमुपयुंजानश्चौरस्यपापंप्राप्नोति ४० जाति
जानेति धर्मान्ब्राह्मणादिजातिनियतान्याजनादीन्जानपदांश्चनियतदेशव्यवस्थितान् आत्मीयाविरुद्धान् देशजातिकुलधर्मांश्च

निधीनांतुपुराणानांधातूनामेवचक्षितौ अर्द्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हिसः ३९ दातव्यंसर्ववर्णे
भ्योराज्ञाचौरैर्हृतंधनम् राजातदुपयुंजानश्चौरस्याप्नोतिकिल्बिषम् ४० जातिजानपदान्धर्मान् श्रे
णीधर्मांश्चधर्मवित् समीक्ष्यकुलधर्मांश्चस्वधर्मंप्रतिपादयेत् ४१ स्वानिकर्माणिकुर्वाणादूरेसंतो
पिमानवाः प्रियाभवंतिलोकस्यस्वेस्वेकर्मण्यवस्थिताः ४२ नोत्पादयेत्स्वयंकार्यंराजानाप्यस्यपूरुषः
नचप्रापितमन्येनग्रसेदर्थंकथंचन ४३ यथानयत्यसृक्पातैर्मृगस्यमृगयुःपदम् नयेत्तथानुमानेनध-
र्मस्यनृपतिःपदम् ४४

आम्नायैरप्रतिषिद्धाः प्रमाणमितिगौतमस्मरणात् श्रेणीधर्मांश्चवणिगादिधर्मान्प्रतिनियतकुलव्यव
स्थितान्ज्ञात्वातदविरुद्धान्राजाव्यवहारेषुतद्धर्मान्व्यवस्थापयेत्यस्मात् ४१ स्वानीत्यादि जातिदेशकुलधर्मादीन्यात्मीयकर्माणि
तेष्वतःस्वेस्वेचनित्यनैमित्तिकादौकर्मणिवर्त्तमानाः दूरेपिसंतःसान्निध्यानिबंधनस्नेहाभावेपिलोकस्यप्रियाभवंतिप्रासंगिकमि-
दमभिधायपुनःप्रकृतमाह ४२ नोत्पादयेदिति राजाराजनियुक्तोवाधनलोभादिनाकार्यमृणादिविवादंनोत्पादयेत् तदाहकात्यायनः
राजानुवर्त्तितेनधनलोभेनवापुनः स्वयंकर्माणिकुर्वीतनराणामविवादिनाम् नचार्थिनाप्रत्यर्थिनावाआवेदितंविवादंधनादिलोभेनो
पेक्षेत् ४३ यथेत्यादि यथामृगस्यशस्त्रहतस्यरुधिरपातैः व्याधःपदंस्थानंप्राप्नोति

सत्यमित्यादि व्यवहारदर्शनप्रवृत्तोराजाछलमपहायसत्यंपश्येत् तथार्थंच अर्थआदित्वान्मत्वर्थीयोऽच् अर्थवंतंगोहिरण्या-
दिधनविषयस्थंव्यवहारंपश्येत् नत्वहसनेनाक्षिनिकोचनोपहसितइत्यादिस्वल्पापराधंआत्मानंचतत्त्वनिर्णयेस्वर्गादिफलभागि
नंसाक्षिणःसत्यवादिनः देशंकालंच देशकालोचितंस्वरूपंव्यवहारस्वरूपंगुरुलघुतादिकंपश्येत् ४५ सद्भिरित्यादि विद्वद्भिर्धर्म-
प्रधानैर्द्विजातिभिर्यद्दृश्यमानशास्त्रमनुष्ठितंतद्देशकुलजात्यविरुद्धमादायव्यवहारनिर्णयंप्रकल्पयेत् एतत्सकलव्यवहारसाधार
णंपरिभाषात्मकमुक्तंसंप्रतिऋणादानमधिकृत्याह ४६ अधमर्णेति अधमर्णार्थसिद्ध्यर्थप्रयुक्तधनसिद्ध्यर्थंधनस्वामिनाराजा
बोधितोवक्ष्यमाणलेख्यादिप्रमाणप्रतिपादितंधनमुत्तमर्णस्याधमर्णंप्रदापयेत् अधमर्णादुत्तमर्णायदापयेदित्यर्थः कथंदापयेदि

सत्यमर्थंचसंपश्येदात्मानमथसाक्षिणः देशंरूपंचकालंचव्यवहारविधौस्थितः ४५ सद्भिराचरितं
यत्स्याद्धार्मिकैश्चद्विजातिभिः तद्देशकुलजातीनामविरुद्धंप्रकल्पयेत् ४६ अधमर्णार्थसिद्ध्यर्थमुत्तम
र्णेनचोदितः दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ४७ यैर्यैरुपायैरर्थंस्वंप्राप्नुयादुत्तमर्णिकः
तैस्तैरुपायैःसंगृह्यदापयेदधमर्णिकम् ४८ धर्मेणव्यवहारेणछलेनाचरितेनच प्रयुक्तंसाधयेदर्थं
पंचमेनबलेनच ४९ यःस्वयंसाधयेदर्थमुत्तमर्णोऽधमर्णिकात् नसराज्ञाभियोक्तव्यःस्वकंसंसाधयन्धनम्
५०

त्याह ४७ यैर्यैरिति यैर्वक्ष्यमाणैरुपायैः संप्रयुक्तमर्थमुत्तमर्णोलभतेतैस्तैरुपायैर्वशीकृतमर्थंदापयेत् तानुपायानाह ४८ धर्मेणे
त्यादि धर्मादिनाप्रयुक्तमर्थंसाधयेत्तत्रधर्मानाह बृहस्पतिः सुहृत्संबंधिसंदिष्टैःसाम्नाचानुगमेनच प्रायेणवाऋणीदाप्योधर्मएषउदा
हृतः देयेधनेधर्मेणस्वाविप्रतिपत्तौव्यवहारेण तथाचवक्ष्यति अर्थेपव्ययमानंलिति मेधातिथिरुक्त निस्वोयःसव्यवहारेणदापयित
व्यः अन्यत्कर्मोपकरणंधनंदत्वाकृषिवाणिज्यादिनाव्यवहारयितव्यः तदुत्पन्नंधनंतस्मात्तुगृह्णीयादित्याह.छलादीनित्रीण्याहबृहस्प
तिः छद्मनायाचितंचार्थमानीयऋणिकाद्धली अन्याहृतादिवाहृत्यदाप्यतेतत्रसोपधिः दारपुत्रपशून्हृत्वाकृत्वाद्वारोपवेशनम् यत्रा
र्थोदाप्यतेऽर्थस्वंतदाचरितमुच्यते बध्वास्वगृहमानीयताडनाद्यैरुपक्रमैः ऋणिकोदाप्यतेयत्रबलात्कारःप्रकीर्तितः ४९ यइत्यादि यउ

नमर्णः संप्रतिपन्नमर्थमधमर्णात्स्वयंबलादिनासाधयतिसस्वीयंधनंसम्यक्साधयन् अस्मास्वनिवेद्यकिमितिबलादिकंकृतवान
सीतिनराज्ञानिषेद्धव्यः ५० अर्थइति नाहमस्मैधारयामीतिधनविषयेअपह्नवानं अधमर्णकरणेनलेख्यसाक्षिदिव्यादिनाप्रतिपा
दितमर्थमुत्तमर्णस्यराजाप्रदापयेत् दंडलेशंच अपन्हवेतुद्विगुणमितिवक्ष्यमाणदशभागदंडान्न्यूनमपिदंडंपुरुषशक्त्यादापयेत्
५१ अपेति उत्तमर्णस्यधनंदेहीतिसभायांप्राड्विवाकेनउक्तस्याधमर्णस्यनास्मैधारयामीतिअपलापेसतिअभियोक्ताथदिश्यंध
नप्रयोगदेशवर्तिसाक्षिणंनिर्दिशेत् प्रायेणसाक्षिभिरेवस्त्रीमूर्खादिसाधारणऋणनिर्णयात्साक्षिसाक्ष्युपन्यासः अन्यद्वाकरणं
पत्रादिकथयेत् ५२ अदेश्यमिति अपदिश्येति असंभाष्यइति ब्रूहीत्यादि अदेश्यंयत्रदेशोऽधमर्णस्यऋणग्रहणकालेसर्व
दावस्थानन्नसंभवतीतिनिर्दिश्यचादेशादिकन्नैतन्मयानिर्दिष्टमितिअपनयति यश्चपूर्वोक्तानर्थान्स्वर्थान्स्वोक्तान्विरुद्धान्

अर्थेऽपव्ययमानंतुकरणेनविभावितम् दापयेद्धनिकस्यार्थंदंडलेशंचशक्तितः ५१ अपह्नवेऽध
मर्णस्यदेहीत्युक्तस्यसंसदि अभियोक्तादिशेद्देश्यंकरणंवान्यदुद्दिशेत् ५२ अदेश्यंयश्चदिशति
निर्दिश्यापन्हुतेचयः यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते ५३ अपदिश्यापदेश्यंचपुनर्यस्त्वप
धावति सम्यक्प्रणिहितंचार्थंपृष्टःसन्नाभिनंदति ५४ असंभाष्येसाक्षिभिश्चदेशेसंभाषतेमिथः
निरुच्यमानंप्रश्नंचनेच्छेद्यश्चापिनिष्पतेत् ५५

नावगच्छति यश्चममहस्तात्सुवर्णस्यपलमनेनगृहीतमितिनिर्दि
श्यंनिर्दिश्यमत्पुत्रहस्ताद्गृहीतमितिएवमादिनायःपुनरपसरति यश्चसम्यक्प्रतिज्ञातमर्थंकस्मात्त्वयाराचावसाक्षिकंद
दिमाड्विवाकेनपृष्टःसन्नसमाधत्तेयश्चसंभाषणानर्हेनिर्जनादिदेशेसाक्षिभिःसहान्योन्यंसंभाषतेयश्चभाषार्थस्थि
यनितरासुच्यमानंप्राड्विवाकेनप्रश्नंनेच्छेत् यश्चनिष्पतेत्उक्तांश्चव्यवहारान्पुराऽनाख्यायर्यास्थानात्स्थानांत
त् यश्चब्रूहीत्युक्तोनकिंचिद्ब्रवीतिउक्तंसाध्यंनप्रमाणेप्रतिपादयतिपूर्वंसाधनंअपरंसाध्यंतद्योनजानातिअसाधनमेवसाध
नत्वेननिर्दिशतिअसाध्यमेवमानेनशशशृंगगतंधनुर्देयमित्यादिसाध्यत्वेननिर्दिशतिसतस्मात्साध्यादर्थाद्धीयते ५३ ५४

५६ साक्षिणःसंतीति साक्षिणोममविद्यंतइत्युक्त्वातान्निर्दिशेत्युक्तोयोनोनिर्दिशतितं पूर्वोक्तैरेभिः कारणैर्धर्मस्थःशाङ्गिवाकः पराजितंकथयेत् ज्ञातारःसंतिमेत्युक्त्वाइतिवापाठः अत्रछांदसमिकारस्यपररूपत्वम् ५७ अभियोक्तेति योऽर्थीसन्राजस्थाने निवेद्यभाषायांनब्रूयात्तदाविषयगौरवापेक्षयाबध्योलघुनिविषयेदंड्यश्चधर्मतःस्यात्सत्वर्थीपुनर्यदिपक्षत्रयमध्येनब्रूयात्तदाध र्मतएवपराजितःस्यात्नतुछलेन ५८ यइति यःप्रत्यर्थीयत्परिमाणधनमपनयतिअर्थीवायत्परिमाणधनेमिथ्यावदतितावधा र्मिकौअपन्हुतमिथ्योक्तधनाद्विगुणंदंडरूपंदापनीयौ अधर्मज्ञावितिवचनात्ज्ञानपूर्वापन्हवमिथ्योक्तिविषयमिदम् प्रमादादिना पलापमिथ्यानियोगापन्हवेद्विगुणमितिशतदशमभागंवक्ष्यति ५९ पृष्टइति धनार्थिनोत्तमर्णेनराजपुरुषापकर्षकृताह्वानःशाङ्गि

ब्रूहीत्युक्तश्चनब्रूयात्उक्तंचनविभावयेत् नचपूर्वापरंविद्यात्तस्मादर्थात्सहीयते ५६ साक्षिणः संतिमेत्युक्त्वादिशेत्युक्तोदिशेन्नयः धर्मस्थःकारणैरेतैर्हीनंतमपिनिर्दिशेत् ५७ अभियोक्तान चेद्ब्रूयाद्बध्योदंड्यश्चधर्मतः नचेत्त्रिपक्षात्प्रब्रूयाद्धर्मंप्रतिपराजितः ५८ योयावन्निन्हुवीतार्थंमिथ्या यावतिवावदेत् तौनृपेणह्यधर्मज्ञौदाप्यौतद्द्विगुणंदमम् ५९ पृष्टोऽपव्ययमानस्तुकृतावस्थोधनै षिणा त्र्यवरैःसाक्षिभिर्भाव्योनृपब्राह्मणसन्निधौ ६० यादृशाधनिभिःकार्याव्यवहारेषुसाक्षिणः ता दृशान्संप्रवक्ष्यामियथावाच्यमृतंचतैः ६१ गृहिणःपुत्रिणोमौलाःक्षत्रविट्शूद्रयोनयः अर्थ्युक्ताः साक्ष्यमर्हंतिनयेकेचिदनापदि ६२

वाकेन पृष्टःसन्यदानधारयामीत्यपन्हवानोभवतितदानृपत्वाधिकृतब्राह्मणसमक्षं त्र्यवरैःसाक्षिभिः त्रयोवरान्यूनायेषांतैरर्थिनाभावनीयः ६० यादृशाइति धनिभिरुत्तमर्णादिभिःऋणादानादिव्यवहारेषुयथा- विधाःसाक्षिणः कर्त्तव्याः तथाविधान्वदिष्यामि यथाचतैरपिवक्तव्यंतमपिप्रकारंवक्ष्यामि ६१ गृहिणइति कृतदारपरिग्रहाः पुत्रवंतःतद्देशजाः क्षत्रियशूद्रवैश्यजातीयाः अर्थिनिर्दिष्टाःसंतःसाक्षित्वयोग्याभवंति तेहिकृतपरिकरपुत्रभयात्तद्देशवासित्वावि रोधाच्चनान्यथावदंतिनतुयेकेचित्ऋणादानादिव्यवहारेषुसाक्षिणःस्युःआपदितुवाग्दंडपारुष्यस्त्रीसंग्रहणादिषूक्तव्यतिरिक्ताःसा क्षिणोभवंति ६२

आप्तादित्यादि क्षत्रविट्शूद्रयोनयइतिउक्तत्वात्ततोब्राह्मणपरिग्रहार्थंसर्वेषुवर्णेषु इत्यभिधानंसर्ववर्णेषुमध्येयेयथार्थावगतवादिनः सर्वधर्मज्ञानोत्तरसहिताः तेसाक्षिणः कर्त्तव्याः उक्तविपरीतांश्चवर्ज्जयेत् ६३ नार्थसंबंधिनत्यादि ऋणाद्यर्थसंबंधिनोऽमर्णाद्याः आप्तानिमित्राणिसहायास्तत्परिचारकाः शत्रवः स्थानांतरागतकोटसाक्ष्याः रोगपीडितामहापातकादिदूषिताःसाक्षिणोनकर्त्तव्याः लोभरागद्वेषस्मृतिभ्रंशादीनामन्यथाभिधानहेतूनांसंभवात् ६४ नसाक्षीति नृपतेः क्षत्वात्साक्षिधर्मेणप्रष्टुमयोग्यत्वात्नराजासाक्षीकार्यः कारुः सूपकारादिः कुशीलवोनटादिः तयोःस्वकर्मव्यग्रत्वात् प्रायेणधनलोभवत्वाच्चासाक्षित्वम् श्रोत्रियोप्यध्ययनाग्निहोत्रादिकर्मव्यग्रतयानसाक्षी लिंगस्थोब्रह्मचारी संगनिर्गतःपरिव्राजकः तयोरपिस्वकर्मव्यग्रत्वात्ब्रह्मात्वासाक्षित्वम् श्रोत्रियग्रहणादध्ययनाग्निहोत्रादिव्यग्रेतरब्राह्मणस्यानिषेधः ६५ नाध्यधानइति अध्यधीनोत्यंतपरतंत्रोग

आप्ताःसर्वेषुवर्णेषु कार्याःकार्येषुसाक्षिणः सर्वधर्मविदोलुब्धाविपरीतांस्तुवर्जयेत् ६३ नार्थसंबंधिनोनाप्तानसहायानवैरिणः नदृष्टदोषाःकर्त्तव्यानव्याध्यार्त्तानदूषिताः ६४ नसाक्षीनृपतिःकार्योनकारुककुशीलवौ नश्रोत्रियोनलिंगस्थोनसंगेभ्योविनिर्गतः ६५ नाध्यधीनोनवक्तव्योनदस्युर्नविकर्मकृत् नवृद्धोनशिशुर्नैकोनांत्योनविकलेंद्रियः ६६ नार्त्तोनमत्तोनोन्मत्तोनक्षुत्तृष्णोपपीडितः नश्रमार्त्तोनकामार्त्तोनक्रुद्धोनापितस्करः ६७

दासोनवक्तव्योविहितकर्मत्यागाल्लोकविगर्हितः दस्युः क्रूरकर्मा नचौरोनापितस्करइतिवक्ष्यमाणत्वात् विकर्मकृत्निषिद्धकर्मकारी एतेषांरागद्वेषादिसंभवात् नवृद्धःप्रायेणस्मृतिभ्रंशभवात् नबालोऽप्राप्तव्यवहारत्वात् नैकोविनाशभवासशंकयातस्यत्र्यवरैरितिविधानात् अर्थप्रतिषेधसिद्धौकस्यांचिदवस्थायांद्वयोरभ्यनुज्ञानार्थंनिषेधवचनम् अंत्यश्चांडालादिः कर्मानभिज्ञातत्वात् विकलेंद्रियउपलब्धिवैकल्यात्नसाक्षीकार्यः ६६ नार्त्तइति आर्त्तोबंधुविनाशादिना मत्तोमद्यादिना उन्मत्तउत्क्षेपभूतावेशादिना क्षुधापिपासादिनापीडितः श्रमार्त्तोमार्गगमनादिनाखिन्नः कामार्त्तउत्पन्नक्रोधः चौरश्चनसाक्षीकार्यइतिसर्वत्रसंबध्यते तत्रार्त्तादिर्बुद्धिवैकल्यात्चौरस्त्वधार्मिकत्वात् ६७

स्त्रीणामित्यादि स्त्रीणामन्योन्यव्यवहारेऋणादानादौस्त्रियःसाक्षिण्योभवंति द्विजानांब्राह्मणक्षत्रियविशांसदृशाःसजातीयाःसा
क्षिणःस्युः एवंशूद्राःसाधवःशूद्राणां चांडालादीनांचांडालादयःसाक्षिणोभवेयुः एतच्चसजातीयसाक्ष्यभिधानमुक्तलक्षणसजा-
तीयसाक्ष्यसंभवेविजातीयाअपिसाक्षिणोभवंति अतएवयाज्ञवल्क्यः यथाजातियथावर्णसर्वेसर्वेषुवास्मृताः ६८ अनुभावीति
गृहाभ्यंतरेऽरण्यादौवाचौरादिकृतोपद्रवेदेहोपघातेवाततायादिकृतेयःकश्चित्उपलभ्यतेसचार्दिनोरेवसाक्षीभवतिनतुऋणादा
नादिवदुक्तलक्षणोपेतः तदेवोदाहरणात्स्पष्टयति ६९ स्त्रियापीति अंतर्वेश्मादावुक्तसाक्ष्यभावेसतिस्त्रीबालवृद्धशिष्यबंधुदास
कर्मकराअपिसाक्षिणःस्युः नन्वस्थिरबुद्धित्वादिनास्त्रीबालादीनांकथमप्यत्रापिसाक्षित्वमित्यत्राह ७० बालवृद्धेति बालवृद्ध-

स्त्रीणांसाक्ष्यंस्त्रियःकुर्युर्द्विजानांसदृशाद्विजाः शूद्राश्चसंतःशूद्राणामंत्यानामंत्ययोनयः ६८ अनु
भावीतुयःकश्चित्कुर्य्यात्साक्ष्यंविवादिनाम् अंतर्वेश्मन्यरण्येवाशरीरस्यापिचात्यये ६९ स्त्रियाप्य
संभवेकार्य्यंबालेनस्थविरेणवा शिष्येणबंधुनावापिदासेनभृतकेनवा ७० बालवृद्धातुराणांच
साक्ष्येषुवदतांमृषा जानीयादस्थिरांवाचमुत्सिक्तमनसांतथा ७१ साहसेषुचसर्वेषुस्तेयसंग्रह-
णेषुच वाग्दंडयोश्चपारुष्येनपरीक्षेतसाक्षिणः ७२ बहुत्वंपरिगृह्णीयात्साक्षिद्वैधेनराधिपः स
मेषुतुगुणोत्कृष्टान्गुणिद्वैधेद्विजोत्तमान् ७३

व्याधितानांउपप्लुतमनसांचसाक्ष्येअनृतंवदतांअस्थिरावाग्भव-
तिअतस्तामनुमानेनजानीयात् यथोक्तम् वाग्भिर्विभावयेल्लिंगैरिति ७१ साहसेष्विति गृहदाहादिषुसाहसेवाचार्यस्त्रीसंग्र
हणेवाग्दंडपारुष्येचगृहिणउक्तसाक्षिपरीक्षानकार्यास्त्रियाप्यसंभवेकार्यमित्यस्यैवायमुदाहरणप्रपंचः ७२ बहुत्वमित्यादि
साक्षिणांपरस्परविरुद्धानांबहुभिर्यदुक्तंतदेवनिर्णयार्थत्वेनराजागृह्णीयात् समेषुतुविरुद्धार्थाभिधायिषुगुणवतःप्रमाणीकुर्यात्
गुणवतामेवविप्रतिपत्तौद्विजोत्तमान् द्विजेषुयेउत्तमाःक्रियावंतइत्यर्थः अतएवबृहस्पतिःगुणिद्वैधेक्रियायुक्ताइति गोविंदराज
स्तु गुणवतांविप्रतिपत्तौद्विजोत्तमान्ब्राह्मणान्प्रमाणीकुर्यादित्याह ७३ ६८ ६९ ७० ७१

समक्षेति नरकर्थादेःसाक्षाद्दर्शनात्श्रोत्रग्राह्येश्रवणात्साक्ष्यंसिध्यतितत्रसाक्षीसत्यंवदन्धर्मार्थाभ्यांनमुच्यतेसत्यवचनेन-धर्मोपपत्तेर्दंडाभावेर्थहान्यभावात् ७४ साक्षीत्यादि साक्षीदृष्टश्रुतादन्याद्दृशंसाधुसभायांवदन्अधोमुखोनरकंगच्छति परलोकेचकर्मांतरजन्यस्वर्गरूपफलादनेनपापेनहीयते ७५ यत्रेत्यादि त्वमस्मिन्विषयेसाक्षीभवइत्येवमकृतोपियत्किंचित्ऋणादानादिपश्यतिवाक्पारुष्यादिकंशृणोतितत्रापिसाक्षीसपृष्टःसन्यथोपलब्धंकथयेत् अयंचकृतसाक्षीसामान्येनमनोक्तः अस्यग्रामश्चप्राड्विवाकश्चराजानेत्यादिनानारदादिभिःषाड्विध्यमुक्तम् ७६ एकइत्यादि एकोऽलुब्धइत्यत्राकारप्रश्लेषोद्रष्टव्यः एकोपिसाक्षीलोभादिरहितःस्यात् अतएवव्यासः शुचिक्रियश्चधर्मज्ञःसाक्षीयत्रानुभूतवाक् प्रमाणमेकोपिभवेत्साहसेषुविशेषतः मेधातिथिगोविंदराजाभ्यामेकोलुब्धस्तुसाक्षीस्यादितिपठितम् व्याख्यातंच लोभात्मकएकःसाक्षीनभवतिएवं-

समक्षदर्शनात्साक्ष्यंश्रवणाच्चैवसिद्ध्यति तत्रसत्यंब्रुवन्साक्षीधर्मार्थाभ्यांनहीयते ७४ साक्षीदृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि अवाङ्नरकमभ्येतिप्रेत्यस्वर्गाच्चहीयते ७५ यत्रानिबद्धोऽपीक्षेतशृणुयाद्वापिकिंचन पृष्टस्तत्रापितद्ब्रूयाद्यथादृष्टंयथाश्रुतम् ७६ एकोलुब्धस्तुसाक्षीस्याद्बह्व्यःशुच्योपिनस्त्रियः स्त्रीबुद्धेरस्थिरत्वात्तुदोषैश्चान्येपियेवृताः ७७ स्वभावेनैवयद्ब्रूयुस्तद्ग्राह्यंव्यावहारिकम् अतोयदन्यद्विब्रूयुर्धर्मार्थंतदपार्थकम् ७८

चालुब्धोगुणवान्कस्यांचिदवस्थायामेकोपिभवतीति स्त्रियःपुनरात्मशौचादियुक्ताबह्व्योप्यस्थिरबुद्धित्वात्ऋणादानाद्यैःपर्यालोचितव्यवहारेसाक्षिण्योनभवंति अपर्यालोचितेतुस्तेयवाग्दंडपारुष्यादौस्त्रियाप्यसंभवेकार्यमितिसाक्षित्वमुक्तम् अन्येपियेस्तेयादिदोषैर्व्याप्तास्तेपिपर्यालोचितव्यवहारेसाक्षिणोनस्युः ७७ स्वभावेनेति यत्साक्षिणोभयादिव्यतिरेकेणस्वभावाद्ब्रूयुः तद्व्यवहारनिर्णयार्थंग्राह्यंयत्पुनःस्वाभाविकादन्यत्कुतोपिकारणाद्वदंतितद्धर्मविषयेनिःप्रयोजनंतन्नग्राह्यम् ७८ सभांतरित्यादि सभामध्यंसाक्षिणःसंप्राप्तान्अर्थिप्रत्यर्थिसमक्षंराजाधिकृतोब्राह्मणःप्रियोक्तिंरचयन्वक्ष्यमाणप्रकारेणपृच्छेत् ७९

यद्द्वयोरिति यद्द्वयोरर्थिप्रत्यर्थिनोरनयोः परस्परमस्मिन्कार्ये चेष्टितं जानीयत तत्सर्वं सत्येन कथयत यतो युष्माकमत्र साक्षित्वम् ८०
सत्यमिति साक्षी साक्ष्ये कर्मणि सत्यं वदन्सन् उत्कृष्टान् ब्रह्मलोकान् प्राप्नोति पुष्कलानि इहलोके चानुत्कृष्टां ख्यातिं लभते यस्मा
देषा सत्यात्मिका वाक् चतुर्मुखेन पूजिता ८१ साक्ष्य इत्यादि यस्मात्साक्षी मृषावाक् कथयन् वरुणसंबंधिभिः पाशैः सर्परज्जुभिः ज
लोदरेण परतंत्रीकृतः शतं जन्मानि यावत् अत्यर्थं पीड्यते तस्मात्साक्ष्ये सत्यं ब्रूयात् ८२ सत्येनेत्यादि यस्मात्सत्येन पूर्वार्जितादपि
पापात्साक्षी मुच्यते धर्मश्चास्य सत्याभिधानेन वृद्धिमेति तस्मात्सर्ववर्णविषये साक्षिभिः सत्यं वक्तव्यम् ८३ आत्मैवेति यस्मा
त् शुभाशुभकर्मप्रतिष्ठा आत्मैवात्मनः शरणं तस्मादेवं स्वमात्मानं नराणां मध्यमादुत्तमं साक्षिणं मृषाभिधानेनावज्ञासीः ८४

सभांतः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ प्राड्विवाकोनुयुंजीत विधिनानेन सांत्वयन् ७९
यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिन्चेष्टितं मिथः तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ८० सत्यं साक्ष्ये
ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान् इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ८१ साक्ष्येऽनृतं वदन्
पाशैर्बध्यते वारुणैर्भृशम् विवशः शतमाजातीस्तस्मात्साक्ष्यं वदेदृतम् ८२ सत्येन पूयते साक्षी ध
र्मः सत्येन वर्द्धते तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ८३ आत्मैव ह्यात्मनः साक्षी गतिरात्मा
तथात्मनः मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ८४ मन्यते वै पापकृतो न कश्चित्पश्यती
ति नः तांस्तु देवाः प्रपश्यंति स्वस्यैवांतरपूरुषः ८५ द्यौर्भूमिरापो हृदयं चंद्रार्काग्नियमानिलाः रा
त्रिः संध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ८६

मन्यंत इति पापकारिण एवं मन्यंते अस्मानधर्मप्रवृत्तान्न कश्चित्पश्य
तीति तान्पुनर्वक्ष्यमाणा देवाः पश्यंति स्वस्यांतरपुरुषः पश्यति ८५ द्यौरित्यादि द्युलोकपृथिवीजलहृदयस्थजीवचंद्रादित्या-
ग्नियमवायुरात्रिसंध्याद्वयधर्माः सर्वशरीराणां शुभाशुभधर्मज्ञाः दिवादीनां चाधिष्ठातृदेवताः सन्ति सा च शरीरिण्येकत्रावस्थापि
तात्सर्वं जानातीति आगमप्रामाण्याद्वेदांतदर्शने तद्गीकृतसेदमुक्तम् ८६ देवब्राह्मणेति प्रतिमादेवताब्राह्मणसन्निधाने शुचीन्

न् द्विजातिप्रभृतीन् प्राङ्मुखानुदङ्मुखान् वा स्वयं प्रयतः प्राड्विवाकः पूर्वाण्हे काले याथातथ्यं साक्ष्यं पृच्छेत् ८७ ब्रूहीत्यादि ब्रूहीत्येवं शब्दमुच्चार्य्य ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवं क्षत्रियं पृच्छेत् गोबीजकनकापहारे यत्पापं तद्भवतोऽनृताभिधाने स्यादित्येवं वैश्यम् शूद्रं पुनः सर्वैर्वक्ष्यमाणपापैः संबध्य यदि मृषा वदसीति पृच्छेत् ८८ ब्रह्मघ्न इति ब्राह्मणहंतुः स्त्रीघातिनश्च ये नरकादिलोका ऋषिभिः स्मृताः ये च मित्रद्रोहादिकारिणः ये चोपकर्त्तुरपकारिणस्ते तव मिथ्या वदतो भवेयुः ८९ जन्मप्रभृतीत्यादि हे भद्र धारय त्वया जन्मत आरभ्य किंचित्सुकृतं कृतं तत्सर्वं त्वदीयं कुक्कुरादिकं संक्रामति यदि त्वमसत्यं ब्रवीषि ९० एकोहमित्यादि हे भद्र एक एवाहमस्मि जीवात्मक इति यदात्मानं मन्यसे मैवं मंस्थाः यस्मादेव पापानां पुण्यानां च द्रष्टा मननान्मुनि

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् उदङ्मुखान्प्राङ्मुखान्वा पूर्वाण्हे वै शुचिः शुचीन् ८७ ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम् गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ८८ ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा ८९ जन्मप्रभृति यत्किंचित्पुण्यं भद्र त्वया कृतम् तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ९० एकोहमस्मीत्यात्मानं यत्त्वं कल्याण मन्यसे नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ९१ यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः तेन चेदविवादस्ते मा गंगां मा कुरून्गमः ९२

सर्वज्ञः तव हृदये परमात्मा नित्यमवस्थितः तथा च श्रुतिः द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतीति ९१ यम इति सर्वसंयमनाद्यमः परमात्मा वैवस्वत इति दंडधारित्वात् देवनाद्देवः यस्तवैष हृदि तिष्ठति तेन सह यथार्थकथनेन यदि तवाविवादः यदा त्वन्नोगतमसावन्यज्जानाति त्वं चान्यथा कथयसि तदांतर्यामिना सह विप्रतिपत्तिः स्यात् एवं चात्र सत्याभिधानेनैव निःपापः कृतकृत्योसि पापनिर्हरणार्थं मा गंगां मा च कुरुक्षेत्रं यासीः मनूक्तमेवात्र गंगाकुरुक्षेत्रयोः साम्यं मत्स्यपुराणे व्यासेन स्फुटीकृतम् कुरुक्षेत्रसमा गंगा यत्र तत्रावगाहितेति मेधातिथिगोविंदराजौ तु विवस्वतः पुत्रो यो यमो दक्षिणादिक्पतिर्लोकतः कर्णगोचरीभूत

तवहृदयेपरिस्फुरतितेनसहयदित्तवाधर्मकारित्वाद्विवादोनास्तितदामागगांमाकुरुक्षेत्रंयासीरितिव्याचक्षाने ९२ नग्नइति यःसाक्ष्यं असत्यंवदेत्सनग्नः कृतमुंडनपरिभावोंऽधः कर्परेणोपलक्षितःभिक्षार्थीशत्रुकुलंगच्छेत् ९३ अवाक्इति योधर्मनिश्चयनिमि- त्तंपृष्टःसन् असत्यंब्रूयात्सपापवान्अधोमुखोमहांधकारेयोनरकस्तंगच्छति ९४ अंधइति यःसभांप्राप्तःतत्त्वार्थस्यायथार्थस्या भिप्रायं अनुपलभ्यमुक्तोन्मादिस्फुरवलेशेनकथयतिसनरोंऽधइवसकंटकान्मत्स्यान्भक्षयतिसकसवुस्थाभरत्तोदुःखमेवमहल्लभते ९५ यस्येति यस्यवदतःसर्वज्ञोंतर्यामीकिमयंसत्यंवदत्यनृतमितिनशंकेतकिंतुसत्यमेवायंवदतिनिर्विशंकःसंपद्यतेतस्मादन्यं प्रशस्ततरंपुरुषंदेवानजानंति ९६ यावतइति यस्मिंस्तथानिमित्तेसाक्ष्येयत्संख्याकान्पित्रादिबांधवान्नरकेयोजयतितत्संख्य

नग्नोमुंडःकपालेनभिक्षार्थीक्षुत्पिपासितः अंधःशत्रुकुलंगच्छेद्यःसाक्ष्यमनृतंवदेत् ९३ अवाक्शि रास्तमस्यंधेकिल्बिषीनरकंव्रजेत् यःप्रश्नंवितथंब्रूयात्पृष्टःसन्धर्मनिश्चये ९४ अंधोमत्स्यानिवाश्ना तिसनरःकंटकैःसह योभाषतेर्थवैकल्यमप्रत्यक्षंसभांगतः ९५ यस्यविद्वान्हिवदतःक्षेत्रज्ञोनाभिशं कते तस्मान्नदेवाःश्रेयांसंलोकेन्यंपुरुषंविदुः ९६ यावतोबांधवान्यस्मिन्हंतिसाक्ष्येनृतंवदन् ताव तःसंख्ययातस्मिन्शृणुसौम्यानुपूर्वशः ९७ पंचपश्वनृतेहंतिदशहंतिगवानृते शतमश्वानृतेहंतिस हस्रंपुरुषानृते ९८ हंतिजातानजातांश्चहिरण्यार्थेऽनृतंवदन् सर्वंभूम्यनृतेहंतिमास्मभूम्यनृतंव दीः ९९

कान्क्रमेणपरिगणनयामयोच्यमानान्साधोशृणु अथवा यावतोबांधवान्यस्मिन्हंतियावतांबांधवानांह ननफलंप्राप्नोतितावत्संख्याकान्शृणु पक्षद्वयेप्यनृतनिंदार्थमिदम् ९७ पंचेति पशुविषयेऽनृतेपंचबांधवान्नरकेयोजयति पंचानांबांधवानांहननफलंप्राप्नोति एवंदशगोविषयेसंख्यागौरवंचेदंप्रायश्चित्तगौरवार्थम् ९८ हंतीति हिरण्यार्थेअनृतंव दन्जातान्अजातांश्चपुत्रप्रभृतीन्नरकेयोजयति एषांहननफलंप्राप्नोति भूमिविषयेचानृतंवदन्सर्वप्राणिनांहननफलंप्राप्नोति तस्माद्भूमिविषयेऽनृतंमावदीरितिविशिष्याभिधानम् वैदूर्यादिषुअनृतंवदन्भूमिवद्दोषमाह ९९ ७ ७

अप्स्विति तडागकूपग्राह्योदकविषये। नृत्ते स्त्रीणांच मैथुनाख्योपभोगविषये अब्जेषु च रत्नेषु च मुक्तादिषु पाषाणमयेषु च वैदूर्या
दिषु अनृते भूमिवद्दोषमाह १०० एतानिति एतानसत्यभाषणदोषानधिगम्य दृष्टश्रुतानतिक्रमेण सर्वमेवांजसा तत्त्वतो ब्रूहि १०१
गोरक्षकानित्यादि गोरक्षणजीविनो वणिज्याजीविनः सूपकारादिकारुकर्मजीविनः दासकर्मजीविनः प्रतिषिद्धजीविनो ब्राह्मणान्म
छलसाक्ष्यदर्शने शूद्रवत्पृच्छेत् १०२ तद्वदन्निति तद्वेत्तसाक्ष्यमन्यथापि जानन्मनुष्यो धर्मेण दयादिना व्यवहारेऽन्यथा वदन्स्व
र्गलोकान्न भ्रश्यति यस्माद्यदेतन्निमित्तविशेषेणासत्याभिधानं तां देवसंबंधिनीं वाचमन्वादयो वदंति कुपुनस्तदसत्यं वक्तव्यमित्य
त आह १०३ शूद्रेति यस्मिन्व्यवहारे सत्याभिधाने सति शूद्रवैश्यक्षत्रियब्राह्मणानां वधः संपद्यते तत्रासत्यं वक्तव्यं यस्मात् य

अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च १०० एतान्दो
षानवेक्ष्य त्वं सर्वाननृतभाषणे यथाश्रुतं यथादृष्टं सर्वमेवांजसा वद १०१ गोरक्षकान्वाणिजिकां
स्तथा कारुकुशीलवान् प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत् १०२ तद्वदन्धर्मतोऽर्थे
षु जानन्नप्यन्यथा नरः न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदंति ताम् १०३ शूद्रविट्क्षत्रविप्राणां य
त्रर्तोक्तौ भवेद्वधः तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते १०४ वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सर
स्वतीम् अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् १०५

स्मिन्विषये अनृतं यत्तत्प्राणरक्षणेन सत्याद्विशिष्य
ते एतच्च प्रमादस्खलिताधर्मविषयत्वे न त्वसंतताधार्मिकसंधिकारस्तेनादिविषये तथा गौतमः नानृतवदने दोषो यज्जीवनं चेत्तदधी
नं न तु पापीयसो जीवनमिति न च न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितमिति मनुनैव वक्ष्यमाणत्वात् न ब्राह्मणवधप्रसक्तिरिति वाच्य
म् उग्रदंडत्वाद्राज्ञः कथंचित्संभवात् अत्र वचने शूद्रादिक्रमेणाभिधानं वधस्यामंगलत्वात् १०४ वाग्दैवेति ते साक्षिणोऽनृताभि-
धायिनो वाग्देवताकैश्चरुभिः सरस्वतीं यजेरन् तस्यानृताभिधानजनितपापस्य प्रकृष्टां शुद्धिं कुर्वाणाः साक्षिबहुत्वापेक्षं चेदम् न त्वे
कस्यैव साक्षिणः कपिंजलन्यायेन चरुत्रयम् यद्यपि वाग्देवताकैश्चरौ वाक्शब्देनैव देवतात्वं न सरस्वतीशब्देन विधिशब्दस्य मंत्रत्वे

वः स्यादितिन्यायात्तथापिवाग्वैसरस्वतीतिश्रुतेर्वाक्सरस्वत्योरेकार्थत्वात्सरस्वतीमित्युपसंहारः अत्रप्रकरणेचेदंप्रायश्चित्ताभिधा
नंलाघवार्थम् तत्रक्रियमाणेशूद्रविट्क्षत्रियब्राह्मणवधविषयानृतवादिनइत्यपिवक्तव्यंस्यात् १०५ कूष्मांडैरिति कूष्मांडसं-
ज्ञायजुर्वेदिकायद्देवादेवहेडनमित्येवमादयः तैर्मंत्रदेवतायैघृतमग्नौजुहुयात् यथाविधिपरिस्तरणादित्वात्स्वधर्मेणस्वगृह्योक्तेन
उदुत्तमंवरुणपाशमित्येतयावरुणदेवताकया आपोहिष्ठाइतित्र्यृचेनवाब्दैवताकेनजुहुयात् घृतमग्नाविितिसर्वत्रानुषंगः १०६
त्रिपक्षादिति अव्याधितःसाक्षीऋणादानादिव्यवहारेत्रिपक्षपर्यंतंयदिसाक्ष्यंनवदेत्तर्हिवादास्पदंसर्वमृणमुत्तमर्णस्यदद्यात्तस्य
चसर्वस्यऋणस्यदशमंभागंराज्ञोदंडंदद्यात् १०७ यस्येति यस्यसाक्षिणःउक्तसाक्ष्यस्यसप्ताहमध्येव्याध्यग्निदाहसन्निहितपु
त्रादिज्ञातिमरणानामन्यतमंभवतिदैवसूचितमिथ्याभिदोषत्वादृणमुत्तमर्णस्यदंडंचराज्ञादाप्यः १०८ असाक्षिकेष्विति अवि

कूष्मांडैर्वापिजुहुयाद्घृतमग्नौयथाविधि उदित्यृचावावारुण्यात्र्यृचेनाब्दैवतेनवा १०६ त्रिपक्षा
दब्रुवन्साक्ष्यमृणादिषुनरोऽगदः तदृणंप्राप्नुयात्सर्वंदशबंधंचसर्वतः १०७ यस्यदृश्येतसप्ताहादुक्त
वाक्यस्यसाक्षिणः रोगोऽग्निर्ज्ञातिमरणमृणंदाप्योदमंचसः १०८ असाक्षिकेषुत्वर्थेषुमिथोविवद
मानयोः अविंदंस्तत्त्वतःसत्यंशपथेनापिलंभयेत् १०९ महर्षिभिश्चदेवैश्चकार्यार्थंशपथाःकृ
ताः वसिष्ठश्चापिशपथंशेपेवैयवनेनृपे ११० नवृथाशपथंकुर्यात्स्वल्पेप्यर्थेनरोबुधः वृथाहि
शपथंकुर्वन्प्रेत्यचेहचनश्यति १११

द्यमानेषुसाक्षिकेषुव्यवहारेषुपरस्परंविवदमानयोस्तद्वतोर्बलादिव्यतिरेकेण
सत्यमलभमानःप्राड्विवाकेनवक्ष्यमाणेनशपथेनउन्नयेत् १०९ महर्षिभिश्चेति सप्तर्षिभिर्देवैश्चइंद्रादिभिःसंदिग्धकार्यनिर्णया
र्थंशपथाःकृताः वसिष्ठोप्यनेनपुत्रशतंभक्षितमितिविश्वामित्रेणाक्रुष्टःस्वपरिशुद्ध्येपियवनापत्येसुदाम्निराजनिशपथंचकार अ
नेकार्थत्वाद्धातूनांशपिरपिकरोत्यर्थः ११० नवृथेति स्वल्पेपिकार्येनवृथाशपथंपंडितःकुर्यात् वृथाशपथंकुर्वन्परलोकेइहलो
केचनाशंप्राप्नोति वृथाशपथप्रतिप्रसवार्थमाह १११ कामिनीष्विति बहुभार्यस्यनान्यामहंकामयेत्वमेवमत्प्रेयसीतिएवंविशिष्टः

स्वरतलाभार्थं कामिनीविषये विवाहविषये च मया अन्यान वोढव्येत्यादौ गवार्थं घासाद्युपहारे च अग्नौ होमार्थमिंधनाद्युपहारे ब्रा-
ह्मणरक्षार्थमंगीकृतधनादौ वृथाशपथे पापन्न भवति ११२ सत्येनेति ब्राह्मणं सत्यशब्दोच्चारणेन शापयेत् क्षत्रियं वाहनायुधं
मम निष्फलं स्यादित्येवं वैश्यं गोबीजकांचनानि च मम निष्फलानि स्युः शूद्रं च सर्वाणि मे पातकानि स्युरित्येवं शापयेत्कार्यगौरवला
घवापेक्षया ११३ अग्निमिति अग्निसन्निभं पंचाशत्पलिकमष्टांगुलमयः पिंडं हस्तद्वये विन्यस्तसप्ताश्वत्थपत्रं शूद्रादिकं सप्त-
पदानि पितामहाद्युक्तविधानादाहारयेत् जलौकादिरहितजले चैनं निमज्जयेत् अशेषेतिकर्तव्यता स्मृत्यंतरे ज्ञेया पुत्राणां दारा
णां च पृथक् शिरसि एनं स्पर्शयेत् ११४ यमिति यं प्रदीप्तोऽग्निर्न दहति आपश्च यन्नोर्ध्वं नयंति न चार्तिमेव महतीं प्राप्नोति स शप

कामिनीषु विवाहेषु गवां भक्ष्ये तथेंधने ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ११२ सत्येन शाप
येद्विप्रं क्षत्रियं वाहनायुधैः गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ११३ अग्निं वाहारयेदेनमप्सु चै
नं निमज्जयेत् पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक् ११४ यमिद्धो न दहत्यग्निरापो नोन्मज्जयं
ति च न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ११५ वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा ना
ग्निर्ददाह रोमापि सत्येन जगतः स्पृशः ११६ यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत् तत्तत्कार्यं
निवर्तेत कृतं चाप्यकृतं भवेत् ११७ लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च अज्ञानाद्बालभा
वाच्च साक्ष्यं वितथमुच्यते ११८

विशुद्धो ज्ञेयः अत्र प्रकृतमर्थवादमाह ११५ वत्सस्येति यस्मात्पूर्वकाले वत्सनाम्न ऋषेर्न-
त्वं ब्राह्मणः शूद्रापत्योसीत्येवं कनीयसा वैमात्रेयेणाभिक्रुष्टस्य नैतदेवमिति स यथार्थमग्निं प्रविष्टस्याग्निः सर्वस्य जगतः शुभाशु
भसाक्षिभूतः सत्येन हेतुना रोमैकमपि वह्निर्न दग्धवान् ११६ यस्मिन्निति यस्मिन्यस्मिन्व्यवहारे साक्षिभिरनृतमुक्तमिति
निश्चितं भवेत्तत्कार्यं समाप्तमपि प्राड्विवाकः पुनरपि निवर्तयेत् यदपि च दंडसमाप्तपर्यंतं तान्नीतं तदपि पुनः परीक्षेत् ११७ लोभा-
दिति वक्ष्यमाणविशेषार्थं लोभादीन्पृथङ्निर्दिशति लोभेन विपरीतज्ञानेन भयेन स्नेहेन कामेन क्रोधेनाज्ञानेनानवधाने

एषामिति एषांलोभादीनांमध्यादन्यतमस्मिन्निमित्तेसतियोमिथ्यासाक्ष्यंकथयेत्तस्यदंडविशेषाणिक्रमशोवदिष्यामि ११९
लोभादिति लोभेनमिथ्याभिधानेसतिवक्ष्यमाणानांसहस्रंदंड्यः मोहेनप्रथमंसाहसंवक्ष्यमाणंभयेनचवक्ष्यमाणोमध्यमसाह-
सौमैत्रात्प्रथमसाहसंचतुर्गुणम् १२० कामादिति स्त्रीसंभोगरूपकामानुरोधेनमिथ्यावदन्प्रथमसाहसंदशगुणंदंड्यः क्रोधे
तुपरंमध्यमसाहसंत्रिगुणंवक्ष्यमाणंअज्ञानत्वाद्द्वेशतेबालिश्यात् अनवधानात्पणशतमेवदंड्यइतिसर्वत्रानुषंगः १२१ एतानिति
मत्यरूपधर्मस्यापरिलोपार्थमसत्यरूपाधर्मस्यनिवारणार्थमेतान्कौटसाक्ष्यविषयेपूर्वैर्मुनिभिरुक्तान्दंडान्मन्वादयोआहुःएतच्चसर्व-
कौटसाक्ष्येभूयोभूयःकौटसाक्ष्यकरणेशुच १२२ कौटसाक्ष्यमिति क्षत्रियादीन्त्रीन्वर्णान्कौटसाक्ष्यात्पूर्वोक्तेनदंडमित्वाधार्मि

एषामन्यतमेस्थानेयःसाक्ष्यमनृतंवदेत् तस्यदंडविशेषांस्तुप्रवक्ष्याम्यनुपूर्वशः ११९ लोभात्सह
स्रंदंड्यस्तुमोहात्पूर्वंतुसाहसम् भयाद्द्वौमध्यमौदंडौमैत्रात्पूर्वंचतुर्गुणम् १२० कामाद्दशगुणंपू
र्वंक्रोधात्तुत्रिगुणंपरम् अज्ञानाद्द्वेशतेपूर्णेबालिश्याच्छतमेवतु १२१ एतानाहुःकौटसाक्ष्येप्रोक्ता
न्दंडान्मनीषिभिः धर्मस्याव्यभिचारार्थमधर्मनियमायच १२२ कौटसाक्ष्यंतुकुर्वाणांस्त्रीन्वर्णान्धा
र्मिकोनृपः प्रवासयेद्दंडयित्वाब्राह्मणंतुविवासयेत् १२३ दशस्थानानिदंडस्यमनुःस्वायंभुवोब्रवी
त् त्रिषुवर्णेषुयानिस्युरक्षतोब्राह्मणोव्रजेत् १२४ उपस्थमुदरंजिह्वाहस्तौपादौचपंचमम् चक्षु
र्नासाचकर्णौचधनंदेहस्तथैवच १२५

राजास्वराष्ट्राद्विवासयेत् ब्राह्मणंतुधनदंडव्यतिरिक्तेनस्वराष्ट्रान्निःसारयेत् न-
जातुब्राह्मणंहन्यात्सर्वपापेष्ववस्थितम् राष्ट्रादेनंबहिःकुर्यात्समग्रधनमक्षतमितिधनसहितनिर्वासनस्याभिधास्यमानत्वात् गोविं
दराजस्तु पूर्वदंडेनदंडयित्वानग्नंकुर्यादितिव्याचष्टे मेधातिथिस्तु ब्राह्मणस्यविवासस्त्वंवासोपहरणंगृहभंगोवेत्याचष्टे १२३
दशेति हैरण्यगर्भोमनुर्दशदंडस्थानानिउक्तवान्यानिक्षत्रियादिवर्णत्रयविषयेभवंतिब्राह्मणःपुनर्महत्यपराधेअक्षतशरीरोदे
शान्निःसार्यते १२४ उपस्थेति लिंगादीन्येतानिदशदंडस्थानानि अतस्तदंगेनापराधेसतिप्रतिषेधगौरवापेक्षयातदंगताडन

वेदनादिकर्त्तव्यम् अल्पापराधेयथाश्रुतंधनदंडः देहदंडोमारणंमहापातकादौ १२५ अनुबंधमिति पुनःपुनरिच्छातोअप
राधकरणमपेक्ष्यग्रामारण्यादिना ऽवस्थानंरात्र्यादिकंवा अपराधस्यापेक्ष्यसारंचापराधकारिणोधनशरीरादिसामर्थ्यमपराधंचगु
रुलघुभावेनचालोक्यदंडनीयेषुदंडंकुर्यात् एतच्चाभिहिताभिधास्यमानदंडशेषभूतम् १२६ अधर्मेति जीवतःख्यातिर्यशः मृ
तस्यख्यातिः कीर्त्तिः यस्मादनुबंधाद्यनपेक्ष्यदंडनमिहयशोनाशनंमृतस्यचकीर्त्तिनाशनंपरलोकेचधर्मांतरार्जितंस्वर्गमतिबंधकंत
स्मात्तत्परित्यजेत् १२७ अदंड्यानिति राजादंडानर्हान्धनलोभादिनादंडयन्दंडार्हांश्चानुरोधादिनाउत्सृजन्महतीमख्यातिंप्रा
प्नोति १२८ वाग्दंडमिति नसाधुकृतवानसिमैवंभूयः कार्षीः इत्येवंवाग्भिर्भर्त्सनंप्रथमापराधेगुणवतःकुर्यात् तथापियदिनोपशा
म्यतितदाधिक्जन्ममाजीवहानिस्तेपापस्यभूयादित्येवमादितस्यकार्यम् तदापियद्यसन्मार्गान्ननिवर्त्ततेतदाधनदंडमस्यतृतीयंकु

अनुबंधंपरिज्ञायदेशकालौचतत्त्वतः सारापराधौचालोक्यदंडंदंड्येषुपातयेत् १२६ अधर्मदंड
नंलोकेयशोघ्नंकीर्त्तिनाशनम् अस्वर्ग्यंचपरत्रापितस्मात्तत्परिवर्ज्जयेत् १२७ अदंड्यान्दंडयन्रा
जादंड्यांश्चैवाप्यदंडयन् अयशोमहदाप्नोतिनरकंचैवगच्छति १२८ वाग्दंडंप्रथमंकुर्याद्धिग्दंडं
तदनंतरम् तृतीयंधनदंडंतुवधदंडमतःपरम् १२९ वधेनापियदात्वेतान्निग्रहीतुंनशक्नुयात्
तदेषुसर्वमप्येतत्प्रयुंजीतचतुष्टयम् १३० लोकसंव्यवहारार्थंयाःसंज्ञाःप्रथिताभुवि ताम्ररू
प्यसुवर्णानांताःप्रवक्ष्याम्यशेषतः १३१ जालांतरगतेभानौयत्सूक्ष्मंदृश्यतेरजः प्रथमंतत्प्रमाणा
नांत्रसरेणुंप्रचक्षते १३२

र्यात् एवमपिचेन्नावतिष्ठतेतदातः परंवधदंडंताडनाद्यंगच्छेदरूपंतस्यकुर्यान्नमारणम्
तोवक्ष्यति वधेनापियदात्वेतानिति १२९ वधेनेति व्यस्तेनांगच्छेदेनापिदंड्यान्वशेकर्त्तुंनशक्नुयात्तदा एतेषुसर्वंवाग्दंडादिच
तुष्टयंकुर्यात् १३० लोकेति ताम्ररूप्यसुवर्णानांयाःपणादिसंज्ञाःक्रयविक्रयादिलोकव्यवहारार्थंपृथिव्यांप्रसिद्धास्तादंडाद्युपयोगा
र्थंसाकल्येनकथयिष्यामि १३१ जालांतरेति गवाक्षविवरसूर्यरश्मिषुयत्सूक्ष्मंरजोदृश्यतेतद्दृश्यमानपरिमाणानांप्रथमंत्रसरेणुंव

त्र्यसेस्यादि अष्टौत्र्यसरेणवोलिक्षैकापरिमाणेन ज्ञेयातास्तिस्रोलिक्षाराजसर्षपोज्ञेयः तेराजसर्षपास्त्रयोगौरसर्षपोज्ञेयः १३३
सर्षपाइति गौरसर्षपाःषट्मध्योनस्थूलोनापिसूक्ष्मोयवोभवतित्रिभिर्यवैः कृष्णलंरक्तिकेतिप्रसिद्धंपंचभिः कृष्णलैर्माषःषोड-
शमाषाःसुवर्णःस्यात्पुंलिंगश्चायंपरिमाणवचनः १३४ पलमिति चत्वारःसुवर्णाःपलंस्यात् दशपलानिधरणंकृष्णलद्वयंस
मंकृत्वातुलयाधृतंरूप्यमाषकोबोद्धव्यः १३५ तेषोडशेति तेषोडशरूप्यमाषकारौप्यधरणंपुराणश्चराजतोरजतसंबंधीस्यात्
कार्षिकःताम्रमयः कार्षापणःपणइतिविज्ञेयः कार्षिकश्चशास्त्रीयपलचतुर्थभागोबोद्धव्यः अतएवपलंकर्षचतुष्टयमित्याभिधा
निकाः १३६ धरणेति दशरूप्यधरणानिरौप्यशतमानोज्ञातव्यःचतुर्भिःसुवर्णैःनिष्कःप्रमाणेनबोद्धव्यः १३७ पणेति पंचाशद-

त्र्यसरेणवोष्टौविज्ञेयालिक्षैकापरिमाणतः ताराजसर्षपस्तिस्रस्तेत्रयोगौरसर्षपः १३३ सर्षपाःषड्यवो
मध्यस्त्रियवंत्वेककृष्णलम् पंचकृष्णलकोमाषस्तेसुवर्णस्तुषोडश १३४ पलंसुवर्णाश्चत्वारःपला
निधरणंदश द्वेकृष्णलेसमधृतेविज्ञेयोरौप्यमाषकः १३५ तेषोडशस्याद्धरणंपुराणश्चैवराजतः कार्षा
पणंतुविज्ञेयस्ताम्रिकःकार्षिकःपणः १३६ धरणानिदशज्ञेयःशतमानस्तुराजतः चतुःसौवर्णिकोनि
ष्कोविज्ञेयस्तुप्रमाणतः १३७ पणानांद्वेशतेसार्द्धेप्रथमःसाहसःस्मृतः मध्यमःपंचविज्ञेयःसहस्रंत्वे
वचोत्तमः १३८ ऋणेदेयेप्रतिज्ञातेपंचकंशतमर्हति अपन्हवेतद्द्विगुणंतन्मनोरनुशासनम् १३९ व
सिष्ठविहितांवृद्धिंसृजेद्वित्तविवर्द्धिनीम् अशीतिभागंगृण्हीयान्मासाद्वार्द्धुषिकःशते १४०

धिकेद्वेशतेप्रथम
साहसोमन्वादिभिःस्मृतःपंचशतानिमध्यमःसाहसोज्ञेयः पणसहस्रंतुउत्तमसाहसोज्ञेयः १३८ ऋणेति मयोत्तमर्णस्यधनंदेय
मितिसभायामधमर्णेनोक्तेसत्यधमर्णःपणशतात्पंचपणाइत्येवंदंडमर्हतियदातुसभायामपिनकिंचिदस्मैधारयामीतिएवमपल
पतितदापणशताद्दशपणाइत्येवंदंडमर्हतिइत्येवंमनुस्मृतोदंडप्रकारः १३९ वसिष्ठेति वसिष्ठेनोक्तांवृद्धिंधर्म्यत्वाद्धनवृद्धिकरीं
वृद्धिजीवीगृण्हीयात्तामेवदर्शयति शतेप्रयुक्तेअशीतिभागंप्रतिमासंवृद्धिंगृण्हीयात् १४० छ छ छ

द्विकमिति द्विकंशतंहिगृण्हानोवृद्धिधनग्रहणेकिल्बिषीनभवति १४१ द्विकमिति ब्राह्मणादिवर्णानांक्रमेणद्विकं
त्रिकंचतुष्कंपंचकंशतंसममितोनाधिकंमासस्यसंबंधिनींवृद्धिंगृण्हीयात् नन्वशीतिभागोलघुद्विकशतग्रहणंगुरुकथमिमौब्राह्मण
स्यलघुगुरुकल्पौविकल्पेताम् अत्रमेधातिथिगोविंदराजौतु पूर्ववृत्त्यानिर्वाहासंभवेद्विकशतपरिग्रहइतिव्याचक्षाते इदं
तुवदामः संबंधकेत्वशीतिभागग्रहणंबंधकरहितेतुद्विकशतवृद्धिपरिग्रहः तदाहयाज्ञवल्क्यः अशीतिभागोवृद्धिःस्यान्मासि
मासिसबंधके वर्णक्रमाच्छतंद्वित्रिचतुःपंचकमन्यथा वेदांतोद्गीतमहसोमुनेर्व्याख्यानमाद्रिये तद्विरुद्धंस्वबुध्याचनिबद्धमधु
नातनैः १४२ नत्वेति भूमिगोधनादौभोगार्थबंधकेदत्तेधनप्रयोगभवामनंतरोक्तांवृद्धिमुत्तमर्णोनलभतेकालसंरोधश्चिरका
लावस्थानाद्द्विगुणीभूतमूलधनप्रवेशेपिननिसर्गोऽन्यस्मैदानन्नचान्यतोविक्रयः मेधातिथिगोविंदराजौतु आधेश्चिरकाला

द्विकंशतंवागृण्हीयात्सतांधर्ममनुस्मरन् द्विकंशतंहिगृण्हानोनभवत्यर्थकिल्बिषी १४१ द्विकंत्रि
कंचतुष्कंचपंचकंचशतंसमम् मासस्यवृद्धिंगृण्हीयाद्वर्णानामनुपूर्वशः १४२ नत्वेवाधौसोपकारे
कौसीदींवृद्धिमाप्नुयात् नचाधेःकालसंरोधान्निसर्गोस्तिनविक्रयः १४३ नभोक्तव्योबलादाधिर्भुं
जानोवृद्धिमुत्सृजेत् मूल्येनतोषयेच्चैनमाधिस्तेनोन्यथाभवेत् १४४ आधिश्चोपनिधिश्चोभौन
कालात्ययमर्हतः अवहार्यौभवेतांतौदीर्घकालमवस्थितौ १४५

वस्थानेपिननिसर्गोनान्यत्रबंधकेनार्पण
मितिव्याचक्षाते अत्रतुसर्वदेशीयशिष्टाचारविरोधः बंधकीकृतभूम्यादेरन्यत्राधीकरणसमाचारात् १४३ नभोक्तव्येति गोप्या-
धिविषयंवचनमिदंवस्त्रालंकारादिर्गोप्याधिर्बलान्नभोक्तव्यः भुंजानोवृद्धिमुत्सृजेत्भागमूल्येनात्रैनंतोषयेत् यद्वा भोगेनासा
रतामाधौनीतेसारावस्थाधिमूल्यदानेनस्वामिनंतोषयेत् अन्यथाबंधकचौरःस्यात् १४४ आधिश्चेति आधिर्बंधकःउपनिधी
यतइत्युपनिधिःप्रीत्याभोगार्थमर्पितंद्रव्यंनारदस्मृतिलक्षितौचनिक्षेपोपनिधी तावेवात्रोपनिधिशब्देनगृह्येतेएतावाध्युपनि-
धीचिरकालमवस्थितावपिनकालात्ययमर्हतः यदैवस्वामिनाप्रार्थितौतदैवतस्यावहार्यौसमर्पणीयावित्यर्थः १४५ ७ ७

दृश्यमानागोरुष्ट्रोश्वश्चवहन्दमनार्थंचम
संप्रीत्येति यत्किंचिद्दशवर्षाणीत्यनंतरंभोगेनस्वत्वहानिंवक्ष्यतितदपवादार्थमिदम् दृश्यमानागोरुष्ट्रोश्वश्चवहन्दमनार्थंचप्र
युक्तोवलीवर्दादिः एतेप्रीत्याअन्येनतुभुज्यमानाःकदाचिदपिस्वामिनोननश्यंतिप्रदर्शनार्थंइदंप्रीत्योपभुज्यमानन्ननश्यतीतिवि
वक्षितंसामान्योपक्रमंचेदंविशेषाभिधानमितिनपुंसकलिंगता १४६ यत्किंचिदिति यत्किंचिद्धनजातंसमक्षमेवप्रीत्यादिव्यतिरेके
णपरैर्दशवर्षाणिभुज्यमानंस्वामीप्रेक्षतेमाभुक्त्वेत्यादिप्रतिषेधोक्तिंनरचयतिनासौतल्लब्धुंयोग्योभवतितस्यतत्रस्वाम्यंनिवर्त्ततइ
तिभावः १४७ अजडेति जडोबुद्धिविकलः न्यूनषोडशवर्षःपोगंडः तथाचनारदः बालआषोडशाद्वर्षात्पोगंडश्चापिशब्दितः स
धनस्वामीयदिजडःपोगंडश्चनभवतितदीयदर्शनविषयेचतद्धनंभुज्यतेतदास्वामिनोव्यवहारेणनष्टंततोभोक्तुरेवतद्धनंभवति१४८
आधिरिति वंधोग्रामादिमर्यादाबालधनंनिक्षेपोवासनस्थमनाख्यायसमुद्रंयन्निधीयतइतिनारदोक्तउपनिधिलक्षणःदास्यादि

संप्रीत्याभुज्यमानानिननश्यंतिकदाचन धेनुरुष्ट्रोवहन्नश्वोयश्चदम्यःप्रयुज्यते १४६ यत्किं
चिद्दशवर्षाणिसन्निधौप्रेक्षतेधनी भुज्यमानंपरैस्तूष्णींनसतल्लब्धुमर्हति १४७ अजडश्चेदपो
गंडोविषयेचास्यभुज्यते भग्नंतद्व्यवहारेणभोक्तातद्द्रव्यमर्हति १४८ आधिःसीमाबालधनंनिक्षे
पोपनिधिःस्त्रियः राजस्वंश्रोत्रियस्वंचनभोगेनप्रणश्यति १४९ यःस्वामिनाऽननुज्ञातमाधिंभुंक्ते
विचक्षणः तेनार्द्धवृद्धिर्मोक्तव्यातस्यभोगस्यनिष्कृतिः १५० कुसीदवृद्धिर्द्वैगुण्यंनात्येतिसकृदाहृ
ता धान्येसदेलवेवाह्येनातिक्रामतिपंचताम् १५१ स्त्रियोराजश्रोत्रियधनानिउक्तेनदशवर्षभोगेननस्वामिनोन

श्यंतिनभोक्तुःस्वत्वंभजंते १४९ यःस्वामिनेति योरक्ष्यादत्तंवंधंस्वाम्यनुज्ञाव्यतिरेकेणमूर्खोनिन्द्वेनभुंक्तेतेनतस्यभोगस्य
संभुक्तस्यार्थमर्द्धवृद्धिर्मोक्तव्याबलभोगेनतुभोक्तव्येबलाधिभंजानेसतिसर्ववृद्धित्यागएवोक्तः १५० कुसीदेति वृद्ध्याधनप्रयोगः
कुसीदंतत्रयावृद्धिःसकृद्गृहीतासाद्वैगुण्यंनातिक्रामतिमूलवृद्धिर्द्विगुणैवभवतिप्रतिदिनप्रतिमासादिग्राह्याइतितात्पर्यम् धा
न्येपुनर्हस्त्यादिःप्रयुक्तेसदेवृक्षफलेलूयतइतिलवःऊर्णालोमतस्मिन्वाहनीयेचवलीवर्दादौप्रयुक्तेचिरेणापिकालेनमूल-
धान्यादिनासहपंचगुणतांनातिक्रामेदिति १५१ कृतानुसारादिति कृतायावृद्धिर्द्विकंत्रिकमितिशास्त्रेणवर्णक्रमेणोक्तातस्याःशास्त्रा

तुसारादधिकाव्यतिरिक्ताकृता अनोन्याद्वृद्धिरकृतेत्यर्थः किंतु कृता अपिवृद्धिः वर्णक्रमेण द्विकत्रिकशतादिरूपैर्यामासेग्राह्या त-
थात्वविष्णुः वृद्धिंदधरकृताअपिवत्सरातिक्रमेयथाभिहितांवर्णक्रमेणद्विकत्रिकादिनेत्यर्थः किंचकृतवृद्धावपिविशेषांतरमाह कु
त्सितात्मसरत्सयंपंथाइतिकुसीदपथः अपमधमर्णोयत्शूद्रविषयोक्तंपंचकंशतंद्विजातेरपिगृण्हातीत्येवकुत्सितःपंथाः पूर्वोक्ताद्व
न्यंवृद्धिकरादपकृष्टइत्येवंमन्वादय आहुः इयंचाकृतावृद्धिरुद्धारविषयेयत्त्नादूर्द्धबोद्धव्यात दाह कात्यायनः प्रीतिदत्तंनवर्द्धेतयावं
न्नमतियाचितम् याच्यमानन्नदत्तंचेद्वर्द्धतेपंचकंशतम् १५२ नातीति ममैकस्मिन्मासिमासद्वयेमासत्रयेवागतेतस्यवृद्धिंविगण
य्यएकदादातव्येत्येवंविधनियमपूर्वकंवृद्धिग्रहणमुत्तमर्णःसंवत्सरपर्यंतंकुर्यात् नातिक्रांतेसंवत्सरेनियमस्यवृद्धिंगृण्हीयात् नचश
स्मादहृष्टासुक्तधर्म्यद्विकत्रिकशताद्यधिकांगृण्हीयात् अधर्मत्वबोधनार्थोनिषेधः चक्रवृद्ध्यादिचतुष्टयींचाशास्त्रीयान्नगृण्ह

कृतानुसारादधिकाव्यतिरिक्तानसिध्यति कुसीदपथमाहुस्तंपंचकंशतमर्हति १५२ नातिसांवत्सरीं
वृद्धिन्नचादृष्टांपुनर्हरेत् चक्रवृद्धिःकालवृद्धिःकारिताकायिकाचया १५३ ऋणंदातुमशक्तोयःकु
र्तुमिच्छेत्पुनःक्रियाम् सदत्वानिर्जितांवृद्धिंकरणंपरिवर्त्तयेत् १५४ अदर्शयित्वातत्रैव हिरण्यंपरि
वर्त्तयेत् यावतासंभवेद्वृद्धिस्तावतींदातुमर्हति १५५

त् तासांस्वरूपमाह बृहस्पतिः कायिकाकायसंयुक्तामासग्रा
ह्याचकालिका वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिताऋणिनाकृता तत्रचक्रवृद्धिःस्वरूपेणैवगर्हिता कालवृद्धीस्तद्विगुणाधिकग्रहणेन
थिकाचातिवाहदोहादि कारिताऋणिकेनयाऽनापत्कालएवउत्तमर्णपीडयाकृता चतस्रोपिवृद्धिरशास्त्रीयानगृण्हीयात् तथाचबृह
स्पतिः भागोयत्द्विगुणादूर्द्धंचक्रवृद्धिश्चगृह्यते पूर्णंचसोदयंपश्चात्वार्द्धुष्यंतद्विगर्हितम् कात्यायनः ऋणिकेनकृतावृद्धिरधिका
संप्रकल्पिता आपत्कालकृतानित्यंदातव्याकारितातथा अन्यथाकारितावृद्धिर्नदातव्याकथंचन १५३ ऋणंदातुमिति योऽधमर्णो
धनदानासामर्थ्यात्पुनर्लेख्यादिक्रियांकर्त्तुमिच्छेत्सानिर्जितांउत्तमर्णःसत्यतयाआत्मसात्कृतांवृद्धिंदत्वाकरणंलेख्यंपुनःकुर्यात्
१५४ अदर्शयित्वेति यदिदैवगत्यावृद्धिहिरण्यमपिसमयेदातुन्नशक्नोतितदालङ्कृहीत्वैवतत्रैवपुनःक्रियमाणेलेख्यादौवृ

रण्यादिशोपमारोपयेत् यत्प्रमाणंचक्रवृद्धिधनंतदानींसंभवतितद्दातुमर्हति १५५ चक्रवृद्धिमिति चक्रवृद्धिशब्देनात्रचक्रवच्छ
कटादिभाररूपावृद्धिरभिमताचक्रवृद्धिमाश्रितउत्तमर्णोदेशकालव्यवस्थितः यदिवाराणसीपर्यंतंलवणादिशकटेनवहामितदाम
मेदंयद्धनंदातव्यमितिवेतनरूपदेशव्यवस्थितिः यदिमासंयावद्वहामितदामासंयद्धनंदातव्यमितिकालव्यवस्थितिः एवमभ्युपगतदे
शकालनियमस्योदेशकालौदैवादपूरयन्शकटादिनावहन्लाभरूपफलंसकलंनप्राप्नोत्यपितु १५६ समुद्रेति स्थलपथजलप
थयानेनिपुणाइयद्देशपर्यंतंइयत्कालपर्यंतंऊह्यमानेसतिएतावाँल्लाभोगृहीतुंयुक्तइत्येवंदेशलाभधनज्ञावणिगादयोयांवृद्धिंतथा
विषयेनावस्थापयंतिसैवतत्रव्यवस्थातत्राधिगमंधनप्राप्तिंप्रतिप्रमाणम् १५७ योपस्येति योमनुष्योपस्यदर्शनायप्रतिभूस्तिष्ठे
त्धनदानकालेप्रसायमधमर्णोदर्शनीयइतिसतंतस्मिन्कालउत्तमर्णस्यादर्शयन्तद्धनंदातुंयतेत् १५८ प्रातिभाव्यमिति प्र

चक्रवृद्धिंसमारूढोदेशकालव्यवस्थितः अतिक्रामन्देशकालौनतत्फलमवाप्नुयात् १५६ समुद्र
यानकुशलादेशकालार्थदर्शिनः स्थापयंतितुयांवृद्धिंसातत्राधिगमंप्रति १५७ योयस्यप्रतिभूस्तिष्ठे
द्दर्शनायेहमानवः अदर्शयन्सतंतस्यप्रयच्छेत्स्वधनादृणम् १५८ प्रातिभाव्यंवृथादानमाक्षिकंसौ
रिकंचयत् दंडशुल्कावशेषंचनपुत्रोदातुमर्हति १५९ दर्शनप्रातिभाव्येतुविधिःस्यात्पूर्वचोदितः दा
नप्रतिभुविप्रेतेदायादानपिदापयेत् १६० अदातरिपुनर्दाताविज्ञातप्रकृतावृणम् पश्चात्प्रतिभुविप्रे
तेपरीप्सेत्केनहेतुना १६१ निरादिष्टधनश्चेत्तुप्रतिभूःस्यादलंधनः स्वधनादेवतद्दद्यान्निरादिष्टइतिस्थितिः

१६२ तिभूत्वेनयद्देयंधनंतत्प्रातिभाव्यंवृथादानंपरिहासनिमित्तंपंडादिभ्योदेयत्वेनपित्रांगीकृतंद्यूतनिमित्तंसुरानिमित्तंच
दंडंयद्देयंदंडशुल्कंघट्टादिदेयंतदवशेषंचपितृसंबंधिनंपितरिमृतेपुत्रोदातुंनार्हति १५९ दर्शनेति सुरानिमित्तंचयद्देयंदंडं
प्रातिभाव्यंनपुत्रोदातुमर्हतीतियोयंपूर्वोपदेशःसदर्शनप्रतिभुवःपितुर्देयोज्ञेयः दानप्रतिभुवितुपितरिमृतेपुत्रंमृणंदापयेत् १६०
अदातरीति अदातरिदानप्रतिभुवोअन्यस्मिन्दर्शनप्रतिभुविप्रत्ययप्रतिभुविवाविज्ञातप्रातिभाव्यकारणमूलशोधनोचितधनग्रहणं
यस्यतस्मिन्मृतेदातोत्तमर्णःपश्चात्केनहेतुनाधनंप्राप्तुमिच्छेत्प्रतिभुवोमृतत्वात्तत्पुत्रस्यचादानप्रतिभूत्वेनादातृत्वादित्याशंक्याह

निरादिष्टेति असौदर्शनप्रतिभूःप्रत्ययप्रतिभूर्वायदिनिरादिष्टधनःअधमर्णेननिसृष्टधनः यावताधनेनासौप्रतिभूस्तच्छोधन पर्याप्तधनः तदात्मधनादेवतद्धनन्निरादिष्टोत्रनिरादिष्टधनपुत्रोलक्षणयोच्यतेऋणमुत्तमर्णायदद्यादितिशास्त्रसंप्रदायः १६२ मत्तोन्मत्तेति मद्यादिनामत्तउन्मत्तोव्याध्यादिपीडितोपहतास्वतंत्रबालवृद्धैरस्वतंत्रत्वेनपितृमातृनियुक्तादिव्यतिरेकेणकृतऋणादानव्यवहारोनसिध्यति १६३ सत्येति इदंमयानुष्ठेयमित्येवमादिकायाभाषालेख्यादिनास्थिरीकृतापियदिशास्त्रत्वात्पर्यात्तद्यवहाराच्चबहिर्भाष्यतेसासत्यानभवतितदर्थोनानुष्ठेयः १६४ योगाधमनेति योगशब्दश्छलवाचकविक्रयदानप्रतिग्रहाःक्रियंतेनतत्ततोऽन्यत्रापिनिःक्षेपादौयत्रछद्मजानीयात्तस्ततोनिःक्षेपादिनकृतंतत्सर्वंनिवर्त्तते १६५

मत्तोन्मत्तार्त्ताध्यधीनैर्बालेनस्थविरेणवा असंबद्धकृतश्चैवव्यवहारोनसिध्यति १६३ सत्यानभाषाभवतियद्यपिस्यात्प्रतिष्ठिता बहिश्चेद्भाष्यतेधर्मान्नियताद्व्यावहारिकात् १६४ योगाधमनविक्रीतंयोगदानप्रतिग्रहम् यत्रवाप्युपधिंपश्येत्तत्सर्वंविनिवर्त्तयेत् १६५ ग्रहीतायदिनष्टःस्यात्कुटुंबार्थेकृतोव्ययः दातव्यंबांधवैस्तत्स्यात्प्रविभक्तैरपिस्वतः १६६ कुटुंबार्थेऽध्यधीनोपिव्यवहारंयमाचरेत् स्वदेशेवाविदेशेवातंज्यायान्नविचालयेत् १६७ बलाद्दत्तंबलाद्भुक्तंबलाद्यच्चापिलेखितम् सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् १६८ त्रयःपरार्थेक्लिश्यंतिसाक्षिणःप्रतिभूःकुलम् चत्वारस्तूपचीयंतेविप्रआढ्योवणिङ्नृपः १६९

ग्रहीतेति ऋणग्रहीतायदिमृतःस्यात्तेनपूर्वविभक्ता     तृकुं
असंवर्द्धनार्थंतदृणव्ययःकृतःतदातदृणंविभक्तैरविभक्तैश्चस्वधनाद्दातव्यम् १६६ कुटुंबार्थेइति     ांतर
निस्वामिसंबंधिकुटुंबव्ययनिमित्तंदासोपियदृणादानादिकुर्यात्स्वामीतत्तथाप्यनुमन्येत १६७ बलाद्दत्तमित्यादि बलाद्दत्तमप्रतिग्राह्यादिबलाद्भुक्तंभूम्यादिबलाल्लेखितंचकदृष्टिपत्रादिप्रदर्शनंचैतत्सर्वान्बलकृतान्व्यवहारान्निवर्त्तनीयान्मनुराह १६८ त्रयःपरार्थइति साक्षिणःप्रतिभूःकुलंचधर्मार्थव्यवहारद्रष्टारःत्रयएतेपरार्थेक्लेशमनुभवंतितस्मात्तेनेनसाक्ष्यंप्रातिभाव्यंव्यवहारईक्षणं

न्नांगीकारयितव्याः चत्वारःपुनः ब्राह्मणोत्तमर्णवणिग्राजानः पदार्थदानफलोपादानऋणाद्व्यार्पणाविक्रयव्यवहारे क्षणरूपंकु
र्णाधनोपचयंप्राप्नुवंति तस्माद्द्विजोदातारं आद्योउत्तमर्णवणिक्क्रेतारंराजाव्यवहर्त्तारंबलेननप्रवर्त्तयेत् पूर्वश्लोकाभिहित
बलनिषेधस्यैवायंप्रपंचः १६९ अनादेयमिति क्षीणधनोपिराजानाग्राह्यमर्थंगृण्हीयात्समृद्धोपिस्वल्पमपिग्राह्यंधनंनत्यजे
त्पस्मात् १७० अनादेयस्येति अग्राह्यग्रहणात्शास्त्रीयग्राह्यपरित्यागात्तुराज्ञः पौरैरसामर्थ्यंख्याप्यते ततश्चसप्रेत्याधर्मे
णनरकादिभोगादिहाकीर्त्याविनश्यति १७१ स्वादानादिति न्यायधनग्रहणाद्वर्णानांसजातीयैःशास्त्रीयपरिणयनादिसंबं
धात्पद्मावर्णसंसर्गाद्वर्णसंकरादिस्तत्रापिरक्षणादितियोजनीयंप्रजानांदुर्बलानांबलवद्भ्योरक्षणात्सामर्थ्यमुपजायतेनृपस्यतत
श्चासाविहलोकपरलोकयोश्चवर्द्धतेयतएवम् १७२ तस्माद्यमेति तस्माद्यमइवराजावशीकृतक्रोधोजितेंद्रियःस्वकीयेपिप्रिया

अनादेयन्नाददीतपरिक्षीणोपिपार्थिवः नचादेयंसमृद्धोपिसूक्ष्ममप्यर्थमुत्सृजेत् १७० अनादे
यस्यचादानादादेयस्यचवर्जनात् दौर्बल्यंख्याप्यतेराज्ञःसप्रेत्येहचनश्यति १७१ स्वादानाद्वर्णसंस
र्गात्त्वबलानांचरक्षणात् बलंसंजायतेराज्ञःसप्रेत्येहचवर्द्धते १७२ तस्माद्यमइवस्वामीस्वयंहित्वाप्रि
याप्रिये वर्त्तेतयाम्ययावृत्त्याजितक्रोधोजितेंद्रियः १७३ यस्त्वधर्मेणकार्याणिमोहात्कुर्यान्नराधिपः
अचिरात्तंदुरात्मानंवशेकुर्वंतिशत्रवः १७४ कामक्रोधौतुसंयम्ययोऽर्थान्धर्मेणपश्यति प्रजास्तमनु
वर्त्तंतेसमुद्रमिवसिंधवः १७५

प्रियेपरित्यज्ययमस्यचेष्टयासर्वत्रसाम्यरूपयावर्त्तेत १७३ यस्त्वधर्मेणेति यःपुनर्नृपति
र्लोभादिव्यवहारादधर्मेणव्यवहारादीनिकार्याणिकुरुतेतंदुष्टचित्तंप्रकृतिपौरविरागात्क्षिप्रमेवशत्रवोनिगृण्हंति १७४ काम-
क्रोधेति योराजारागद्वेषौविहायधर्मेणकार्याणिनिरूपयतितंराजानंप्रजाभजंतेसमुद्रमिवनद्यः नद्योयथासमुद्रान्ननिवर्त्तंतेतेनै
वैकतांयांतिप्रजाअपितस्मान्नृपादनिवर्त्तिन्यः तदेकतानाभवंतीतिसाम्यम् १७५ यःसाधयंतमिति योऽधमर्णोराजवल्लभोह
मितिगर्वादुत्तमर्णस्वेच्छयाधनंसाधयंतंनृपेनिवेदयेत् सराज्ञाऋणचतुर्थभागंदंडंतस्यतद्धनंदापनीयम् १७६ ७ ७

कर्मणापीति समानजातिरपकृष्टजातिश्चाधमर्णो धनाभावेसतिस्वजात्यनुरूपकर्मकरणेनापिसमंकुर्यात् निवृत्तोत्तमर्णाधमर्णव्यपदेशतयाधनिकसममात्मानंकुर्यात् समजातिरत्रब्राह्मणेतरः कर्मणाक्षत्रविट्शूद्रान्समानजातीयान्हीनांश्चकदापयेत् इतिकात्यायनेनविशेषितत्वात् श्रेयान्पुनरुत्कृष्टजातिर्नकर्मकारयितव्यः किंतुशनैःशनैःयथासंभवंतद्धनंदद्यात् १७७ अनेनेति अनेनमोक्तप्रकारेणपरस्परंविवदमानानामर्थिनांसाक्ष्यादिप्रमाणेननिर्णीतार्थानिकार्याणिविप्रतिपत्तिखंडनेनराजासमीकुर्यात् १७८ कुलजइति सत्कुलप्रसूतेसदाचारवतिधर्मवादिनिसत्याभिधायिनिबहुपुत्रादिपरिजनेऋजुकृतौमनुष्येव्यभिचाराभावान्निक्षेपंस्थापयेत् १७९ योयथेति योमनुष्योयेनप्रकारेणमुद्रासहितंसमुद्रंवाससाक्षिकंयमर्थंसुवर्णादियस्यहस्तेनिक्षिपेत्सोऽर्थस्तेननिर्दं

यःसाधयंतंछंदेनवेदयेद्धनिकंनृपे सराज्ञातच्चतुर्भागंदाप्यस्तस्यचतद्धनम् १७६ कर्मणापिसमंकुर्याद्धनिकायाधमर्णिकः समोवकृष्टजातिस्तुदद्याच्छ्रेयांस्तुतच्छनैः १७७ अनेनविधिनाराजामिथोविवदतांनृणाम् साक्षिप्रत्ययसिद्धानिकार्याणिसमतांनयेत् १७८ कुलजेवृत्तसंपन्नेधर्मज्ञेसत्यवादिनि महापक्षेधनिन्यार्येनिक्षेपंनिक्षिपेद्बुधः १७९ योयथानिक्षिपेद्धस्तेयमर्थंयस्यमानवः सतथैवग्रहीतव्योयथादायस्तथाग्रहः १८० योनिक्षेपंयाच्यमानोनिक्षेप्तुर्नप्रयच्छति सयाच्यःप्राड्विवाकेनतन्निःक्षेप्तुरसन्निधौ १८१ साक्ष्यभावेप्रणिधिभिर्वयोरूपसमन्वितैः अपदेशैश्चसंन्यस्यहिरण्यंतस्यतत्त्वतः १८२

तथैवग्राह्योयस्मात्येनप्रकारेणसमर्पणंतेनैवप्रकारेणग्रहणंन्याय्यंससुद्रस्थापितसुवर्णादेर्निक्षेप्तास्वयमेवमुद्रांभित्त्वायदावदतिममेदंतुलयित्वासमर्पयेत्यभिधानंदंडाद्यर्थम् १८० योनिक्षेपेति यःपुरुषोदेहिमेनिक्षिप्तंहिरण्यादिद्रव्यमित्येवंनिक्षेप्त्राप्रार्थ्यमानस्तस्ययदानसमर्पयतितदानिक्षेप्त्राज्ञापितेप्राड्विवाकेनतस्यनिक्षेप्तुरसन्निधौयाचनीयः किंकुर्यात्किंयाचनीयइत्याह १८१ साक्ष्येति प्रथमनिक्षेपेसाक्ष्यभावेस्वकीयसर्वैश्चारपुरुषैः अतिक्रांतबाल्यैःसौम्यादिभिर्नृपोपद्रवादिव्याजाभिधायिभिर्हिरण्यानितत्त्वेनतत्रनिक्षेपयित्वातैरेवचारपुरुषैःसनिक्षेपधारीप्राड्विवाकेनचारपुरुषनिक्षिप्त

स्त्वर्णयाच्य. १८२ सयदीति सनिक्षेपधारीयथान्यस्तंसमुद्रं चापथाकृतंकटकमुकुटाकारेणरचितंयदितथैवप्रतिपद्येतसत्यमाक्षि गृह्यतामितितदापरेणपूर्वनिक्षेप्त्राभाड्विवाकेवेदिनायन्निक्षिप्तमित्यभिप्रयुज्यतेतत्रनकिंचिदस्तीतिज्ञातव्यम् १८३ तेषामिति तेषां चारपुरुषाणांयन्निक्षिप्तंहिरण्यंयथान्यस्तंपदितन्नदद्यात्तदा द्वावपिनिक्षेपोज्ञापितचारसंबंधिनौसंपीड्यदापनीयःस्यादित्येवंरूपो धर्मनिश्चयः योनिक्षेपमित्यादिश्लोकचतुष्टयस्यन्वेदृशएवपाठक्रमोमेधातिथिभोजदेवादिभिर्निश्चितः गोविंदराजस्तु सास्यभावेन णाधिभिरितिश्लोकोऽतएवपठितःतदन्वनार्थसंगतिः नवान्द्रस्म्नायादरः १८४ निक्षेपइति निक्षिप्यतइतिनिक्षेपः मुद्रांकितम गणितंवायन्निधीयतेसउपनिधिः ब्राह्मणपरिव्राजकवदुपदेशभेदः तौनिक्षेपोपनिधी निक्षेप्तरिउपनिधातरिजीवतिमृत्यनंतरे तदीयपुत्रादौतदनंतरेत्वनधिकारिणिकदाचिन्नदेयौयतस्तस्यपुत्रादेरपिपितुरसमर्पणाद्विनाशोतौनिक्षेपोपनिधीनश्यतःनिक्षेप

सयदिप्रतिपद्येतयथान्यस्तंयथाकृतम् नतत्रविद्यतेकिंचिद्यत्परैरभियुज्यते १८३ तेषान्नदद्याद्यदितुतद्धिरण्यंयथाविधि उभौनिगृह्यदाप्यःस्यादितिधर्मस्यधारणा १८४ निक्षेपोपनिधीनित्यं नदेयौप्रत्यनन्तरे नश्यतोविनिपातेतावनिपातेत्वनाशिनौ १८५ स्वयमेवतुयोदद्यान्मृतस्यप्रत्यनन्तरे नसराज्ञानियोक्तव्योननिक्षेप्तुश्चबन्धुभिः १८६ अच्छलेनैवचान्विच्छेत्तमर्थंप्रीतिपूर्वकम् विचार्यतस्यवावृत्तंसाम्नैवपरिसाधयेत् १८७ निक्षेपेष्वेषुसर्वेषुविधिःस्यात्परिसाधने समुद्रेनाप्नुयात्किंचिद्यदितस्मान्नसंहरेत् १८८

धारिणात्वदेयौस्यातांपुत्रादेः पितुश्चपुनरविनाशोकदाचिदविनाशिनौस्यातांतस्मादनर्थसं देहान्नदेयौ १८५ स्वयमेवेति निक्षेप्तुर्मृतस्यनिक्षेपधारीतद्धनाधिकारिणिपुत्रादौतदनभ्यर्थितःस्वयमेवयःसमर्पयतिसराज्ञानि क्षेप्तुःपुत्रादिभिर्वान्यदपित्वयिनिःक्षिप्तमस्तीतिनाक्षेप्तव्यः यदिकथंचिद्भ्रांतिःस्यात्तदा १८६ अच्छलेनैवेति तत्रस्थेधनांतरसद्भ वलक्षणवाक्यंसामादिपरिहारेणैवप्रीतिपूर्वकंनिश्चिनुयात्नतुशपथादिनादिव्यादिदानेन निक्षेपधारिणःशीलमवेक्ष्यधार्मिकोयमि तिज्ञात्वासाम्नयोगेननिश्चिनुयात् १८७ निक्षेपेष्विति सर्वेषुनिक्षेपेषु अपक्रियमाणेषुएषसाक्ष्यभावेत्यादिपूर्वोक्तविधिनिर्णय

सिद्धोस्यात् मुद्रितादौपुनस्तस्यनिक्षेपधारीयदि त्वमुद्रादिनानकिमप्यपहरेत्तदातस्मिन्नर्पितेनकिंदूषणंप्राप्नुयात् १८८ चौ
रैरिति चौरैर्मुषितंउदकेन देशांतरंप्रापितंअग्निनावादग्धन्निःक्षेपन्निक्षेपधारीनदद्यात् यदिस्वयंतस्मान्नकिंचिदप्यपहरति
१८९ निक्षेपस्येति निक्षेपस्यापन्होतारमनिक्षिप्ययाचितारंसर्वैः सामादिभिः उपायैर्वैदिकैश्वशपथैरग्निहरणादिभिर्नृपोनि
रूपयेत् १९० योनिक्षेपमिति निक्षिप्तधनंयोनसमर्पयतियश्वानिक्षिप्तंप्रार्थयतितौद्वौसुवर्णमुक्तादौमहतिविषयेचौरवद्दंड्यौ
स्वल्पविषयेताम्रादौतत्समंदंडनीयौ १९१ निक्षेपेति निक्षेपापहारिणंनिक्षिप्तसमधनंदंडयेत् समशिष्टत्वात् अनिक्षिप्ययाचि-
तारमपि नचपुनरुक्तिः महत्यपराधेब्राह्मणेतरस्यचौरवदितिपूर्वश्लोकेन शारीरदंडस्यापिप्राप्तौतन्निवृत्त्यर्थमिदम् दापयेदिति

चौरैर्हृतंजलेनोढमग्निना दग्धमेववा नदद्याद्यदितस्मात्सनसंहरतिकिंचन १८९ निक्षेपस्यापह
र्तारमनिक्षेप्तारमेवच सर्वैरुपायैरन्विच्छेच्छपथैश्चैववैदिकैः १९० योनिक्षेपन्नार्पयतियश्वानिक्षि
प्ययाचते तावुभौचौरवच्छास्यौदाप्योवातत्समंदमम् १९१ निक्षेपस्यापहर्तारंतत्समंदापयेद्दमम् त
थोपनिधिहर्तारमविशेषेणपार्थिवः १९२ उपधाभिश्चयःकश्चित्परद्रव्यंहरेन्नरः ससहायःसहंतव्यः
प्रकाशंविविधैर्वधैः १९३ निक्षेपोयःकृतोयेनयावांश्वकुलसन्निधौ तावानेवसविज्ञेयोविब्रुवन्द
डमर्हति १९४ मिथोदायःकृतोयेनगृहीतोमिथएववा मिथएवप्रदातव्योयथादायस्तथाग्रहः १९५

यमात् नचानेनपूर्वश्लोकवैयर्थ्यम् अस्यप्रथमापराधविषयत्वात्पूर्वोक्तेचाभ्यासेचौरोक्तमहासाहसादिधनदंडावरोधकत्वात् धनदंडोनि
निधिर्मुद्रादिविहितन्निहितधनम् तस्यापहर्तारंकथितविशेषणंराजादंडयेत् १९२ उपधेति राजात्वयिरुष्टःतस्मात्त्वांरक्षामिममा
धनंदेहिधनकन्यालाभोपकरणंवाऽनृतमतिःयःपरद्रव्यंगृण्हातिसच्छद्मधनसहकारिसहितोबहुजनसमक्षंकरचरणशिरश्छेदा
भिर्नानाप्रकारैर्वधोपायैःराज्ञाहंतव्यः १९३ निक्षेपेति यःसुवर्णादिर्यावत्परपरिमितोयेनसाक्षिसमक्षंनिक्षेपःकृतःतत्रपरिमाण
दिविप्रतिपत्तौसाक्षिवचनात्तावानेवविज्ञातव्यः विप्रतिपत्तिंकुर्वन् अप्येतदुक्तानुसारेणदंडदाप्यः १९४ मिथोदायइति रहसि

निक्षेपोर्पितोनिक्षेपधारिणाचरहस्येवप्रत्यर्पणीयः नप्रत्यर्पणेसाक्ष्यपेक्षंयस्मात् येनैवप्रकारेणदानंतेनैवप्रकारेणप्रत्यर्पणंदातव्यंइ-
तिश्रवणान्निक्षेपधारिणोयंनियमविधिः योयथानिक्षिपेद्धस्तेइतितुनिक्षेप्तुर्नियमार्थंग्रहीतव्यइतिश्रवणात् अतोनपौनरुक्त्यम् १९५
निक्षिप्तस्येति राज्ञानिक्षिप्तस्यधनस्यासमुद्रस्यमुद्रादियुतस्यवाउपनिधिरूपस्यतथाप्रीत्याकतिचित्कालंभोगार्थमर्पितस्याने
नोक्तप्रकारेणन्यस्तधनधारिणमपीडयन्निर्णयंकुर्यात् १९६ विक्रीणीतेइति अस्वामीयःस्वामिनाचाननुगतःपरकीयंद्रव्यंवि
क्रीणीतेवस्तुतश्चौरमचौरमात्मानंमन्यमानंतंसाक्षिलन्नकारयेत् नकुत्रचिदपिप्रमाणीकुर्यादित्यर्थः १९७ अवहार्य इति एषप
रस्वविक्रयीयदिस्वामिनोभ्रात्रादिपरत्वेनसान्वयःसंबंधीभवतितदाषट्पणशतानिअवहार्योदंडनीयः यदिपुनःस्वामिनःसं
बंधीनभवतिअपसरश्चनस्यात् अपसरत्यनेनास्मात्सकाशाद्धनमित्यपसरःप्रतिग्रहक्रयादिःसयस्यस्वामिसंबंधिपुत्रादेःसकाशा

निक्षिप्तस्यधनस्यैवंप्रीत्योपनिहितस्यच राजाविनिर्णयंकुर्यादक्षिण्वन्न्यासधारिणम् १९६ विक्री
णीतेपरस्यस्वंयोऽस्वामीस्वाम्यसंमतः नतन्नयेतसाक्ष्यंतुप्रच्छन्नेनप्रकाशेनमानिनम् १९७ अवहार्योभ
वेच्चैवसान्वयःषट्शतंदमम् निरन्वयोऽनपसरःप्राप्तःस्याच्चौरकिल्बिषम् १९८ अस्वामिनाकृतो
यस्तुदायोविक्रयएववा अकृतःसतुविज्ञेयोव्यवहारेयथास्थितिः १९९ संभोगोदृश्यतेयत्रनदृश्ये
तागमःक्वचित् आगमःकारणंतत्रनसंभोगइतिस्थितिः २०० विक्रयाद्योधनंकिंचिद्गृह्णीयात्कुलस
न्निधौ क्रयेणसविशुद्धंहिन्यायतोलभतेधनम् २०१

स्यात्तदाचौरसंबंधिपापंप्राप्नोतिदंडनीयइत्यर्थः १९८ अस्वा
मिनेति अस्वामिनायत्कृतंयद्दत्तंविक्रीतंवातदकृतमेवबोद्धव्यम् व्यवहारेयथामर्यादातथाकृतंनभवतीत्यर्थः १९९ संभोगइति
यस्मिन्वस्तुनिसंभोगोविद्यतेक्रयादिरूपस्त्वागमोनास्तितत्रागमएवप्रमाणंनभोगइतिशास्त्रमर्यादा २०० विक्रयादिति विक्रीय
तेअस्मिन्नितिविक्रयदेशोविक्रयः ततोयःक्रेयधनंकिंचिद्व्यवहर्तृसमूहसमक्षंक्रियतेक्रयेणेतिक्रयोमूल्यंतेनयस्माद्गृह्णीयात्अ
तोन्यायतएवास्वामिविक्रेतृसकाशात्क्रयणाद्विशुद्धंधनंलभते २०१ अथेति अथमूलमस्वामीविक्रेतामरणाद्देशांतरादिगम

नादिना हर्त्तुं शक्यते प्रकाशक्रयणेन्वासौ निश्चितः तदा दंडानर्हएव क्रेता राज्ञा मुच्यते नष्टधनस्वामीन्च यदस्वामिना विक्रीतंद्रव्यं क्रेतुर्हस्ताल्लभ्यते अत्रच विषयोर्द्धमूल्यं क्रेतुर्दत्वा स्वधनं स्वामिना ग्राह्यं तदाह बृहस्पतिः वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः अविज्ञाताश्रयात्क्रीतं विक्रेता यत्रवामृतः स्वामी दत्वार्द्धमूल्यंतु प्रगृण्हीयात्स्वकंधनम् अर्द्धं द्वयोरपहृतं तत्रस्याद्व्यवहारतः २०२ न्येति कुंकुमादिद्रव्यं कुसुंभादिना मिश्रीकृत्य न विक्रेतव्यं न्नचासारं सारमित्यभिधाय नच तुलादिना न्यूनं न्न परोक्षावस्थितं न्नरोगादिना स्थगितरूपं अत्रास्वामिविक्रयसादृश्यादस्वामिविक्रयदंडएवस्यात् २०३ अन्यांचेति शुल्कदेया शुल्कव्यवस्थाकाले निरथ यां दर्शयित्वा यदि सा व द्यावरायदीयते तदाह्वे अपि कन्ये तेनैव केन शुल्केनासौ वरः परिणयत इति मनुराह शुल्कग्रहणपूर्वककन्यापादानस्य विक्रयरूपत्वादर्थ क्रयविक्रयसाधर्म्येणास्यात्राभिधानम् २०४ नोन्मत्तेति उन्मत्तायास्तथा कुष्ठवत्याया नानुभूतमैथु

अथमूलमनाहार्य्यंप्रकाशक्रयशोधितः अदंड्योमुच्यतेराज्ञानाष्टिकोलभतेधनम् २०२ नान्यदन्येनसंसृष्टरूपंविक्रयमर्हति नचासारंनचन्यूनंन्नदूरेणातिरोहितम् २०३ अन्यांचेद्दर्शयित्वान्यांवोढुःकन्याप्रदीयते उभेतेएकशुल्केनवहेदित्यब्रवीन्मनुः २०४ नोन्मत्तायानकुष्ठिन्यानचयास्पृष्टमैथुना पूर्वंदोषानभिख्याप्यप्रदातादंडमर्हति २०५ ऋत्विग्यदिवृतोयज्ञेस्वकर्मपरिहापयेत् तस्यकर्मानुरूपेणदेयोंशस्सहकर्तृभिः २०६ दक्षिणासुचदत्तासुस्वकर्मपरिहापयन् कृत्स्नमेवलभेतांशमन्येनैवचकारयेत् २०७ यस्मिन्कर्मणियास्तुस्युरुक्ताःप्रत्यंगदक्षिणाः सएवताआददीतभजेरन्सर्वएववा २०८

नातस्या ब्राह्मणादिविवाहात्पूर्वमुन्मादादीन्दोषान्वरस्य कथयित्वा दंडार्हो न भवति तेनाकथने दंड इति गम्यते यस्तु दोषवतीं कन्यामिति वक्ष्यति अथसंभूयसमुत्थानमाह २०५ ऋत्विगिति यज्ञे कृतवरण ऋत्विक् यदि किंचित्कर्म कृत्वा व्याध्यादिना कर्म त्यजति तदा तस्येतर ऋत्विग्भिः पर्यालोच्य कृतानुसारेण दक्षिणांशो देयः २०६ दक्षिणेति माध्यंदिनसदक्षिणाकाले दक्षिणासु दत्तासु व्याध्यादिना कर्म परित्यजन्नतु शाठ्यात् कृत्स्नमेव दक्षिणाभागं लभेत् कर्मशेषं प्रकृतमन्येन कारयेत् २०७ यस्मिन्निति यस्मिन्कर्मण्याधानादौ अंगमंगं प्रतियादक्षिणा यत्संबंधेन श्रुताः स्युः स एव ता आददीत न तत्तद्भाग

मात्रं सर्वे विभज्य गृण्हीरन्निति संशयः अत्र सिद्धांतमाह २०८ रथमिति केषांचित् शाखिनामाधानेऽध्वर्यवे रथो देयत्वेनाम्नायते ब्रह्मणे चाश्वः उद्गात्रे सोमक्रयवहनशकटमतो व्यवस्थाम्नानसामर्थ्याद्यादक्षिणायत्संबंधत्वेन श्रूयते स एव तामाददीत संप्रतियत्त्विवि धाने दक्षिणाविभागमाह २०९ सर्वेषामिति तं शतेन दीक्षयतीति श्रूयते तत्र सर्वेषां षोडशानां ऋत्विजां मध्ये ये मुख्या ऋत्विजः होत्रध्वर्युब्रह्मोद्गातारः समग्रदक्षिणायास्ते अर्द्धहराः अष्टचत्वारिंशद्भोभाजो भवंति अत एव कात्यायनेन यद्द्वादशाद्येभ्य इति प्रत्येकं द्वादशगो दानं विहितम् यद्यपि तस्यार्द्धं पंचाशद्भवति तथापीहन्यूनार्द्धग्रहणेनापि इमे अर्द्धिन उच्यंते सामीप्याद परे मैत्रावरुणयोः प्रतिप्रस्थातृब्राह्मणाच्छंसि प्रस्तोतारस्ते मुख्यर्त्विक्गृहीत दक्षिणार्द्धग्रहणेनार्द्धिन उच्यंते तृतीयिनोऽच्छावाकनेष्टाग्नीध्र प्रतिहर्तारः ते मुख्यर्त्विक् ग्रहीतस्य तृतीयमंशं लभंते पादिनस्तु ग्रावस्तुन्नेतृपोतृसुब्रह्मण्या एते मुख्यर्त्विक्गृहीतस्य चतुर्थमंशं लभंते एतच्च षड्द्वितीयेभ्यः चत

रथं हरेत्तचाध्वर्युर्ब्रह्माधानेचवाजिनम् होतावापि हरेदश्वमुद्गाताचाप्यनःक्रये २०९ सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोपरे तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिनः २१० संभूयस्वानिकर्माणिकुर्व द्भिरिहमानवैः अनेनविधियोगेनकर्त्तव्यांशप्रकल्पना २११ धर्मार्थयेनदत्तंस्यात्कस्मैचिद्याचतेधनम् पश्चाच्चनतथातत्स्यान्नदेयंतस्यतद्भवेत् २१२ यदिसंसाधयेत्तत्तुदर्पाल्लोभेनवापुनः राज्ञादाप्यःसु वर्णंस्यात्तस्यस्तेयस्यनिष्कृतिः २१३ दत्तस्यैषोदिताधर्म्यायथावदनपक्रिया अतऊर्ध्वंप्रवक्ष्यामिवेत्त नस्यानपक्रियाम् २१४

स्त्रस्तृतीयेभ्यस्त्रिस्त्रश्चतुर्थेभ्य इति सूत्रयता कात्यायनेन स्फुटीकृतम् २१० संभूयेति मिलित्वा गृहनिर्माणादीनि स्वकर्माणि लोके स्थपति सूत्रधारादिभिश्चमनुष्यैः कुर्वद्भिरनेन यज्ञदक्षिणाविधिना श्रयणेन व्यापाराद्यपेक्षया भागकल्पना कार्या इदानीं दत्तानपकर्माह २११ धर्मार्थमिति येन यागादिकर्मार्थं कस्मैचिद्याचमानाय धनं दत्तं प्रतिश्रुतं चापश्चाच्च तद्यदि असौ यागार्थं न विनियुंजीत तदा तद्दत्तमपि ग्राह्यं प्रतिश्रुतं च न देयं यदाह गौतमः प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् २१२ यदिति यदि तद्दत्तमसौ गृहीत्वा लोभादहंकाराद्वा न त्यजति प्रतिश्रुतं बाधनं बलेन गृण्हाति तदा तस्य चौरमायस्य संबंधार्थं राज्ञा सुवर्णं दंडं दापनीयो भवति २१३ दत्तस्येति

एतदुक्तस्यामतिपादनंधर्मादनपेतंतदुक्तंअतोऽनंतरंभृतेरसमर्पणादिकंवक्ष्यामि २१४ भृतइति योभृतिपरिक्रीतोव्याध्यपीडि
तोयथानिरूपितंकर्माहंकारान्नकुर्यात्कर्मानुरूपेणसुवर्णादिकृष्णलान्यष्टौदंडनीयःवेतनंचास्यनदेयम् २१५ आर्त्तइत्यादि य
दाव्याध्यादिपीडयाकर्मनकरोतियादृक्भाषितंतादृक्कर्मकुर्यात्वेतनंचचिरकालादपिलभेतैव २१६ यथोक्तमिति यत्कर्मयथाभा-
षितंपीडितोऽन्येनकारयेत्स्वस्थोवानकुर्यात्नापिकारयेत्तस्यकिंचित्शेषस्यकृतस्यकर्मणोवेतनन्नदेयम् २१७ एषधर्मइति
शाव्यवस्थावेतनादानाख्यकर्मणोनिःशेषेणोक्ताअतोऽनंतरंसंविद्व्यतिक्रमकारिणंदंडादिव्यवस्थांवदिष्यामि २१८ योग्रामेति
मदेशशब्दाभ्यांतद्वासिनोलक्ष्यंतेसंघोवणिगादिसमूहः इदमस्माभिः कर्त्तव्यंपरिहार्यंनामित्येवंरूपंसंकेतंसत्यादिशपथेनकृत्वात-

भृतोनार्त्तोनकुर्याद्योदर्पात्कर्मयथोदितम् सदंड्यःकृष्णलान्यष्टौनदेयंचास्यवेतनम् २१५ आर्त्तस्तु
कुर्यात्स्वस्थःसन्यथाभाषितमादितः सदीर्घस्यापिकालस्यतल्लभेतैववेतनम् २१६ यथोक्तमार्त्तःस्व
स्थोवायस्तत्कर्मनकारयेत् नतस्यवेतनंदेयमल्पोनस्यापिकर्मणः २१७ एषधर्मोऽखिलेनोक्तोवेतना
दानकर्मणः अतऊर्ध्वंप्रवक्ष्यामिधर्मंसमयभेदिनाम् २१८ योग्रामदेशसंघानांकृत्वासत्येनसंविदम् वि
संवदेन्नरोलोभात्तंराष्ट्राद्विप्रवासयेत् २१९ निगृह्यदापयेच्चैनंसमयव्यभिचारिणम् चतुःसुवर्णान्षण्
[illegible]कांछतमानंचराजतम् २२० एतद्दंडविधिंकुर्याद्धार्मिकःपृथिवीपतिः ग्रामजातिसमूहेषुसमयव्य
भिचारिणाम् २२१ क्रीत्वाविक्रीयवाकिंचिद्यस्येहानुशयोभवेत् सोऽतर्दशाहात्तद्द्रव्यंदद्याच्चैवाददीत
च २२२

न्मध्येयोनरोलोभादिनानिःक्रामेत्तंराजाराष्ट्रान्निर्वासयेत् २१९ निगृह्येति अथचैनंसंविद्व्यतिक्रमकारिणंनिबं
चतुरःसुवर्णान्षण्निष्कान्प्रत्येकंचतुःसुवर्णपरिमितान्राजतंचशतमानंविंशत्यधिकरक्तिकाशतत्रयपरिमाणंत्रयमेतद्धनबला
धनगोरथापेक्षयासमन्वितंव्यस्तंवाराजादंडंदापयेत् २२० एतदिति ग्रामेषुब्राह्मणजातिसमूहेषुसंविद्व्यतिक्रमकारिणामेतद्दंडवि
धिंधर्मप्रधानोराजाऽनुतिष्ठेत् २२१ क्रीत्वेति क्रीत्वाविक्रीयवाकिंचिद्द्रव्यंविनश्वररूपंस्थिरार्घंभूमिताम्रादियस्यलोकेपश्चात्तापो

जायतेनसाधुमयाक्रीतमितिसक्रीतंदशाहमध्येप्रत्यर्पयेत् विक्रीतंवागृण्हीयात् २२२ परेणेति दशाहादूर्ध्वक्रीतन्नत्यजेत्
नापिविक्रीतंविक्रयिकोबलेनदापयेत् विक्रीतंबलेनगृण्हन्परित्यजन्राज्ञाषट्शतानिदंड्यः २२३ यस्त्विति नोन्मत्तायाइतिसा
मान्येनोक्तंदंडविशेषाभिधानार्थमिदमुन्मादादिदोषानकथयित्वादोषवतींकन्यांवराययःप्रयच्छतितस्यराजास्वयमादरेणषण्णव
तिपणान्दंडंकुर्यात्अनुशयप्रसंगेनेतत्कन्यागतमुच्यते २२४ अकन्येति नेयंकन्याक्षतयोनिरियमितियोमनुष्योद्वेषेणब्रूया
त्तस्याउक्तदोषमविभावयन्पणशतंराजादंडंप्रकल्पयेत् शुक्तश्चास्याकन्येतिवादिनोदंडोयस्मात् २२५ पाणिग्रहेति अर्यमणंनु
देवंकन्याअग्निमयक्षतेत्येवमादयोवैदिकामनुष्याणांमंत्राः कन्याशब्दश्रवणात्कन्यास्वेवव्यवस्थितानाकन्याविषयेक्वचित्शास्त्रेध
र्म्यविवाहसिद्ध्येव्यवस्थिताअसमवेतार्थास्यात्अतएवाह ताःक्षतयोनयोवैवाहिकमंत्रैःसंस्क्रियमाणाअपियस्मादपगतधर्मविवा

परेणतुदशाहस्यनदद्यान्नापिदापयेत् आददानोददच्चैवराज्ञादंड्यःशतानिषट् २२३ यस्तुदोष
वतींकन्यामनाख्यायप्रयच्छति तस्यकुर्यान्नृपोदंडंस्वयंषण्णवतिंपणान् २२४ अकन्येतितुयःक-
न्यांब्रूयाद्द्वेषेणमानवः सशतंप्राप्नुयाद्दंडंतस्यादोषमदर्शयन् २२५ पाणिग्रहणिकामंत्राःकन्यास्वे
वप्रतिष्ठिताः नाकन्यासुक्वचिन्नृणांलुप्तधर्मक्रियाहिताः २२६ पाणिग्रहणिकामंत्रानियतंदारल-
क्षणम् तेषान्निष्ठातुविज्ञेयाविद्वद्भिःसप्तमेपदे २२७

हादिशालिन्योभवंतिनासौधर्म्योविवाहइत्यर्थः नतुक्षतयोने
र्वैवाहिकमंत्रहोमादिनिषेधकमिदं यागर्भिणीसंस्क्रियतेतयावोढुः कन्यासमुद्भवमितिक्षतयोनेरपिमनुनैवविवाहसंस्कारस्यव-
क्ष्यमाणत्वात् देवलेनतु गांधर्वेषुविवाहेषुपुनर्वैवाहिकोविधिः कर्त्तव्यश्चत्रिभिर्वर्णैःसमयेनाग्निसाक्षिकइतिगांधर्वेषुविवाहेषु
होममंत्रादिविधिरुक्तः गांधर्वश्चोपगमनपूर्वकोपिभवतितस्यक्षत्रियविषयेस्वधर्मत्वंमनुनोक्तंअतःसामान्यविशेषन्यायात्इतर
विषयोयंक्षतयोनिविवाहस्याधर्मत्वोपदेशः २२६ पाणिग्रहणिकेति वैवाहिकामंत्रानियतंनिश्चितंभार्यात्वेनिमित्तंमंत्रैर्यथाशा
स्त्रप्रयुक्तैर्भार्यात्वेननिष्पत्तेः तेषांतुमंत्राणांसखासप्तपदीभवेतिमंत्रेणकल्पनयासप्तमेदत्तेपदेभार्यात्वनिष्पत्तेः शास्त्रज्ञैःनिष्

निर्विज्ञेयाएवंचसप्तपदीदानात्साग्भार्यात्वानिष्पत्तेः सत्यनुशयेजह्यान्नोर्ध्वम् २२७ यस्मिन्निति नकेवलंक्रयएवअन्यत्रापि
यस्मिन्यस्मिन्संबंधिसेनादौकार्येयस्यपश्चात्तापोजायतेतंसनेनदशाहविधिनाधर्मादनपेतेमार्गेनृपःस्थापयेत् २२८ पशुष्वि
ति गवादिपशुविषयेस्वामिनांपालानांव्यतिक्रमेजातेविवादंसम्यग्धर्म्यंयथातथाव्यवस्थयावक्ष्यामि २२९ दिवेति दिवापशूनां
पालहस्तन्यस्तानांयोगक्षेमविषयेपालस्यगर्हणीयता रात्रौपुनःपालप्रत्यर्पितानांस्वामिगृहस्थितानांस्वामिनोदोषोऽन्यथातुय
दिरात्रावपिपालहस्तगताभवंतितत्रदोषउत्पन्नेपालएवगर्हणीयतांप्राप्नोति २३० गोपः क्षीरेति योगोपालाख्योभृत्यः क्षीरेण
नभक्तादिनास्वस्वाम्यनुज्ञयाधर्षितोगोभ्यःश्रेष्ठामेकांगांभृत्यर्थंदुह्यात्साभक्तादिरहितेगोपालेभृतिःस्यात् एवंचैकगवीक्षीर

यस्मिन्यस्मिन्कृतेकार्येयस्येहानुशयोभवेत् तमनेनविधानेनधर्म्येपथिनिवेशयेत् २२८ पशु
षुस्वामिनांचैवपालानांचव्यतिक्रमे विवादंसंप्रवक्ष्यामियथावद्धर्मतत्त्वतः २२९ दिवावक्तव्यता
पालेरात्रौस्वामिनितद्गृहे योगक्षेमेऽन्यथाचेत्तुपालोवक्तव्यतामियात् २३० गोपःक्षीरभृतोयस्तुस
दुह्याद्दशतोवराम् गोस्वाम्यनुमतेभृत्यःसास्यात्पालेऽभृतेभृतिः २३१ नष्टंविनष्टंकृमिभिःश्वहतं
विषमेमृतम् हीनंपुरुषकारेणप्रदद्यात्पालएवतु २३२ विघुष्यतुहृतंचौरैर्नपालोदातुमर्हति यदि
देशेचकालेचस्वामिनःस्वस्यशंसति २३३ कर्णौचर्मचवालांश्चबस्तिंस्नायुंचरोचनाम् पशुषुस्वामि
नोदद्यान्मृतेष्वंगानिदर्शयेत् २३४

दानेनदशगाःपालयेदित्युक्तम् २३१ नष्टमिति नष्टंदृष्टिपथातीतंकृमिभिर्नाशि
तंश्वभिःखादितंहतंविवरादिपातमृतंप्रदर्शनंचैनत्पालसंबंधिरक्षकाख्यपुरुषव्यापाररहितंमृतंपलायितंगवादिपशुपाल
एवतुस्वामिनेदद्यात् २३२ विघुष्येति चौरैःपुनःपटहादिविघुष्यहृतंपालोदातुंनार्हति विघुष्येतिचौराणांबहुत्वप्रबल
त्वकथनपरंसन्निहितेदेशेहरणकालानंतरमेवागत्यस्वामिनःकथयति २३३ कर्णाविति स्वयंमृतेषुपशुषुकर्णचर्मलांगूल
प्रवालान्नाभेरधोभागस्नायुरोचनाःस्वामिनांदद्यात् अन्यानिचचिन्हानिशृंगखुरादीनिदर्शयेत् २३४

अजाविकेति अजाश्च अविकाश्च अजाविकंगवाश्वप्रभृतीनिचेति द्वंद्वैकवद्भावः तस्मिन्नजाविके वृकैः परिवृत्ते सति पालेनाग
च्छतियामजामेडकांवावने वृको हन्यात्स पालस्य दोषः स्यात् २३५ तासांचेति तासामजाविकानां पालेन नियमितानां पलायदि
कश्चित्कुतश्चिदुत्प्लुत्यालक्षितो यां कांचिद्धन्यात् न पालस्तत्र दोषभाक् २३६ धनुःशतमिति चतुर्हस्तो धनुः शम्यायष्टिः तस्याः
पातः प्रक्षेपो ग्रामसमीपे सर्वास्दिक्षु चत्वारि हस्तशतानि त्रीन्वा यष्टिप्रक्षेपान् यावत्पशुप्रचारार्थं सस्यवपनादिसंरोधपरिहारः का
र्यः नगरसमीपे पुनरयं त्रिगुणः कर्त्तव्यः २३७ तत्रापरीति तस्मिन्परिहारस्थाने यदि केनचिद् दत्तावृतिकं धान्यं उप्यते तच्चेत्पशवो भ
क्षेयुः तत्र पशुपालानां नृपो दंडं न कुर्यात् २३८ वृतिमिति तत्र परिहारस्थाने क्षेत्रे वृतिं कंटकादिमयीं तथाविधामुच्छ्रितां कुर्यात् या

अजाविके तु संरुद्धे वृकैः पाले त्वनायति यां प्रसह्य वृको हन्यात् पाले तत्किल्बिषं भवेत् २३५ तासां चे
दवरुद्धानां चरतीनां मिथो वने यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी २३६ धनुःशतं परीहारो ग्रा
मस्य स्यात्समंततः शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु २३७ तत्रापरिवृतं धान्यं विहिंस्युः पशवो
यदि न तत्र प्रणयेद्दंडं नृपतिः पशुरक्षिणाम् २३८ वृतिं तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत् छिद्रं च
वारयेत्सर्वं श्वसूकरमुखानुगम् २३९ पथि क्षेत्रे परिवृते ग्रामांतीयेऽथवा पुनः सपालः शतदंडार्हो विपा
लान्वारयेत्पशून् २४० क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति सर्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा
२४१ अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा सपालान्वा विपालान्वा न दंड्यान्मनुरब्रवीत् २४२

मपरपार्श्वेउष्ट्रो न विलोकयेत्तस्यां च यत्किंचिच्छिद्रं श्वसूकरमुखप्रवेशयोग्यं तत्सर्वमावृणुयात् २३९ पथीति वर्त्मसमीपग्रामस
मीपवर्त्तिनि वा परिहारस्थे क्षेत्रे दत्तवृतौ स पालः पशुः पालानिवारितो ह्यनादिना कथंचित्सविशेषो यदा भक्षयति तदा पणशतं दंड्यः प
शोश्च दंडासंभवात्पाल एव दंड्यः विपालान्पुनर्भक्षणप्रवृत्तान् क्षेत्ररक्षको निवारयेत् २४० क्षेत्रेष्विति वर्त्मग्रामांतव्यतिरिक्तेषु
पशुर्भक्षयन्सपादं पणं दंडमर्हति अत्रापि पाल एव दंड्यः सर्वत्र क्षेत्रे पशुभक्षितं फलस्वामिने पालेन स्वामिना वा यथापराधं दातव्य
मिति निश्चयः २४१ अनिर्दशाहामिति प्रसूतामनिर्गतदशाहां तथा च चक्रशूलांकितोत्सृष्टवृषान्हीरहरादिप्रतिमासंबंधिपशून्

पालरहितान्नासस्यभक्षणप्रवृत्तान्मनुरदंडयानाहउत्सृष्टवृषाणामपिगर्भार्थंगोकुलेपालेन्द्वारिणात्तपालत्वसंभवः २४२ क्षे
त्रियस्येति क्षेत्रकर्त्तृथपशुसस्यभक्षणे अयथाकालंवपनादौवापराधेसतियावतोराजभागस्यतेन हानिःकृतातनोदशगुणदं
डःस्यात् क्षेत्रिकाविदितेभृत्यानामुक्तापराधे क्षेत्रिकस्यैचदशगुणार्द्धदंडः क्षेत्रसस्यप्रसंगाच्चेदमुक्तम् २४३ एतदिति स्वामि
नांपालानांचारक्षणादपराधेपशूनांचसस्यभक्षणरूपेधर्मप्रधानोभूपतिरेतत्पूर्वोक्तंकर्त्तव्यमनुतिष्ठेत् २४४ सीमामिति द्वयो
र्ग्रामयोर्मर्यादांप्रतिविप्रतिपत्तावुत्पन्नायांज्येष्ठेमासिग्रीष्मरविनापसंशुष्कतृणलात्प्रकटीभूतेषुसीमालिंगेषुराजासीमांनिश्चि
नुयात् २४५ सीमावृक्षानिति न्यग्रोधादीन्वृक्षान्क्षीरिणउदुंबरादीन्चिरस्थायित्वात्सीमालिंगभूतान्कुर्वीत २४६ गुल्मा

क्षेत्रियस्यात्ययेदंडोभागाद्दशगुणोभवेत् ततोऽर्द्धदंडोभृत्यानामज्ञानात्क्षेत्रियस्यतु २४३ ए
तद्विधानमातिष्ठेद्धार्मिकःपृथिवीपतिः स्वामिनांचपशूनांचपालानांचव्यतिक्रमे २४४ सीमांप्र
तिसमुत्पन्नेविवादेग्रामयोर्द्वयोः ज्येष्ठेमासिनयेत्सीमांसुप्रकाशेषुसेतुषु २४५ सीमावृक्षांश्चकु
र्वीतन्यग्रोधाश्वत्थकिंशुकान् शाल्मलीन्सालतालांश्चक्षीरिणश्चैवपादपान् २४६ गुल्मान्वेणूं
श्चविविधान्शमीवल्लीस्थलानिच शरान्कुब्जकगुल्मांश्चतथासीमाननश्यति २४७ तडागान्यु
दपानानिवाप्यःप्रस्रवणानिच सीमासंधिषुकार्याणिदेवतायतनानिच २४८ उपच्छन्नानिचान्या
निसीमालिंगानिकारयेत् सीमाज्ञानेनृणांवीक्ष्यनित्यंलोकेविपर्ययम् २४९

निति गुल्मान्प्रकांडरहितान्वे
णूंश्चप्रचुरकंटकत्वाल्पकंटकत्वादिभेदेननानाप्रकारान्सीमावृक्षान्वल्योलताःस्थानानिकृत्रिमोन्नतभूभागान्शरान्कुब्जकगु
ल्मांश्चप्रचुराऽल्पभोगत्वेनादरार्थंपृथक्निर्दिष्टान्सीमालिंगभूतान्कुर्यात् एवंकृतेसीमाननश्यति २४७ तडागानिति तडा
गकूपदीर्घिकाजलनिर्गममार्गदेवगृहाणिसीमारूपेणग्रामद्वयसंधिस्थानेषुकर्त्तव्यानि एतेषुसीमानिर्णयायविख्याप्यकृते
उदकाद्यर्थिजनाअपिश्रुतिपरंपरयाचिरकालेपिसाक्षिणोभवंति २४८ उपच्छन्नानीत्यादि सीमानिर्णयेसर्वदाऽस्मिन्लोके

मनुष्याणांविभ्रमज्ञानंदृष्ट्वाऽभिहितव्यतिरिक्तानिगूढानिवक्ष्यमाणानिसीमाचिन्हानिकारयेत् २४९ अश्मेति यानीति मनु स्थिगोवालतुषभस्मकर्परिकाशुष्कगोमयपक्वेष्टकाऽङ्गारपाषाणकर्परसिकताअन्यान्यप्येवंप्रकाराणिकालांजनकार्पासाऽस्थिम तीनियानिचिरकालेनापिभूमिरात्मसात्नकरोतितानिग्रामयोःसंधिषुसीमायांप्रक्षिप्यकुंभेष्वेतानिसीमांतेषुनिधापयेदितिबृह स्पतिवचनात्स्थूलपाषाणव्यतिरिक्तानिकुंभेषुकृत्वाप्रच्छन्नानिभूमौनिखायधारयेत् २५० २५१ एतैरिति विवदमानयो- ग्रामयोःप्रयुक्तैरेतैरुक्तचिन्हैराजासीमासुन्नयेत्वसतोःपुनरविच्छिन्नयाभुक्त्यासीमानिर्णयोनतुत्रिपुरुषादिकतयातस्याधिः सीमेतिपर्युदस्तत्वात् ग्रामद्वयसंधिस्थनद्यादिप्रवाहेनचपारावारग्रामयोःसीमांनिश्चिनुयात् २५२ यदीति यदिप्रच्छन्नप्रकाश

अश्मनोऽस्थीनिगोवालांस्तुषान्भस्मकपालिकाः करीषमिष्टकांगारांच्छर्करावालुकास्तथा २५० यानिचैवंप्रकाराणिकालाद्भूमिर्नभक्षयेत् तानिसंधिषुसीमायामप्रकाशानिकारयेत् २५१ एतैर्लिंगैर्नयेत्सीमांराजाविवदमानयोः पूर्वभुक्त्याचसततमुदकस्यागमेनच २५२ यदिसंशयएवस्यात्लिंगानामपिदर्शने साक्षिप्रत्ययएवस्यात्सीमावादविनिर्णयः २५३ ग्रामीयककुलानांचसमक्षंसीम्निसाक्षिणः प्रष्टव्याःसीमलिंगानितयोश्चैवविवादिनोः २५४ तेपृष्टास्तुयथाब्रूयुःसमस्ताःसीम्निनिश्चयम् निबध्नीयात्तथासीमांसर्वांस्तांश्चैवनामतः २५५ शिरोभिस्तेगृहीत्वोर्वींस्रग्विणोरक्तवाससः सुकृतैःशापिताःस्वैस्वैर्नयेयुस्तेसमंजसम् २५६

लिंगदर्शनेपिप्रच्छन्नांगारादितुषाअमीस्थानांतरंनीतानिखातानायं- सीमातरुन्यग्रोधः इत्यादिसमस्तएवयदिसंदेहःस्यात् तदासाक्षिप्रमाणएवसीमाविवादनिश्चयोभवेत् २५३ ग्रामीति ग्रामिक- जनसमूहानांग्रामद्वयस्थनियुक्तयोर्वादिप्रतिवादिनोश्चसमक्षंसीमाविषयेसीमालिंगसंदेहेलिंगानिसाक्षिणःप्रष्टव्याः २५४ ते इति तेपृष्टाःसाक्षिणःसमस्ताइदंधनसीमाविषयेनयेनप्रकारेणानिश्चयंब्रूयुः तेनप्रकारेणाविस्मरणार्थंपत्रेसीमांलिखेत्तांश्चस र्वानेवसाक्षिणोनामविभागतोलिखेत् २५५ शिरोभिरिति तेसाक्षिणइतिसामान्यश्रवणोपरक्तस्रग्वाससःसीमांनयेयुरितिया

ज्ञवल्क्यवचनात्रक्तपुष्पमालाधारिणोलोहितवाससोमस्तकेमृत्क्षोणीनिगृहीत्वायदस्माकंसुकृतंतन्निष्फलंस्यादितिएवमा
त्मीयैःसुकृतैःशापिताःसंतःतांसीमांयथाशास्त्रनिर्णयेयुः २५६ यथोक्तेति तेसत्यप्रधानाःसाक्षिणःशास्त्रोक्तेनविधानेननिर्ण
यस्थानिष्पापाभवंतिअतथ्येनतुनिश्चिन्वंतःप्रत्येकंपणशतद्वयंदंडंदाप्याभवेयुः २५७ साक्ष्येति तत्रसंधिविवादसाक्ष्यभावे
चतुर्दिशांसमंतभवाःसामंतास्तत्स्वामिनःचत्वारोग्रामवासिनःसाक्षिधर्मेणराजसमक्षंसीमानिर्णयंकुर्युः २५८ सामंतेति साक्षि
धर्मेणराजसमक्षमनुभवेननिर्णयमकुर्वतांग्रामवासिनांग्रामनिर्माणकालादारभ्यमौलानांपुरुषक्रमेणतद्ग्रामस्थानांसीमासाक्षि-
णामभावइमान्वक्ष्यमाणान्संनिहितवनचारिणःपृच्छेत् २५९ व्याधेति लुब्धकान्पक्षिवधजीविनःगोपालान्मत्स्यजीविनोमूल

यथोक्तेननयंतस्तेपूयंतेसत्यसाक्षिणः विपरीतंनयंतस्तुदाप्याःस्युर्द्विशतंदमम् २५७ साक्ष्यभा
वेतुचत्वारोग्रामाःसामंतवासिनः सीमाविनिर्णयंकुर्युःप्रयताराजसन्निधौ २५८ सामंतानामभावेतु
मौलानांसीम्निसाक्षिणाम् इमानप्यनुयुंजीतपुरुषान्वनगोचरान् २५९ व्याधांछाकुनिकान्गोपा
न्कैवर्तान्मूलखानकान् व्यालग्राहानुञ्छवृत्तीनन्यांश्चवनचारिणः २६० तेपृष्टास्तुयथाब्रूयुःसीमा
संधिषुलक्षणम् तत्तथास्थापयेद्राजाधर्मेणग्रामयोर्द्वयोः २६१ क्षेत्रकूपतडागानामारामस्यगृहस्य
च सामंतप्रत्ययोज्ञेयःसीमासेतुविनिर्णयः २६२ सामंताश्चेन्मृषाब्रूयुःसेतौविवदतांनृणाम् सर्वेपृथक्
पृथग्दंड्याराज्ञामध्यमसाहसम् २६३

खानजीविनःसर्पग्राहिणःशिलोञ्छवृत्तीनन्यांश्चफलपुष्पेंधनाद्यर्थंवनव्यवहारिणः
पृच्छेत् एतेहिस्वप्रयोजनार्थंतेनग्रामेणसर्वदावनंगच्छेयुःतद्ग्रामसीमाभिज्ञाःसंभवंति २६० तेपृष्टाइति तेव्याधादयःपृष्टाःसीमारू
पेषुग्रामसंधिषुयेनप्रकारेणचिन्हंब्रूयुःतत्तेनैवप्रकारेणराजाद्वयोर्ग्रामयोःसीमांव्यवस्थापयेत् २६१ क्षेत्रेति एकग्रामेपिक्षेत्रकूप
तडागारामगृहाणांसीमासेतुविवादेसमस्तदेशवासिसाक्षिप्रमाणकएवमर्यादाचिन्हनिश्चयोविज्ञेयोनव्याधादिप्रमाणकः २६२ सामंता
सीमाचिन्हनिमित्तंविवदमानानांमनुष्याणांयदिसामंतादेशवासिनोमिथ्याब्रूयुस्तदातेसर्वेप्रत्येकंराज्ञामध्यमसाहसंदंडनीयाःए

चासामंतरूपाणांपूर्वोक्तद्विशतोदमोज्ञेयः २६३ गृहमिति गृहतडागोद्यानक्षेत्राणामन्यतमंमारणंबंधनादिभयकथनपूर्वमाक्र
हरणेपंचपणशतानिदंडनीयःस्यात्स्वातंत्र्यात्रिशतोदमः २६४ सीमेति लिंगसाक्ष्यभावेसीमायांपरिच्छेत्तुमशक्यायांराजैवधर्म
ज्ञःपक्षपातरहितोग्रामद्वयमध्यवर्तिनींविवादविषयांभूमिंयेषामेवग्रामवासिनांउपकारातिशयोभवतितद्व्यतिरेकेणचमहा
दस्तेषामेवदद्यादितिशास्त्रव्यवस्था २६५ एषइति एषसीमानिश्चयोधर्मोनिःशेषेणउक्तः अतऊर्ध्वंवाक्पारुष्यंवक्ष्यामिदंडपा
रुष्यात्वाक्पारुष्यप्रवृत्तेःपूर्वमभिधानंअनुक्रमस्तुल्यांतुपारुष्येदंडवाचिकेइतिदंडशब्दस्यान्यायव्यवहारत्वात्पूर्वनिर्देशः २६६
शतमिति द्विजस्यचौरेत्याक्षेपरूपंपरुषमुक्त्वाक्षत्रियःपणशतंदंडमर्हतिएवंसार्द्धशतंद्वेवाशतेलाघवगौरवापेक्षयावैश्यःशू-
द्रोप्येवंब्राह्मणाक्रोशेताडनादिरूपंवधमर्हति २६७ पंचाशदिति ब्राह्मणःक्षत्रियस्योक्तरूपाक्षेपेकृतेपंचाशत्पणान्दंड्यःवै

गृहंतडागमारामंक्षेत्रंवाभीषयाहरन् शतानिपंचदंड्यःस्यादज्ञानाद्विशतोदमः २६४ सीमायाम
विषह्यायांस्वयंराजैवधर्मवित् प्रदिशेद्भूमिमेतेषामुपकारादितिस्थितिः २६५ एषोऽखिलेनाभिहि
तोधर्मःसीमाविनिर्णये अतऊर्ध्वंप्रवक्ष्यामिवाक्पारुष्यविनिर्णयम् २६६ शतंब्राह्मणमाक्रुश्यक्ष-
त्रियोदंडमर्हति वैश्योप्यर्द्धशतंद्वेवाशूद्रस्तुवधमर्हति २६७ पंचाशद्ब्राह्मणोदंड्यःक्षत्रियस्याभिशं
सने वैश्यस्याप्यर्द्धपंचाशच्छूद्रेद्वादशकोदमः २६८ समवर्णेद्विजातीनांद्वादशैवव्यतिक्रमे वादेष्वव
चनीयेषुतदेवद्विगुणंभवेत् २६९ एकजातिर्द्विजातीस्तुवाचादारुणयाक्षिपन् जिह्वायाःप्राप्नुयाच्छे
दंजघन्यप्रभवोहिसः २७० श्येशूद्रेचयथोक्ताक्रोशेकृतेपंचविंशतिर्द्वादशपणाःक्रमेणब्राह्मणस्यदंडःस्यात् २६८

समेति द्विजातीनांसमानजातिविषयेयथोक्ताक्रोशेकृतेद्वादशपणोदंडः अवचनीयेषुपुनराक्रोशवादेषुमातृभगिन्यादश्लील
रूपेषुतदेवेतिनपुंसकनिर्देशात्शतंब्राह्मणमाक्रुश्येत्यादियदुक्तंतदेवद्विगुणंदंडरूपंभवेत् २६९ एकेति शूद्रोद्विजातीन्पा
तकादिनावाचाक्रुश्यजिह्वाच्छेदंलभेत् यस्मादसौपादाख्यान्निकृष्टांगाज्जातः २७० नामेति अभिद्रोहआक्रोशःब्राह्मण
देवयज्ञदत्तब्राह्मणापसदइत्याक्रोशेननामजात्यादिग्रहणंकुर्वतोलोहकीलोऽग्निनामदीप्तोदशांगुलोमुखेषुसेवनीयः २७१

धर्मेति कथंचिद्धर्मलेशमवगम्यायंते धर्मोनुष्ठेय इति ब्राह्मणस्याहंकारादुपदिशतोऽस्य शूद्रस्य मुखे कर्णयोश्च ज्वलत्तैलं राजा प्रक्षेपयेत् २७२ श्रुतेति समानजातिविषयमिदं दंडलाघवात् न तु शूद्रस्य द्विजात्याक्षेपविषयम् नलयैतत् श्रुतन्न भवान् तद्देशजातो नतवेयंजातिर्नतवशरीरसंस्कारसुपनयनादिकर्मकृतमित्याहंकारेणमिथ्या ब्रुवन् द्विशतं दंडं दाप्यः स्यात् वितथेनेति तृतीयाविधानेप्रकृत्यादिभ्यउपसंख्यानमिति तृतीया २७३ काणमिति एकाक्षिविकलं पादविकलं अन्यमपिवा तथाविधं हस्ताद्यंगविकलं सत्येनापि काणादिशब्देन ब्रुवन् अत्यंताल्पं तदा कार्षापणं दंडं दाप्यः २७४ मातेति आक्षारितः क्षारितोऽभिशस्त इत्याभिधानिकाः मात्रादीन्पातकादिनाऽभिशपन् गुरोश्चपंथानमत्यजन् दंड्यः अत्राह भार्यादीनां गुरुपापाभिशापेन दंडसाम्यं समाधेयम् मेधातिथिस्तु

नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः निःक्षेप्योऽयोमयः शंकुर्ज्वलन्नास्ये दशांगुलः २७१ धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः २७२ श्रुतं देशं च जातिं च कर्म शारीरमेव च वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतं दमम् २७३ काणं वाप्यथवा खंजमन्यं वापि तथाविधम् तथ्येनापि ब्रुवन्दाप्यो दंडं कार्षापणावरम् २७४ मातरं पितरं जायां भ्रातरं तनयं गुरुम् आक्षारयंछतं दाप्यः पंथानं चाददद्गुरोः २७५ ब्राह्मणक्षत्रियाभ्यां तु दंडः कार्यो विजानता ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः २७६ विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः छेदवर्जं प्रणयनं दंडस्येति विनिश्चयः २७७

आक्षारणं भेदनमित्यक्त्वा मातृपुत्रपित्रादीनां परस्परभेदनकर्तुरयं दंडविधिरिति व्याख्यातवान् २७५ ब्राह्मणेति ब्राह्मणक्षत्रियाभ्यां परस्परं पतनीयाक्रोशे कृते दंडशास्त्रज्ञेन राज्ञा दंडः कार्यः दंडमेव विशेषेणाह ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्यो ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहसः २७६ विडिति वैश्यशूद्रयोरन्योन्यजातिं प्रति पतनीयाक्रोशे ब्राह्मणक्षत्रियवत् वैश्ये शूद्राक्रोशिनि प्रथमसाहसः शूद्रे वैश्याक्रोशिनि मध्यमसाहस इत्येवंरूपं दंडस्य प्रणयनं जिह्वाच्छेदरहितं यथावत्कर्तव्यमिति शास्त्रनिश्चयः एकं चैकजातिर्द्विजातीस्त्विति प्रागुक्तजिह्वाच्छेदो वैश्येनिवारितो ब्राह्मणक्षत्रियाक्रोशविषय एवावति-

एषइति एषोऽनंतरोक्तोवाक्पारुष्यस्ययथावद्दंडविधिरुक्तोऽनंतरंताडनादेर्दंडपारुष्यस्यनिर्णयंवक्ष्यामः २७८ येनेति अंत्यजः शूद्रोयेनकेनचित्करचरणादिनांगेनसाक्षाद्दंडादिनाऽव्यवहितेनद्विजातिंप्रहरेत्तदेवांगमस्यछेत्तव्यमित्ययंमनोरुपदेशः मनुग्रहण मादरार्थंअस्यैवोत्तरःप्रपंचः २७९ पाणिमिति प्रहर्त्तुंपाणिंदंडंवोद्यम्यपाणिच्छेदंलभतेपादेनकोपात्प्रहरणेपादच्छेदंप्राप्नोति २८० सहेति ब्राह्मणेनसहासनोपविष्टःशूद्रःकट्यांतप्तलोहकृतचिन्होपदेशोनिर्वासनीयः स्फिचंवास्ययथानम्रियतेतथाछेदये त् २८१ अवनीति दर्पेणश्लेष्मणाब्राह्मणानपमानयतःशूद्रस्यराजाद्वावोष्ठौछेदयेत्मूत्रप्रक्षेपेणापमानयतोमेढ्रंशर्द्धनकु त्सितोगुदशब्दःतेनावमानयतोदर्पात्प्रमादाद्गुदंछेदयेत् २८२ केशेष्विति दर्पादित्यनुवर्त्ततेअहंकारेणकेशेषुगृण्हतः

एषदंडविधिःप्रोक्तोवाक्पारुष्यस्यतत्त्वतः अतऊर्द्ध्वंप्रवक्ष्यामिदंडपारुष्यनिर्णयम् २७८ येनकेन चिदंगेनहिंस्याच्चेच्छ्रेष्ठमंत्यजः छेत्तव्यंतत्तदेवास्यतन्मनोरनुशासनम् २७९ पाणिमुद्यम्यदंडंवा पाणिच्छेदनमर्हति पादेनप्रहरन्कोपात्पादच्छेदनमर्हति २८० सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृ ष्टजः कट्यांकृतांकोनिर्वास्यःस्फिचंवास्यावकर्त्तयेत् २८१ अवनिष्ठीवतोदर्पाद्द्वावोष्ठौछेदयेन्नृपः अवमूत्रयतोमेढ्रमवशर्द्धयतोगुदम् २८२ केशेषुगृण्हतोहस्तौछेदयेदविचारयन् पादयोर्दाढिका यांचग्रीवायांवृषणेषुच २८३ त्वग्भेदकःशतंदंड्योलोहितस्यचदर्शकः मांसभेत्तातुषण्णिष्कान्प्रवा स्यस्त्वस्थिभेदकः २८४ वनस्पतीनांसर्वेषामुपभोगंयथायथा तथातथादमःकार्योहिंसायामितिधार णा २८५

शूद्रस्यपीडाऽस्यजातानजातेस्यविचारयन्हस्तौछेदयेत्पादयोःश्मश्रुणिचग्रीवायांवृषणेहिंसार्थंगृण्हतो च्छेदमेवकुर्यात् २८३ त्वग्भेदेति चर्ममात्रभेदकृत्समानजातिर्नशूद्रःब्राह्मणस्यदंडलाघवंपणशतंदंडनीयः तथारक्तोत्पादको पिशतमेवदंड्यः मांसभेदीषण्णिष्कान्दद्योऽस्थिभेदकस्तुदेशान्निर्वास्यः २८४ वनस्पतीति वृक्षाद्युद्भिदांसर्वेषांयेनयेनप्रका रेणउपभोगःफलपुष्पपत्रादिनाउत्तममध्यमरूपोभवतितथातथाहिंसायामप्युत्तमसाहसादिर्दंडोविधेयइतिनिश्चयः त

फलोपभोगद्रुमच्छेदी तूत्तमं साहसं पुष्पोपभोगच्छेदी मध्यमं वल्लीगुल्मलताच्छेदी कार्षापणशतं तृणच्छेद्येकं कार्षापणं च पण एव मनुनाप्युक्तो वेदितव्यः २८५ मनुष्याणां पशूनां पीडोत्पादनार्थं प्रहारे कृते सति यथा यथा पीडाधिक्यं तथा तथा दंडमप्यधिकं कुर्यात् एवं मर्मस्थानादौ त्वग्भेदनादिषु कृतेषु त्वग्भेदकः शतं दंड्य इत्युक्तोप्यधिको दुःखविशेषापेक्षया कर्तव्यः २८६ अंगेति अंगानां करचरणानां व्रणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्वावस्थाप्राप्तिः समुत्थानसंबंधो भवति तावत्कालेन पथ्यौषधादिना यावान् व्ययो भवति तमसौ दापनीयः अथ तं व्ययं पीडोत्पादकेन दातुमिच्छति तदा यः समुत्थानव्ययो यश्च दंड स्तमेनं दंडलेनं राज्ञा दाप्यः २८७ द्रव्येति द्रव्याण्युक्तविशेषदंडानि कटकानि ताम्रघटादीनि यो यस्य ज्ञानादज्ञानाद्वा नाशयेत्स तस्य द्रव्यांतरादिना तुष्टिमुत्पादयेत् राज्ञश्च विनाशितद्रव्यसमं दंडं दद्यात् २८८ चर्मेति चर्मणि चर्मघटितवरत्रादौ चर्मकाष्ठमृत्ति

मनुष्याणां पशूनां च दुःखाय प्रहृते सति ‍ यथा यथा महद्दुःखं दंडं कुर्यात्तथा तथा २८६ अंगावपीडनायां च व्रणशोणितयोस्तथा ‍ समुत्थानव्ययं दाप्यः सर्वदंड मथापि वा २८७ द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोपि वा ‍ स तस्योत्पादयेत्तुष्टिं राज्ञो दद्याच्च तत्समम् २८८ चर्मचार्मिकभांडेषु काष्ठलोष्ठमयेषु च ‍ मूल्यात्पंचगुणो दंडः पुष्पमूलफलेषु च २८९ यानस्य चैव यातुश्च यानस्वामिन एव च ‍ दशातिवर्तनान्याहुः शेषे दंडो विधीयते २९० छिन्ननास्ये भग्नयुगे तिर्यक्प्रतिमुखागते ‍ अक्षभंगे च यान स्य चक्रभंगे तथैव च २९१.

कानिर्मितेषु च भांडेषु पुष्पमूलफलेषु परस्य नाशितेषु मूल्यात्पंचगुणो दंडो राज्ञो देयः स्व गश्च तुष्टिरुत्पादनीयैव २८९ यानस्येति यानस्य रथादेर्यातुः सारथ्यादेर्यानस्वामिनश्च यस्य तद्यानं तेषां छिन्ननास्यादीनि दश निमित्तानि दंडमतिक्रम्य वर्तंते एषु निमित्तेषु सत्सु प्राणिमारणे द्रव्यनाशे च प्रकृते यानस्वामिनो दंडो न भवतीति मन्वादय आहुः एत द्व्यतिरिक्तनिमित्तेन पुनर्दंडोऽनुशीयते २९० छिन्नेति छेदनेति नासायां भवन्नास्यं शरीरावयवत्वाद्यत् सा चेह बलीवर्द नासासंबंधिनी रज्जुः छिन्ननास्यरज्जौ बलीवर्दादिके भग्नयुगाख्ये काष्ठे रथादौ भूमिवैषम्यादिना तिरश्चीनं वा गते तथा चक्रा तः प्रविष्टस्य काष्ठभंगे यंत्राणां चर्मबंधनानां छेदने योक्त्रस्य पशुग्रीवारज्जो रश्मेः प्रहरणस्य छेदने अपसरापसरेत्युच्चैः शब्देसा

थ्यादिनाकृतेचयानेनप्राणिहिंसाद्रव्यविनाशयोः कृतयोःसारथ्यादेर्दंडोनास्तीतिमनुराह २९१ २९२ यत्रेति यत्रसारथेरकौशा
लाद्यानमन्यथाव्रजतितत्रहिंसायामशिक्षितसारथ्यनियोगस्वामीद्विशतंदाप्यःस्यात् २९३ प्राजकेति यदिसारथिःकुशलःस्या
त्तदासारथिरेवोक्तद्विशतंदमंवक्ष्यमाणंचमनुष्यमारणइत्यादिकंदंडमर्हतिनस्वामी अकुशलेतुतस्मिन्सारथिस्वामिव्यतिरिक्ता
अन्येपियानारूढाअकुशलसारथिकयानारोहणात्सर्वेप्रत्येकंशतंशतंदंड्याः २९४ सचेति सचेत्प्राजकःसंमुखागतैःपशुरगवा
दिभीरथांतरेणवासंरुद्धःस्वरथगमनानवधानात्सत्यकृसमर्पणाक्षमःसंकटेपिस्वरथतुरगान्प्रेरयन्तुरगैरथेनवारथावयवैर्वा
प्राणिनोव्यापादयतितत्राविचारितोदंडः कर्त्तव्यएवसकृदपराधेकीदृशइत्याह २९५ मनुष्येति तत्रमनुष्यमारणेप्राजकस्यानंत

छेदनेचैवयंत्राणांयोक्त्ररश्म्योस्तथैवच आक्रंदेचाप्यपैहीतिनदंडंमनुरब्रवीत् २९२ यत्रापवर्तते युग्यंवैगुण्यात्प्राजकस्यतु तत्रस्वामीभवेद्दंड्योहिंसायांद्विशतंदमम् २९३ प्राजकश्चेद्भवेदाप्तः प्राजकोदंडमर्हति युग्यस्थाःप्राजकेऽनाप्तेसर्वेदंड्याःशतंशतम् २९४ सचेत्तुपथिसंरुद्धःपशुभिर्वारथेनवा प्रमापयेत्प्राणभृतस्तत्रदंडोऽविचारितः २९५ मनुष्यमारणेक्षिप्रंचौरवत्किल्बिषंभवेत् प्राणभृत्सुमहत्स्वर्द्धंगोगजोष्ट्रहयादिषु २९६ क्षुद्रकाणांपशूनांतुहिंसायांद्विशतोदमः पंचाशत्तुभवेद्दंडःशुभेषुमृगपक्षिषु २९७ गर्दभाजाविकानांतुदंडःस्यात्पंचमाषिकः माषकस्तुभवेद्दंडःश्वसूकरनिपातने २९८

धानात् यानेन हतएवचौरदंडोत्तमसाहसंभवेत्नतुमारणरूपः प्राणभृत्सुमहत्स्वर्द्धमितिश्र-
वणात् गोगजादिषुमहत्सुप्राणिषुमारितेषुउत्तमसाहसस्यार्द्धंपंचशतदंडोभवेत् २९६ क्षुद्रेति क्षुद्रकाणांपशूनांजातिवि-
शेषोपदिष्टभवानांबाल्यादीनांवयसाचकिशोरादीनांमारणेद्विशतोदंडःस्यात् शुभेषुमृगेषुरुरुपृषतादिषुपक्षिषुचशुकहंससा
रसादिषुपक्षिषुहतेषुपंचाशत्दंडोभवेत् २९७ गर्द्भेति गर्दभछागेडकादीनांपुनर्मारणेपंचरूप्यमाषकपरिमाणोदंडःस्यात्
नचात्रहैरण्यमाषग्रहणंउत्तरोत्तरलघुदंडाभिधानात्श्वसूकरमारणेषुपुनरौप्यमाषपरिमाणोदंडःस्यात् २९८ छ छ

भार्येति भार्यापुत्रादयः कृतापराधारज्ज्वावातिलघुवेणुशलाकयाताड्याभवेयुः शिक्षार्थताडनविधानादत्रदंडापवादः २९९ पृ
ष्ठतइति रज्ज्वादिभिरपिदेहस्यपृष्ठदेशेताडनीयाः नतुशिरसिउक्तव्यतिरेकेणप्रहरणोवाग्दंडधनदंडरूपंचौरदंडंप्राप्नुयात् ३००
एषइति एषदंडरूपस्यनिर्णयोनिःशेषेणोक्तः अतऊर्ध्वंचौरदंडविनिर्णयेविधानंवक्ष्यामि ३०१ परमेति चौराणांनियमनेराजा
परमंप्रयत्नंकुर्यात् यस्माच्चोरनिग्रहाद्राज्ञःख्यातिर्निरुपद्रवतयाराष्ट्रंवृद्धिमेति ३०२ अभयेति हिअवधारणेचौराणांनिय
मनेनयोनृपतिःसाधूनामभयंददातिसएवपूज्यःपूर्वेषांश्लाघ्योभवतिसत्रंगवायनादिकंतुविशेषंयत् यस्मात्सत्रमिवसत्रंतदभ-
य दानाच्चोरनिग्रहरूपाभयदक्षिणंसर्वदैवतस्यवृद्धिमेति अन्यद्धिनियतकालीनंनियतदक्षिणंच एतत्सर्वकालीनमभयदक्षिणं

भार्यापुत्रश्चदासश्चप्रेष्योभ्राताचसोदरः प्राप्तापराधास्ताड्याःस्यूरज्ज्वावेणुदलेनवा २९९ पृष्ठतस्तु
शरीरस्यनोत्तमाङ्गेकथंचन अतोन्यथातुप्रहरन्प्राप्तःस्याच्चोरकिल्बिषम् ३०० एषोखिलेनाभिहि
तोदंडपारुष्यनिर्णयः स्तेनस्यातःप्रवक्ष्यामिविधिंदंडविनिर्णये ३०१ परमंयत्नमातिष्ठेत्स्तेनानांनि
ग्रहेनृपः स्तेनानांनिग्रहादस्ययशोराष्ट्रंचवर्द्धते ३०२ अभयस्यहियोदातासपूज्यःसततंनृपः स
त्रंहिवर्द्धतेतस्यसदैवाभयदक्षिणम् ३०३ सर्वतोधर्मषड्भागोराज्ञोभवतिरक्षतः अधर्मादपिषड्भा-
गोभवत्यस्यह्यरक्षतः ३०४ यदधीतेयद्यजतेयद्ददातियदर्चति तस्यषड्भागभाग्राजासम्यग्भवतिरक्ष
णात् ३०५ रक्षन्धर्मेणभूतानिराजावध्यांश्चघातयन् यजतेहरहर्यज्ञैःसहस्रशतदक्षिणैः ३०६

चेतिवाक्यं
व्यतिरेककल्पनालंकारः ३०३ सर्वतइति प्रजारक्षतोराज्ञः सर्वस्यभृतिदातुर्वणिगादेर्भृत्यदातुश्चश्रोत्रियादेःसकाशात्धर्मष-
भवति अरक्षतश्चाधर्मादपिलोकेनकृतात्षड्भागःस्यात्तस्माद्यत्नतःस्तेननिग्रहेणराजारक्षणंकुर्यात् नचभृतिक्रीतत्वात्ध
र्मषड्भागोनमुक्तइतिवाच्यम् भृत्याधर्मषड्भागेनचपरिक्रीतस्यशास्त्रीयत्वात् ३०४ यदेति यःकश्चिज्जपयागदानदेवतार्चादीनिक
रोतितस्यराजापालनेनषड्भागंप्राप्नोति ३०५ रक्षेति भूतानिसर्वाणिस्थावरजंगमादीनियथाशास्त्रंदंडप्रणयनरूपेणधर्मेण

वध्यांश्चस्तेनादीन्ताडयन्प्रत्यहंलक्षदक्षिणैर्यज्ञैर्यजतेतज्जन्यंपुण्यंप्राप्नोतीतिभावः ३०६ योऽरक्षन्निति योराजारक्षामकु-
र्वन्बलिंधान्यादेःषड्भागंग्रामवासिभ्यःप्रतिमासंवाभाद्रपौषनियमेनग्राह्यंशुल्कंस्थलजलपथादिनावणिज्याकारिभ्योनियतस्थ
नेषुद्रव्यानुसारेणग्राह्यंदानमितिप्रसिद्धंप्रतिभागंफलकुसुमशाकतृणाद्युपायनंप्रतिदिनग्राह्यंदंडंव्यवहारादौगृण्हातिसमृतः
सन्सद्यएवनरकंयाति ३०७ अरक्षितेति योराजानरक्षतिअथचधान्यादिषड्भागंबलिरूपंगृण्हातितंसर्वलोकानांसकलपापहा-
रिणंजानीयात् ३०८ अनपेक्षितमिति लंघितशास्त्रमर्यादंपरलोकाभावशालिनमनुचितदंडादिनाधनग्राहिणंरक्षणरहितम्
करंधान्यादेर्भक्षितारंराजानंनरकगामिनंजानीयात् ३०९ अधार्मिकमिति अधार्मिकंचौरादिकमपराधापेक्षयात्रिभिरुपायैःप्र-
यत्नेननियमयेत्तानाह कारागारप्रवेशनेननिगडादिबंधनेनकरचरणछेदनादिनानाप्रकारहिंसनेन ३१० निग्रहेणेति पापशा

योऽरक्षन्बलिमादत्तेकरंशुल्कंचपार्थिवः प्रतिभागंचदंडंचससद्योनरकंव्रजेत् ३०७ अरक्षि
तारंराजानंबलिषड्भागहारिणम् तमाहुःसर्वलोकस्यसमग्रमलहारकम् ३०८ अनपेक्षितमर्यादंना
स्तिकंविप्रलुंपकम् अरक्षितारमत्तारंनृपंविद्यादधोगतिम् ३०९ अधार्मिकंत्रिभिर्न्यायैर्निगृण्ही
यात्प्रयत्नतः निरोधनेनबंधनेनविविधेनवधेनच ३१० निग्रहेणहिपापानांसाधूनांसंग्रहेणच द्विजा
तयइवेज्याभिःपूयंतेसततंनृपाः ३११ क्षंतव्यंप्रभुणानित्यंक्षिपतांकार्यिणांनृणाम् बालवृद्धातु
राणांचकुर्वताहितमात्मनः ३१२ यःक्षिप्तोमर्षयत्यार्तैस्तेनस्वर्गेमहीयते यस्त्वैश्वर्यान्नक्षमतेनर
कंतेनगच्छति ३१३

लिनांनिग्रहेणसाधूनांसंग्रहेणद्विजातयइवमहायज्ञादिभिःसर्वकालंनृपतयःपवित्रीकुर्वंति तस्मा
दधार्मिकान्निगृण्हीयात्साधूंश्चानुगृण्हीयात् ३११ क्षंतव्यमिति कार्यार्थिभिरर्थिनांदुःखेनाक्षेपोक्तिंरचयतांतथाबालवृद्ध-
व्याधितानांवक्ष्यमाणमात्मीयमुपकारमिच्छताप्रभुणाक्षमणीयम् ३१२ यःक्षिप्तेति दुःखितैराक्षिप्तःसहतेयःतेनस्वर्गलोकेपू
जांलभतेप्रभुत्वदर्शनान्नसहतेयःतेननरकंगच्छति ३१३ राजेति स्कंधेति यद्यपिसुवर्णस्तेयकृद्विप्रइत्यादिनाप्रायश्चित्तप्रकर

णेनव्यतितथापिसुवर्णस्तेयंप्रतिराजरूपदंडतामस्यदंडप्रकरणेदर्शयितुंपाठः ब्राह्मणसुवर्णस्यचौरेणमुक्तकेशेनवेगाद्गच्छताम
याब्राह्मणसुवर्णमपहृतमितिसंख्यापयतामुसलाख्यमायुधंखादिरमयंवा दंडमुभयतस्तीक्ष्णांशक्तिंलोहमयंवादंडंस्कंधेगृही-
त्वाराजसमीपंगच्छेत्ततोब्राह्मणसुवर्णहार्यहमतोऽनेनमुसलादिनामांव्यापादयइत्येवंराज्ञेवक्तव्यम् ३१४ ३१५ शासनेति
कृत्मुसलादिप्रहारेणप्राणपरित्याजनान्मृतकल्पस्यजीवतोपिपरित्यागात्वासचोरस्तस्मात्पापात्प्रमुच्यते अतएवयाज्ञवल्क्यः
मृतकल्पःप्रहारार्त्तोजीवन्नपिविशुध्यतीति पुनस्तेनकरुणादिभिरहत्वास्तेनस्ययत्पापंतद्राजाप्राप्नोति. ३१६अन्नादइति ब्रह्म
हायस्तत्संबंधियोन्नमत्तितस्मिन्नसौस्वपापंसंक्रामयतिभ्रूणहान्नभोक्तुःपापंभवतीतिएतदत्रविवक्षितंनतुब्रह्मघ्नःपापन्नश्य
तितथाभार्याव्यभिचारिणीजारपतिंक्षममाणेभर्त्तरिपापंसंश्लेषयतिशिष्यश्चसंध्याग्निकार्याद्यकरणजन्यंपापंगुरौसहमानेन्यस्

राजास्तेनेनगंतव्योमुक्तकेशेनधावता आचक्षाणेनतत्स्तेयमेवंकर्मास्मिशाधिमाम् ३१४ स्कंधेना
दायमुसलंलगुडंवापिखादिरम् शक्तिंचोभयतस्तीक्ष्णामायसंदंडमेववा ३१५ शासनाद्वाविमोक्षाद्वा
स्तेनःस्तेयाद्विमुच्यते अशासित्वातुतंराजास्तेनस्याप्नोतिकिल्बिषम् ३१६ अन्नादेभ्रूणहामार्ष्टिपत्यौभा
र्याऽपचारिणी गुरौशिष्यश्चयाज्यश्चस्तेनोराजनिकिल्बिषम् ३१७ राजभिर्धृतदंडास्तुकृत्वापापानिमा
नवाः निर्मलाःस्वर्गमायांतिसंतःसुकृतिनोयथा ३१८ यस्तुरज्जुंघटंकूपाद्धरेद्भिंद्याच्चयःप्रपाम् सदं
डंप्राप्नुयान्माषंतच्चतस्मिन्समाहरेत् ३१९ धान्यंदशभ्यःकुंभेभ्योहरतोऽभ्यधिकंवधः शेषेप्येकादशगु
णंदाप्यस्तस्यचतद्धनम् ३२०

तियाज्यश्चविधिमतिक्रामन्याजकेक्षममाणेपापंनिःक्षिपतिस्तेनश्चराजन्युपेक्ष्यमाणेपापं
समर्पयतितस्माद्राज्ञास्तेनोनिगृहीतव्यः ३१७ राजेति, सुवर्णस्तेयादीनिपापानिकृत्वापश्चाद्राजभिर्विहितदंडामनुष्याः संतःप्रति
बंधकदुरिताभावात्पूर्वार्जितपुण्यवशेनसाधवःसुकृतकारिणइवस्वर्गंगच्छंतिएवंप्रायश्चित्तवद्दंडस्यापिपापक्षयहेतुत्वमुक्तम्
३१८ यस्त्विति कूपसमीपेरज्जुघटयोःजलोर्ध्वधारणायधृतयोरज्जुंघटंवाहरेत्योवापानीयदानगृहंविदारयेत्ससौवर्णमाषंदंडंप्रा
प्नुयात्यन्निर्दिष्टंतुसौवर्णमाषंतत्रप्रकल्पयेदितिकात्यायनवचनात् तच्चरज्ज्वादितस्मिन्कूपेसमर्पयेत् ३१९ धान्यमिति द्विपलशतं

द्रोणोविंशतिद्रोणश्चकुंभः दशसंख्येभ्यः कुंभेभ्योऽधिकंधान्यंहरतोवधः सचहर्त्तृस्वामिगुणवत्तापेक्षयाताडनांगच्छेदमारणोज्ञे
शेषेपुनरेकस्मादारभ्यदशकुंभपर्यंतहरणेनिन्हुतेकादशगुणंदाप्यःस्वामिनश्चापहृतंदाप्यः ३२० तथेति यथाधान्येनवधउक्त
स्तथातुलापरिच्छेद्यानांसुवर्णरजतादीनामुत्कृष्टानांच वाससांपश्वादीनांपश्शताधिकेवधः कर्त्तव्यएवंविषयसमीकरणंचात्रदेश
कालापहर्त्तृजातिगुणापेक्षयापरिहरणीयंएवमुत्तरत्रापिज्ञेयम् ३२१ पंचेति पूर्वोक्तानांपंचाशदूर्ध्वंयावदपहारेकृतेहस्तच्छेदनं
मन्वादिभिरभिहितंशेषेचैकपलादारभ्यपंचाशत्पलपर्यंतापहारेअपहृतगुणादेकादशगुणंदंडंदाप्यः ३२२ पुरुषेति महाकुल
जातानांमनुष्याणांविशेषेणस्त्रीणांमहाकुलप्रसूतानांश्रेष्ठानांचरत्नानांवज्रवैदूर्यादीनांअपहारेवधमर्हति ३२३ महेति महतां
पशूनांहस्त्यश्वादिगोमहिष्यादीनांतथाखड्गादीनांशस्त्राणांकल्याणघृतादेश्चौषधस्यचदुर्भिक्षादिरूपंकालंकार्यंप्रयोजनंचसंदस

तथाधरिमसेयानांशतादभ्यधिकेवधः सुवर्णरजतादीनामुत्तमानांचवाससाम् ३२१ पंचाशतस्त्वभ्य
धिकेहस्तच्छेदनमिष्यते शेषेत्वेकादशगुणंमूल्याद्दंडंप्रकल्पयेत् ३२२ पुरुषाणांकुलीनानान्नारीणां
चविशेषतः मुख्यानांचैवरत्नानांहरणेवधमर्हति ३२३ महापशूनांहरणेशस्त्राणामौषधस्यच काल
मासाद्यकार्यंचदंडंराजाप्रकल्पयेत् ३२४ गोषुब्राह्मणसंस्थासुछूरिकायाश्चभेदने पशूनांहरणेचैव
सद्यःकार्योऽर्द्धपादिकः ३२५ सूत्रकार्पासकिण्वानांगोमयस्यगुडस्यच दध्नःक्षीरस्यतक्रस्यपानीयस्य
तृणस्यच ३२६ वेणुवैदलभांडानांलवणानांतथैवच मृन्मयानांचहरणेमृदोभस्मनएवच ३२७

द्विनियोगरूपंनिरूप्यराजाताडनांगच्छेदरूपंदंडंप्रकल्पयेत् ३२४ गोष्विति ब्राह्मणसंबंधिनीनांगवामपहारेवंध्यायाश्चगोर्वाह
नार्थंनासाच्छेदनेपशूनांचाजेडकानांदंडभूयस्त्वाद्यागाद्यर्थानांहरणेऽनंतरमेवछिन्नार्द्धपादकःकार्यः ३२५ सूत्रेति वेणुवैदलेति
गतस्येति अन्येति ऊर्णादिसूत्रकार्पासिकस्यचकिण्वस्यसुराबीजद्रव्यस्यचस्थूलवेणुखंडनिर्मितजलाहरणभांडादीनांयद्यप्यन्यत्स
स्तसंभवमृगचर्मखड्गशृंगादिअन्येषामप्येवंविधानामसारप्रायाणांमनःशिलादीनांपक्वान्नानामोदनव्यतिरिक्तानामप्यपूपमोद
कादीनांचकार्पासादिशब्दार्थानांप्रसिद्धानांचापहारेकृतमूल्याद्द्विगुणोदंडःकार्यः ३२६ ३२७ ७ ७ ७

·३२८ ३२९ पुष्पेष्विति पुष्पेषु हरिते क्षेत्रस्थे धान्ये गुल्मलतावृक्षेषु परिवृतेषु अनपावृतवृक्षेषु वक्ष्यमाणश्लोके धान्यादिषु निर्देशात् पुनर्वपनसंभवाच्च धान्येषु अन्येषु समर्थपुरुषभारहार्येषु हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पंचकृष्णलमाषपरिमाणो दंडः स्यात् ३३० परीति अपासितेषु वृक्षेषु धान्येषु शाकादिषु चापहृतेषु अन्वयो द्रव्यस्वामिनां संबंधः येन सह कश्चिदपि संबंधो नास्ति एकग्रामवासादिः तत्र शतं दंड्यः सान्वये तु पंचाशत्पणो देयः खलस्थेषु च धान्येषु अयं दंडः तत्र हि रिपूयंते गृहे चैकादशगुणो दंडः प्रागुक्तः ३३१ स्यादिति यद्द्रव्यापहारादिकं कर्म द्रव्यस्वामिसमक्षं बलान्नृहृतं तत्साहसं स्यात् सहो बलं तद्भवं साहसं अतश्च स्तेयदंडो न कार्यः एतदर्थं स्तेयप्रकरणस्य पाठः यत्पुनः स्वामिपरोक्षापहृतं तत्स्तेयं भवेत् यच्चाहृतं तदपि स्तेयमेव ३३२ यस्त्वेतानिति यः पुनरेतानि सूत्रादिद्रव्याणि उपभोगार्थं कृतसंस्काराणि मनुष्यश्चोरयेत् यश्च त्रेताग्निं वाग्निगृहाच्चोरयेत्तं राजा प्रथमं साहसं दंडयेत् अग्निस्वामिनश्चाधानोपक्षयो दातव्यः गोविंदराजस्तु लौकिकाग्निं चोरयतो दंड इत्याह तदयुक्तम् अल्पापराधे गुरुदंडस्यान्याय्यत्वात् ३३३ येनेति येनयेनांगेन हस्तपादादिना येन प्रकारेण संधिच्छेदादिना चौरो मनुष्येषु विरुद्धधनापहारादिकं चेष्टते तस्य तदेवांगं प्रसंगनिवारणाय राजा छेदयेत् तत्र धनस्वाम्युत्कर्षापेक्षया ऽयमंगच्छेदः ३३४ पित्रेति पिताचार्यो मित्रं माता भार्या पुत्रः पुरोहितानां मध्यात्स्वधर्मे यो नावतिष्ठते स राज्ञो दंडनीयो नास्ति अपि तु दंडनीय एव

मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च मांसस्य मधुनश्चैव यच्चान्यत्पशुसंभवम् ३२८ अन्येषां चैवमादीनां मद्यानामोदनस्य च पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ३२९ पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च अन्येष्वपरिपूतेषु दंडः स्यात्पंचकृष्णलः ३३० परिपूतेषु धान्येषु शाकमूलफलेषु च निरन्वये शतं दंडः सान्वये ऽर्द्धशतं दमः ३३१ स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम् निरन्वयं भवेत्स्तेयं हृत्वापव्ययते च यत् ३३२ यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः तमाद्यं दंडयेद्राजा यश्चाग्निं चोरयेद्गृहात् ३३३ येनयेन यथांगेन स्तेनो नृषु विचेष्टते तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ३३४ पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः नादंड्यो नाम राज्ञो ऽस्ति यः स्वधर्मे न तिष्ठति ३३५

कार्येति यत्रापराधेराजव्यतिरिक्तोजनः कार्षापणंदंडनीयोभवेत्तस्मिन्नपराधेराजापणसहस्रंदंडनीयइतिनिश्चयः स्वार्थदंडंतु
प्सुप्रवेशयेत्ब्राह्मणेभ्योवादद्यात् ईशोदंडस्यवारुणइतिवक्ष्यमाणत्वात् ३३६ अष्टेति ब्राह्मणेति तद्दोषगुणविद्वसइतिस
र्वत्रसंबध्यतेयस्मिन्स्तेयेयोदंडउक्तःसस्तेयगुणदोषज्ञस्यशूद्रस्याष्टभिरापाद्यतेगुण्यतेइति अष्टगुणः कर्त्तव्यः षोडशगुणोगु-
णदोषज्ञस्यवैश्यस्य द्वात्रिंशद्गुणस्तथाविधक्षत्रियस्य चतुःषष्टिगुणोगुणदोषविदुषोब्राह्मणस्य शतगुणोवाअष्टाविंशत्यधिक
शतगुणोवा गुणातिशयापेक्षयाब्राह्मणस्यैव ३३७ ३३८ वानस्पत्यमिति अविरूढवनस्पतीनांपुष्पाणिस्ववदाददीतफला
निचापरिवृतानांइतिगौतमवचनात् अपरिवृतवानस्पत्यादीनांमूलफलंहोमीयाग्न्यर्थंचदारुगोग्रासार्थंचतृणंपरकीयमस्तेयं

कार्षापणंभवेद्दंड्योयत्रान्यःप्राकृतोजनः तत्रराजाभवेद्दंड्यःसहस्रमितिधारणा ३३६ अष्टापाद्यं-
तुशूद्रस्यस्तेयेभवतिकिल्बिषम् षोडशैवतुवैश्यस्यद्वात्रिंशत्क्षत्रियस्यच ३३७ ब्राह्मणस्यचतुःषष्टिः
पूर्णंवापिशतंभवेत् द्विगुणावाचतुःषष्टिस्तद्दोषगुणविद्धिसः ३३८ वानस्पत्यंमूलफलंदार्वग्न्यर्थंतथै
वच तृणंचगोभ्योग्रासार्थमस्तेयंमनुरब्रवीत् ३३९ योदत्तादायिनोहस्ताल्लिप्सेतब्राह्मणोधनम् या
जनाध्यापनेनापियथास्तेनस्तथैवसः ३४० द्विजोध्वगःक्षीणवृत्तिर्द्वाविक्षूद्वेचमूलके आददानःपर
क्षेत्रान्नदंडंदातुमर्हति ३४१ असंधितानांसंधातासंधितानांचमोक्षकः दासाश्वरथहर्ताचप्राप्तःस्या
च्चौरकिल्बिषम् ३४२

मनुराहतस्मान्नदंडोनाप्यधर्मः ३३९ योऽदत्तेति अदत्तादायिनश्चौरस्यहस्तात्योब्राह्मणोया
जनाध्यापनप्रतिग्रहैरपिपरकीयधनंज्ञात्वालब्धुमिच्छेत्सचौरवच्चौरतुल्योज्ञेयः अतःसइवदंड्यः ३४० द्विजेति द्विजाति-
पथिकःक्षीणपाथेयःद्वाविक्षूदंडौद्वेवामूलकेपरकीयक्षेत्रादाकृष्णन् दंडदानयोग्योनभवति ३४१ असंधीति अबद्धानामश्वा
दीनांपरकीयानांयोदर्पेणबंधयितावद्धानांमंदुरादौमोचयितायोदासाश्वरथापहारीसचौरदंडंप्राप्नुयात्सचगुरुलघ्वपराधानु
सारेणमारणांगच्छेदनधनाद्यपहाररूपोबोद्धव्यः ३४२ अनेनेति अनेनोक्तविधानेनराजाचौरनियमनंकुर्वाणः इहलोके

ख्यातिंपरलोकेचोत्कृष्टस्वर्गंप्राप्नुयात् इदानींसाहसमाह ३४३ ऐंद्रमिति सर्वाधिपत्यलक्षणंपदंख्यातिंचाविनाशिनीमनुपक्षयां चातिशयेनप्राप्तुमिच्छन्राजाबलेनगृहदाहधनग्रहणकारिणंमनुष्यंक्षणमपिनोपेक्षेत् ३४४ वागिति वाक्पारुष्यकृताच्चौराच्च दंडपारुष्यकारिणश्चमनुष्यात्साहसकृन्मनुष्योऽतिशयेनपापकारीबोद्धव्यः ३४५ साहसइति योराजासाहसेप्रवर्त्तमानंक्षमतेसपापकृतामुपेक्षणादधर्मवृध्याविनश्यतिउपक्रम्यमाणेराष्ट्रेतथास्वजनविद्वेषंचगच्छति ३४६ नमित्रेति मित्रवाक्येनबहुधनप्राप्त्यासर्वभूतभयजनकान्साहसिकान्राजानत्यजेत् ३४७ शस्त्रमिति आत्मनेति ब्राह्मणादिभिस्त्रिभिर्वर्णैःस्वजातिधायुधंग्रहीतव्यंयस्मिन्कालेवर्णानामाश्रमिणांचसाहसकारादिभिर्धर्मःकर्त्तुंनदीयतेतथात्रैवर्णिकानामराजकेषुराष्ट्रेषुपरचक्रागमनादि

अनेनविधिनाराजाकुर्वाणस्तेननिग्रहम् यशोऽस्मिन्प्राप्नुयाल्लोकेप्रेत्यचानुत्तमंसुखम् ३४३ ऐंद्रंस्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम् नोपेक्षेतक्षणमपिराजासाहसिकन्नरम् ३४४ वाग्दुष्टात्तस्कराच्चैवदंडेनैवचहिंसतः साहसस्यनरःकर्त्ताविज्ञेयःपापकृत्तमः ३४५ साहसेवर्त्तमानंतुयोमर्षयतिपार्थिवः सविनाशंव्रजत्याशुविद्वेषंचाधिगच्छति ३४६ नमित्रकारणाद्राजाविपुलाद्वाधनागमात् समुत्सृजेत्साहसिकान्सर्वभूतभयावहान् ३४७ शस्त्रंद्विजातिभिर्ग्राह्यंधर्मोयत्रोपरुध्यते द्विजातीनांचवर्णानांविप्लवेकालकारिते ३४८ आत्मनश्चपरित्राणेदक्षिणानांचसंगरे स्त्रीविप्राभ्युपपत्तौचघ्नन्धर्मेणनदुष्यति ३४९ गुरुंवाबालवृद्धौवाब्राह्मणंवाबहुश्रुतम् आततायिनमायांतंहन्यादेवाविचारयन् ३५०

कालजनितेस्त्रीसंगरादौप्राप्ते तथात्मरक्षार्थंदक्षिणाधनगवाद्यपहारनिमित्तेचसंग्रामेस्त्रीब्राह्मणरक्षार्थंचधर्मयुद्धेनन्यगतिकतयापरान्हिंसन्नदोषभागीभवतिपरमारणेप्यत्रसाहसदंडोनकार्यः ३४८ ३४९ गुरुंवेति गुरुबालवृद्धबहुश्रुतब्राह्मणानामन्यतमंवधोद्यतमागच्छंतंविद्यावित्तादिभिरुत्कृष्टंपलायनादिभिरपिस्वनिस्तरणाशक्तोनिर्विचारंहन्यात्अतएवउशनाः गृहीतशस्त्रमाततायिनंहत्वानदोषः कात्यायनश्चभृगुशब्दोल्लेखेनमनूक्तःश्लोकमेवव्यक्तंव्याख्यातवान् आतता

यिनिश्चोत्कृष्टेतपःस्वाध्यायजन्मतः वधस्तत्रतुनैवस्यात्पापंहीनेवधोभृगुः मेधातिथिगोविंदराजौतुस्त्रीविप्राभ्युपपत्तौचमनुर्धर्मे
णनदुष्यतीतिपूर्वस्यायमनुवादः गुर्वादिकमपिहन्यात्किमुतान्यमपीतिव्याचक्षाते ३५० नाततेति जनसमक्षंरहसिवावधोद्य
तस्यमारणेहंतुर्नकश्चिदपिअधर्मदंडःप्रायश्चित्ताख्योदोषोभवतियस्मात्कर्तृगतोमन्युःक्रोधाभिमानिनीदेवताहन्यमानगतंक्रोधं
विकर्षयतिसाहसेन्वापराधगौरवापेक्षयामारणांगच्छेदनधनग्रहणादयोदंडाःकार्याः इदानींस्त्रीसंग्रहमाह ३५१ परदारेति पर
दारसंभोगायप्रवृत्तान्मनुष्यगणानुद्वेजनकरैर्दंडैर्नासौष्ठकर्त्तनादिभिरंकयित्वादेशान्निःसारयेत् ३५२ तदिति यस्मात्परदारा
भिगमनाल्लंभूतोवर्णस्यसंकरः संपद्यतेयेनवर्णसंकरेणविशकल्यपत्नीकयजमानाभावात् अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठ
त्यस्याभावेसतिवृष्ट्यास्यजगन्मूलविनाशोऽधर्मोजगन्नाशायसंपद्यते ३५३ परस्येति तत्स्त्रीप्रार्थनादिदोषैःपूर्वमुत्सन्नाभि

नाततायिवधेदोषोहंतुर्भवतिकश्चन प्रकाशंवाप्रकाशंवामन्युस्तन्मन्युमृच्छति ३५१ परदाराभि
मर्षेषुप्रवृत्तान्नॄन्महीपतिः उद्वेजनकरैर्दंडैश्छिन्नयित्वाप्रवासयेत् ३५२ तत्समुत्थोहिलोकस्य
जायतेवर्णसंकरः येनमूलहरोऽधर्मःसर्वनाशायकल्पते ३५३ परस्यपत्न्यापुरुषःसंभाषांयोजय
न्रहः पूर्वमाक्षारितोदोषैःप्राप्नुयात्पूर्वसाहसम् ३५४ यस्त्वनाक्षारितःपूर्वमभिभाषेतकारणात्
नदोषंप्राप्नुयात्किंचिन्नहितस्यव्यतिक्रमः ३५५ परस्त्रियंयोभिवदेत्तीर्थेऽरण्येवनेऽपिवा नदीनां
वापिसंभेदेससंग्रहणमाप्नुयात् ३५६

रपवादप्रार्थनाभिशापादिभिःपुरुषउचितकारणव्यतिरेकेणपरभार्ययासंभा
षणंकुर्वन्प्रथमसाहसंदंडंप्राप्नुयात् ३५४ यस्त्विति यःपुनःपूर्वंतत्स्त्रीप्रार्थनाभिशापरहितःकेनचित्कारणेनजनसमक्षम
भिभाषणंकुर्यान्नसपुनर्दंड्यत्वादिदोषंप्राप्नुयात्तस्मान्नकश्चित्तस्यापराधोस्ति ३५५ परेति तीर्थाद्यरण्यवनादिकनिर्ज्जनदे-
शोपलक्षणमात्रंयःपुरुषः परस्त्रियमुदकभरणमार्गेऽरण्येग्रामाद्बहिर्गुल्मलताकीर्णेनिर्ज्जनेदेशेवनेबहुवृक्षसंततेनदीनांसंग-
मेपूर्वमनाक्षारितोपिकारणादपिसंभाषेत्ससंग्रहणंसहस्रपणंदंडंवक्ष्यमाणंप्राप्नुयात् सम्यग्गृह्यतेज्ञायतेयेनपरस्त्रीसंभोगा

भिलाषइतिसंग्रहणम् ३५६ उपचारेति स्रग्गंधानुलेपनप्रेषणाद्युपचारकरणंकेलिः परिहासालिंगनादिः अलंकारवस्त्राणां
स्पर्शनमेकखट्वासनमित्येतत्सर्वंसंग्रहणंमन्वादिभिःस्मृतम् ३५७ स्त्रियमिति यःस्प्रष्टुमनुचितेस्तनजघनादिदेशेस्त्रियंस्पृशेत्
तयावावृषणादिकेस्पृष्टः क्षमतेतदाऽन्योन्यांगीकरणेसर्वंसंग्रहणंमन्वादिभिःस्मृतम् ३५८ अब्राह्मणेति अब्राह्मणोऽत्र
शूद्रः दंडभूयस्त्वात् ब्राह्मण्यामनिच्छंत्यामुक्तमसंग्रहणंप्राणांतंदंडमाप्नोतिचतुर्णामपिब्राह्मणादीनांवर्णानांधनपुत्रादीना
मतिशयेनदाराःसर्वदारक्षणीयाः तेनप्रसंगनिवृत्त्यर्थउत्कृष्टसंग्रहणादपिसर्ववर्णैर्भार्यारक्षणीया ३५९ भिक्षुकेति भिक्षा
जीविनःस्तुतिपाठकाःयज्ञार्थंकृतदीक्षकाःसूपकारादयःभिक्षादिस्वकार्यार्थंगृहिस्त्रीभिःसहसंभाषणमनिवारिताःकुर्युः

उपचारक्रियाकेलिःस्पर्शोभूषणवाससाम् सहखट्वासनंचैवसर्वंसंग्रहणंस्मृतम् ३५७ स्त्रियं
स्पृशेददेशेयःस्पृष्टोवामर्षयेत्तया परस्परस्यानुमतेसर्वंसंग्रहणंस्मृतम् ३५८ अब्राह्मणःसंग्र
हणेप्राणांतदंडमर्हति चतुर्णामपिवर्णानांदारारक्ष्यतमाःसदा ३५९ भिक्षुकाबंदिनश्चैवदीक्षि
ताःकारवस्तथा संभाषणंसहस्त्रीभिःकुर्युरप्रतिवारिताः ३६० नसंभाषांपरस्त्रीभिःप्रतिषिद्धःस
माचरेत् निषिद्धोभाषमाणस्तुसुवर्णंदंडमर्हति ३६१ नैषचारणदारेषुविधिर्नात्मोपजीविषु सज्ज
यंतिहितेनारीर्निगूढाश्चारयंतिच ३६२ किंचिदेवतुदाप्यःस्यात्संभाषांताभिराचरन् प्रैष्यासुचैकभ
क्तासुरहःप्रव्रजितासुच ३६३

एवंचैषांसंग्रहणाभावः ३६० नसंभाषामिति स्वामिनानिषिद्धःस्त्रीभिःसंभाषणंनकु
र्यात्प्रतिषिद्धःसंभाषणमाचरन्राज्ञःषोडशमाषात्मकसुवर्णदानयोग्योभवति ३६१ नैषइति परस्त्रियंयोभिवदेदित्यादिसंभाषण
निषेधविधिर्नटगायनादिदारेषुनास्तितथाभार्यापुत्रःस्वकातनुरित्युक्तत्वात् भार्यैवात्मा ऽनयाउपजीवंतिधनलाभायतस्याला
भंस्वमंतेयेतेषुनटादिव्यतिरिक्तेष्वपियेदारास्तेष्वप्येवंनिषेधविधिर्नास्तियस्माच्चारणाआत्मोपजीविनश्चपरपुरुषानानीयतैःस्व
भार्यासंश्लेषयंतेस्वयमागतांश्चप्रच्छन्नपुरुषान्प्रच्छन्नाभूत्वासज्ञानंविभावयंतोव्यवहारयंति ३६२ किंचिदिति निर्ज्जनदेशेचारणा

न्नोपजीविभिस्त्रीभिः संभाषणं कुर्वन्स्वल्पदंडलेशं राज्ञा दाप्यः तासामपि परदारत्वात्तथा दासीभिरवद्धाभिर्बौद्धाभिर्ब्रह्मचारि
णीभिः संभाषां कुर्वन् किंचिद्दंडमात्रं दाप्यः स्यात् ३६३ योकामेति यस्तुल्यजातिरनिच्छंतीं कन्यां गच्छति स तत्क्षणादेव ब्राह्मण
रो लिंगच्छेदनादिकं वधमर्हति इच्छंतीं पुनर्गच्छन्वधार्हो मनुष्यो न भवति ३६४ कन्यामिति कन्यां संभोगार्थमुत्कृष्टजातिपुरुषं
सेवमानां स्वल्पमपि दंडं न दापयेत् हीनजातिं पुनः सेवमानां यत्नात्स्थापयेत् यथा वा निवृत्तकामा स्यात् ३६५ उत्तमामिति ही
नजातिरुत्कृष्टामिच्छंतीं जात्यपेक्षया गच्छेदनमारणात्मकं वधमर्हति समानजातीयां पुनरिच्छंतीं गच्छन्यदि पिता मन्यते तदापि
तुः शुल्कानुरूपमर्थं वा दद्यान्न च दंड्यः सा च कन्या तेनैव वोढव्या ३६६ अभीति यो मनुष्यः प्रसह्य बलात्कारेण समानजातीयां
गमनवर्ज्जं सहकारेणांगुलिप्रक्षेपमात्रेणैव नाशयेत्तस्य शीघ्रमेवांगुलिद्वयच्छेदः कर्त्तव्यः षट्पणशतानि चायं दंड्यः स्यात्

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति। सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ३६४ कन्यां भजंतीमुत्कृष्टं न किंचिदपि दापयेत्। जघन्यं सेवमानां तु संयतां वासयेद्गृहे ३६५ उत्तमां सेवमानस्तु जघन्यो वधमर्हति। शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि ३६६ अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः। तस्याशु कर्त्ये अंगुल्यौ दंडं चार्हति षट्शतम् ३६७ सकामां दूषयंस्तुल्यो नांगुलिच्छेदमाप्नुयात्। द्विशतं तु दमं दाप्यः प्रसंगविनिवृत्तये ३६८ कन्यैव कन्यां या कुर्यात्तस्याः स्याद्द्विशतो दमः। शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश ३६९ या तु कन्यां प्रकुर्यात्स्त्री सा सद्यो मौंड्यमर्हति। अंगुल्योरेव वाच्छेदं खरेणोद्वहनं तथा ३७०

३६७ सकामामिति समानजातिरिच्छंतीं कन्यामंगुलिप्रक्षेपमात्रेण नाशयन्नांगुलिच्छे
दमाप्नोति किंतु प्रसक्तिनिवारणाय द्विशतं दंडं दाप्यः ३६८ कन्यैवेति या कन्यैव परामंगुलिप्रक्षेपेण नाशयेत्तस्या द्विश
तो दंडः स्यात्कन्याशुल्कं च कन्यापितुर्दद्यात् शिफाप्रहारांश्च दशमाप्नुयात् ३६९ यात्विति या पुनः कन्यां अंगुलिप्रक्षेपेण स्त्री
नाशयेत्सा तत्क्षणादेव शिरोमुंडनं अंगुल्याः क्षेपादंगुल्योरेवच्छेदनं गर्दभेण च राजमार्गे वहनमर्हति ३७० भर्त्तेति या स्त्री प्रब
लधनिकापित्रादिबांधवदर्पेण शौर्यादिगुणदर्पेण च पतिं पुरुषांतरोपगमनाल्लंघयेत् तां राजा बहुजनाकीर्णदेशे श्वभिर्भ-

क्षयेत् ३७१ पुंसामिति अनंतरोक्तजारंपापकारिणंपुरुषमयोमयशयनेप्रज्वलितोराजादाहयेत्तत्रशयनेवध्यघातिनः
स्थानिनिःक्षिपेयुः यावत्पापकारीदग्धःस्यात् ३७२ संवत्सरेति परस्त्रीगमनेनदुष्टस्यपुंसोऽदंडितस्यचसंवत्सरातिक्रमेणा-
भिशस्तस्यपूर्वदंडाद्विगुणोदमःकार्यः तथाव्रात्यजायागमनेयोदंडःपरिकल्पितः चांडाल्यासहनिर्देशात्चांडालीगमनरूपः
तथाचांडालीगमनेयोदंडःसहस्रंत्वंत्यजस्त्रियमितिसंवत्सरेत्वतीतेयदीतामेवव्रात्यजायांतामेवचांडालींपुनर्गच्छतितदा
णःकर्त्तव्यः एतत्सर्वस्येचोदाहरणद्वयंव्रात्यजायागमनेपिचांडालीगमनदंडप्रदर्शनार्थंसर्वस्यैवतुपूर्वाभिशस्तदंडितस्यसं-
रातिक्रमेपुनस्तामेवगच्छतःपूर्वाद्द्विगुणोदंडोबोद्धव्यः ३७३ शूद्रइति भर्त्रादिभीरक्षितामरक्षितांवाद्विजातिस्त्रियंयदिशूद्रो
गच्छेत्तदाऽरक्षितांरक्षारहितांगच्छन् लिंगसर्वस्वाभ्यांवियोजनीयः अत्रांगविशेषाश्रवणेपि आर्यस्त्र्यभिगमनेलिंगोद्धारःसर्व

भर्त्तारंलंघयेद्यातुस्त्रीज्ञातिगुणदर्पिता तांश्वभिःखादयेद्राजासंस्थानेबहुसंस्थिते ३७१ पुमांसंदाह
येत्पापंशयनेतप्तआयसे अभ्यादध्युश्चकाष्ठानितत्रदह्येतपापकृत् ३७२ संवत्सराभिशस्तस्यदुष्टस्य
द्विगुणोदमः व्रात्ययासहसंवासेचांडाल्यातावदेवतु ३७३ शूद्रोगुप्तमगुप्तंवाद्वैजातंवर्णमावसन् अ-
गुप्तमंगसर्वस्वैर्गुप्तंसर्वेणहीयते ३७४ वैश्यःसर्वस्वदंडःस्यात्संवत्सरनिरोधतः सहस्रंक्षत्रियोदंड्यो
मौंड्यंमूत्रेणचार्हति ३७५ ब्राह्मणींयद्यगुप्तांतुगच्छेतांवैश्यपार्थिवौ वैश्यंपंचशतंकुर्यात्क्षत्रियंतुसह
स्रिणम् ३७६

स्वहरणंगोप्तांचेद्वधोऽधिकइतिगोतमवचनात्किंगच्छेदः रक्षितायांतुगच्छन् शरीरधनहीनःकर्त्तव्यः
३७४ वैश्यइति वैश्यस्यब्राह्मणीगमनेसंवत्सरंबंधादनंतरंसर्वस्वग्रहणरूपोदंडःकार्यः क्षत्रियागमनेतुवैश्यस्यक्षत्रिया-
तिवक्ष्यतिक्षत्रियोगुप्ताब्राह्मणीगमनेसहस्रंदंडनीयःखरमूत्रेणचास्यमुंडनंकर्त्तव्यम् ३७५ ब्राह्मणीमिति अरक्षितांतुब्रा
ह्मणींयदिवैश्यक्षत्रियौगच्छतः तदावैश्यंपंचशतयुक्तंकुर्यात् क्षत्रियंपुनःसहस्रदंडोपेतंवैश्येनायंपंचशतदंडःशूद्राक्रमा-
दिनानिर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषयः तदितरब्राह्मणीगमनेचवैश्यस्यापिसहस्रंदंडएव ३७६ ७ ७

उभेति तावेवोभावपि क्षत्रियवैश्यौब्राह्मण्यारक्षितयासहकृतमैथुनौशूद्रवत्सर्वेणहीयेते इतिदंड्यौ यद्वाकंठेआवेश्यद
ग्धव्यौतत्रवैश्यंलोहितदर्भैःक्षत्रियंशरपत्रैर्वावेष्ट्य इतिवसिष्ठोक्तोविशेषोग्राह्यः पूर्वंसहस्रंक्षत्रियोदंड्योवैश्यःसर्वस्वमित्य
नत्वादयंप्राणांतिकदंडोगुणवद्ब्राह्मणीविषयोबोद्धव्यः ३७७ सहस्रमिति रक्षितांविप्रांब्राह्मणोबलेनोपगच्छन्सहस्रंदंड्यः
स्यात् इच्छंत्यापुनःसकृन्मैथुनेपंचशतानिदंडनीयोभवेत् ३७८ मौंड्यमिति ब्राह्मणस्यमारणवधस्थानेशिरोमुंडनंदंडः
शास्त्रेणोपदिश्यते क्षत्रियादीनांपुनरुक्तेनघातेनदंडोभवति ३७९ नजात्वित्यादि ब्राह्मणंसर्वपापकारिणमपिकदाचिन्नह
न्यात् अपितुसर्वस्वयुक्तमक्षतशरीरंराष्ट्रान्निर्वासयेत् ३८० नब्राह्मणेति ब्राह्मणवधान्महान्पृथिव्यामधर्मोनास्तितस्माद्रा

उभावपितुतावेवब्राह्मण्यागुप्तयासह विप्लुतौशूद्रवद्दंड्यौदग्धव्यौवाकटाग्निना ३७७ सहस्रंब्राह्म
णोदंड्योगुप्तांविप्रांबलाद्व्रजन् शतानिपंचदंड्यःस्यादिच्छंत्यासहसंगतः ३७८ मौंड्यंप्राणांतिकोदं
डोब्राह्मणस्यविधीयते इतरेषांतुवर्णानांदंडःप्राणांतिकोभवेत् ३७९ नजातुब्राह्मणंहन्यात्सर्वपापे
ष्वपिस्थितम् राष्ट्रादेनंबहिःकुर्यात्समग्रधनमक्षतम् ३८० नब्राह्मणवधाद्भूयानधर्मोविद्यतेभुवि त
स्मादस्यवधंराजामनसापिनचिंतयेत् ३८१ वैश्यश्चेत्क्षत्रियांगुप्तांवैश्यांवाक्षत्रियोव्रजेत् योब्राह्म
ण्यामगुप्तायांतावुभौदंडमर्हतः ३८२ सहस्रंब्राह्मणोदंडंदाप्योगुप्तेतुतेव्रजन् शूद्रायांक्षत्रियविशोः
साहस्रोवैभवेद्दमः ३८३

जासर्वपापकारिणोब्राह्मणस्यमनसापिवधन्नचिंतयेत् ३८१ वैश्यश्चेति रक्षितांक्षत्रियां
यदिवैश्योगच्छेत्क्षत्रियोवायदिरक्षितांवैश्यांतदातयोर्ब्राह्मण्यामगुप्तायांगमनेयोदंडउक्तोवैश्यंपंचशतंकुर्यात्क्षत्रियंतुसह
स्रिणमिति सएवदंडोवैश्यक्षत्रिययोर्भवतः अयंचवैश्यस्यरक्षितक्षत्रियागमनेपंचशतरूपोदंडोलघुत्वात्गुणवद्वैश्यस्यनिर्गु
णजातिमात्रोपजीविक्षत्रियायाः शूद्राप्रायात्वादिगमनविषयोबोद्धव्यः क्षत्रियस्यरक्षितवैश्यायांज्ञानतोयुक्तःसहस्रंदंडः३८२
सहस्रमित्यादि क्षत्रियावैश्येरक्षितेब्राह्मणोव्रजन्सहस्रंदंडंदापनीयः शूद्रायांरक्षितायांक्षत्रियवैश्ययोर्गमनेसहस्रमेवदंडःस्यात्

क्षत्रियेति अरक्षितक्षत्रियागमनेवैश्यस्यपंचशतानिदंडःस्यात् क्षत्रियस्यअरक्षितागमनेगर्दभमूत्रेणमुंडनंपंचशतरूपंवा दंडमाप्नुयात् ३८४ अगुप्तेति अरक्षितांक्षत्रियांवैश्यांशूद्रांवाब्राह्मणोगच्छन्पंचशतानिदंड्यःस्यात् अंतेभवोंऽत्यजःयस्मा दधमोनास्तिचांडालादिस्तस्यस्त्रियंगच्छन्सहस्रंदंड्यः ३८५ यस्येति यस्यराज्ञोराष्ट्रेचौरःपरदारगामीपरुषवादीगृहदाहादि साहसकारीदंडपारुष्यकर्ताचनास्तिसराजाशक्रपुरंयाति ३८६ एतेषामिति एतेषांस्तेनादीनांपंचानांस्वराष्ट्रेनिग्रहःसमानजा- तीयेषुराजसुमध्येराजासाम्राज्यकृत्इहलोकेचयशस्करोभवति ३८७ ऋत्विजमिति योयाज्यःऋत्विजंकर्मानुष्ठानसमर्थंअति पातकादिदोषरहितमृत्विग्वायाज्यमदुष्टंत्यजतितयोःशतंशतंदंडःकार्यइतिदंडप्रसंगादिदमुक्तम् ३८८ नमातेति मातृपितृभा

क्षत्रियायामगुप्तायांवैश्येपंचशतंदमः मूत्रेणमौंड्यमिच्छेत्तुक्षत्रियोदंडमेववा ३८४ अगुप्तेक्षत्रि यावैश्येशूद्रांवाब्राह्मणोव्रजन् शतानिपंचदंड्यःस्यात्सहस्रंत्वंत्यजस्त्रियम् ३८५ यस्यस्तेनःपुरेना स्तिनान्यस्त्रीगोनदुष्टवाक् नसाहसिकदंडघ्नौसराजाशक्रलोकभाक् ३८६ एतेषान्निग्रहोराज्ञःपंचा नांविषयेस्वके साम्राज्यकृत्सजात्येषुलोकेचैवयशस्करः ३८७ ऋत्विजंयस्त्यजेद्याज्योयाज्यंचर्त्विक्त्य जेद्यदि शक्तंकर्मण्यदुष्टंचतयोर्दंडःशतंशतम् ३८८ नमातानपितानस्त्रीनपुत्रस्त्यागमर्हति त्यज न्नपतितानेतान्राज्ञादंड्यःशतानिषट् ३८९ आश्रमेषुद्विजातीनांकार्येविवदतांमिथः नविब्रूयान्नृ पोधर्मंचिकीर्षन्हितमात्मनः ३९० यथार्हमेतानभ्यर्च्यब्राह्मणैःसहपार्थिवः सांत्वेनप्रशमय्यादौस्वध र्मंप्रतिपादयेत् ३९१

र्यापुत्राःत्यागमंपोषणशुश्रूषणाद्यकरणात्मकंनार्हतितस्मादेतान्पातकादिरहितान्परित्यजन्एकै कपरित्यागेराज्ञाषट्शतानिदंड्यः ३८९ आश्रमेति द्विजातीनांगार्हस्थ्याश्रमविषयेकार्येअयंशास्त्रार्थोनायंशास्त्रार्थइति परस्परंजातविवादानांराजास्वीयहितंचिकीर्षुरयंशास्त्रार्थइतिसहसान्विशेषेणनब्रूयात् ३९० यथार्हेति योयादृशींपूजा मर्हतितंतथापूजयित्वाअन्यैर्ब्राह्मणैस्सहप्रथमंप्रीत्याअपगतकोपंकृत्वाततएषांयःस्वधर्मःतंबोधयेत् ३९१ छ छ

भातीति निरंतरगृहवासी प्रातिवेश्यः तदंतरगृहवासी अनुवेश्यः यस्मिन्नुत्सवे विंशतिरन्ये ब्राह्मणा भोज्यंते तत्र प्रातिवेश्यानुवेश्यौ प्रातिवेश्य ब्राह्मणातिक्रमकारी चेति विष्णुवचनात् ब्राह्मणो भोजनार्हावभोजयन् ब्राह्मणउत्तरत्र हैरण्यादिग्रहणादिहरौप्यमाषं दंड मर्हति ३९२ श्रोत्रियेति विद्याचारवान् तथाविधमेवगुणवंतं विभवकार्येषु विवाहादिषु प्रकृतत्वात् प्रातिवेश्यानुवेश्ययोरेव भोजयं तदन्नं भोजिताद्द्विगुणमन्नं दाप्यो हिरण्यमाषकं च राज्ञः ३९३ अंधइति अंधो बधिरः पंगुः संपूर्णसप्ततिवर्षः समत्येतिप्रकृत्यादिभ्य उपसंख्यानमिति तृतीया श्रोत्रियेषु धनधान्यसुश्रूषादिनोपकारकाः केनचिदपि क्षीणकोषेणापि राज्ञा अनुग्राह्याः करं नादापनीयाः ३९४ श्रोत्रियमिति विद्याचारवंतं ब्राह्मणं रोगिणं पुत्रवियोगादिदुःखितं बालवृद्ध दरिद्र महाकुलप्रसूतोदारचरितान् राजा दानसा

प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे अर्हावभोजयन् विप्रो दंडमर्हति माषकम् ३९२ श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजयन् तदन्नं द्विगुणं दाप्यो हिरण्यं चैव माषकम् ३९३ अंधो जडः पीठसर्पी सप्तत्या स्थविरश्च यः श्रोत्रियेषूपकुर्वंश्च न दाप्याः केनचित्करम् ३९४ श्रोत्रियं व्याधितार्तौ च बालवृद्धावकिंचनम् महाकुलीनमार्यं च राजा संपूजयेत्सदा ३९५ शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः न च वासांसि वासोभिर्निर्हरेन्न च वासयेत् ३९६ तंतुवायो दशपलं दद्यादेकपलाधिकम् अतोन्यथा वर्त्तमानो दाप्यो द्वादशकं दमम् ३९७ शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत् ३९८

नहितकरणैः संपूजयेत्सदा ३९५ शाल्मलीति शाल्मल्यादिवृक्षसंबंधिफलके अपरुषे रजकः शनैः शनै र्वासांसि प्रक्षालयेत् न परकीयैर्वस्त्रैरन्यवस्त्राणि नयेत् न चान्यवासांसि अन्यपरिधानार्थं दद्यात् यद्येवं कुर्यात्तदासौ दंड्यः स्यात् ३९६ तंतुवायइति तंतुवायो वस्त्रनिर्माणार्थं दशपलानि सूत्रं गृहीत्वा पिष्टभक्ष्याद्यनुप्रवेशादेकादशपलं वस्त्रं दद्यात् यदि ततो न्यूनं द द्यात्तदा द्वादशपणान् राज्ञा दाप्यः स्वामिनश्च तुष्टिः कर्त्तव्येव ३९७ शुल्केति स्थलजलपथव्यवहारतो राजग्राह्यो भागः शुल्कं तस्य स्थानेषु ये कुशलाः तथा सर्वपण्यानां सारासारज्ञाः ते पण्येषु यमर्घं मूल्यमनुरूपं कुर्युः ततो लाभधनाद्विंशतिभागं राजा गृह्णीयात्

राजइति राज्ञःसंबंधितयायानिविक्रेयद्रव्याणिप्रख्यातानिराजोपयोगीनिहस्त्यश्वादीनित्वतद्देशोद्भवानित्वप्रतिषिद्धानिचयथादुर्भिक्षे धान्यंदेशांतरंननेयमितितानिलोभाद्देशांतरंनयतोवणिजःसर्वहरणंराजाकुर्यात् ३९९ शुल्कमिति शुल्कमोक्षायउत्पथेनगच्छ तिअकालेरात्र्यादौवाक्रयविक्रयंकरोतिशुल्कखंडनार्थंविक्रेयद्रव्यस्यअल्पांसंख्यावक्तिराजदेयमपह्नुपितमष्टगुणंदंडरूपतयादाप्यः ४०० आगममिति कियतोदूरादागतमितिदेशांतरीयद्रव्यस्यागमनंकियदूरंनीयतइतिस्वदेशोद्भवस्यनिर्गमंकियत्कालस्थितंकियन्मूल्यंलभतइतिस्थितंतथाकियतीवृद्धिरित्यत्रकर्मकाराणांभक्ताच्छादनादिनाकियानपक्षयइत्येवंविचार्यतथावणिजांक्रेतॄणां यथापीडानभवतितथासर्वपण्यानांक्रयविक्रयौकारयेत् ४०१ पंचरात्रइति आगमनिर्गमोपाययोगादेःपण्यनामनियतत्वात्

राजःप्रख्यातभांडानिप्रतिषिद्धानियानिच तानिनिर्हरतोलोभात्सर्वहारंहरेन्नृपः ३९९ शुल्कस्थानंपरिहरन्नकालेक्रयविक्रयी मिथ्यावादीचसंख्यानेदाप्योऽष्टगुणमत्ययम् ४०० आगमंनिर्गमंस्थानंतथावृद्धिक्षयावुभौ विचार्यसर्वपण्यानांकारयेत्क्रयविक्रयौ ४०१ पंचरात्रेपंचरात्रेपक्षेपक्षेथवागते कुर्वीतचैषांप्रत्यक्षमर्घसंस्थापनंनृपः ४०२ तुलामानंप्रतीमानंसर्वंचस्यात्सुलक्षितम् षट्सुषट्सुचमासेषुपुनरेवपरीक्षयेत् ४०३ पणंयानंतरेदाप्यंपौरुषोऽर्धपणंतरे पादंपशुश्चयोषिच्चपादार्धंरिक्तकःपुमान् ४०४ भांडपूर्णानियानानितार्यंदाप्यानिसारतः रिक्तभांडानियत्किंचित्पुमांसश्चापरिच्छदाः ४०५

अस्थिरार्घादीनांपंचरात्रेपंचरात्रेगतेस्थिरार्घाणांपक्षेपक्षेगतेवणिजामर्घविदं प्रत्यक्षंनृपतिराप्तपुरुषैर्व्यवस्थांकुर्यात् ४०२ तुलेति तुलामानंसुवर्णादीनांपरिच्छेदार्थंयत्क्रियतेतत्सर्वंस्वनिरूपितंयथास्यात् षट्सुषट्सुमासेषुगतेषुपुनस्तत्सर्वंसभ्यपुरुषैर्नृपतिःपरीक्षयेत् ४०३ पणमिति भांडपूर्णानियानानीतिवक्ष्यतितेनरिक्तशकटादियानंतरविषयेपणंदाप्यंएवंपुरुषभारेर्धपणंतरपण्यंदाप्यःपशुश्चगवादिःपणचतुर्थभागंभाररहितोमनुष्यःपणाष्टभागं दापनीयः ४०४ भांडेति पण्यद्रव्यपूर्णानिशकटादीनिद्रव्यगतोत्कर्षापेक्षयाद्रव्यरहितानिगोणीकंबलादिषुयत्किंचित्तार्यंदा

अपरिच्छदादरिद्राउक्तपदार्थदानापेक्षयायत्किंचिद्दापनीयाः ४०५ दीर्घेति पूर्वपारावारेतरणार्थमुक्तंइदानींनदीमार्गेदूराध्वनि गंतव्येमवलवेगस्थिरोदकनद्यादिदेशग्रीष्मवर्षादिकालापेक्षयातरमूल्यंकल्पनीयंएतच्चनदीतीरेबोद्धव्यंसमुद्रेतुवाताधीनपोत गमनत्वान्स्थापत्तलाभावेतरपण्यविशेषज्ञापकंनदीवद्दियोजनादिकंनास्तिततस्तत्रोचितमेवतरपण्यंग्राह्यम् ४०६ गर्भिणीति संजातगर्भास्त्रीमासद्वयादूर्ध्वंतयाप्रव्रजितोभिक्षुर्मुनिर्वानप्रस्थोब्राह्मणाश्चलिंगिनोब्रह्मचारिणः तरमूल्यंतरेनदाप्याः ४०७ यन्नावीति नौकारूढानांयत्किंचिन्नाविकापराधेननष्टंद्रव्यंतन्नाविकैरेवमिलित्वायथाभागंदातव्यम् ४०८ एषनाविति नाविका पराधात्पदुदकेनष्टंतन्नाविकैरेवदातव्यंपूर्वोक्तमनूदितंदैविकेनास्तिनिग्रहइतिविधातुन्नौयायिनामेषव्यवहारस्यनिर्णयउक्तः दैवोपजातवातादिनानौभंगेनधनादिनाशेनाविकानांनदंडः ४०९ वाणिज्यमिति वाणिज्यंकुसीदकृषिपशुरक्षणानिवैश्यंकारयेत्

दीर्घाध्वनियथादेशंयथाकालंतरोभवेत् नदीतीरेषुतद्विद्यात्समुद्रेनास्तिलक्षणम् ४०६ गर्भिणीतु द्विमासादिस्तथाप्रव्रजितोमुनिः ब्राह्मणालिंगिनश्चैवनदाप्यास्तारिकंतरे ४०७ यन्नाविकिंचिद्दासानांविशीर्येतापराधतः तद्दासैरेवदातव्यंसमागम्यस्वतोंशतः ४०८ एषनौयायिनामुक्तोव्यवहारस्यनिर्णयः दासापराधतस्तोये दैविकेनास्तिनिग्रहः ४०९ वाणिज्यंकारयेद्वैश्यंकुसीदंकृषिमेवच पशूनांरक्षणंचैवदास्यंशूद्रंद्विजन्मनाम् ४१० क्षत्रियंचैववैश्यंचब्राह्मणोवृत्तिकर्शितौ बिभृयादानृशंस्येनस्वानिकर्माणिकारयन् ४११ दास्यंतुकारयंल्लोभाद्ब्राह्मणःसंस्कृतान्द्विजान् अनिच्छतःप्राभवत्याद्राज्ञादंड्यःशतानिषट् ४१२

शूद्रंचराजाद्विजातीनांदास्यंकारयेत् अकुर्वाणोवैश्यशूद्रोराज्ञोदंड्यावित्येच- मर्योयमिहोपदेशः ४१० क्षत्रियमित्यादि ब्राह्मणःक्षत्रियवैश्यौभृत्यभावेनपीडितौकरुणयास्वानिकर्माणिरक्षणकृष्यादीनिकार यन्ग्रासाच्छादनादिनापोषयेत् एवंबलवान्ब्राह्मण तावुपगतावथिच्छन्राज्ञादंडनीयइतिप्रकरणसामर्थ्याद्गम्यते ४११ दास्यंत्विति प्रगयतोभाव प्राभवत्यंब्राह्मणःकृतोपनयनान्द्विजातीननिच्छतःप्रभत्वेनलोभाद्दास्यकर्मपादधावनादिकारयन्षट्शतानिदंड्यः ४१२ शूद्रंत्विति शूद्रंपुनर्भक्तादिभृतमभृतंवादास्यंकारयेत्यस्माद्सौब्राह्मणस्यदास्यायैवप्रजापतिनासृष्टः ४१३ ७ ७

नस्वामीति यस्मादसौध्वजाहृतत्वादिनादासत्वंगतः सतेनत्यक्तःस्वदास्याभावेपिशूद्रोब्राह्मणस्यदास्यान्नविमुच्यतेतस्माद्दास्यंशूद्र
स्यसहजंकः शूद्रत्वजातिमिवदास्यमपनयतिअदृष्टार्थमप्यवश्यंशूद्रेणब्राह्मणादिद्विजशुश्रूषाकर्त्तव्येत्येवपरमेतत् अन्यथावक्ष्य
माणदास्यकरणपरिगणनमनर्थकंस्यात् ४१४ ध्वजेति संग्रामसकाशाज्जितोभक्तलाभाद्युपगतोभक्तदासः तथादासीपुत्रः मूल्ये
नक्रीतोऽन्येनदत्तःपित्रादिक्रमागतः दंडादिधनऋणार्थंस्वीकृतदास्यभावः इत्येतानिसप्तध्वजाहृतत्वादीनिदासत्वकरणानि ४१५
भार्येति पुत्रभार्यादासास्त्रयोऽमीनिर्धनाएवमन्वादिभिः स्मृतायस्मात्यद्धनंतेऽर्जयंतियस्यतेभार्यादयस्तस्यतद्धनंभवतिएतच्च-
भार्यादीनांपारतंत्र्यप्रदर्शनार्थपरं अध्यग्न्यादेःषड्विधस्यस्त्रीधनस्यवक्ष्यमाणत्वात् धनसाध्यादृष्टार्थकर्मोपदेशार्थंचभार्यादीनां
पत्न्यधिकरणेपत्न्यर्थेपियागाधिकारस्यउक्तत्वात्स्त्रीपुंसयोर्मध्येएकधनेनानुमतिद्वारेणास्त्रियाअपिकर्तृत्वात् ४१६ विस्रब्ध

शूद्रंतुकारयेद्दास्यंक्रीतमक्रीतमेववा दास्यायैवहिसृष्टोसौब्राह्मणस्यस्वयंभुवा ४१३ नस्वामिनानि
सृष्टोपिशूद्रोदास्याद्विमुच्यते निसर्गजंहितत्तस्यकस्तस्मात्तदपोहति ४१४ ध्वजाहृतोभक्तदासोगृहजः
क्रीतदत्रिमौ पैत्रिकोदंडदासश्चसप्तैतेदासयोनयः ४१५ भार्यापुत्रश्चदासश्चत्रयएवाधनाःस्मृताः य
त्तेसमधिगच्छंतियस्यतेतस्यतद्धनम् ४१६ विस्रब्धंब्राह्मणःशूद्राद्द्रव्योपादानमाचरेत् नहितस्यास्ति
किंचित्स्वंभर्तृहार्यधनोहिसः ४१७ वैश्यशूद्रौप्रयत्नेनस्वानिकर्माणिकारयेत् तौहिच्युतौस्वकर्मभ्यः
क्षोभयेतामिदंजगत् ४१८ अहन्यहन्यवेक्षेतकर्मांतान्वाहनानिच आयव्ययौचनियतावाकरान्को
षमेवच ४१९

मिति निर्विचिकित्समेवप्रकृताद्दासशूद्राद्धनग्रहणंकुर्यात्ब्राह्मणोयतस्तस्यकिंचिदपिस्वंनास्तियस्माद्भर्तृ
ग्राह्यधनोऽसौ एवंचापदिबलादपिदासात्ब्राह्मणोधनंगृह्णन्नराज्ञादंडनीयइत्येवमर्थमेतदुच्यते ४१७ वैश्येति वैश्यंकृष्यादी
निशूद्रंचद्विजातिशुश्रूषादीनिकर्माणियत्नतोराजाकारयेत्यस्मात्तौस्वकर्मभ्यश्च्युतावशास्त्रीयोपार्जितधनग्रहणमदादिनाज
गदाकुलीकुर्याताम् ४१८ अहनीति प्रत्यहंतदधिकृतद्वारेणप्रारब्धदृष्टादृष्टार्थकर्मणांनिष्पत्तिंनृपतिर्निरूपयेत्तथाहस्त्य
श्वादीनिकिमद्यप्रविष्टंकिंनिःसृतमितिसुवर्णरत्नोत्पत्तिस्थानानिभांडागारंचावेक्षेतव्यवहारदर्शनासक्तोपिराजाधर्मान्नपरि

त्यजेदितिदर्शयितुमुक्तस्यापिपुनर्वचनम् ४१९ एवमिति एवमुक्तप्रकारेणएतान्सर्वान्नृणादानादीन् व्यवहारान् तत्त्वतोनिर्णयेनं तन्नयन् पापंसर्वमपहायस्वर्गादिप्राप्तिरूपामुत्कृष्टांगतिंलभते ४२० इतिश्रीकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यामष्टमोऽध्यायः ८ ७ ७ ७ पुरुषेति पुरुषस्यपत्न्याश्चधर्मायहितेऽन्योन्याऽव्यभिचारिलक्षणेवर्त्मनिवर्त्तमानयोः संयुक्तवियुक्तयोश्चधर्मान्पारंपर्यागतत्वेननित्यान्वक्ष्यामिदंपत्योःपरस्परधर्मव्यतिक्रमेसत्यन्यतरज्ञानेदंडेनापिस्वधर्मव्यवस्थानं राज्ञाकर्त्तव्यमितिव्यवहारमध्येऽस्योपदेशः १ अस्वेति स्वीयैर्भर्त्रादिभिःसदास्त्रियःस्वाधीनाःकार्याअनिषिद्धेष्वपिरूपरसादिविषयेषुप्रसक्ताअपिआत्मवशाःकार्याः २ पितेति पिताविवाहात्पूर्वंस्त्रियंरक्षेत्पश्चाद्भर्त्तातदभावेपुत्राः तस्मान्नस्त्रीकस्यांचिदप्यवस्थायांस्वातंत्र्यंभजेत् भर्त्तारक्षतियौवनइत्यादिप्रायिकमभर्तृपुत्रायास्सन्निहितायाःपित्रादिभिरपिरक्षणात् ३ कालेइति प्र

एवंसर्वानिमान्राजाव्यवहारान्समापयन् व्यपोह्यकिल्बिषंसर्वंप्राप्नोतिपरमांगतिम् ४२० इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायामष्टमोऽध्यायः ८ ७ ७ ७ ७

पुरुषस्यस्त्रियाश्चैवधर्म्येवर्त्मनितिष्ठतोः संयोगेविप्रयोगेचधर्मान्वक्ष्यामिशाश्वतान् १ अस्वतन्त्राःस्त्रियःकार्याःपुरुषैःस्वैर्दिवानिशम् विषयेषुचसज्जन्त्यःसंस्थाप्याआत्मनोवशे २ पितारक्षतिकौमारेभर्त्तारक्षतियौवने रक्षन्तिस्थविरेपुत्रानस्त्रीस्वातन्त्र्यमर्हति ३ कालेऽदातापितावाच्योवाच्यश्चानुपयन्पतिः मृतेभर्त्तरिपुत्रस्तुवाच्योमातुररक्षिता ४ सूक्ष्मेभ्योपिप्रसंगेभ्यःस्त्रियोरक्ष्याविशेषतः द्वयोर्हिकुलयोःशोकमावहेयुररक्षिताः ५

दानकालेपितातामददद्गर्ह्योभवतिप्रदानंप्रागृतोरितिगौतमवचनात् ऋतोःप्राक्प्रदानकालःपतिश्चऋतुकालेपत्नीमगच्छन्गर्हणीयोभवतिपत्यौमृतेमातरमरक्षन्पुत्रोनिंद्यःस्यात् ४ सूक्ष्मेभ्य इति स्वल्पेभ्योपिदुःसंगेभ्योदोःशील्यसंपादकेभ्योविशेषेणस्त्रियोरक्षणीयाः किंपुनर्महद्भ्यः यस्मादुपेक्षितरक्षणाद्द्वयोःपितृभर्तृगणयोःसंतापंदापयेयुः ५ इममिति सर्वेषांब्राह्मणादिवर्णानांभार्यारक्षणलक्षणंधर्मंवक्ष्यमाणश्लोकरीत्यासर्वधर्मेभ्य·

उत्कृष्टंजानंतोअंधपंग्वादयोपिभार्यांरक्षितुंयतेरन् ६ स्वामिति यस्माद्भार्यांरक्षतोरक्षणं असंकीर्णविशुद्धापत्योत्पादनेनस्व-
संततिंतथाशिष्टसमाचारंपितृपितामहाद्यन्वयंआत्मानंविशुद्धसंताननिमित्तोर्ध्वदेहिकलाभेनस्वधर्मंचविशुद्धभार्यस्याधानादाव
व्यधिकाराद्रक्ष्यतितस्मात्स्त्रियोरक्षितुंयतेतेतिपूर्वस्यविशेषः ७ पतिरिति पतिःशुक्ररूपेणभार्यांसंप्रविश्यगर्भीभूयतस्यांभा
र्यायांपुत्ररूपेणजायते तथाचश्रुतिः आत्मावैपुत्रनामासीति जायायास्तदेवजायात्वंयतोऽस्यांपतिःपुनर्जायते तथाचबह्वृचब्रा
ह्मणंपतिर्जायांप्रविशतिगर्भोभूत्वेहमातरंतस्यांपुनर्नवोभूत्वादशमेमासिजायतेतज्जायाजायाभवतियदस्यांजायतेपुनः ततश्चा
सौरक्षणीयेत्येतदर्थनामनिर्वचनम् ८ यादृशमिति यस्माद्यादृशंपुरुषंशास्त्रेणविहितंप्रतिषिद्धंवातादृशशास्त्रोक्तपुरुषसेव-

इमंहिसर्ववर्णानांपश्यंतोधर्ममुत्तमम् यतंतेरक्षितुंभार्यांभर्त्तारोदुर्बला अपि ६ स्वांप्रसूतिंचरित्रंच
कुलमात्मानमेवच स्वंचधर्मंप्रयत्नेनजायांरक्षन्हिरक्षति ७ पतिर्भार्यांसंप्रविश्यगर्भोभूत्वेहजायते
जायायास्तद्धिजायात्वंयदस्यांजायतेपुनः ८ यादृशंभजतेहिस्त्रीसुतंसूतेतथाविधम् तस्मात्प्रजाविशु
द्ध्यर्थंस्त्रियंरक्षेत्प्रयत्नतः ९ नकश्चिद्योषितःशक्तःप्रसह्यपरिरक्षितुम् एतैरुपाययोगैस्तुशक्यास्ताः
परिरक्षितुम् १० अर्थस्यसंग्रहेचैनांव्ययेचैवनियोजयेत् शौचेधर्मेऽन्नपक्त्यांचपारिणाह्यस्यचेक्षणे
११ अरक्षितागृहेरुद्धाःपुरुषैराप्तकारिभिः आत्मानमात्मनायास्तुरक्षेयुस्ताःसुरक्षिताः १२

नेनोत्कृष्टंनिषिद्धपुरुषसेवनेनचनिकृष्टंपुत्रंजनयतितस्मादपत्यविशुद्ध्यर्थंपत्नींयत्नतोरक्षेत्कथंरक्षणीयेत्यतआह ९ नेति क-
श्चिद्बलात्संरोधादिनापिस्त्रियोरक्षितुंनशक्तस्तत्रापिव्यभिचारदर्शनात् किंत्वेतैर्वक्ष्यमाणैरक्षणोपायप्रयोगैस्ताःरक्षयितुंसम
र्थाःतानुपायानाह १० अर्थेति धनस्यसंग्रहणेविनियोगेचद्रव्यशरीरशुद्धौभर्तुश्चशुश्रूषादिकेऽन्नसाधनेपारिणाह्यस्यगृहोप
करणस्यशय्यासनकुंडकटाहादेरवेक्षणेएनांनियोजयेत् ११ अरक्षिताइति आप्तास्वतेआज्ञाकारिणश्चतैःपुरुषैर्गृहे
अप्यरक्षिताभवंतियादुःशीलतयानात्मानंरक्षंतियास्तुधर्मज्ञतयाआत्मानमात्मनारक्षंतिताएवसुरक्षिताभवंतिअतोधर्माध-

फलस्वर्गनरकप्राप्त्युपदेशेन आसां संयम. कार्यइतिसुख्यरक्षणोपायकथनपरमिदम् १२ पानमिति मद्यपानं असत्पुरुषसंस र्गः भर्त्रासहविरह. इतस्ततश्चभ्रमणं अकालस्वापः परगृहनिवासइत्येतानिषट्स्त्रियाव्यभिचाराख्य दोषजनकानितस्मादेतेभ्यो एतारक्षणीयाः १३ नैताइति नैताःकमनीयंरूपंविचारयंतिनचासां यौवनादिके वयसि आदरो भवतिकिंतुसरूपंकुरूपंवापुमानि त्येतावतैवतमुपभुंजते १४ पौंश्चल्येति पुंसोदर्शनेसंभोगाद्यभिलाषशीलत्वात्चित्तस्थैर्याभावात्स्वभावतः स्नेहरहितत्वाच्चए तायत्नेनापिलोकेरक्षिताःसत्योव्यभिचाराश्रयणेनभर्त्तृषुविक्रियांगच्छंति १५ एवमिति एवंश्लोकद्वयोक्तमासांस्वभावंहिरए गर्भसृष्टिकालजनितंज्ञात्वारक्षणार्थंप्रकृष्टंयत्नंपुरुष.कुर्य्यात् १६ शय्येति शयनोपवेशनालंकरणशीलत्वंकामक्रोधानार्ज्ज

पानं दुर्ज्जनसंसर्गः पत्याचविरहोऽटनम् स्वप्नोन्यगेहवासश्चनारीसंदूषणानिषट् १३ नैतारूपंपरीक्षंते नासांवयसिसंस्थितिः सुरूपंवाविरूपंवापुमानित्येवभुंजते १४ पौंश्चल्याच्चलचित्ताच्चनैस्नेह्याच्चस्व भावतः रक्षितायत्नतोपीहभर्त्तृष्वेताविकुर्वते १५ एवंस्वभावंज्ञात्वासांप्रजापतिनिसर्गजम् परमंयत्न मातिष्ठेत्पुरुषोरक्षणंप्रति १६ शय्यासनमलंकारंकामंक्रोधमनार्जवम् द्रोहभावंकुचर्यांचस्त्रीभ्यो मनुरकल्पयत् १७ नास्तिस्त्रीणांक्रियामंत्रैरितिधर्मेव्यवस्थितिः निरिंद्रियाह्यमंत्राश्चस्त्रियोऽनृत मितिस्थितिः १८ तथाचश्रुतयोबह्व्योनिगीतानिगमेष्वपि स्वालक्षण्यपरीक्षार्थंतासांशृणुतनिष्कृतीः १९

वपरहिंसाकुत्सिताचारत्वानिसर्गादौमनुःस्त्रीभ्यःकल्पितवान्तस्माद्यत्नतोरक्षणीयाः १७ नास्तीति जातकर्मादिक्रिय स्त्रीणामंत्रैर्नास्तिइत्येषाशास्त्रमर्यादाव्यवस्थितातनश्चमंत्रवत्संस्कारगणाभावान्नतिष्पापाःतः करणाइंद्रियंप्रमाणंधर्मप्रमाण श्रुतिस्मृतिरहितत्वान्नधर्मज्ञाअमंत्राःपापापनोदनमंत्रजपरहितत्वात् जातेपिपापेतन्निर्णेजना क्षमाः अनृतवदशुभाःस्त्रियइ तिशास्त्रमर्यादातस्माद्यत्नतोरक्षणीयाइत्यत्रतात्पर्यम् १८ तथाचेति व्यभिचारशीलत्वंस्त्रीणांस्वभावइत्यत्रश्रुतिप्रमाणत योपन्यस्यतितथाबह्व्यःश्रुतयोबहूनिश्रुतिवाक्यानिनचैतद्विद्मोब्राह्मणास्मोऽब्राह्मणावेत्येवमादीनिनिगमेषुस्वालक्षण्यंव्यभि

चारशीलत्वंतत्परिज्ञानार्थंपठितानितासांश्रुतीनांमध्येयानिष्कृतिरूपाव्यभिचारप्रायश्चित्तभूतास्ताःश्रुतीःशृणुतएकस्याःश्रुतेर्व
क्ष्यमाणत्वात्श्रुतिंशृणुतेत्यर्थःरूपांरूपोभवंतीतिद्वितीयैकवचनेबहुवचनम् १९ यदिति कश्चित्पुत्रोमातुर्मानसव्यभिचारम
वगम्यब्रूतेमनोवाक्कायकर्मभिःपतिव्यतिरिक्तंपुरुषंयानकामयतेसापतिव्रताततोऽन्याअपतिव्रताममगाताअपतिव्रतासतीपरगृ
हान्गच्छतीयन्मम्लुलुभेपरपुरुषंप्रतिसंजातलोभाअभूत्तत्पुरुषसंकल्पदुष्टंमातृरजोरूपंरेतोममपिताशोधयत्वित्यस्यस्त्रिया
व्यभिचारशीलत्वस्यैतदितिकरणांतंमंत्रपादत्रयंज्ञापकंअयंचमंत्रश्चातुर्मास्यादिषुविनियुक्तःसंप्रतिमानसव्यभिचारप्रायश्चित्त
रूपतामस्यमंत्रस्याह २० ध्यायेति भर्त्तुरप्रियंयत्किंचित्पुरुषांतरगमनंस्त्रीमनसाचिंतयतितस्यमानसस्यव्यभिचारस्यएषप्रकृ
तोमंत्रःसम्यक्शोधनोमन्वादिभिरुच्यतेमातेतिश्रवणात्पुत्रस्यैवायंप्रायश्चित्तरूपोमंत्रो मातुः २१ यादृग्गुणेनेति यथारूपेणभ-

यन्मेमातामम्लुलुभेविचरंत्यपतिव्रता तन्मेरेतःपितावृक्तामित्यस्यैतन्निदर्शनम् २० ध्यायत्यनि
ष्टंयत्किंचित्पाणिग्राहस्यचेतसा तस्यैषव्यभिचारस्यनिन्ह्वःसम्यगुच्यते २१ यादृग्गुणेनभर्त्रास्त्री
संयुज्येतयथाविधि तादृग्गुणासाभवतिसमुद्रेणेवनिम्नगा २२ अक्षमालावसिष्ठेनसंयुक्ताऽधमयो-
निजा शारंगीमंदपालेनजगामाभ्यर्हणीयताम् २३ एताश्चान्याश्चलोकेऽस्मिन्नपकृष्टप्रसूतयः उ
त्कर्षयोषितःप्राप्ताःस्वैःस्वैर्भर्तृगुणैःशुभैः २४ एषोदितालोकयात्रानित्यंस्त्रीपुंसयोःशुभा प्रेत्येहच
सुखोदर्कान्प्रजाधर्मान्निबोधत २५

र्त्रासाधुनाऽसाधुनावास्त्रीविवाहविधिनासंयुज्यतेसाभर्तृसदृशगुणाभवतिय
थासमुद्रेणसंयुज्यमानानदीस्वादूदकापिक्षारजलाजायतेभर्त्तुरात्मसमानाख्यस्त्रीरक्षणोपायांतरोपदेशार्थमिदंअत्रोत्कर्षदृष्टां-
तमाह २२ अक्षेति अक्षमालाख्यानिकृष्टयोनिजावसिष्ठेनपरिणीतातथाचटकामंदपालाख्येनऋषिणासंगतापूज्यतांगता २३
एताइति यद्यपिद्वेप्रकृतेतथापिप्रदर्शनार्थत्वमनयोर्मत्वाएताइतिबहुवचनंकृतंएताश्चान्याश्चसत्यवत्यादयोनिकृष्टप्रसूतयःस्व
भर्तृगुणैःप्रकृष्टैरस्मिन्लोकेउत्कृष्टतांप्राप्ताः २४ एषेति एषलोकाचारोजायापतिविषयःसदाशुभउक्तःइदानीमिहलोकेपरलो

केचउत्तरकालशमसरवहेतून् किंक्षेत्रिणोऽपत्यमुतबीजिनइत्यादीन्प्रजाधर्मान्शृणुत २५ प्रजेति यद्यप्यासांरक्षणार्थंदोषा उक्तास्तथापियथमतीकारात्तेषांएतास्त्रियोमहोपकारागर्भोत्पादनार्थंबहुकल्याणभाजनभूताः वस्त्रालंकारादिदानेनसंमानार्हाः स्वगृहेशोभाकारिण्यः स्त्रियःश्रियश्चगेहेषुतुल्यरूपानानयोर्विशेषोविद्यतेयथानिःश्रीकंगृहन्नराजतेएवंनिःस्त्रीकमिति अपिच २६ उत्पादेति अपत्यस्यजननंजातस्यपरिपालनंप्रतिदिनंचातिथिमित्रभोजनादेर्लोकव्यवहारस्यप्रत्यक्षंभार्यैवनिदानम् २७ अपत्यमिति अपत्योत्पादनमुक्तमप्येतत् अभ्यर्हिततत्त्वज्ञापनार्थंपुनरभिधानंधर्मकार्याणि अग्निहोत्रादीनिपरिचर्याउत्कृष्टारतिः पितॄणामात्मनश्चापत्यजननादिनास्वर्गइत्येतत्सर्वंभार्याधीनम् २८ पतिमिति यास्त्रीमनोवाग्देहसंयतासतीतिविशेषणोपादानसा मर्थ्यान्मनोवाग्देहैरेवनव्यभिचरतिसाभर्त्रासहार्जितान्स्वर्गादिलोकानाप्नोतिइहलोकेविशिष्टैःसाध्वीत्युच्यते २९ व्यभिचारेति

प्रजनार्थंमहाभागाःपूजार्हागृहदीप्तयः स्त्रियःश्रियश्चगेहेषुनविशेषोऽस्तिकश्चन २६ उत्पादनमपत्यस्यजातस्यपरिपालनम् प्रत्यहंलोकयात्रायाःप्रत्यक्षंस्त्रीनिबंधनम् २७ अपत्यंधर्मकार्याणिशुश्रूषारतिरुत्तमा दाराधीनस्तथास्वर्गःपितॄणामात्मनश्चह २८ पतिंयानाभिचरतिमनोवाग्देहसंयता साभर्तृलोकानाप्नोतिसद्भिःसाध्वीतिचोच्यते २९ व्यभिचारात्तुभर्तुःस्त्रीलोकेप्राप्नोतिनिंद्यताम् सृगालयोनिंचाप्नोतिपापरोगैश्चपीड्यते ३० पुत्रंप्रत्युदितंसद्भिःपूर्वजैश्चमहर्षिभिः विश्वजन्यमिमंपुण्यमुपन्यासन्निबोधत ३१ भर्तुःपुत्रंविजानंतिश्रुतिद्वैधंतुभर्तरि आहुरुत्पादकंकेचिदपरेक्षेत्रिणंविदुः ३२

पुरुषांतरसंपर्कात्स्त्रीलोकेनिंद्यतांजन्मांतरेचसृगालजातिंप्राप्नोतिपापरोगादिभिश्चपीड्यते पंचमाध्यायेस्त्रीधर्मउक्तमर्त श्लोकद्वयंतदपत्यर्थत्वेनमहाप्रयोजनतयापुनःपठितम् ३० पुत्रमिति पुत्रमधिकृत्यशिष्टैर्मन्वादिभिःपूर्वमुत्पन्नैश्चमहा अभिहितमिमंवक्ष्यमाणंसर्वजनहितंविचारंशृणुत ३१ भर्तुरिति भर्तुःपुत्रोभवतीतिमुनयोमन्यंतेभर्तरिद्विप्रकाराश्रुतिर्वर्त्त तेकेचिदुत्पादकमवोढारमपिभर्तारंतेनपुत्रेणपुत्रिणमाहुःअन्येतुवोढारंभर्तारमनुत्पादकमपिअन्यजनितेनपुत्रेणपुत्रिणमाहुः ३२ क्षेत्रेति व्रीह्याद्युत्पत्तिस्थानंक्षेत्रंतत्तुल्यास्त्रीमुनिभिःस्मृतापुरुषश्चव्रीह्यादिबीजतुल्यःस्मृतः यद्यपिरेतोबीजंतथापित

दधिकरणत्वात्पुरुषोबीजमितिव्यपदिश्यते क्षेत्रबीजसमायोगात्सर्वप्राणिनामुत्पत्तिः एवंचोभयोः कारणत्वस्याविशिष्टत्वात्-
युक्ताविप्रतिपत्तिः किंयत्संबंधिक्षेत्रंतस्यापत्यंउतयदीयंबीजंतस्येति ३३ विशिष्टेति क्वचिद्बीजंप्रधानंजायतेयदर्थंसुतायामिति
न्यायेनोत्पन्नोबीजिनोबुधइवसोमस्यतथाव्यासऋष्यशृंगादयोबीजिनामेवसुताः क्वचित्क्षेत्रस्यप्राधान्यंयथायंतल्पजःप्रमीत
स्यइतिवक्ष्यति अतएवविचित्रवीर्यक्षेत्रेक्षत्रियायांब्राह्मणोत्पादिताअपिधृतराष्ट्रादयः क्षेत्रियाः क्षत्रियाएवपुत्राबभूवुः यत्रपु
नर्बीजयोन्योः साम्यंतत्रचोदेवजनयितानदपत्यंभवतितत्रबीजप्राधान्यापेक्षंतावदाहुः ३४ बीजेति बीजक्षेत्रयोर्बीजंप्रधानम-
भिधीयतेयस्मात्सर्वेषांभूतारब्धानांउत्पत्तिर्बीजगतवर्णस्वरूपादिचिन्हैःउपलक्षितादृश्यते ३५ यादृशमिति यज्जातीयंबीजं

क्षेत्रभूतास्मृतानारीबीजभूतःस्मृतःपुमान् । क्षेत्रबीजसमायोगात्संभवःसर्वदेहिनाम् ३३ विशि
ष्टंकुत्रचिद्बीजंस्त्रीयोनिस्त्वेवकुत्रचित् उभयंतुसमंयत्रसाप्रसूतिःप्रशस्यते ३४ बीजस्यचैवयो-
न्याश्चबीजमुत्कृष्टमुच्यते सर्वभूतप्रसूतिर्हिबीजलक्षणलक्षिता ३५ यादृशंतूप्यतेबीजंक्षेत्रेकालो
पपादिते तादृग्रोहतितत्तस्मिन्बीजंस्वैर्व्यंजितंगुणैः ३६ इयंभूमिर्हिभूतानांशाश्वतीयोनिरुच्यते
नचयोनिगुणान्कांश्चिद्बीजंपुष्यतिपुष्टिषु ३७ भूमावप्येककेदारेकालोप्तानिकृषीवलैः नानारूपा
णिजायन्तेबीजानीहस्वभावतः ३८ व्रीहयःशालयोमुद्गास्तिलामाषास्तथायवाः यथाबीजंप्ररोहंति
लशुनानीक्षवस्तथा ३९

व्रीह्यादिग्रीष्मादिकालेवर्षादिनासंस्कृतेक्षेत्रेउप्यतेतज्जातीयमेवतद्बीजमात्मीयैर्वर्णादि
भिरुपलक्षितंतस्मिन्क्षेत्रेजायतेएवमन्वयप्रकारेणबीजप्राधान्यंप्रदर्श्यव्यतिरेकमुखेनदर्शयितुमाह ३६ इयमिति हिरव
रणेइयमेवभूमिर्भूतारब्धानांतरुगुल्मलतादीनांनित्यायोनिः कारणंक्षेत्रात्मकंसर्वलोकेरुच्यतेनचभूम्याख्ययोनिधर्मा
श्चिदपिमूर्तत्वरूपत्वादीन्बीजंस्वविषयेअंकुरकांडाद्यवस्थासुभजतेभजत्यर्थत्वात्पुष्यतेःसकर्मतातस्माद्यो
भावान्नक्षेत्रप्राधान्यंअपिच ३७ भूमाविति भूमावेकस्मिन्नपिकेदारेकर्षकैर्वपनकालोप्तानिव्रीहिमुद्गादीनिनानारूपाण्ये
वबीजस्वभावाज्जायंतेनतुभूमेरेकत्वादेकरूपाणिभवंतितथाहि ३८ व्रीहीति व्रीहयःषष्टिकाःशालयःकलमाद्याःतथासु

द्योबीजस्वभावानतिक्रमेणनानारूपाणिजायंतेएवंचसति ३९ अन्यदिति व्रीहिरुप्तोमुद्गादिर्जायतेइत्येतन्नसंभवतियस्मा
द्यदेवबीजंउप्यतेतत्तदेवजायतेएवंबीजगुणानुवर्त्तनात्क्षेत्रधर्माननुवृत्तेश्चव्रीह्यादौमनुष्येष्वपिबीजप्राधान्यम् संप्रतिक्षेत्रप्राधान्य
माह ४० तदिति तद्बीजंसहजप्रज्ञावतापित्रादिवत्शिष्टेनज्ञानंवेदःएवंविज्ञानमपितदंगादिशास्त्राणितद्वेदिनाआयुरिच्छता
नकदाचित्परजायायांवपनीयम् ४१ अत्रेति अतीतकालज्ञाअस्मिन्नर्थेवायुप्रोक्तागाथाःछंदोविशेषयुक्तानिवाक्यानिकथयं
तियथापरपुरुषेणपरपत्न्यांबीजंनवप्तव्यमिति ४२ नश्यतीति यथान्येनविद्धंमृगंक्षुण्णासारंतस्मिन्नेवच्छिद्रेपश्चादन्यस्यविध्यतः
आविद्धःक्षिप्तःशरोनिष्फलोभवतिपूर्वहंत्रैवहतत्वात्तस्यैवतन्मूललाभात्एवंपरपत्न्यांउप्तंबीजंशीघ्रमेवनिष्फलंभवतिगर्भग्रह

अन्यदुप्तंजातमन्यदित्येतन्नोपपद्यते उप्यतेयद्धियद्बीजंतत्तदेवप्ररोहति ४० तत्प्राज्ञेनविनीतेनज्ञान
विज्ञानवेदिना आयुष्कामेनवप्तव्यंनजातुपरयोषिति ४१ अत्रगाथावायुगीताःकीर्त्तयंतिपुराविदः
यथाबीजंनवप्तव्यंपुंसापरपरिग्रहे ४२ नश्यतीषुर्यथाविद्धःखेविद्धमनुविध्यतः तथानश्यतिवैक्षि
प्रंबीजंपरपरिग्रहे ४३ पृथोरपीमांपृथिवींभार्यांपूर्वविदोविदुः स्थाणुच्छेदस्यकेदारमाहुःशल्यवतो
मृगम् ४४ एतावानेवपुरुषोयज्जायात्माप्रजेतिह विप्राःप्राहुस्तथाचैतद्योभर्त्तासास्मृतांगना ४५

णानंतरंक्षेत्रिणःसद्यःफललाभात् ४३ पृथोरिति इमामपिपृथ्वींपृथुनापूर्वंपरिगृहीतत्वात् अनेकराजसंबंधेपिपृथोर्भार्या
मित्यतीतज्ञाजानंतितस्मात्स्थाणुच्छिंदतिस्थाणुच्छेदः कर्मण्यण्येनस्थाणुमुत्पाट्यक्षेत्रंकृतंतस्यैवतत् क्षेत्रंवदंतितथाशरादि
शल्यंयेनपूर्वंमृगेक्षिप्तंतस्यैवतंमृगमाहुः एवंचपूर्वपरिगृहीतुःस्वामित्वाद्वोढुरेवापत्यंभवतिनजनयितुः ४४ एतावानिति नैकः
पुरुषोभवतिअपितुभार्यास्वदेहप्रपनीयापत्यानीत्येतत्परिमाणएवपुरुषः तथाचवाजसनेयब्राह्मणम् अर्द्धोहवाएषआत्मनस्त
स्मात्यज्जायांनविंदतेनैतावत्प्रजायतेअसर्वोहितावद्भवतिअथयदैवजायांविंदतेऽथप्रजायतेतर्हिसर्वोभवति तथाचैतद्वेदवि
दोविप्रावदंतियोभर्त्तासैवभार्यास्मृतेतिएवंचतस्यामुत्पादितंभर्त्तुरेवापत्यंभवतीतियतश्चदंपत्योरैक्यमतः ४५ ७ ७

नेति निष्क्रयो विक्रयः विसर्गस्त्यागः न ताभ्यां स्त्री भर्तुर्भार्यात्वादपैत्येवं पूर्वं प्रजापतिना स्मृतं नित्यं धर्मं मन्यामहे एवं च क्रयादिना
पि परस्त्रियमात्मसात्कृत्वा तदुत्पादितापत्यं क्षेत्रिण एव भवति न बीजिनः ४६ सकृदित्यादि पित्रादिधनविभागो भ्रातॄणां धर्मतः
कृतः सकृदेव भवति न पुनरन्यथा क्रियत इति तथा कन्या पित्रादिना सकृदेकस्मै दत्ता न पुनरन्यस्मै दीयते एवं च अन्येन पूर्वमन्यस्मै
दत्तायां पश्चात्पित्रादिभिः आसायामपि जनितमपत्यं न बीजिनो भवतीत्येतदर्थमस्योपन्यासः तथा कन्यातोऽन्यस्मिन्नपि गवादि
द्रव्ये सकृदेव ददानीत्याह न पुनस्तदन्यस्मै दीयत इति त्रीण्येतानि साधूनां सकृद्भवंति यद्यपि कन्यादानस्य सकृत्करणं प्रकृतोपयु
क्तं तथापि प्रसंगादंशदानयोरपि सकृत्ताभिधानं सकृदाह ददानीत्यनेनैव कन्यादानस्यापि सकृत्करणसिद्धौ प्रकृतोपयोगित्वादेव
पृथगभिधानम् ४७ यथेति यथा गवादिषु परकीयेष्वात्मवृषभादिकं नियुज्य वत्सोत्पादको न तद्भागी तथा परकीयभार्यास्वपि

न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते एवं धर्मं विजानीमः प्राक् प्रजापतिनिर्मितम् ४६ सकृदंशो निपतति सकृत्कन्या प्रदीयते सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ४७ यथा गोऽश्वोष्ट्रदासीषु महिष्यजाविकासु च नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ४८ येऽक्षेत्रिणो बीजवंतः परक्षेत्रप्रवापिणः ते वै सस्यस्य जातस्य न लभंते फलं क्वचित् ४९ यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ५०

नोत्पादकः प्रजाभागी भवति ४८ ये इति
क्षेत्रस्वामिनो ये न भवंति अथ बीजस्वामिनः संतः परक्षेत्रे बीजं वपंति ते तत्र क्षेत्रजातस्य धान्यादेः फलं क्वचिदपि देशे न लभंते
इति प्रकृतस्य दृष्टांतः ४९ यदन्येति यदन्यदीयगवीषु वृषभो वत्सशतानपि जनयेत्सर्वे ते वत्साः स्त्रीगवीस्वामिनो भवंत्येवं च
वृषभस्वामिनः वृषभस्य यत् शुक्रसेचनं तद्वृषभस्वामिनो निष्फलमेव भवति यथा गोऽश्वोष्ट्रेत्यनेन नोत्पादकस्य प्रजाभागित्वं न
भवतीत्येतत्परत्वेन दृष्टांत उक्तः अयं तु क्षेत्रस्वामिनः प्रजाभागित्वं भवतीत्येतत्परत्वेन अतो न पुनरुक्तिः ५० तथैवेति यथा
गवादिगर्भेषु तथैवापत्यरहिताः संतः परकीयभार्यायां ये बीजं वपंति ते क्षेत्रस्वामिनामेवापत्यलक्षणमर्थं कुर्वंति बीजसेच.

लपत्यारव्यंफलन्नलभते ५१ फलमिति यदस्यासुतल्यतेऽपत्यंतदावयोरुभयोरेवेवंयत्रनियमोनकृतस्तत्रनिःसंदिग्धमेवक्षेत्रि
णोऽपत्यंउक्तरीत्याबीजात्क्षेत्रंबलवत् ५२ क्रियेति यदत्रापत्यंभविष्यतितदावयोरेवेतिनियम्यैतत्क्षेत्रंस्वामिनाबीजवपनार्थंय
द्बीजिनोदीयतेतस्यापत्यस्यलोकेबीजिक्षेत्रिणौद्वावपिभागिनौदृष्टौ ५३ ओघेति यद्बीजंजलवेगवाताभ्यांअन्यदीयक्षेत्रादानी
तंयस्यक्षेत्रेजायतेनतत्क्षेत्रस्वामिनएवतद्बीजंभवतिनतुयेनबीजमुप्तंसतत्फलंलभतेएवंचस्वभार्याक्रमेणापरभार्यागमनेममा
यंपुत्रोभवितेत्येवागमेपिक्षेत्रिणएवापत्यमित्यनेनदर्शितम् ५४ एषेति एषैवव्यवस्थागवाश्वादीनांसंततिंप्रतिज्ञातव्यायत्
क्षेत्रस्वाम्येवगवाश्वादेःसंततिस्वामीनतुवृषभादिस्वामी नियमेतुकृतेसत्येतयोरेवसंततिस्वाम्यम् ५५ एतेति एतद्बीजयो-

तथैवाक्षेत्रिणोबीजंपरक्षेत्रप्रवापिणः कुर्वंतिक्षेत्रिणामर्थंनबीजीलभतेफलम् ५१ फलंत्वनभि
संधायक्षेत्रिणांबीजिनांतथा प्रत्यक्षंक्षेत्रिणामर्थोबीजाद्योनिर्गरीयसी ५२ क्रियाभ्युपगमात्त्वे
तद्बीजार्थंयत्प्रदीयते तस्येहभागिनौदृष्टौबीजीक्षेत्रिकएवच ५३ ओघवाताहृतंबीजंयस्यक्षेत्रेप्ररो
हति क्षेत्रिकस्यैवतद्बीजंनवप्तालभतेफलम् ५४ एषधर्मोगवाश्वस्यदास्युष्ट्राजाविकस्यच विहं
गमहिषीणांचविज्ञेयःप्रसवंप्रति ५५ एतद्वःसारफल्गुत्वंबीजयोन्योःप्रकीर्तितम् अतःपरंप्रवक्ष्या
मियोषितांधर्ममापदि ५६ भ्रातुर्ज्येष्ठस्यभार्यायागुरुपत्न्यनुजस्यसा यवीयसस्तुयाभार्यास्नुषा
ज्येष्ठस्यसास्मृता ५७ ज्येष्ठोयवीयसोभार्यांयवीयान्वाग्रजस्त्रियम् पतितौभवतोगत्वानियुक्तावप्य
नापदि ५८

न्योःप्राधान्याप्राधान्यंयुष्माकमुक्तंअतोऽनंतरंस्त्रीणांसंतानाभावेयत्कर्त्तव्यंतद्वक्ष्यामि ५६ भ्रातुरि
ति ज्येष्ठस्यभ्रातुर्याभार्यासाकनिष्ठस्यभ्रातुर्गुरुपत्नीभवतिकनिष्ठस्यचभ्रातुर्याभार्यासाज्येष्ठभ्रातुःस्नुषामुनिभिःस्मृ
ता ५७ ज्येष्ठइति ज्येष्ठकनिष्ठभ्रातरावितरेतरभार्यांगत्वासंतानाभावंविनानियुक्तावपिपतितौस्याताम् ५८ देवरेति सं
तानाभावेस्त्रियापत्यादिगुरुनियुक्तयादेवराद्न्यस्माद्वासपिंडाद्वक्ष्यमाणघृताक्तादिनियमवत्पुरुषगमनेनेष्टाप्रजाउत्पाद

थितव्याईप्सितेत्यभिधानमर्थात्कार्याक्षमपुत्रोत्पत्तौपुनर्गमनार्थम् ५९ विधवेति विधवायामित्यपत्योत्पादनयोग्यपत्यभाव परामिदंजीवत्यपिपत्यौ अयोग्यपत्यादिगुरुनियुक्तोघृताक्तसर्वगात्रोमौनीरात्रावेकपुत्रंजनयेत्नकथंचित्द्वितीयम् ६० द्वितीये ति अन्येपुनराचार्यानियोगात्पुत्रोत्पादनविधिज्ञाअपुत्रएकपुत्रइतिशिष्टप्रवादादनिष्पन्नन्नियोगप्रयोजनंमन्यमानाःस्त्रीषुपु त्रोत्पादनंद्वितीयंधर्मतोमन्यंते ६१ विधवेति विधवादिकायान्नियोगप्रयोजनेगर्भधारणेयथाशास्त्रंसंपन्नेसतिज्येष्ठोभ्राताक निष्ठभ्रातृभार्यान्चपरस्परंगुरुवत्स्नुषावच्चव्यवहरेताम् ६२ नियुक्ताविति ज्येष्ठकनिष्ठभ्रातरौयौपरभार्यायान्नियुक्तौघृताक्तादि विधानंत्यक्त्वास्वेच्छातोवर्त्तेयातांतौस्नुषागगुरुदारगौपतितौभवतांएवन्नियोगमविधायदूषयितुमाह ६३ नान्येति ब्राह्मणादि

देवराद्वासपिंडाद्वास्त्रियासम्यङ्नियुक्तया प्रजेप्सिताधिगंतव्यासंतानस्यपरिक्षये ५९ विधवायान्नि युक्तस्तुघृताक्तोवाग्यतोनिशि एकमुत्पादयेत्पुत्रन्नद्वितीयंकथंचन ६० द्वितीयमेकेप्रजनंमन्यंतेस्त्री षुतद्विदः अनिर्वृतन्नियोगार्थंपश्यंतोधर्मतस्तयोः ६१ विधवायान्नियोगार्थेनिर्वृत्तेतुयथाविधि गुरुवच्चस्नुषावच्चवर्त्तेयातांपरस्परम् ६२ नियुक्तौयौविधिंहित्वावर्त्तेयातांतुकामतः तावुभौपतितौ स्यातांस्नुषागगुरुतल्पगौ ६३ नान्यस्मिन्विधवानारीनियोक्तव्याद्विजातिभिः अन्यस्मिन्हिनियुंजा नाधर्महन्युःसनातनम् ६४ नोद्वाहिकेषुमंत्रेषुनियोगःकीर्त्यतेक्वचित् नविवाहविधावुक्तंविधवावेद नंपुनः ६५ अयंद्विजैर्हिविद्वद्भिःपशुधर्मोविगर्हितः मनुष्याणामपिप्रोक्तोवेनेराज्यंप्रशासति ६६

भिर्विधवास्त्रीभर्त्तुरन्यस्मिन्देवरादौननियोजनीयास्त्रियमन्यस्मिन्नियुंजानाः तेस्त्रीणामेकपतित्वधर्ममनादिसिद्धन्नाशयेयुः ६४ नोद्वाहिकेष्विति अर्यमणन्नुदेवमित्येवमादिषुविवाहप्रयोजनकेषुमंत्रेषुक्वचिदपिशाखायान्ननियोगः कथ्यतेनचविवाहवि धायकशास्त्रेऽन्येनपुरुषेणसपुनर्विवाहउक्तः ६५ अयमिति यस्मादयंपशुसंबंधीमनुष्याणामपिव्यवहारोविद्वद्भिर्निंदितः सोयमधार्मिकेवेनेराज्ञिराज्यंकुर्वाणेतेनकर्त्तव्यतयाप्रोक्तःअतोवेनादारभ्यप्रवृत्तोयमादिमानितिनिंद्यते ६६ ७ ५

समहीमिति सवेनोमहींसमग्रां पूर्वंपालयन् अतएवराजर्षिश्रेष्ठोनतुधार्मिकत्वात्कामोपहतबुद्धिर्भ्रातृभार्यागमनरूपंवर्णसंक
रंप्रावर्त्तयत् ६७ ततइति वेनकालात्प्रभृतियोमृतभर्तृकांस्त्रियंशास्त्रार्थाज्ञानादपत्यनिमित्तंदेवरादौनियोजयतितंसाधवो
नियतंगर्हयन्ते अयंचस्वोक्तनियोगनिषेधःकलियुगविषयः तदाहबृहस्पतिः उक्तोनियोगोमुनिनानिषिद्धःस्वयमेवतु युगक्रमा
दशक्योयंकर्त्तुमन्यैर्विधानतः तपोज्ञानसमायुक्ताःकृतत्रेतायुगेनराः द्वापरेचकलौनृणांशक्तिहानिर्हिनिर्मिता अनेकधाकृताः
पुत्राऋषिभिश्चपुरातनैः नशक्यन्तेधुनाकर्त्तुंशक्तिहीनैरिदंतनैः अतोयद्गोविंदराजेनयुगविशेषव्यवस्थामज्ञात्वासर्वदैवप्र
भावेनियोगादनियोगपक्षःश्रेयानितिस्वमनीषयाकल्पितंतन्मुनिव्याख्याविरोधान्नाद्रियामहे प्रायशोमनुवाक्येषुमुनिव्याख्या
नमेवहि नापराध्योस्मिविदुषांकाहंसर्वविदःकुधीः नियोगप्रकरणत्वात्कन्यागतंविशेषमाह ६८ यस्याइति यस्याःकन्याया

समहीमखिलांभुञ्जन्राजर्षिप्रवरःपुरा वर्णानांसंकरंचक्रेकामोपहतचेतनः ६७ ततःप्रभृतियो
मोहात्प्रमीतपतिकांस्त्रियम् नियोजयत्यपत्यार्थंतंविगर्हन्तिसाधवः ६८ यस्याम्रियेतकन्यायावा
चासत्येकृतेपतिः तामनेनविधानेननिजोविन्देतदेवरः ६९ यथाविध्यधिगम्यैनांशुक्लवस्त्रांशुचिव्र
ताम् मिथोभजेताप्रसवात्सकृत्सकृदृतावृतौ ७० नदत्त्वाकस्यचित्कन्यांपुनर्दद्याद्विचक्षणः दत्त्वा
पुनःप्रयच्छन्हिप्राप्नोतिपुरुषानृतम् ७१ विधिवत्प्रतिगृह्यापित्यजेत्कन्यांविगर्हिताम् व्याधितां
विप्रदुष्टांवाछद्मनाचोपपादिताम् ७२

वाग्दानेकृतेसतिभर्त्ताम्रियतेतामनेनवक्ष्यमाणेनानुष्ठानेनभर्त्तुःसोदरभ्रा
तापरिणयेत् ६९ यथेति सदेवरोविवाहविधिनाएनांस्वीकृत्यशुक्लवस्त्रांकायवाङ्मनःशौचशालिनीमागर्भग्रहणात्रहसिऋ
तावृतावेकैकवारंगच्छेत् एवंकन्यायांनियोगप्रकारत्वात्विवाहस्याग्रहाच्चगमनोपदेशाद्यस्मैवाग्दत्तातस्यैवतदपत्यंभवति ७०
नदत्त्वेति कस्मैचिद्वाचाकन्यांदत्त्वातस्मिन्मृतेदानगुणदोषज्ञस्तामन्यस्मैनदद्यात् यस्मादेकस्मैदत्त्वान्यस्मैददत्पुरुषानृतंसहस्र
कृत्वोदोषंप्राप्नोतिरासपदीकरणस्याजातत्वात्भार्यात्वानिष्पत्तेःपुनर्दानाशंकायामिदंवचनम् ७१ विधिवदिति अद्भिरेवद्विजाग्र्या

णामित्येचमादिविधिनाप्रतिगृह्यापिकन्यांवैधव्यलक्षणोपेतांरोगिणींक्षतयोनित्वाद्यभिशापवतीमधिकांगादिगोपनच्छ
ग्नोपपादितांससप्तपदीकरणात्प्राक्ज्ञातांत्यजेत्तत्र्यतत्त्यागेदोषाभावइत्येतदर्थन्नतुत्यागार्थम् ७२ यस्त्विति यःपुनर्दोषव
तींकन्यांदोषाननभिधायददातितस्यकन्यादातुर्दुरात्मनोदानंतत्समर्पणेनव्यर्थंकुर्य्यात् एतदपित्यागेदोषाभावकथनार्थम्
७३ विधायेति कार्येसतिमनुष्यःपत्न्याग्रासाच्छादनादिप्रकल्प्यदेशांतरंगच्छेत् यस्माद्ग्रासाद्यभावपीडितास्त्रीशीलवत्यपि
पुरुषांतरसंपर्कंव्रजेत् ७४ विधायेति भक्ताच्छादनादिदत्वापत्योदेशांतरंगतेदेहप्रसाधनपरगृहगमनरहिताजीवेत् अद
त्वापुनर्गतेसूत्रनिर्माणादिभिरनिंदितशिल्पेनजीवेत् ७५ प्रोषितइति गुर्वाज्ञासंपादनादिधर्मकार्यनिमित्तंप्रोषितःपतिर-
ष्टौवर्षाणिपत्न्याप्रतीक्षणीयःऊर्ध्वंपतिसन्निधिंगच्छेत् तदाहवसिष्ठः प्रोषितपत्नीपंचवर्षाण्युपासीतऊर्ध्वंपतिसकाशंग

यस्तुदोषवतींकन्यामनाख्यायोपपादयेत् तस्यतद्वितथंकुर्यात्कन्यादातुर्दुरात्मनः ७३ विधायवृ
त्तिंभार्यायाःप्रवसेत्कार्यवान्नरः अवृत्तिकर्षिताहिस्त्रीप्रदुष्येत्स्थितिमत्यपि ७४ विधायप्रोषिते
वृत्तिंजीवेन्नियममास्थिता प्रोषितेत्वविधायैवजीवेच्छिल्पैरगर्हितैः ७५ प्रोषितोधर्मकार्यार्थंप्रती
क्ष्योऽष्टौनरःसमाः विद्यार्थंषड्यशोऽर्थंवाकामार्थंत्रींस्तुवत्सरान् ७६ संवत्सरंप्रतीक्षेतद्विषतींयोषि
तंपतिः ऊर्ध्वंसंवत्सरात्त्वेनांदायंहृत्वानसंवसेत् ७७ अतिक्रामेत्प्रमत्तंयामत्तंरोगार्त्तमेववा सात्रीन्
मासान्परित्याज्याविभूषणपरिच्छदा ७८ उन्मत्तंपतितंक्लीबमबीजंपापरोगिणम् नत्यागोऽस्तिद्विष
त्याश्चनचदायापवर्त्तनम् ७९

च्छेदितिविद्यार्थंप्रोषितःषड्वर्षाणिप्रतीक्ष्यः निजविद्याविभाजनेनयशोर्थमपिप्रोषितः
पतिःषडेवभार्यांतरोपभोगार्थंगतस्त्रीणिवर्षाणि ७६ संवत्सरमिति पतिर्विषयसंजातद्वेषांस्त्रियंवर्षंयावत्प्रतीक्षेत्ततऊर्ध्वम
पिद्विषंतींस्वदत्तमलंकारादिधनंहृत्वानोपगच्छेत् ग्रासाच्छादनमात्रंतुदेयमेव ७७ अतीति यास्त्रीद्यूतादिप्रमादवंतंमद्यजन
कपानादिनामत्तंव्याधितंवाशुश्रूषाद्यकरणेनावजानातिसाविगतालंकारशय्यादिपरिच्छदात्रीन्मासान्नोपगंतव्या ७८ उन्मत्त
मिति धात्वादिक्षोभादप्रकृतिस्थंपतितमेकादशाध्यायेवक्ष्यमाणंनपुंसकमबीजंवाध्यरेतस्त्वादिनाबीजरहितंकुष्ठाद्युपेतंच

लमदर्शनंपरन्नतु नियमार्थंप्रायेणैतावताकालेनगृहीतवेदो भवतित्रिभागवयस्कान्च कन्यावोढु पूनोयोग्येतिगृहीतवेदस्याप्रकु र्वाणकोगृहस्थाश्रमस्तितिनविलंबेतेतिसत्वर इत्यस्यार्थः ९४ देवेति भगोर्यमासवितापुरंधिर्मस्थत्वादुर्गार्हपत्यायदेवाइत्यादिमं त्रलिंगात्यादेवैर्दत्ताभार्यातांपतिर्लभतेनतुस्वेच्छयातांसतींदेवानांप्रियंकुर्वन्ग्रासाच्छादनादिनासदाहूषाद्युत्पन्नामपिपोषयेत् ९५ प्रजनेति यस्माद्गर्भग्रहणार्थंस्त्रियःसृष्टागर्भाधानार्थंचमनुष्याःतस्माद्भोर्सादनसेवानयोरग्न्याधानादिरपिधर्मःपत्न्यासह साधारणःक्षौमेवसानावग्नीनादधीयातामित्यादिवेदेऽभिहितःतस्माद्भार्याविभृयादितितिपूर्वोक्तस्यशेषः ९६ कन्येति कन्या यांदत्तशुल्कायांसत्यामसंजातविवाहायांयदिसुल्कदोवरोम्रियतेतदादेवरायपित्रादिभिर्वाऽसौकन्यादातव्यायदिसास्वीकरोति यस्याम्रियतइतिप्राशुक्तंनियोगरूपंइदंतुशुल्कग्रहणविषयम् ९७ आददीतेति शास्त्रानभिज्ञः शूद्रोपिपुत्रींददन्सुल्कंनगृ

देवदत्तांपतिर्भार्यांविंदतेनेच्छयात्मनः तांसाध्वींबिभृयान्नित्यंदेवानांप्रियमाचरन् ९५ प्रजनार्थं स्त्रियःसृष्टाःसंतानार्थंचमानवाः तस्मात्साधारणोधर्मःश्रुतौपत्न्यासहोदितः ९६ कन्यायांदत्त शुल्कायांम्रियेतयदिशुल्कदः देवरायप्रदातव्यायदिकन्यानुमन्यते ९७ आददीतनशूद्रोपिशु ल्कंदुहितरंददन् शुल्कंहिगृण्हन्कुरुतेछन्नंदुहितृविक्रयम् ९८ एतत्तुनपरेचक्रुर्नापरेजातु साधवः यदन्यस्यप्रतिज्ञायपुनरन्यस्यदीयते ९९ नानुशुश्रुमजात्वेतत्पूर्वेष्वपिहिजन्मसु शुल्क संज्ञेनमूल्येनछन्नंदुहितृविक्रयम् १००

ण्हीयात् किंपुनःशास्त्रविद्द्विजातिःयस्मात्शुल्कंगृण्हन्गुप्तंदुहितृविक्रयं कुरुतेनकन्यायाःपितेत्यनेननिषिद्धमपिशुल्कग्रहणंकन्यायामपिगृहीतशुल्कायांशास्त्रीयनियमदर्शनात्शुल्कग्रहणेशास्त्री यत्वशंकायांपुनस्तन्निषिध्यते ९८ एतदिति यतत्पुनःपूर्वेशिष्टानकदाचित्कृतवंतोनाप्यपरेवर्त्तमानकालाःकुर्वंतियदन्यस्यक न्यामंगीकृत्यपुनरन्यस्मैदीयतइतिएतच्चगृहीतशुल्ककन्यामदत्वाकस्यचित्कन्यायाभिनितुगृहीतसुल्कविषयम् ९९ नेति पूर्व कल्पेष्वप्येतद्वृत्तमितिकदाचित्वयन्नश्रुतवंतोयत्सुल्काभिधानेनमूल्येनकश्चित्साधुर्गूढंदुहितृविक्रयमकार्षीदितिशुल्कनि षेधार्थवादः १००

अन्योन्येति भार्यापत्योर्मरणांतंयावत्धर्मार्थकामेषुपरस्पराव्यभिचारःस्यादित्येवसंक्षेपतःस्त्रीपुंसयोःप्रकृष्टोधर्मोज्ञातव्यःतथान्नसति १०१ तथेति स्त्रीपुंसौकृतविवाहौतथासदायत्नंकुर्यातांयथाधर्मार्थकामविषयेवियुक्तौपरस्परन्नव्यभिचरेताम् १०२ एषइति एषभार्यापत्योरन्योन्यानुरागयुक्तोधर्मोसुखाक्मुक्तःसंतानाभावेचापत्यप्राप्तिरुक्ता इदानींदायतइति दायःपित्रादिधनंतस्यविभागव्यवस्थांशृणुत १०३ ऊर्ध्वमिति भ्रातरोमिलित्वापितृमरणादूर्द्ध्वविभागहेतुमाह यस्मात्तेपुत्राजीवतोःपित्रोस्तदायधनेस्वामिनोनभवंतिमातुरपिप्रकृतत्वात्तेनक्रमिसनेनमातृकस्यापिग्रहणंअयंचपितृमरणविभागोजीवतःपितुरिच्छाभावेद्रष्टव्यः पितुरिच्छयाजीवत्यपितस्मिन्विभागः तदाहयाज्ञवल्क्यः विभागंचेत्पिताकुर्यादिच्छयाविभजेत्सुतानिति यदापुनर्ज्येष्ठोधार्मिकोभवतितदा १०४ ज्येष्ठेति ज्येष्ठएवपितृसंबंधिधनंगृह्णीयात्कनिष्ठाःपुनर्ज्येष्ठंभक्ताच्छादनाद्यर्थंपितरमिवउपजीवेयुः एवंचसर्वेषांसहैवावस्थानम् १०५ ज्येष्ठेति उत्पन्नमात्रेणज्येष्ठेनसंस्काररहितेनापिमनुष्यःपुत्रवान्भवतिततश्चनापुत्रस्यलोकोस्तीतिश्रुतेःतथाप्रजयापितृभ्यइतिश्रुतेःपुत्रेणजातमात्रेण पितृणामनृणश्चसइतिअतोज्येष्ठएवधनमर्हतिपूर्वस्यअनुजास्तेनसाम्नावर्त्तेरन् १०६ यस्मिन्निति यस्मिन्जातेऋणंशोधयतियेनजातेनामृतत्वंप्राप्नोति तथाचश्रुतिःऋणमस्मिन्संनयत्यमृतत्वंचग

अन्योन्यस्याव्यभिचारोभवेदामरणांतिकः एषधर्मःसमासेनज्ञेयःस्त्रीपुंसयोःपरः १०१ तथानित्यंयतेयातांस्त्रीपुंसौतुकृतक्रियौ यथानाभिचरेतांतौवियुक्तावितरेतरम् १०२ एषस्त्रीपुंसयोरुक्तोधर्मोवोरतिसंहितः आपद्यपत्यप्राप्तिश्चदायभागन्निबोधत १०३ ऊर्ध्वंपितुश्चमातुश्चसमेत्यभ्रातरःसमम् भजेरन्पैतृकंरिक्थमनीशास्तेहिजीवतोः १०४ ज्येष्ठएवतुगृह्णीयात्पित्र्यंधनमशेषतः शेषास्तमुपजीवेयुर्यथैवपितरंतथा १०५ ज्येष्ठेनजातमात्रेणपुत्रीभवतिमानवः पितृणामनृणश्चैवसतस्मात्सर्वमर्हति १०६ यस्मिन्नृणंसन्नयतियेनचानंत्यमश्नुते सएवधर्मजःपुत्रःकामजानितरान्विदुः १०७

पतिमपरिचरंत्यास्त्यागोनकरणीयोनचधनग्रहणंकरणीयम् ७९ मद्येति निषिद्धमद्यपानरताअसाध्व्याचाराभर्त्तुःप्रतिकूलाचरणशीलाकुष्ठादिव्याधियुक्ताभृत्यादिताडनशीलासततमतिव्ययकारिणीयाभार्याभवेत्साधिवेत्तव्यातस्यांसत्यामन्योविवाहःकार्यः ८० वंध्येति प्रथमऋतुमारभ्याविद्यमानप्रसूताअष्टमेवर्षेऽधिवेदनीयामृतापत्यादशमेवर्षेस्त्रीजनन्येकादशेऽप्रियवादिनीसद्यएवयद्यपुत्राभवतिपुत्रवत्यांतुतस्यांधर्मप्रजासंपन्नेदारेनान्यांकुर्वीतान्यतराभावेतुकुर्वीतेत्यापस्तंबनिषेधादधिवेदनन्नकार्यम् ८१ येति यापुनर्व्याधितासतीपत्युरनुकूलाभवतिशीलवतीचस्यात्तामनुज्ञाप्यान्योविवाहःकार्यः कदाचिच्चासौनावमाननीया ८२ अधीति यापुनःकृतवेदनास्त्रीकुपितानिर्गच्छतिसातदहरेवरज्ज्वादिनाबद्ध्वास्थापनीयाआकोप-

मद्यपासाधुवृत्ताचप्रतिकूलाचयाभवेत् व्याधितावाधिवेत्तव्याहिंस्राऽर्थघ्नीचसर्वदा ८० वंध्याष्टमेऽधिवेद्याब्देदशमेतुमृतप्रजा एकादशेस्त्रीजननीसद्यस्त्वप्रियवादिनी ८१ यारोगिणीस्यात्तुहितासंपन्नाचैवशीलतः सानुज्ञाप्याधिवेत्तव्यानावमान्याचकर्हिचित् ८२ अधिविन्नातुयानारीनिर्गच्छेद्रुषितागृहात् सासद्यःसन्निरोद्धव्यात्याज्यावाकुलसन्निधौ ८३ प्रतिषिद्धापिचेद्यातुमद्यमभ्युदयेष्वपि प्रेक्षासमाजंगच्छेद्वासादंड्याकृष्णलानिषट् ८४ यदिस्वाश्चापराश्चैवविंदेरन्योषितोद्विजाः तासांवर्णक्रमेणस्याज्ज्यैष्ठ्यंपूजाचवेश्मच ८५ भर्त्तुःशरीरशुश्रूषांधर्मकार्यंचनैत्यकम् स्वाचैवकुर्यात्सर्वेषान्नास्वजातिःकथंचन ८६

निवृत्तेःपित्रादिकुलसन्निधौवात्याज्या ८३ प्रतीति यापुनःक्षत्रियादिकास्त्रीभर्त्रादिनिवारिताविवाहाद्युत्सवेष्वपिनिषिद्धमद्यंपिबेन्नृत्यादिस्थानजनसमूहंवागच्छेत्साकृष्णलानिषड्व्यवहारप्रकरणाद्राज्ञादंडनीया ८४ यदीति यदिद्विजातयःस्वजातीयाविजातीयाश्चउद्वहेयुस्तदातासांद्विजातिक्रमेणवाक्संमानदायविभागोत्कर्षार्थंज्येष्ठत्वंपूजाचवस्त्रालंकारादिदानेनगृहंचप्रधानंस्यात् ८५ भर्त्तुरिति भर्त्तुर्देहपरिचर्यामन्नदानादिरूपान्धर्मकार्यंचभिक्षादानातिथिपरिवेशनहोमीयद्रव्योपकल्पनादिरूपंप्रत्यहिकंसर्वेषांद्विजातीनांसजातिभार्यैवकुर्यान्नतुकदा

चिद्विजातीयेति ८६ यस्त्विति यः पुनः स्वजातीयया सन्निहितया देहशुश्रूषादिकं कर्त्तव्यं विजातीयया मौर्ख्यात् कारयेत् स यथा ब्राह्मण्याः शूद्राज्जातो ब्राह्मणचांडालः तथैव पूर्वैर्ऋषिभिर्दृष्ट इति पूर्वान्नुवादः ८७ उत्कृष्टेति कुलाचारादिभिरुत्कृष्टाय सरूपाय समानजातीयाय वराया प्राप्तकालामपि विवाहयेदष्टवर्षामेव धर्मो न हीयते इति दक्षस्मरणात् तस्मादपि कालात्प्रागपि कन्यां ब्राह्मविवाहविधिना दद्यात् ८८ काममिति संजातार्त्तवापि कन्या वरं मरणपर्यंतं पितृगृहे तिष्ठेत् न पुनरेनां विद्यागुणरहिताय कदाचित् पित्रादिर्दद्यात् ८९ त्रीणीति पित्रादिर्गुणवत्तरायादीयमाना कन्या संजातार्त्तवा सती त्रीणि वर्षाणि प्रतीक्षेत वर्षत्रयात् पुनरूर्ध्वमधिकगुणवरालाभे समानजातिगुणं वरं स्वयं वृणीत ९० अदीयेति पित्रादिभिरदीयमाना कुमारी यथोक्तकाले यदि

यस्तत्कारयेन्मोहात्सजात्या स्थितयान्यया यथा ब्राह्मणचांडालः पूर्वदृष्टस्तथैव सः ८७ उत्कृष्टायाभिरूपाय वराय सदृशाय च अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ८८ काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ८९ त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ऊर्ध्वं तु कालादेतस्माद्विंदेत सदृशं पतिम् ९० अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम् नैनः किंचिदवाप्नोति न च यं साधिगच्छति ९१ अलंकारं नाददीत पित्र्यं कन्या स्वयंवरा मातृकं भ्रातृदत्तं वा स्तेनः स्याद्यदि तं हरेत् ९२ पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ९३ त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ९४

भर्त्तारं स्वयं वृणुते तदा सा न किंचित्पापं प्राप्नोति न च तत्पतिः पापं प्राप्नोति ९१ अलमिति स्वयंवृतपतिका कन्या वरस्वीकरणात्पूर्वं पितृमातृभ्रातृभिर्दत्तमलंकारं तेभ्यः समर्पयेत् यदा नार्पयेत्तदा चौरी स्यात् ९२ पित्रेनेति ऋतुयुक्तां कन्यां वरः परिणयन् पित्रे शुल्कं न दद्यात् यस्मात्स पिता ऋतुकार्यापत्योत्पत्तिनिरोधात् कन्यायाः स्वामित्वाद्धीयते ९३ त्रिंशदिति त्रिंशद्वर्षः पुमान् द्वादशवर्षवयस्कां मनोहारिणीं कन्यामुद्वहेत् चतुर्विंशतिवर्षो वाऽष्टवर्षां गार्हस्थ्यधर्मे वसादं गच्छति त्वरावान् एतच्च योग्यका

-च्छातपितापुत्रस्यजातस्यपश्येच्चजीवतोमुखमिति सएवपितुर्धर्मेण हेतुनाजातःपुत्रो भवतितेनैकेन एवऋणापनयनाद्युपकारस्यक-
रणात् इतरांस्तुकामजान्मुनयोजानन्तिततश्चसर्वंधनंगृह्णीयादित्यस्यैवायमपिविशेषः १०७ पितेवेति ज्येष्ठोभ्राताविभागाभावे-
अनुजान्भ्रातॄन्भक्ताच्छादनादिभिःपितेवपिपृयात् अनुजाश्चभ्रातरःपुत्राइवज्येष्ठेभ्रातरिधर्मायवर्त्तेरन् १०८ ज्येष्ठइति अकृत
विभागोज्येष्ठोयदिधार्मिकोभवतितदाऽनुजानामपितदनुयायित्वेनधार्मिकत्वात्ज्येष्ठःकुलंवृद्धिंनयतियद्यधार्मिकोभवतितदाऽनु
जानामपितदनुयायित्वात्ज्येष्ठःकुलंनाशयतितथागुणवान्ज्येष्ठोलोकेपूज्यतमःसाधुभिश्चागर्हितोभवति १०९ योज्येष्ठइति
योज्येष्ठोऽनुजेषुभ्रातृषुपितृवद्वर्त्तेतसपितेवमातेवागर्हणीयोभवतियःपुनस्तथानवर्त्तेतसमातुलादिबंधुवदर्चनीयः ११० एवमिति
एवमविभक्ताभ्रातरःसहसंवसेयुःयदिवाधर्मकामनयाकृतविभागाःपृथग्वसेयुःयस्मात्पृथगवस्थानेसतिपृथक्पृथक्पंचमहाय-

पितेवपालयेत्पुत्रान्ज्येष्ठोभ्रातॄन्यवीयसः पुत्रवच्चापिवर्त्तेरन्ज्येष्ठेभ्रातरिधर्मतः १०८ ज्येष्ठःकु
लंवर्द्धयतिविनाशयतिवापुनः ज्येष्ठःपूज्यतमोलोकेज्येष्ठःसद्भिरगर्हितः १०९ योज्येष्ठोज्येष्ठवृत्तिः
स्यान्मातेवसपितेवसः अज्येष्ठवृत्तिर्यस्तुस्यात्ससंपूज्यस्तुबंधुवत् ११० एवंसहवसेयुर्वापृथग्वाध
र्मकाम्यया पृथग्विवर्द्धतेधर्मस्तस्माद्धर्म्यापृथक्क्रिया १११ ज्येष्ठस्यविंशउद्धारःसर्वद्रव्याच्चयद्वरम्
ततोऽर्द्धंमध्यमस्यस्यात्तुरीयंतुयवीयसः ११२ ज्येष्ठश्चैवकनिष्ठश्चसंहरेतांयथोदितम् येऽन्येज्येष्ठक
निष्ठाभ्यांतेषांस्यान्मध्यमंधनम् ११३

ज्ञायज्ञानधर्माः तेषांवर्द्धतेतस्माद्विभागक्रियाधर्म्या तथाचबृहस्पतिः ए-
कपाकेनवसतांपितृदेवद्विजार्चनम् एकंभवेद्विभक्तानांतदेवस्याद्गृहेगृहे १११ ज्येष्ठस्येति उद्ध्रियतइत्युद्धारःज्येष्ठस्याविभक्त
साधारणधनादुद्धृत्यविंशतितमोभागःसर्वद्रव्येभ्यश्चयत्श्रेष्ठंतद्दातव्यम् मध्यमस्यचत्वारिंशत्तमोभागोदेयः कनिष्ठस्यपुनर-
शीतितमोभागोदातव्यः अवशिष्टंधनंसमंकृत्वाविभजनीयम् ११२ ज्येष्ठश्चेति ज्येष्ठकनिष्ठौपूर्वश्लोकेयथोक्तमुद्धारंगृह्णीया
तां ज्येष्ठकनिष्ठव्यतिरिक्तायेमध्यमास्तेषामेवान्तरज्येष्ठकनिष्ठतामनपेक्ष्यमध्यमस्योक्तचत्वारिंशद्भागः प्रत्येकंदातव्यः मध्य-
मानामनन्तरज्येष्ठकनिष्ठदेयभागेवैषम्यवारणार्थमिदम् ११३ सर्वेषामिति सर्वेषांधनप्रकाराणांमध्यात्यत्श्रेष्ठंधनंज्येष्ठः

तद्रत्नंगृह्णीयात्सर्वद्रव्याच्चयद्वरमित्युक्तमनूदितंसमुच्चयबोधनाययच्चैकमपिप्रकृष्टंद्रव्यंविद्यतेतदपिज्येष्ठएवगृह्णीयात्तथाद-
शतःपशूनामितिगौतमस्मरणात् दशभ्योगवादिपशुभ्यएकैकंश्रेष्ठंज्येष्ठोलभतेइदंचयदिज्येष्ठोगुणवानितरेनिर्गुणास्तदाद्रष्टव्यंस
र्वेषांसमगुणत्वेतु ११४ उद्धारइति दशतःप्राप्नुयाद्वरमितियोयमुद्धारउक्तःसोयमध्ययनादिकर्मसंपन्नानांभ्रातॄणांज्येष्ठस्यनास्ति
नापियत्किंचिदस्यदेयमितिद्रव्यंपूजावृद्धिकरंज्येष्ठायदेयमेवंचसमगुणेषूद्धारप्रतिषेधदर्शनात्पूर्वत्रगुणोत्कर्षविशेषापेक्षयोद्धा
रविषयत्वंबोद्धव्यम् ११५ एवमिति एवमुक्तप्रकारेणसमुद्धृतविंशाद्यधिकेधनेसमान्भागान्भ्रातॄणांकल्पयेत् विंशतितमभा
गादौपुनरनुद्धृतइयंवक्ष्यमाणभागकल्पनाभवेत् ११६ एकेति एकाधिकमंशंद्वावंशावितियावत्ज्येष्ठपुत्रोगृह्णीयात् अधिक
मर्द्धंयत्रांशोसार्द्धमंशंज्येष्ठादनंतरजातोगृह्णीयात्कनिष्ठाःपुनरेकैकमंशंगृह्णीयुरितिव्यवस्थितोधर्मः इदंतुज्येष्ठतदनुजयोर्वि

सर्वेषांधनजातानामाददीताग्र्यमग्रजः यच्चसातिशयंकिंचिद्दशतश्चाप्नुयाद्वरम् ११४ उद्धारोनदशा
स्वस्तिसंपन्नानांस्वकर्मसु यत्किंचिदेवदेयंतुज्यायसेमानवर्द्धनम् ११५ एवंसमुद्धृतोद्धारेसमानंशा
न्प्रकल्पयेत् उद्धारेनुद्धृतेत्वेषामियंस्यादंशकल्पना ११६ एकाधिकंहरेज्ज्येष्ठःपुत्रोध्यर्द्धंततोऽनुजः अं
शमंशंयवीयांसइतिधर्मोव्यवस्थितः ११७ स्वेभ्योंशेभ्यस्तुकन्याभ्यःप्रदद्युर्भ्रातरःपृथक् स्वात्स्वादंशा
च्चतुर्भागंपतिताःस्युरदित्सवः ११८

द्यादिगुणवत्त्वापेक्षयाकनिष्ठानांचनिर्गुणत्वेबोद्धव्यंज्येष्ठतदनुजयोरधिक
दानदर्शनात् ११७ स्वेभ्यइति ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारोभ्रातरःस्वजात्यपेक्षयास्वेभ्यश्चतुरोंशान्हरेयुः विभ इत्या
दितावक्ष्यमाणेभ्योभागेभ्यआत्मीयात्मीयाद्भागाच्चतुर्थभागंपृथक्कन्याभ्योऽनूढाभ्योभगिनीभ्यः यायस्यसोदर्याभगिनी
सतस्याएवसंस्कारार्थमितिएवंदद्युः तथाचयाज्ञवल्क्यः असंस्कृतास्तुसंस्कार्याभ्रातृभिःपूर्वसंस्कृतैः भगिन्यश्चनिजादं
शाद्दत्वांशंतुतुरीयकम् यदिभगिनीसंस्कारार्थंचतुर्भागंदातुंनेच्छंतितदापतिताभवेयुः एतेनैकजातीयवैमात्रेयभगिनीसद्भावे
पिसोदर्यभगिनीभ्यश्चतुर्थभागदानमवगंतव्यम् ११८ अजेति एकशफाअश्वादयः छागमेषादिएकशफसहितंविभागका

लेसमं कृत्वा विभक्तुमशक्यं तन्न विभजेत्किंतु ज्येष्ठस्यैव तत्स्यात् नतु तत्तुल्यद्रव्यांतरदानेन समीकृत्य विक्रीय वा तन्मूल्यं विभजे-
त् अजाविकमिति पशूद्दहद्विभागैकवद्भावः ११९ यवीति कनिष्ठो यदि ज्येष्ठभ्रातृभार्यायां नियोगेन पुत्रं जनयेत्तदा तेन पि-
तृपितृव्येन सह तस्य क्षेत्रजस्य समो विभागः स्यान्नतु पितृवत्सोद्धारो भवतीति विभागव्यवस्था नियता अनियोगोत्पन्नस्यानंशि
त्वद्योतनाय यद्यपि समेस्तभ्रातरः सममित्युक्तं तथाप्यस्मादेव लिंगात्सोत्रस्यापि मृतपितृकस्य पितृव्यविभागोस्तीति गम्यते १२०
उपेति ज्येष्ठभ्रातुः क्षेत्रजः पुत्रोपि पितेव सोद्धारविभागी युक्त इमांशंकां निराकृत्य पूर्वोक्तमेव द्रढयति अप्रधानं क्षेत्रजः पुत्रः प्रधा-
नस्य क्षेत्रिणः पितुर्धर्मेण सोद्धारविभागग्रहणरूपेण संबध्यते क्षेत्र्यपि पिता तद्द्वारेणापत्योत्पादने प्रधानं तस्मात्पूर्वोक्तेनैव धर्मेण
विभागव्यवस्थारूपेण पितृव्येन सह तं क्षेत्रजं विभजेदिति पूर्वस्यैव शेषः १२१ पुत्रइति यदि प्रथमोढायां कनीयान्पुत्रो जातः प-

अजाविकंसैकशफन्नजातुविषमंभजेत् अजाविकंतुविषमंज्येष्ठस्यैवविधीयते ११९ यवीयान्ज्ये
ष्ठभार्यायांपुत्रमुत्पादयेद्यदि समस्तत्रविभागःस्यादितिधर्मोव्यवस्थितः १२० उपसर्ज्जनंप्रधानस्य
धर्मतोनोपपद्यते पिताप्रधानंप्रजनेतस्माद्धर्मेणतंभजेत् १२१ पुत्रःकनिष्ठोज्येष्ठायांकनिष्ठायांच
पूर्वजः कथंतत्रविभागःस्यादितिचेत्संशयोभवेत् १२२ एकंवृषभमुद्धारंसंहरेतसपूर्वजः ततोऽपरे
ज्येष्ठवृषास्तदूनानांस्वमातृतः १२३ ज्येष्ठस्तुजातोज्येष्ठायांहरेद्वृषभषोडशाः ततःस्वमातृतःशेषाभ
जेरन्नितिधारणा १२४

श्चादूढायांतु ज्येष्ठः तदा तत्र कथं विभागो भवेदिति संशयो यदि स्यात्किं मातुरुद्वाहक्रमेण पुत्र-
स्य ज्येष्ठत्वमुत स्वजन्मक्रमेणेति तदाह १२२ एकमिति पूर्वस्यां जातः पूर्वजः ङ्यापोः संज्ञाछंदसोर्बहुलमिति ह्रस्वत्वं स कनिष्ठोप्येकं
वृषभमुद्धारं गृण्हीयात्ततः श्रेष्ठवृषभादन्ये ये संत्यश्रेष्ठा वृषभास्ते तस्माज्ज्येष्ठिनेयात् मातृतऊनानां कनिष्ठेयानां प्रत्येकं ए-
केकशो भवंतीति मातृद्वाहक्रमेण ज्येष्ठ्यम् १२३ ज्येष्ठइति प्रथमोढायां पुनर्यो जातो जन्मना च भ्रातृभ्यो ज्येष्ठः स वृषभः षोडशो या-
सां गवां ता गृण्हीयात् पंचदश गाः एकं वृषभमित्यर्थः ततोनंतरं येऽन्ये व्द्यादयो जातास्ते स्वमातृभागत ऊढज्येष्ठापेक्षया शेषा भागा

द्विविभजेरन्निति निश्चयः १२४ सदृशीति समानजातीयस्त्रीषु जातानां पुत्राणां जातिगतविशेषाभावे सति न मातृक्रमेण ज्यैष्ठ्य मृषिभिरुच्यते जन्मज्येष्ठानां तु पूर्वोक्त एव विंशतिभागादिरुद्धारो बोद्धव्यः एवं च मातृज्यैष्ठ्यस्य विहितप्रतिषिद्धत्वात् षोडशीग्रहणाग्रहणवद्विकल्पः सच गुणवन्निर्गुणतया भ्रातॄणां गुरुलघुत्वावगमाद्व्यवस्थितः अत एव जन्मविद्यागुणज्येष्ठो ऽध्यंशं दायादानामुपानुइति बृहस्पत्यादिभिर्जन्मज्येष्ठस्य विद्याद्युत्कर्षिणो ऽद्धारोत्कर्ष उक्तः निर्गुणस्यैकवृषभमिति सद्गुणस्य वृषभषोडशा इति मातृज्यैष्ठ्याश्रयणेन उद्धारो बोद्धव्यः मातृज्यैष्ठ्यविधिं त्वनुवादं मेधातिथिरवदत् गोविंदराजस्त्वन्यतमभजगौनकेवलं विभागे जन्मज्यैष्ठ्यं किंतु १२५ जन्मेति सुब्रह्मण्याख्यो मंत्रो ज्योतिष्टोमे इति इंद्रस्याह्वानार्थे प्रयुज्यते तत्र प्रथमपुत्रेणापि तत्र सुपविश्याह्वानं क्रियते अमुकपितायजत इत्येवमृषिभिः स्मृतं तथा यमयोर्गर्भ एककालं निषिक्तयोरपि जन्मक्रमेण एवं ज्येष्ठता स्मृता गर्भेष्विति बहुवचनं स्त्री

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते १२५ जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता १२६ अपुत्रो ऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् १२७ अनेन तु विधानेन पुरा चक्रे ऽथ पुत्रिकाः विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः १२८ ददौ स दश धर्माय कश्यपाय त्रयोदश सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् १२९

द्व्यपेक्षया १२६ अपुत्रेति अविद्यमानपुत्रो यदस्यामपत्यं जायते तन्मम स्यादाद्यौर्ध्वदेहिककरं स्यादिति कन्यादानकाले जामात्रा सह संप्रतिपत्तिरूपेण विधानेन दुहितरं पुत्रिकां कुर्यात् अत्र परप्रतिपत्तिरूपमनुवादमाह १२७ अनेनेति दक्षः प्रजापतिः पुत्रोत्पादनविषयत्वाः स्ववंशवृद्ध्यर्थमनेनोक्तविधानेन कृत्स्ना दुहितरः पूर्वं पुत्रिकाः स्वयं कृतवान् कार्त्स्न्ये अथशब्दः १२८ ददाविति स दक्षो भाविपुत्रिकापुत्रलाभेन प्रीतालंकारादिना सत्कृत्य दश पुत्रिका धर्माय त्रयोदश कश्यपाय सप्तविंशतिं चंद्राय द्विजानामोषधीनां च राज्ञे दत्तवान् सः अन्येषामपि पुत्रिकाकरणे लिंगं दशेत्यादि च बह्वीनामपि पुत्रिकाकरणज्ञापकम् १२९.

यथैवेति आत्मस्थानीयः पुत्र आत्मा वै पुत्रनामासीति मंत्रलिंगात्तत्समा च दुहिता तस्या अप्यंगेभ्य उत्पादनात् अतस्तस्यां पुत्रिकायां पितुरात्मस्वरूपायां विद्यमानायाम पुत्रस्य मृतस्य पितुर्धनं पुत्रिकाव्यतिरिक्तः कथमन्यो हरेत् १३० मातुरिति मातुर्यद्धनं तत्तस्यां मृतायां कुमारीभाग एव स्यात् न पुत्राणां तत्र भागः कुमारीत्वानूढाभिप्रेता तथा गोतमः स्त्रीधनं दुहितॄणामदत्तानामप्रतिष्ठितानां च अपुत्रस्य च मातामहस्य दौहित्र एव अकृतत्वात्पौत्रिकेयः समग्रं धनं गृण्हीयात् १३१ दौहित्रेति दौहित्रः अकृतत्वात्पौत्रिकेय एव तस्य मातामह धनग्रहणं अनंतरोक्तं जनकधनग्रहण पिंडदानार्थोयमारंभः पितृशब्दस्य तत्रैव प्रसिद्धत्वात् अन्यस्य पौत्रिकेयः पुत्रांतररहितस्य जनकस्य समग्रं धनं गृण्हीयात्स एव पितृमातामहाभ्यां द्वौ पिंडौ दद्यात् पिंडदानं चात्रोपलक्षणार्थं पौत्रिकेयत्वेन जनकधनग्रहणपिंडदानव्या

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा तस्यामात्मनि तिष्ठंत्यां कथमन्यो धनं हरेत् १३० मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः दौहित्र एव च हरेदपुत्रस्याखिलं धनम् १३१ दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् स एव दद्याद्द्वौ पिंडौ पित्रे मातामहाय च १३२ पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः तयोर्हि मातापितरौ संभूतौ तस्य देहतः १३३ पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः १३४ अपुत्रायां मृतायां तु पुत्रिकायां कथंचन धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन् १३५

मोहनिरासार्थं वचनम् १३२ पौत्रेति पौत्रपौत्रिकेययोर्लोके धर्मकृत्येन कश्चिद्विशेषोऽस्ति यस्मात्तयोर्मातापितरौ तस्य देहादुत्पन्नाविति पूर्वस्यैवानुवादः १३३ पुत्रिकेति कृतायां पुत्रिकायां यदि तत्कर्तुः पुत्रोऽनंतरं जायते तदा तयोर्विभागकाले समो विभागो भवेत् नोद्धारः पुत्रिकायै देयः यस्माज्ज्येष्ठाया अपि तस्या उद्धारविषये ज्येष्ठता नादरणीया १३४ अपुत्रेति अपुत्रायां पुत्रिकायां कथंचन मृतायां तदीयधनं तद्भर्तैवाविचारयन् गृण्हीयात्पुत्रिकायाः पुत्रसमत्वेनानपत्यस्य पत्नीरहितस्य मृतपुत्रस्य पितुर्धनग्रहणप्रसक्तौ तन्निवारणार्थमिदं वचनम् १३५ अकृतेति अकृता वा कृता वेति पुत्रिकाया एव द्वैविध्यं तत्र यदपत्यं भवेदस्यां तन्मम स्यादित्यभिसंधाय कन्यादानकाले वरानुमत्या या क्रियते सा कृताभिसंधिमात्रकृता वाग्व्य

दिविभजेरन्निति निश्चयः १२४ सदृशीति समानजातीयस्त्रीषु जातानां पुत्राणां जातिगतविशेषाभावे सति न मातृक्रमेण ज्यैष्ठ्य
मृषिभिरुच्यते जन्मज्येष्ठानां तु पूर्वोक्त एव विंशतिभागादिरुद्धारो बोद्धव्यः एवं च मातृज्यैष्ठ्यस्य विहितप्रतिषिद्धत्वात् षोडशीग्रहणाग्रहणवद्विकल्पः सत्त्वगुणवन्निर्गुणतया भ्रातॄणां गुरुलघुत्वावगमाद्व्यवस्थितः अत एव जन्मविद्यागुणज्येष्ठोऽप्यंशं दाप्
नुइति बृहस्पत्यादिभिर्जन्मज्येष्ठस्य विद्याद्युत्कर्षेणोद्धारोत्कर्ष उक्तः निर्गुणस्यैकवृषभमिति मंदगुणस्य वृषभषोडशाद इति मातृज्यै
ष्ठ्याश्रयणेन उद्धारो बोद्धव्यः मातृज्यैष्ठ्यविधिं त्वनुवादं मेधातिथिरवदत् गोविंदराजस्तन्यतमजगौन केवलविभागे जन्मज्यैष्ठ्यं किं
तु १२५ जन्मेति स्वब्राह्मण्याख्यो मंत्रो ज्योतिष्टोमइतिइंद्रस्याह्वानार्थं प्रयुज्यते तत्र प्रथमपुत्रेण पितरसुपविश्याह्वानं क्रियते अ
सुकपिता यजत इत्येवमृषिभिः स्मृतं तथा यमयोर्गर्भ एककालं निषिक्तयोरपि जन्मक्रमेण एवं ज्येष्ठता स्मृता गर्भे धितिबहुवचनं स्त्री

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते १२५ जन्म
ज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता १२६ अपुत्रोऽनेन
विधिना सुतां कुर्वीत पुत्रिकाम् यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् १२७ अनेन तु विधानेन पु
रा चक्रेऽथ पुत्रिकाः विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः १२८ ददौ स दश धर्माय कश्यपाय त्रयोद
श सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् १२९

हुत्वापेक्षया १२६ अपुत्रेति अविद्यमानपुत्रो यदस्याम
पत्यं जायते तन्मम श्राद्धाद्यौर्ध्वदेहिककरं स्यादिति कन्यादानकाले जामात्रा सह संप्रतिपत्तिरूपेण विधानेन दुहितरं पुत्रिकां कु
र्यात् अन्यपरप्रतिपत्तिरूपमनुवादमाह १२७ अनेनेति दक्षः प्रजापतिः पुत्रोत्पादनविषयज्ञः स्ववंशवृद्ध्यर्थमनेनोक्तविधा
नेन कृत्स्ना दुहितरः पूर्वं पुत्रिकाः स्वयं कृतवान् कार्त्स्न्ये अथशब्दः १२८ ददाविति स दक्षो भाविपुत्रिकापुत्रलाभेन प्रीतात्मा
अलंकारादिना सत्कृत्य दश पुत्रिका धर्माय त्रयोदश कश्यपाय सप्तविंशतिं चंद्राय द्विजानामोषधीनां च राज्ञे दत्तवान् सत्कारवचनम
न्येषामपि पुत्रिकाकरणे लिंगं दशेत्यादिच बह्वीनामपि पुत्रिकाकरणज्ञापकम् १२९. ७ ७ ७ ७

यथैवेति आत्मस्थानीयः पुत्र आत्मा वै पुत्रनामासीति मंत्रलिंगात्तत्समा च दुहिता तस्या अप्यंगेभ्य उत्पादनात् अतस्तस्यां पुत्रिकायां पितुरात्मस्वरूपायां विद्यमानायामपुत्रस्य मृतस्य पितुर्धनं पुत्रिकाव्यतिरिक्तः कथमन्यो हरेत् १३० मातुरिति मातुर्यद्धनं तत्तस्यां मृतायां कुमारी भाग एव स्यात् न पुत्राणां तत्र भागः कुमारीत्वानूढाभिप्रेता तथा गोतमः स्त्रीधनं दुहितॄणामदत्तानामप्रतिष्ठितानां च अपुत्रस्य च मातामहस्य दौहित्र एव प्रकृतत्वात्पौत्रिकेयः समग्रं धनं गृण्हीयात् १३१ दौहित्रेति दौहित्रः प्रकृतत्वात्पौत्रिकेय एव तस्य मातामहधनग्रहणं अनंतरोक्तं जनकधनग्रहणपिंडदानार्थोयमारंभः पितृशब्दस्य तत्रैव प्रसिद्धत्वात् अन्यस्य पौत्रिकेयः पुत्रांतररहितस्य जनकस्य समग्रं धनं गृण्हीयात्स एव पितृमातामहाभ्यां द्वौ पिंडौ दद्यात् पिंडदानं श्राद्धोपलक्षणार्थं पौत्रिकेयत्वेन जनकधनग्रहणपिंडदानयो

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा तस्यामात्मनि तिष्ठंत्यां कथमन्यो धनं हरेत् १३० मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः दौहित्र एव च हरेदपुत्रस्याखिलं धनम् १३१ दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् स एव दद्याद्द्वौ पिंडौ पित्रे मातामहाय च १३२ पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः तयोर्हि मातापितरौ संभूतौ तस्य देहतः १३३ पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः १३४ अपुत्रायां मृतायां तु पुत्रिकायां कथंचन धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन् १३५

मोहनिरासार्थं वचनम् १३२ पौत्रेति पौत्रपौत्रिकेययोर्लोके धर्मकृत्येन कश्चिद्विशेषोऽस्ति यस्मात्तयोर्मातापितरौ तस्य देहादुत्पन्नाविति पूर्वस्यैवानुवादः १३३ पुत्रिकेति कृतायां पुत्रिकायां यदि तत्कर्त्तुः पुत्रोऽनंतरं जायते तदा तयोर्विभागकाले समो विभागो भवेत् नोद्धारः पुत्रिकायै देयः यस्माज्ज्येष्ठाया अपि तस्या उद्धारविषये ज्येष्ठता नादरणीया १३४ अपुत्रेति अपुत्रायां पुत्रिकायां कथंचन मृतायां तदीयधनं तद्भर्त्तैवाविचारयन् गृण्हीयात्पुत्रिकाया पुत्रसमत्वेनानपत्यस्य पत्नीरहितस्य मृतपुत्रस्य पितुर्धनग्रहणमसक्तौ तन्निवारणार्थमिदं वचनम् १३५ अकृतेति अकृता वा कृता वेति पुत्रिकाया एव द्वैविध्यं तत्र यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरमित्यभिधाय कन्यादानकाले वरानुमत्या या क्रियते सा कृता अभिसंधिमात्रकृता वा अन्या

वहारेणनकृता तथागोतमः अभिसंधिमात्रात्पुत्रिकामेकेषामिति अतएवपुत्रिकाधर्मशंकयेतिभागविर्यास्येल्पमुक्तम् पुत्रिकेयकृ
ताभ्यकृतापुत्रसमानजातीयाद्वोढुरुत्पादयेत्तेनदौहित्रेणपौत्रकार्यकरणात्पौत्रिकेयवान्मातामहः पौत्रीतथाचापौतस्मैपिंडंदद्यात्
गोविंदराजस्त्वकृतावेत्यपुत्रिकैवदुहितातत्पुत्रोपिमातामहधनेपौत्रिकेयइवमातामह्यादिसत्वेप्यधिकारीत्याह तन्नपुत्रिकायाःपु
त्रतुल्यत्वादपुत्रिकापुत्रिकयोरतुल्यत्वेनतत्पुत्रयोस्तुल्यत्वायोग्यत्वादिति १३६ पुत्रेणेति पुत्रेणजातेनस्वर्गादिलोकान्प्राप्नोती
ति पौत्रेणतेष्वेवचिरकालमवतिष्ठतेतदनंतरंपुत्रस्यपौत्रेणादित्यलोकंप्राप्नोति अस्यचदायभागप्रकरणेअभिधानंपितुर्द्वितीयप
त्न्यादिसद्भावेपिपुत्रस्यतदभावेपौत्रस्यइत्येवंपुत्रसंतानाधिकारबोधनार्थम् १३७ पुन्नाम्नेति यस्मात्पुन्नामधेयनरकात्कृतःपि
तरंत्रायतेतस्मात् त्राणात् आत्मनैवब्रह्मणापुत्रइतिप्रोक्तः तस्मान्महोपकारकत्वात्पुत्रस्ययुक्तंतदीयपुंसंतानस्यदायभागित्वमि

अकृतावाकृतावापियंविंदेत्सदृशात्सुतम् पौत्रीमातामहस्तेनदद्यात्पिंडंहरेद्धनम् १३६ पुत्रेणलो
कान्जयतिपौत्रेणानंत्यमश्नुते अथपुत्रस्यपौत्रेणब्रध्नस्याप्नोतिविष्टपम् १३७ पुन्नाम्नोनरका
द्यस्मात्त्रायतेपितरंसुतः तस्मात्पुत्रइतिप्रोक्तःस्वयमेवस्वयंभुवा १३८ पौत्रदौहित्रयोर्लोकेविशे
षोनोपपद्यते दौहित्रोपिह्यमुत्रैनंसंतारयतिपौत्रवत् १३९ मातुःप्रथमतःपिंडंनिर्वपेत्पुत्रिकासु
तः द्वितीयंतुपितुस्तस्यास्तृतीयंतत्पितुःपितुः १४० उपपन्नोगुणैःसर्वैःपुत्रोयस्यतुदत्रिमः सहरेतै
वतद्रिक्थंसंप्राप्तोप्यन्यगोत्रतः १४१

तिपूर्ववादार्थमिदम् १३८ पौत्रेति दौहित्रःपुत्रिकापुत्रःपुत्रदौहित्रयोर्लोकेक
श्चिद्विशेषोनसंभाव्यतेयस्माद्दौहित्रोपिमातामहंपरलोकेपौत्रवन्निस्तारयतिएतच्चपौत्रिकेयस्यपौत्रेणसाम्यप्रतिपादनार्थंपुत्रिका
करणानंतरजातपुत्रेणसहधनेतुल्यभागबोधनार्थम् १३९ मातुरित्यादि पौत्रिकेयःप्रथमंमात्रेपिंडंद्वितीयंमातुःपित्रेतृतीयंमातुः
पितामहायदद्यात् पित्रादीनांतुपित्रेमातामहायचेत्कृत्वापित्तृक्रमेणैवपिंडदानम् १४० उपपन्नेति पुत्रात्रृक्थहराःपितु
रित्येतिद्वादशपुत्राणामेवऋक्थहरत्वंवक्ष्यतिदशापरेतुक्रमशइतिऔरसक्षेत्रजाभावेदत्तस्यपितुर्ऋक्थहरत्वंप्राप्तमेवअतःसत्य-
प्यौरसपुत्रेदत्तकस्यसर्वगुणोपपन्नस्यपितृऋक्थभागप्राप्त्यर्थमिदंवचनंयस्यदत्तकःपुत्रोअध्ययनादिसर्वगुणोपपन्नोभवति

सोऽन्यगोत्रादागतोऽपि सत्यप्यौरसे पितृरिक्थभागं गृह्णीयात् अत एव औरसः पुत्रः पितृव्यस्य वक्तव्यः प्रकरिति औरसस्य सर्वेतिर्यभिधानात्तेन नास्य समभागित्वं किंतु क्षेत्रजोक्तषष्ठभागित्वमेवास्यन्याय्यम् गोविंदराजस्तु औरसक्षेत्रजाभावे सर्वगुणोपपन्नस्यैव दत्तकस्य पितृरिक्थभागित्वार्थमिदं वचनमित्यवोचत्तन्न कृत्रिमादीनां निर्गुणानां पितृरिक्थभागित्वं दत्तकस्य तु तत्पूर्वपठितस्यापि सर्वगुणोपपन्नस्यैवेत्यन्याय्यत्वात् १४१ गोत्रेति गोत्रधने जनकसंबंधिनी दत्तकोन कदाचिद्गृह्णीयात् पिंडश्च गोत्ररिक्थानुगामी यस्य गोत्ररिक्थे भजते तस्यैव सपिंडो दीयते तस्मात्पुत्रं ददतो जनकस्य स्वधा पिंडश्राद्धादि तत्पुत्रकर्तृकं निवर्त्तते १४२ अनियुक्तेति योगुर्वादिनियोगं विना जातो यश्च सपुत्रायानियोगेनापि देवरादेः कामादुत्पादितस्तावुभौ क्रमेण जारोत्पन्नकामाभिलाषजौ धनभागन्नार्हतः १४३ नियुक्तेति नियुक्तायामपि स्त्रियां घृताभ्यक्तत्वादिनियोगेतिकर्त्तव्यतां विना पुत्रो जातः स क्षेत्रिकस्य पितुर्धनं

गोत्ररिक्थे जनयितुर्न हरेद्दत्रिमः क्वचित् गोत्ररिक्थानुगः पिंडो व्यपैति ददतः स्वधा १४२ अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात् उभौ तौ नार्हतो भागं जारजातककामजौ १४३ नियुक्तायामपि पुमान्नार्यां जातोऽविधानतः नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः १४४ हरेत्तत्र नियुक्तायां जातः पुत्रो यथौरसः क्षेत्रिकस्य तु तद्बीजं धर्मतः प्रसवश्च सः १४५ धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् १४६

लब्धुं नार्हति यस्मादसौ पतितेनोत्पादितः नियुक्तो यो विधिं हित्वेत्यनेन पतितस्योक्तत्वात् १४४ हरेदिति तत्र नियुक्तायां यो जातः क्षेत्रजः पुत्र औरस इव धनं हरेत् यस्मात्तत्स्य कारणभूतं बीजं तत्क्षेत्रस्वामिन एव तत्कार्यकरणत्वात् अपत्यमपि च धर्मतस्तदीयं तत् यवीयान्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदीत्यनेन क्षेत्रजस्य पितामहधने पितृव्येन सह समभागस्य भोक्तत्वात् गुणवतः क्षेत्रजस्य औरसवत्सोद्धारभागमात्रस्यार्थमिदं औरसतुल्यत्वाभिधानम् १४५ धनमिति यो मृतस्य भ्रातुः स्थावरजंगमं धनं पत्न्या रक्षणाक्षमया समर्पितं रक्षेत् तां च पुष्णीयात् स नियोगधर्मेण तस्यां सुतमुत्पाद्य तस्य भ्रातुरपत्यस्य दद्यात् एतच्च धनं यो बिभृयात् भ्रातुरित्यभिधानात् विभक्तभ्रातृविषयं यवीयान्

ज्येष्ठभार्यायामितिसमभागाभिधानात् १४६ येति यास्त्रीगुर्वादिभिरनुज्ञातादेवराद्वाऽन्यतोवासपिंडात्पुत्रमुत्पादयेत्सयदिक
मजोभवतितदातमरिक्थभाजंमन्वादयोवदंति अकामजएवरिक्थभागीसचव्याहृतोनारदेन मुखान्मुखंपरिहरन्गात्रैर्गात्रा
ण्यसंस्पृशन् कुलेतदयशेषेचसंतानार्थंनकामतइति १४७ एतदिति समानजातीयासुभार्यासुएकेनभर्त्राजातानामेषविभागवि
धिर्ज्ञेयः इदानींनानाजातीयासुस्त्रीषुबह्वीषुउत्पन्नानांपुत्राणांविभागंशृणुत १४८ ब्राह्मणेति ब्राह्मणस्ययदिक्रमेणब्राह्म
ण्याद्यास्चतस्रोभार्याभवेयुः तदातासांनिष्पन्नेषु अयंवक्ष्यमाणोविभागविधिर्मन्वादिभिरुक्तः १४९ कीनाशेति कीनाशःकर्ष
कःगवांसक्तोवृषोयानमश्वादिअलंकारोअंगुरीयकादिवेश्मगृहंचप्रधानंयावंतश्चांशास्तेष्वेकःप्रधानभूतोंशइत्येतद्ब्राह्मणी
पुत्रस्योद्धारार्थंदेयंअवशिष्टंवक्ष्यमाणरीत्याविभजनीयम् १५० त्र्यंशमित्यादि त्रीनंशान्ब्राह्मणोधनाद्गृह्णीयात् द्वौ क्षत्रि

यानियुक्तान्यतःपुत्रंदेवराद्वाप्यवाप्नुयात् तंकामजमरिक्थीयंवृथोत्पन्नंप्रचक्षते १४७ एत-
द्विधानंविज्ञेयंविभागस्यैकयोनिषु बह्वीषुचैकजातानांनानास्त्रीषुनिबोधत १४८ ब्राह्मणस्यानु
पूर्व्येणचतस्रस्तुयदिस्त्रियः तासांपुत्रेषुजातेषुविभागेऽयंविधिःस्मृतः १४९ कीनाशोगोवृषोयान
मलंकारश्चवेश्मच विप्रस्योद्धारिकंदेयमेकांशश्चप्रधानतः १५० त्र्यंशंदायाद्धरेद्विप्रोद्वावंशौक्षत्रि
यासुतः वैश्याजःसार्द्धमेवांशमंशंशूद्रासुतोहरेत् १५१ सर्वंवारिक्थजातंतद्दशधापरिकल्प्यच ध
र्म्यंविभागंकुर्वीतविधिनानेनधर्मवित् १५२ चतुरोंशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः वैश्यापुत्रो
हरेद्व्यंशमंशंशूद्रासुतोहरेत् १५३

यासुतः सार्द्धंवैश्यापुत्रः अंशंशूद्रासुतः एवंचयत्रब्राह्मणीक्षत्रियापुत्रौद्वावेवविद्येते
तत्रपंचधाकृतेधनेत्रयोभागाब्राह्मणस्यद्वौक्षत्रियापुत्रस्य अनयैवदिशाब्राह्मणीवैश्यापुत्रादौचकल्पनाकार्या १५१ सर्वमिति
यद्वासर्वंरिक्थप्रकारमनुद्धृतोद्धारंदशधाकृत्वाविभागधर्मज्ञोधर्मादनपेतंविभागंअनेनवक्ष्यमाणविधिनाकुर्वीत १५२ चतुरइति
चतुरोभागान्ब्राह्मणोगृह्णीयात्त्रीन्क्षत्रियापुत्रोद्वौवैश्यापुत्रःएकंशूद्राजः अत्रापिब्राह्मणीक्षत्रियापुत्रसद्भावेसप्तधाधनेकृते
चत्वारोभागाब्राह्मणस्त्रयःक्षत्रियापुत्रस्यएवंब्राह्मणीवैश्यापुत्रादौद्विबहुपुत्रेषुचकल्पनाकार्या १५३ ॰ ॰ ॰

यद्यपीति यदिब्राह्मणोद्विजातिस्त्रीषु सर्वास्वविद्यमानपुत्रः स्यात् अविद्यमानपुत्रोवातथापि शूद्रापुत्रायानंतराधिकारी यः तन्नैव
दशमभागादधिकं धर्मतोन दद्यात् अयंच शूद्रापुत्रविषयो निषेधादविद्यमानसजातिपुत्रस्य क्षत्रियावैश्यापुत्रौ सर्वऋक्थहरौ
स्याताम् १५४ ब्राह्मणेति ब्राह्मणक्षत्रियवैश्यानां शूद्रापुत्रो धनभाङ्न भवति किंतु यदेव धनमस्मै पिता दद्यात्तदेव तस्य भवेत् ए
तंच पूर्वोक्तविभागनिषेधात् विकल्पः सच गुणवद्गुणापेक्षः अथवा अनूढशूद्रापुत्रविषयोयं दशमभागनिषेधः १५५ समवर्णेति
द्विजातीनां समानजातिभार्यासु ये पुत्राजातास्ते सर्वे ज्येष्ठायोद्धारं दत्वा अवशिष्टं समभागं कृत्वा ज्येष्ठेन सहान्ये विभजेरन् १५६ शूद्रेति
शूद्रस्य पुनः समानजातीयैव भार्या पदिश्यते नोत्कृष्टा अवकृष्टा वा नस्यां च ये जातास्ते यदि पुत्रशतमपि तदा सम भागा एव भवेयुः तेनोद्धा

यद्यपिस्यात्तुसत्पुत्रोप्यसत्पुत्रोपिवाभवेत् नाधिकंदशमाद्द्याच्छूद्रापुत्रायधर्मतः १५४ ब्राह्मण
क्षत्रियविशांशूद्रापुत्रोनऋक्थभाक् यदेवास्यपितादद्यात्तदेवास्यधनंभवेत् १५५ समवर्णासुयेजा
ताःसर्वेपुत्राद्विजन्मनाम् उद्धारंज्यायसेदत्वाभजेरन्नितरेसमम् १५६ शूद्रस्यतुसवर्णैवनान्याभा
र्याविधीयते तस्यांजाताःसमांशाःस्युर्यदिपुत्रशतंभवेत् १५७ पुत्रान्द्वादशयानाहनृणांस्वायंभु
वोमनुः तेषांषड्बंधुदायादाःषडदायादबांधवाः १५८ औरसःक्षेत्रजश्चैवदत्तःकृत्रिमएवच गू
ढोत्पन्नोऽपविद्धश्चदायादाबांधवाश्चषट् १५९ कानीनश्चसहोढश्चक्रीतःपौनर्भवस्तथा स्वयंद
त्तश्चशौद्रश्चषडदायादबांधवाः १६०

रः कस्यचिन्नदेयः १५७ पुत्रानिति यान्द्वादशपुत्रान्हैरण्यगर्भो मनुराह तेषां
मध्यादाद्याः षड्बांधवाः गोत्रदायादाश्च तस्माद्बांधवत्वेन सपिंडसमानोदकानां पिंडोदकदानादि कुर्वंत्यनंतराभावे च गोत्रदायं गृण्ह
ति पितृऋक्थमात्रस्य पुत्रऋक्थहराः पितुरिति द्वादशविधपुत्राणामेव वक्ष्यमाणत्वात् उत्तरे षट् न गोत्रधनहरा भवंति बांधवास्तु
भवंतितत्तत्र बंधुकार्यमुदकक्रियादि कुर्वंति मेधातिथिस्तु षडदायादबांधवा इत्यादि उत्तरषट्कस्यादायत्वसबांधवत्वं चाह तन्नबो
धायनेन बंधुत्वस्याभिहितत्वात् तदाह कानीनं च सहोढं च क्रीतं पौनर्भवं तथा स्वयंदत्तं निषादं च गोत्रभाजः प्रचक्षते १५८ औरसद
ति औरसादयो वक्ष्यमाणाः षट् ऋक्थभाजो बांधवाश्च भवंति १५९ कानीनश्चेति कानीनादयो वक्ष्यमाणलक्षणाः षट् गोत्रऋक्थह

रानभवंति यथं वाश्रभवंतीतिव्याख्यातं औरसेनसह क्षेत्रजादीनां पाठात्तुल्यत्वाशंकायांतन्निरासार्थमाह १६० यादृशमिति तृणा दिनिर्मितकुत्सितोडुपादिभिरुदकं तरन्यथाविधं फलमाप्नोतितथाविधमेव कुपुत्रैः क्षेत्रजादिभिः पारलौकिकं दुःखं दुरुत्तरमाप्नोति इत्यनेन क्षेत्रजादीनामुख्यौरसपुत्रवत्संपूर्णकार्यकरणक्षमत्वं न भवतीतिदर्शितम् १६१ यदीति अपुत्रेणपरक्षेत्रे नियोगोत्पादितःसुतः उभयोरप्यसौ ऋक्थी पिंडदाता च धर्मत इति याज्ञवल्क्योक्तविषयेयदा क्षेत्रिकस्यपितुः क्षेत्रजानंतरमौरसः पुत्रो भवति तदातावौरसक्षेत्रजौ एकऋक्थिनौ एकस्यपितुर्यद्यपि ऋक्थार्हौ भवतः तथापियद्यस्य जनकसंबंधितद्देवसगृण्हीयात् न क्षेत्रजः क्षेत्रिकपितुः यत्तुवक्ष्यतिषष्ठंतु क्षेत्रजस्यांशंप्रदद्यात्पैतृकाद्धनात् औरसोविभजन्दायमितितत्पुत्रबहुलस्य यत्तुयाज्ञवल्क्यः उभयसंबंधिऋक्थहरत्वमुक्तंतत्क्षेत्रिकपितुरौरसपुत्राभावे बोद्धव्यम् मेधातिथिगोविंदराजौतु औरसमनियुक्तापुत्रं चविषयी-

यादृशंफलमाप्नोतिकुप्लवैःसंतरन्जलम् तादृशंफलमाप्नोतिकुपुत्रैःसंतरंस्तमः १६१ यद्येकऋक्थिनौस्यातामौरसक्षेत्रजौसुतौ यस्ययत्पैतृकंऋक्थंसतद्गृण्हीतनेतरः १६२ एकएवौरसःपुत्रःपित्र्यस्यवसुनःप्रभुः शेषाणामानृशंस्यार्थंप्रदद्यात्तुप्रजीवनम् १६३ षष्ठंतुक्षेत्रजस्यांशंप्रदद्यात्पैतृकाद्धनात् औरसोविभजन्दायंपित्र्यंपंचममेववा १६४ औरसक्षेत्रजौपुत्रौपितृऋक्थस्यभागिनौ दशापरेतुक्रमशोगोत्रऋक्थांशभागिनः १६५ स्वक्षेत्रेसंस्कृतायांतुस्वयमुत्पादयेद्धियम् तमौरसंविजानीयात्पुत्रंप्रथमकल्पितम् १६६

कुसेमंश्लोकंव्याचक्षते तन्न अनियुक्तापुत्रस्याक्षेत्रजत्वादनियुक्तासुतश्चेत्यनेनतस्यऋक्थग्रहणनिषेधात् यद्येकऋक्थिनाविसनन्तयांच १६२ एक इति व्याध्यादिनाप्रथममौरसपुत्राभावे क्षेत्रजादिषु कृतेषु पश्चाद्दोषधादिनाविगतव्याधेरौरसउत्पन्ने सतीदमुच्यते औरसएवैकः पुत्रः पितृधनस्वामी शेषाणां क्षेत्रजव्यतिरिक्तानां तस्यषष्ठांशादेर्वक्ष्यमाणत्वात् पापसंबंधपरिहारार्थंग्रासाच्छादनंदद्यात् १६३ षष्ठमिति औरसःपुत्रःपितृसंबंधिदायं विभजन् क्षेत्रजस्यषष्ठमंशं पंचमंवादद्यात् निर्गुणसगुणापेक्षश्चायंविकल्पः १६४ औरसेति औरसक्षेत्रजौपुत्रावुक्तप्रकारेणपितृधनहरौस्यातां अन्येपुनर्दशदत्तकादयः क्रमाज्जोभवंतिपूर्वाभावेपरःपर इत्येवंक्रमेणधनांशार्हाश्च १६५ स्व इति स्वभार्यायां कन्यायस्यायामेवकृतविवाहसंस्कारायां

स्वयमुत्पादयेत्तं पुत्रं औरसं मुख्यं विद्यात् सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यादिति बौधायनदर्शनात् सजातीयायामेव
स्वयमुत्पादित औरसो ज्ञेयः १६६ यइति योमृतस्यनपुंसकस्यप्रसवविरोधिव्याध्युपेतस्यभार्यायां घृताक्तत्वादिनियोगधर्मेणगुरु
नियुक्तायांजात सक्षेत्रज पुत्रोमन्वादिभिःस्मृतः १६७ मातेति शुक्रशोणितसंभवः पुरुषोमातापितृनिमित्तकः तस्यप्रदानविक्रय
परित्यागेषुमातापितरौप्रभवतइतिवसिष्ठस्मरणात् मातापितावापरस्परानुज्ञयायंपुत्रंपरिग्रहीतुः समानजातीयंतस्यैवपुत्राभा
वनिमित्तायामापदिप्रीतियुक्तंनलुभयादिनाउदकपूर्वंदद्यात् सदत्रिमाख्यः पुत्रोविज्ञेयः १६८ सदृशमिति यंपुनः समानजातीयापि
नोः पारलौकिकश्राद्धादिकरणाकरणाभ्यांगुणदोषौभवतइत्येवमादिज्ञंपुत्रगुणैश्चमातापित्रोराराधनादियुक्तंपुत्रंकुर्यात् सकृत्रि-

यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः १६७ मातापिता वा दद्यातां यमद्भिः पुत्रमापदि सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः १६८ सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः १६९ उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः १७० मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते १७१ पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् १७२ या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती वोढुः स गर्भो भवति सहोढ इति चोच्यते १७३

माख्यः पुत्रोवाच्यः १६९ उत्पद्यइति यस्यगृहे अवस्थितायाभार्यायापुत्रमुत्पद्यतेसजातीयोयंभवतीतिज्ञा-
नेपिकस्मात्पुरुषविशेषाज्जातोसाविति नज्ञायते सगृहे अप्रकाश मुत्पन्नस्तस्यपुत्र स्याद्यदीयायांभार्यायाजातः १७० मातेति मा
तापितृभ्यांत्यक्ततयोरन्यतरमरणेन अन्यतरेणवात्यक्तंपुत्रंस्वीकुर्यात् सोपविद्धाख्य पुत्रउच्यते १७१ पित्रेति पितृगृहेकन्या
यंपुत्रं अप्रकाशंजनयेत् तंकन्यापरिणेतुःपुत्रंनाम्नाकानीनंवदेत् १७२ येति यागर्भवती अज्ञातगर्भावापरिणीयतेसगर्भस्त-
स्यांजातः परिणेतुः पुत्रोभवतिसहोढइतिव्यपदिश्यते १७३ क्रीणीयेति यः पुत्रार्थंमातापित्रोः सकाशात् यंक्रीणीयात् सक्रीत

कस्तस्यपुत्रोभवतिकेतुर्गुणैस्तुल्योहीनोवाभवेन्नतत्रजातितःसादृश्यवैसादृश्ये सजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिरितियाज्ञ
वल्क्येनसर्वेषामेवपुत्राणांसजातीयत्वाभिधानात्तेनमनावपिक्रीतव्यतिरिक्ताःसर्वेपुत्राःसजातीयावोद्धव्याः १७४ येति याभर्त्रापरि
त्यक्तामृतभर्तृकावास्वेच्छयाअन्यस्यपुनर्भार्याभूत्वायमुत्पादयेत्सउत्पादकस्यपौनर्भवःपुत्रउच्यते १७५ साचेदिति सास्त्रीयद्यक्ष
तयोनिःसत्यन्यमाश्रयेत्तदातेनपौनर्भवेनभर्त्रापुनर्विवाहाख्यंसंस्कारमर्हतियद्वाकौमारपतिमुत्सृज्यान्यमाश्रित्यपुनस्तमेवप्रत्या
गताभवतितदातेनकौमारेणभर्त्रापुनर्विवाहाख्यंसंस्कारमर्हति १७६ मातेति योमृतमातापितृकस्त्यागोचितकारणंविनाद्वेषादि
नाताभ्यांत्यक्तोवाआत्मानंयस्मैददातिसस्वयंदत्ताख्यःतस्यपुत्रोमन्वादिभिःस्मृत. १७७ यमिति विन्नास्त्वेषविधिःस्मृतइतिया

क्रीणीयाद्यस्त्वपत्यार्थंमातापित्रोर्यमंतिकात् सक्रीतकःसुतस्तस्यसदृशोऽसदृशोपिवा १७४ या
पत्यावापरित्यक्ताविधवावास्वयेच्छया उत्पादयेत्पुनर्भूत्वासपौनर्भवउच्यते १७५ साचेदक्षतयोनिः
स्याद्गतप्रत्यागतापिवा पौनर्भवेनभर्त्रासापुनःसंस्कारमर्हति १७६ मातापितृविहीनोयस्त्यक्तोवा
स्यादकारणात् आत्मानंस्पर्शयेद्यस्मैस्वयंदत्तस्तुसःस्मृतः १७७ यंब्राह्मणस्तुशूद्रायांकामादुत्पा
दयेत्सुतम् सपारयन्नेवशवस्तस्मात्पारशवःस्मृतः १७८ दास्यांवादासदास्यांवायःशूद्रस्यसुतोभ
वेत् सोनुज्ञातोहरेदंशमितिधर्मोव्यवस्थितः १७९ क्षेत्रजादीन्सुतानेतानेकादशयथोदितान् पु
त्रप्रतिनिधीनाहुःक्रियालोपान्मनीषिणः १८०

ज्ञवल्क्यदर्शनात्सपरिणीतायामेवशूद्रायांब्राह्मणःकामार्थंपुत्रंजनये
त्सजीवन्नेवशवतुल्यइतिपारशवःस्मृतःयद्यप्ययंपित्रुपकारार्थंश्राद्धादिकरोत्येवतथाप्यसंपूर्णोपकारकत्वात्शवव्यपदेशः
१७८ दास्यामिति ध्वजाहृताद्युक्तलक्षणायांदास्यांदाससंबंधिन्यांवादास्यांशूद्रस्ययःपुत्रोजायतेसपित्रापरिणीतापुत्रैःसमां
शभागीभवान्भवतितिअनुज्ञातस्तुल्यभागंलभतइतिशास्त्रव्यवस्थानियता १७९ क्षेत्रजेति एतान्क्षेत्रजादीन्एकादश
पुत्रान्पुत्रोत्पादनविधिलोपःपुत्रकर्त्तव्यश्राद्धादिलोपश्चमाभूदित्येवमर्थंपुत्रप्रतिच्छंदकान्मुनयआहुः १८०

यद्दति यएतेक्षेत्रजादयोऽन्यबीजोत्पन्नाः पुत्रा औरसपुत्रप्रसंगेनोक्ताः तेयद्वीजोत्पन्नास्तस्यैवपुत्राभवंतिन क्षेत्रिकादेरितिसत्यौ रसेपुत्रेपुत्रिकायांचसत्यांनतेकर्त्तव्याइत्येवंपरमिदंअन्यबीजजाइत्येकादशपुत्रोपलक्षणार्थंस्वबीजजातावपिपौनर्भवशौद्रौनक र्त्तव्यौ अतएववृद्धबृहस्पतिः आज्यंविनायथातैलंसद्भिःप्रतिनिधिःस्मृतः तथैकादशपुत्रास्तुपुत्रिकौरसयोर्विना १८१ भ्रातॄणा मिति भ्रातॄणामेकमातापितृकाणांमध्येयद्येकःपुत्रवान्स्यात् अन्येचपुत्ररहितास्तदातेनैकपुत्रेणसर्वान्भ्रातॄन्सपुत्रान्मनु राहततश्चतस्मिन्सतिअन्येपुत्रप्रतिनिधयोनकर्त्तव्याः सएवपिंडदोंशहरश्चभवतीत्यनेनोक्तंएतच्चपत्नीदुहितरश्चैवपितरौभ्रात रस्तथा तत्सुताइतियाज्ञवल्क्यवचनाद्भ्रातृपर्यंताभावेबोद्धव्यः १८२ सर्वासामिति एकपतिकानांसर्वासांस्त्रीणांमध्येयद्येका पुत्रवतीस्यात् तदातेनपुत्रेणसर्वास्ताःपुत्रयुक्तामनुराह १८३ श्रेयसइति औरसादीनांसर्वेषांपुत्राणांप्रकृतत्वात् औरसादी

यएतेऽभिहिताःपुत्राःप्रसंगादन्यबीजजाः यस्यतेबीजतोजातास्तस्यतेनेतरस्यतु १८१ भ्रातॄणा मेकजातानामेकश्चेत्पुत्रवान्भवेत् सर्वांस्तांस्तेनपुत्रेणपुत्रिणोमनुरब्रवीत् १८२ सर्वासामेकप त्नीनामेकाचेत्पुत्रिणीभवेत् सर्वास्तास्तेनपुत्रेणप्राहपुत्रवतीर्मनुः १८३ श्रेयसःश्रेयसोलाभे पा पीयान्रिक्थमर्हति बहवश्चेत्तुसदृशाःसर्वेरिक्थस्यभागिनः १८४ नभ्रातरोनपितरःपुत्रारिक्थह राःपितुः पिताहरेदपुत्रस्यरिक्थंभ्रातरएवच १८५

नुपक्रम्यतेषांपूर्वःपूर्वःश्रेयान्सएवदायहरःसचान्यान्बिभृया दितिविष्णुवचनात् औरसादीनांपुत्राणांपूर्वपूर्वाभावेपरःपररिक्थमर्हतिपूर्वसद्भावेपरसंवर्द्धनंसएवकुर्यात् एवंचसिद्धेशूद्रा पुत्रस्यद्वादशपुत्रमध्येपाठः क्षेत्रजादिसद्भावेधनानर्हत्वज्ञापनार्थत्वेनसाधकः अन्यथातुक्षत्रियावैश्यापुत्रवदौरसत्वात् क्षेत्रजादि सद्भावेपिधनंलभेतपूर्वस्यपरसंवर्द्धनमात्रंचापवादेतरविषयेद्रष्टव्यंक्षेत्रजगुणवत्तकपुत्रयोः पंचषष्ठंवाभागंऔरसोदद्यादिति विहितत्वात् यदितुसमानरूपाःपौनर्भवादयोबहवःपुत्रास्तदासर्वएवविभज्यरिक्थंगृण्हीयुः १८४ नेति नसोदरभ्रातरोन पितरःकिंतुऔरसाभावेक्षेत्रजादयोगौणपुत्राःपितृरिक्थहराभवंतीतिअनेनोच्यतेऔरसस्यतुएकएवौरसःपुत्रइत्यनेनैवप्रसि

इत्यात् अविद्यमानमुख्यामुख्यपुत्रस्य पत्नी दुहितरः हितस्यन्वपिताधनंगृण्हीयात्तेषाम भावे भ्रातरोधनंगृण्हीयुः एतच्चानंतरंप्रपंच
यिष्यामः इदानीं क्षेत्रजानामप्यपुत्रपितामहादिधनेप्यधिकारं दर्शयितुमाह १८५ त्रयाणामिति त्रयाणांपित्रादीनांउदकदानंका
र्यंत्रिष्यएवचतेभ्यः पिंडोदेयः चतुर्थस्यपिंडोदकयोर्दातापंचमस्यात्रसंबंधोनास्तितस्माद्युक्तोपुत्रपितामहादिधनेगौणपौत्राणाम-
धिकारः औरसपुत्रपौत्रयोश्चपुत्रेणलोकान्जयतीत्यनेनैवात्रपितामहादिधनभागित्वमुक्तम् १८६ अनंतरइति अस्यसामान्यव-
चनस्योक्तौरसादिसपिंडमात्रविषयत्वेवैयर्थ्यात्तत्रश्चानुक्तपत्न्यादिदायप्राप्त्यर्थमिदम् सपिंडमध्यात्सन्निकृष्टतरोयः सपिंडःपु-
मान्स्त्रीवातस्यमृतधनंभवतितत्रैकएवौरसःपुत्रइत्युक्तत्वात्सएवमृतधनेस्वाधिकारी क्षेत्रजगुणवद्दत्तकयोस्तुयथोक्तंपंचमंषष्ठं
वाभागंदद्यात् क्षेत्रजादिपुत्राणांसंवर्द्धनमात्रंकुर्यात् औरसाभावेपुत्रिकातत्पुत्रश्चदौहित्रएवचहरेदपुत्रस्याखिलंधनमित्युक्तत्वा
दौरसपुत्ररहितएवतत्रापुत्रोविवक्षितः तदभावे क्षेत्रजादयएकादशपुत्राः क्रमेणपितृधनाधिकारिणः परिणीतस्त्रूद्रापुत्रस्तुदशा
मभागमात्राधिकारीनाधिकंदशमाद्दद्यात् शूद्रापुत्रायेत्याद्युक्तत्वात् दशमभागावशिष्टंधनंसन्निकृष्टसपिंडोगृण्हीयात्त्रयोदशवि

त्रयाणामुदकंकार्यंत्रिषुपिंडःप्रवर्त्तते चतुर्थःसंप्रदातैषांपंचमोनोपपद्यते १८६ अनंतरःसपिंडा
द्यस्तस्यतस्यधनंभवेत् अतऊर्ध्वंसकुल्यःस्यादाचार्यःशिष्यएववा १८७

धपुत्राभावेपत्नीसर्वभर्तृधनभा
गिनी यदाहयाज्ञवल्क्यः पत्नीदुहितरश्चैवपितरौभ्रातरस्तथा तत्सुतोगोत्रजोबंधुःशिष्यस्सब्रह्मचारिणः एषामभावेपूर्वस्य
धनभागुत्तरोत्तरः स्वर्यातस्यह्यपुत्रस्यसर्ववर्णेष्वयंविधिः बृहस्पतिरप्याह आम्नायेस्मृतितंत्रेचलोकाचारेचसूरिभिः शरीरार्द्धंस्मृ
ताजायापुण्यापुण्यफलेसमा यस्यनोपरताभार्यादेहार्द्धंतस्यजीवति जीवत्यर्द्धशरीरेतुकथमन्यःसमाप्नुयात् सकुल्यैर्विद्यमानैस्तु-
पितृमातृसनाभिभिः अपुत्रस्यप्रमीतस्यपत्नीतद्भागहारिणी पूर्वप्रणीताग्निहोत्रंमृतेभर्त्तरितद्धनम् विंदेत्पतिव्रतानारीधर्मएष
सनातनः जंगमंस्थावरंहेमकुप्यंधान्यंमथांबरम् आदायदापयेच्छ्राद्धंमासषाण्मासिकादिकम् पितृव्यगुरुदौहित्रान्भर्तृस
स्रीयमातुलान् पूजयेत्कव्यपूर्त्ताभ्यांवृद्धानाथातिथीन्स्त्रियः तत्सपिंडाबांधवावायेतस्याःपरिपंथिनः हिंस्युर्धनानितान्राजा
चौरदंडेनशासयेत् वृद्धमनुः अपुत्राशयनंभर्त्तुःपालयंतीव्रतेस्थिता पत्न्येवदद्यात्तत्पिंडंकृत्स्नमर्थंलभेतच यदुक्तम् स्त्रीणां

तुजीवनं दद्यादितिसंबद्धेनमात्रवचनंतत्तशीलाधार्मिकसविकारयौवनस्थपत्नीविषयंअतोयन्मेधातिथिनापत्नीनामंशभागित्वं
निषिद्धमुक्तंतदसंबद्धम् पत्नीनामंशभागित्वंबृहस्पत्यादिसंमतम् मेधातिथिर्निराकुर्वन्नूनमीणातिसतांमनः पत्न्यभावेप्यपुत्रिका
दुहितातदभावेपितामाताचतयोरभावेसोदर्यभ्रातातदभावेतत्सुतः मातर्यपिचवृत्तायांपितुर्माताहरेद्धनं इतिवक्ष्यमाणत्वात्
पितृमाता तदभावेअन्योपिसन्निकृष्टसपिंडोमृतधनंगृण्हीयात् तद्यथापितामहसंतानेऽविद्यमानेप्रपितामहसंतानएवतद्
प्युक्तम् अतऊर्ध्वंसपिंडसंतानाभावेसमानोदकआचार्यःशिष्यश्चक्रमेणधनंगृण्हीयात् १८७ सर्वेषामिति एषामभावइति
वक्तव्येसर्वेषामभावइतियदुक्तंतत्तब्रह्मचार्यादेरपिधनहारित्वार्थंसर्वेषामभावेब्राह्मणावेदत्रयाध्यायिनोबाह्यांतरशौचयुक्ता
जितेंद्रियाधनहारिणोभवंतितएवचपिंडदाःतथासतिधनिनोमृतस्यश्राद्धादिधर्महानिर्नभवति १८८ अहार्यमिति ब्राह्म
णसंबंधिधनंनराज्ञाकदाचिद्ग्राह्यमितिशास्त्रमर्यादा किंतूक्तलक्षणाभावेब्राह्मणमात्रेभ्योपिदेयं क्षत्रियादिधनंपुनःपूर्वोक्तरिक्थ

सर्वेषामप्यभावेतुब्राह्मणारिक्थभागिनः त्रैविद्याःशुचयोदांतास्तथाधर्मोनहीयते १८८ अ
हार्यंब्राह्मणद्रव्यंराज्ञानित्यमितिस्थितिः इतरेषांतुवर्णानांसर्वाभावेहरेन्नृपः १८९ संस्थितस्या
नपत्यस्यसगोत्रात्पुत्रमाहरेत् तत्रयद्रिक्थजातंस्यात्तत्तस्मिन्प्रतिपादयेत् १९० द्वौतुयौविवदेया-
तांद्वाभ्यांजातौस्त्रियाधने तयोर्यद्यस्यपित्र्यंस्यात्तत्सगृण्हीतनेतरः १९१ हराभावेराजागृण्हीयात् १८९ सं

स्थितेति अनपत्यस्यमृतस्यभार्यासमानगोत्रात्पुंसोगुरुनियुक्तासतीनियोगधर्मेणपुत्रमुत्पादयेत् तस्मिन्मृतविषयेयत्
धनजातंभवेत्तत्तस्मिन्पुत्रेसमर्पयेत् देवराद्वासपिंडाद्वाइत्युक्तत्वात्सगोत्रान्नियोगमात्रार्थंतज्जन्यरिक्थभागित्वार्थमिदम्
१९० द्वाविति यद्येकरिक्थिनौस्यातामित्यौरसक्षेत्रजयोरुक्तमिदंत्वौरसपौनर्भवविषयंयदोत्पन्नौरसभर्तुर्मृतत्वात्बाल्याप
त्यतयास्वामिधनंस्वीकृत्यपौनर्भवभर्तुःसकाशात्पुत्रांतरंजनयेत्तस्यापिचपौनर्भवस्यभर्तुर्मृतत्वात्रिक्थहराभावात्धनंगृह
नवतीपश्चात्तौद्वाभ्यांजातौयदिविवदेयातांस्त्रीहस्तगतधनतयातयोर्यस्ययज्जनकस्यधनंसतदेवगृण्हीयात्नत्वन्यपितृजोन्यज
नकस्य १९१ जनन्यामिति मातरिमृतायांसोदर्याभ्रातरोभगिन्यश्चसोदर्याअनूढामातृधनंसमंकृत्वागृण्हीयुःऊढास्तुधनानु-

रूपंसंमानंलभंते तदाहबृहस्पतिः स्त्रीधनंस्यादपत्यानांदुहिताचतदंशिनी अपुत्राचेत्समूढातुलभतेमानमात्रकम् तत श्चानूढानांपितृधनइवोढानांमातृधनंभ्रात्रास्वांच्चतुर्थभागोदेयः १९२ यादृति तासांदुहितॄणांयाअनूढादुहितरः ताभ्योपि तामहीधनाद्यथातासांपूजाभवतितथाप्रीत्याकिंचिद्दातव्यम् १९३ अध्येति अध्यग्न्यत्यव्ययंविभक्तिसमीपेत्यादिनासू त्रेणसमीपार्थेअव्ययीभावः विवाहकालेअग्निसन्निधौयत्पित्रादिदत्तंतदध्यग्निस्त्रीधनंतदाहकात्यायनः विवाहकालेयत्स्त्री भ्योदीयतेह्यग्निसन्निधौ तदध्यग्निकृतंसद्भिःस्त्रीधनंपरिकीर्तितम् यत्तुपितृगृहान्भर्तृगृहंनीयमानयालब्धंतदध्यावाह निकम् तथाचकात्यायनः यत्पुनर्लभतेनारीनीयमानातुपैतृकात् अध्यावाहनिकन्नामतत्स्त्रीधनमुदाहृतम् यत्तुप्रीति-

जनन्यांसंस्थितायांतुसमंसर्वेसहोदराः भजेरन्मातृकंरिक्थंभगिन्यश्चसनाभयः १९२ यास्ता सांस्युर्दुहितरस्तासामपियथार्हतः मातामह्याधनात्किंचित्प्रदेयंप्रीतिपूर्वकम् १९३ अध्यग्न्य ध्यावाहनिकंदत्तंचप्रीतिकर्मणि भ्रातृमातृपितृप्राप्तंषड्विधंस्त्रीधनंस्मृतम् १९४ अन्वाधेयंच यद्दत्तंपत्याप्रीतेनचैवयत् पत्यौजीवतिवृत्तायाःप्रजायास्तद्धनंभवेत् १९५ ब्राह्मदैवार्षगांधर्व प्राजापत्येषुयद्वसु अप्रजायामतीतायांभर्तुरेवतदिष्यते १९६ यत्त्वस्याःस्याद्धनंदत्तंविवा हेष्वासुरादिषु अप्रजायामतीतायांमातापित्रोस्तदिष्यते १९७

हेतुकर्मणिभर्त्रादिदत्तंतथाभ्रात्रापि चसमयांतरेयद्दत्तंएवंषट्प्रकारकंस्त्रीधनंस्मृतम् १९४ अन्वेति अन्वाधेयंव्याख्यातंकात्यायनेन विवाहात्परतोयत्तुलब्धं भर्तृकुलेस्त्रिया अन्वाधेयंतदुक्तंतुसर्वबंधुकुलेतथा विवाहादूर्ध्वंभर्तृकुलेपितृकुलेवायत्स्त्रियालब्धंभर्त्राचप्रीतेनद त्तंयत् अध्यग्न्यादिपूर्वश्लोकेउक्तंतद्भर्तरिजीवतिमृतायाःस्त्रियाःसर्वंधनंतदपत्यानांभवति १९५ ब्राह्मेति ब्राह्मादिषुपं चसुविवाहेषूक्तलक्षणेषुयत्स्त्रियःषड्विधंधनंतदनपत्यायांमृतायांभर्तुरेवमन्वादिभिरिष्यते १९६ यदिति यत्पुनःस्त्रिया आसुरराक्षसपैशाचेषूक्तलक्षणेषुयत्स्त्रियाःषड्विधधनमपितदनपत्यायांमृतायांमातापित्रोरिष्यते १९७ ७ ७

स्त्रियामिति ब्राह्मणस्यनानाजातीयासुस्त्रीषु क्षत्रियादिस्त्रियामनपत्यपतिकायांमृतायांतस्याः पितृदत्तंधनंसजातिविजातिसापत्य
कन्यापुत्रसद्भावेपिब्राह्मणीसापत्न्येयीकन्यागृण्हीयात्तदभावेतदपत्यस्यतद्धनंभवेत् १९८ नेति भ्रात्रादिबहुसाधारणात्कुटुंबध
नात्भार्यादिभिःस्त्रीभीरत्नालंकाराद्यर्थंधनसंचयनन्नकर्त्तव्यन्नापिचभर्त्तुराज्ञांविनाभर्त्तृधनादपिकार्यंततश्चनेदंस्त्रीधनम् १९९
पत्याविसादि भर्त्तरिजीवतितत्संमताभिर्योऽलंकारःस्त्रीभिर्धृतःतस्मिन्मृतेविभागकालेतंपुत्रादयोनभजेरन् भजमानाःपापिनो
भवंति २०० अनंशाविति नपुंसकपतितजात्यंधश्रोत्रविकलोन्मत्तजडमूकाश्चयेचकुणिपंग्वादयोविकलेंद्रियास्तेपित्रादिधनहरान
भवंति किंतुग्रासाच्छादनभागिनस्तदेवाह २०१ सर्वेषामिति सर्वेषामेषांक्लीबादीनांशास्त्रज्ञेनऋक्थहारिणायावज्ज

स्त्रियांतुयद्भवेद्वित्तंपित्रादत्तंकथंचन ब्राह्मणीतद्धरेत्कन्यातदपत्यस्यवाभवेत् १९८ ननिर्हारंस्त्रि
यःकुर्युःकुटुंबाद्बहुमध्यगात् स्वकादपिचवित्ताद्धिस्वस्यभर्त्तुरनाज्ञया १९९ पत्यौजीवतियःस्त्रीभि
रलंकारोधृतोभवेत् नतंभजेरन्दायादाभजमानाःपतंतिते २०० अनंशौक्लीबपतितौजात्यंधबधि
रौतथा उन्मत्तजडमूकाश्चयेचकेचिन्निरिंद्रियाः २०१ सर्वेषामपितुन्याय्यंदातुंशक्त्यामनीषिणा
ग्रासाच्छादनमत्यंतंपतितोह्यददद्भवेत् २०२ यद्यर्थितातुदारैःस्यात्क्लीबादीनांकथंचन तेषा
मुत्पन्नतंतूनामपत्यंदायमर्हति २०३ यत्किंचित्पितरिप्रेतेधनंज्येष्ठोधिगच्छति भागोयवीयसांत
त्रयदिविद्यानुपालितः २०४ अविद्यानांतुसर्वेषामीहातश्चेद्धनंभवेत् समस्तत्रविभागःस्यादपि
त्र्यइतिधारणा २०५

ग्रासाच्छादनंदेयंअददत्पापीस्यात् २०२ यदिति कथंचनेत्यभिधानात्क्लीबादयोविवाहानर्हाइ
सूचितंयदिकथंचिदेषांविवाहेच्छाभवेत्तदाक्लीबस्यक्षेत्रजउत्पन्नेअन्येषामुत्पन्नापत्यानामपत्यंधनभाग्भवति २०३ यत्किं
चिदिति पितरिमृतेसतिभ्रातृभिःसहाविभक्तोज्येष्ठःकिंचित्स्वेनपौरुषेणधनंलभतेततोधनात्विद्याभ्यासवतांकनिष्ठभ्रातॄणां
भागोभवतिनेतरेषाम् २०४ अविद्यानामिति सर्वेषांभ्रातॄणांकृषिवाणिज्यादिचेष्टयायदिधनंस्यात्तदापित्र्यवर्जितेतस्मिन्

धनेस्वार्जितेसमोविभागःस्यात्ननूद्धारःअपित्व्यइतिनिश्चयः २०५ विद्येति विद्यामैत्रीविवाहार्जितंमाधुपर्किकंमधुपर्के पूज्यतयायल्लब्धंतस्यैवतत्स्यात्यत्किंचित्पितरौत्यक्त्वा यमपवादः विद्याधनंचव्याहृतंकात्यायनेन परभक्तप्रदानेनप्राप्ता विद्यायदान्यतः तयाप्राप्तंचविधिनाविद्याप्राप्तंतदुच्यते उपन्यस्तेचयल्लब्धंविद्ययापणपूर्वकम् विद्याधनंतुतद्विद्यात्विभागे नविभज्यते शिष्यादार्त्विज्यतःप्रश्नात्संदिग्धप्रश्ननिर्णयात् अज्ञानशंसनाद्वादाल्लब्धंप्राज्यधनाच्चयत् विद्याधनंतुतत्प्राहु र्विभागेनविभज्यते अतोयन्मेधातिथिगोविंदराजाभ्यांमाधुपर्किकमार्त्विज्यधनंव्याख्यातंतदयुक्तम् विद्याधनत्वात् २०६ भ्रा तृणामिति राजानुगमनादिकर्मणायोधनमर्जितुंशक्तोभ्रातृणांसाधारणंधनंनेच्छतिसस्वीयादंशात्किंचिदुपजीवनंदत्वाभ्रा तृभिःपृथक्कार्यःतेनतत्पुत्रास्तत्रधनेकालांतरेनविवदंते २०७ अनुपघ्नन्निति पितृधनानुपघातेनयत्कृष्यादिक्लेशादर्जयेत्

विद्याधनंतुयद्यस्यतत्तस्यैवधनंभवेत् मैत्र्यमौद्वाहिकंचैवमाधुपर्किकमेवच २०६ भ्रातृणांय स्तुनेहेतधनंशक्तःस्वकर्मणा सनिर्भाज्यःस्वकादंशात्किंचिद्दत्वोपजीवनम् २०७ अनुपघ्नन् पितृद्रव्यंश्रमेणयदुपार्जितम् स्वयमीहितलब्धंतन्नाकामोदातुमर्हति २०८ पैतृकंतुपितायद्र व्यमनवाप्तंयदाप्नुयात् नतत्पुत्रैर्भजेत्सार्द्धमकामःस्वयमर्जितम् २०९ विभक्ताःसहजीवंतो विभजेरन्पुनर्यदि समस्तत्रविभागःस्याज्ज्यैष्ठ्यंतत्रनविद्यते २१० येषांज्येष्ठःकनिष्ठोवाहीयेतांश प्रदानतः म्रियेतान्यतरोवापितस्यभागोनलुप्यते २११ सोदर्याविभजेरंस्तंसमेत्यसहिताःसमम् भ्रातरोयेचसंसृष्टाभगिन्यश्चसनाभयः २१२

तत्स्वच्छयाप्राप्तमनिच्छन्भ्रातृभ्योदातुन्नार्हति २०८ पैतृकमिति य त्तुनःपितृसंबंधिधनंतेनासामर्थ्येनोपेक्षितत्वादनवाप्तंपुत्रःशक्त्याप्नुयात्तत्स्वयमर्जितमनिच्छन्पुत्रैःसहनविभजेत् २०९ विभ क्ताइति पूर्वंसोद्धारंनिरुद्धारंवाविभक्ताभ्रातरःपश्चादेकीकृत्यधनंसहजीवंतोयदिपुनर्विभागंकुर्वंतितदातत्रसमोविभागःज्ये ष्ठस्योद्धारोनदेयः २१० येषामिति येषांभ्रातृणांमध्येकश्चिद्विभागकालेप्रव्रज्यादिनास्वांशाद्धीयेन्मृतोवाभवेत्तस्यभागोनलुप्येत् किंतु २११ सोदर्याइत्यादि सोदर्याभ्रातरःसमागम्यसहिताःभगिन्यश्चसोदर्यास्तमंशंसमंकृत्वाविभजेरन्सोदर्याणांसापत्न्या

नामपिमध्यात्त्वमिश्रीकृतधनलेनैकयोगक्षेमास्तेविभजेयुःसमंसर्वेसोदर्याःसपत्न्यावाएतच्चपुत्रपत्नीपितृमात्रभावेद्रष्टव्यम्
२१२ योज्येष्ठइति योज्येष्ठोभ्रातालोभात्कनीयसोभ्रातॄन्वंचयेत्सज्येष्ठभ्रातृपूजाशून्यःसोद्धारभागरहितश्चराजदंड्यश्चस्यात्
२१३ सर्वएवेति अपतिताअपियेभ्रातरोद्यूतवेश्यासेवादिविकर्मासक्तास्तेऋक्थंनार्हन्तिनचकनिष्ठेभ्योऽननुकल्प्यज्येष्ठः
धनादात्मार्थमसाधारणधनंकुर्यात् २१४ भ्रातॄणामिति भ्रातॄणांपित्रासहावस्थितानांअविभक्तानांयदिसहधनार्जनार्थमुत्थानं
भवेत्तदाविभागकालेनकस्यचित्पुत्रस्याधिकंपिताकदाचिद्दद्यात् २१५ ऊर्ध्वमिति यदाजीवतैवपित्रापुत्राणामिच्छयाविभागःकृ
तः तदाविभागादूर्ध्वंजातःपुत्रःपितरिमृतेपितृऋक्थमेवगृह्णीयात् येकृतविभागाःपित्रासहपुनर्मिश्रीकृतधनास्तैःसहासोपितरि

योज्येष्ठोविनिकुर्वीतलोभाद्भ्रातॄन्यवीयसः सोज्येष्ठःस्यादभागश्चनियंतव्यश्चराजभिः २१३ स
र्वएवविकर्मस्थानार्हन्तिभ्रातरोधनम् नचादत्त्वाकनिष्ठेभ्योज्येष्ठःकुर्वीतयौतकम् २१४ भ्रातॄणा
मविभक्तानांयद्युत्थानंभवेत्सह नपुत्रभागंविषमंपितादद्यात्कथंचन २१५ ऊर्ध्वंविभागाज्जात
स्तुपित्र्यमेवहरेद्धनम् संसृष्टास्तेनवायेस्युर्विभजेतसतैःसह २१६ अनपत्यस्यपुत्रस्यमातादायम
वाप्नुयात् मातर्यपिचवृत्तायांपितुर्माताहरेद्धनम् २१७ ऋणेधनेचसर्वस्मिन्प्रविभक्तेयथावि
धि पश्चाद्दृश्येतयत्किंचित्तत्सर्वंसमतांनयेत् २१८ वस्त्रंपत्रमलंकारंकृतान्नमुदकंस्त्रियः योग
क्षेमप्रचारंचनविभाज्यंप्रचक्षते २१९

मृतेविभजेत् २१६ अनपत्येति अनपत्यस्यपुत्रस्यधनंमातागृह्णीयात्पूर्वंपिता
हरेदपुत्रस्यऋक्थमित्युक्तत्वात्इहमाताहरेदित्यादियाज्ञवल्क्येनपितरावित्येकशेषकरणात् विष्णुनाचअपुत्रस्यधनंपत्न्यभिगा
मितदभावेदुहितृगामितदभावेपितृगामीत्येकशेषस्यैवकृतत्वात्मातापितरौविभज्यगृह्णीयाताम् मातरिमृतायांपत्नीपितृभ्रा
तृभ्रातृजाभावेपितुर्माताधनंगृह्णीयात् २१७ ऋणइति ऋणेपित्रादिधार्यमाणेधनेचदेयेसर्वस्मिन्यथाशास्त्रंविभक्तेसतिप
श्चात्किंचिदृणंधनंवाविभागकालेऽज्ञातमुपलभ्येततत्सर्वंसमंकृत्वाविभजनीयंनतुशोध्यंग्राह्यंवाज्येष्ठस्योद्धारोदेयः२१८
वस्त्रमिति वस्त्रंवाहनमाभरणंअविभागकालेयद्येनोपभुक्तंतत्तस्यैवनविभाज्यंएतच्चनातिन्यूनाधिकमूल्यविषयंयत्तुबहुमूल्य

मामरणादिकंतद्विभाज्यमेवतद्विषयमेवविक्रीयवस्त्राभरणमिति बृहस्पतेर्विभागवचनं कृतान्नमोदनसक्त्वादितन्नविभजनीयं तत्रातिमधुरतरमूल्यंसक्त्वादितानन्मात्रमूल्यधनेनकृतान्नंवाकृतान्नेनपरिवर्त्यविभज्यतइतिबृहस्पतिवचनाद्विभजनीयमेवउदकंकूपादिगतंसर्वैरुपभोग्यमविभजनीयम् स्त्रियोदास्याद्यायास्तत्स्यभागानभवंतितानविभाज्याःकिंतुतुल्यंकर्मकारयितव्याः योगक्षेमंमंत्रिपुरोहितादियोगक्षेमहेतुत्वात्प्रचारोगवादीनांप्रचारमार्गःएतत्सर्वंमन्वादयोऽविभाज्यमाहुः २१९ अयमिति एष वःपत्रागःपुत्राणांक्षेत्रजादीनांक्रमेणविभागकरणप्रकारोयुष्माकमुक्तः इदानींद्यूतव्यवस्थांशृणुत २२० द्यूतमिति द्यूतसमाह्वयौवक्ष्यमाणलक्षणौराजास्वराष्ट्रान्निवर्त्तयेत् यस्मादेतौद्वौदोषौराज्ञांविनाशकारिणौ २२१ प्रकाशमिति प्रकटमेतच्चौर्यंयत् द्यूतसमाह्वयौतस्मात्तन्निवारणेराजानित्यंयत्नयुक्तःस्यात् २२२ अप्राणीति अक्षकुशलादिभिरप्राणैर्यत्क्रियतेतल्लोकेद्यूतंकथ्यते यः

अयमुक्तोविभागोवःपुत्राणांचक्रियाविधिः क्रमशःक्षेत्रजादीनांद्यूतधर्मंनिबोधत २२० द्यूतंसमाह्वयंचैवराजाराष्ट्रान्निवारयेत् राजान्तकरणावेतौद्वौदोषौपृथिवीक्षिताम् २२१ प्रकाशमेतत्तास्कर्यंयद्देवनसमाह्वयौ तयोर्नित्यंप्रतीघातेनृपतिर्यत्नवान्भवेत् २२२ अप्राणिभिर्यत्क्रियतेतल्लोकेद्यूतमुच्यते प्राणिभिःक्रियतेयस्तुसविज्ञेयःसमाह्वयः २२३ द्यूतंसमाह्वयंचैववयःकुर्यात्कारयेतवा तान्सर्वान्घातयेद्राजाशूद्रांश्चद्विजलिंगिनः २२४ कितवान्कुशीलवान्क्रूरान्पाषंडस्थांश्चमानवान् विकर्मस्थान्शौंडिकांश्चक्षिप्रंनिर्वासयेत्पुरात् २२५

पुनःप्राणिभिः मेषकुक्कुटादिभिःपणपूर्वकंक्रियते ससमाह्वयोज्ञेयः लोकप्रसिद्धयोरप्यनयोर्लक्षणकथनंपरिहारार्थम् २२३ द्यूतमिति द्यूतसमाह्वयौयःकुर्यात्योवासभिकःकारयेत्तेषामपराधापेक्षयाराजाहस्तच्छेदादिवधंकुर्यात् यज्ञोपवीतादिद्विजचिह्नधारिणःशूद्रान्हन्यात् २२४ कितवेति द्यूतादिसेविनोनर्त्तकगायनान्वेदविद्विषश्रुतिस्मृतिबाह्यव्रतधारिणअनापदिपरकर्मजीविनः शौंडिकान्मद्यपान्मनुष्यान्क्षिप्रं राजाराष्ट्रान्निर्वासयेदितिकितवप्रसंगेनान्येषामप्यभिधानमत्रहेतुमाह २२५

एतइति एतेकितवादयोगूढचौराराज्ञोराष्ट्रेवसंतोनित्यंवंचनार्थकक्रिययासज्जनान्पीडयंति २२६ द्यूतमिति नेदानीमेवपरंकिंतु पूर्वस्मिन्नपिकल्पेद्यूतमेतदतिशयेनवैरकरंदृष्टंअतः शज्ञः परिहासार्थमपितन्नसेवेत २२७ प्रच्छन्नेमिति योमनुष्यः तत् द्यूतं गूढंप्रकटंवाकृत्वासेवेतस्ययथानृपतेरिच्छाभवतितथाविधोदंडोभवति इदानींपराजितानांधनाभावेसतीदमाह २२८ क्षत्रेति क्षत्रवैश्यशूद्रजातीयोनिर्द्धनत्वेनदंडंदातुमसमर्थः तदुचितकर्मकरणेनदंडशोधनंकुर्यात् ब्राह्मणःपुनःयथालाभक्रमेणदद्या न्नकर्मकारयितव्यः २२९ स्त्रीति स्त्रीबालादीनांपुनःशिफावेणुदलप्रहाररज्जुबंधनादिभिर्दमनंराजाकुर्यात् २३० येनियुक्तास्त्विति येव्यवहारावेक्षणादिषुकार्येषुराज्ञानियुक्ताउत्कोचधनतेजसाधिकारंलभंतः स्वाम्यादीनांकार्यन्नाशयेयुः तान्गृहीतसर्वस्वा

एतेराष्ट्रेवर्त्तमानाराज्ञःप्रच्छन्नतस्कराः विकर्मक्रिययानित्यंबाधंतेभद्रिकाःप्रजाः २२६ द्यूतमेत-
त्पुराकल्पेदृष्टंवैरकरंमहत् तस्माद्द्यूतंनसेवेतहास्यार्थमपिबुद्धिमान् २२७ प्रच्छन्नंवाप्रकाशंवा
तन्निषेवेतयोनरः तस्यदंडविकल्पःस्याद्यथेष्टंनृपतेस्तथा २२८ क्षत्रविट्शूद्रयोनिस्तुदंडंदातुम
शक्नुवन् आनृण्यंकर्मणागच्छेद्विप्रोदद्याच्छनैःशनैः २२९ स्त्रीबालोन्मत्तवृद्धानांदरिद्राणांचरो-
गिणाम् शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् २३० येनियुक्तास्तुकार्येषुहन्युःकार्याणिका
र्यिणाम् धनोष्मणापच्यमानास्तान्निस्स्वान्कारयेन्नृपः २३१ कूटशासनकर्तॄंश्चप्रकृतीनांचदूषकान्
स्त्रीबालब्राह्मणघ्नांश्चहन्याद्द्विट्सेविनस्तथा २३२ तीरितंचानुशिष्टंचयत्रक्वचनयद्भवेत् कृतंत
द्धर्मतोविद्यान्नतद्भूयोनिवर्त्तयेत् २३३

न्राजाकारयेत् २३१ कूटेति कूटराजाज्ञालेखकान् अमात्यानांचभेदकान् स्त्रीबालब्राह्मणघातिनः शत्रुसेविनश्चराजाहन्यात् २३२ तीरितमिति यत्रक्वचिदृणादानादिव्यवहारेयत्कार्यंधर्मतस्तीरितंपार- तीरकर्मसमाप्तावितित्वुरादौपठ्यते शास्त्रव्यवस्थानिर्णीयते अनुशिष्टंदंडपर्यंतंतच्चनीतंस्यात् तत्कृतमंगीकुर्यात् नपुनर्निवर्त्तये त् एतच्चाकारणात् अतःकारणकृतंविवर्त्तयेदेव २३३ अमात्यादिति राजामात्याःप्राड्विवाकोवाव्यवहारेक्षणेनियुक्तोयदसम्य

ग्व्यवहारनिर्णयंकुर्युः तत्स्वयंराजाकुर्यात् पणसहस्रंतान् दंडयेत् इदंचोत्कोचधनग्रहणेतरविषयंउत्कोचग्रहणेयेनियुक्तास्तित्स्व
स्वात् २३४ ब्रह्महेति योमनुष्योब्राह्मणंहतवान्सब्रह्महासुरापोद्विजातिः पैष्ट्याः पाताब्राह्मणश्चपैष्टीमाध्वीगौडीनांतस्करो
ब्राह्मणसुवर्णहारीमनुष्यः कश्चिद्गुरुपत्नीगामीत्येतेसर्वेप्रत्येकंमहापातकिनोबोद्धव्याः २३५ चतुर्णामिति चतुर्णामप्येषांम-
हापातकिनांप्रायश्चित्तमकुर्वतांशारीरंधनग्रहणेनचधनसंबंधंअपराधानुसारेणधर्म्यदनपेतंवक्ष्यमाणंदंडंकुर्यात् २३६ गुरु
तल्पइति नांक्याराज्ञाललाटेस्फःइतिवक्ष्यमाणत्वात् ललाटमेवांकनस्थानमवगम्यतेतत्रगुरुपत्नीगमनेयावज्जीवस्थायितप्त
लोहेनललाटेभगाकृतिंगुरुपत्नीगमनचिन्हंकार्यंएवंसुरापानेकृतेपानुर्द्ध्वसुराध्वजाकारंसुवर्णापहारेसत्यपहर्त्तुःकुक्कुरपा

अमात्याःप्राड्विवाकोवायत्कुर्युःकार्यमन्यथा तत्स्वयंनृपतिःकुर्यात्तान्सहस्रंचदंडयेत् २३४ ब्र
ह्महाचसुरापश्चस्तेयीचगुरुतल्पगः एतेसर्वेपृथग्ज्ञेयामहापातकिनोनराः २३५ चतुर्णामपिचै
तेषांप्रायश्चित्तमकुर्वताम् शारीरंधनसंयुक्तंदंडंधर्म्यंप्रकल्पयेत् २३६ गुरुतल्पेभगःकार्यःसुरा
पानेसुराध्वजः स्तेयेचश्वपदंकार्यंब्रह्महण्यशिराःपुमान् २३७ असंभोज्याह्यसंयाज्या असंपा-
ठ्याविवाहिनः चरेयुःपृथिवींदीनाःसर्वधर्मबहिष्कृताः २३८ ज्ञातिसंबंधिभिस्त्वेतेत्यक्तव्याःकृत
लक्षणाः निर्दयानिर्नमस्कारास्तन्मनोरनुशासनम् २३९ प्रायश्चित्तंतुकुर्वाणाःसर्ववर्णायथोदि
तम् नांक्याराज्ञाललाटेस्युर्दाप्यास्तूत्तमसाहसम् २४०

दरूपंकार्यंब्रह्महणिकबंधःपुमान्कर्त्तव्यः २३७ असं
भोज्याइति अन्नादिकंनैतेभोजयितव्याःनचैतेयाजनीयाःनाप्येतेअध्यापनीयानाप्येतैःकन्यादानसंबंधःकर्त्तव्यःएतेचनिर्द्धन
त्वात् याचनादिश्योप्ययुक्ताःसर्वश्रौतादिकर्मवर्जिताःपृथिवींपर्यटेयुः २३८ ज्ञातीति ज्ञातिभिःसंबंधिभिर्मातुलादिभिरेतेकृतां
कास्त्यजनीयाःनचैषांदयाकार्यानाप्येतेनमस्कार्याइतीयंमनोराज्ञा २३९ प्रायश्चित्तमिति शास्त्रविहितंप्रायश्चित्तंपुनःकुर्वा
णाब्राह्मणादयस्त्रयोवर्णाराज्ञाललाटेअंकनीयानभवेयुःउत्तमसाहसंपुनर्दंडनीयाः २४० ७ ७ ७

आगइति इतरे कृतवंतस्त्रिकृत्तरश्लोके श्रूयमाणमकामतइतिचात्रापियोजनीयं तेनाकामतइतिएष्वपराधेषुगुणवतोब्राह्मणस्य मध्यमसाहसोदंडःकार्यः पूर्वोक्तस्तूत्तमसाहसोनिर्गुणस्यद्रष्टव्यः कामतस्तेष्वपराधेषुधनधान्यादिपरिच्छदसहितोब्राह्मणोदेशान्नि र्वास्यः २४१ इतरइति ब्राह्मणादन्येपुनः क्षत्रियादयःएतानिपापानिअनिच्छंतः कृतवंतःसर्वस्वहरणमर्हंतिइदंचसर्वस्वहरणंपूर्वो क्तेनोत्तमसाहसेनवृत्तपेक्षयाव्यवस्थापनीयंइच्छयापुनरेषामेतेष्वपराधेषुप्रवासनंवधोर्हतिप्रवासनंपरासनन्निसूदनंहिंसनमि तिवधपर्यायंप्रवासनशब्दंपठंत्याभिधानिकाः २४२ नाददीतेति धार्मिकोराजामहापातकसंबंधिधनंनगृण्हीयान् लोभात्पुनः संगृण्हन्महापातकदोषेणसंयुज्यतेकातर्हिदत्तधनस्यप्रतिपत्तिरित्येतदर्थमाह २४३ अप्स्विति तद्दंडधनंनद्यादिजलेप्रक्षि

आगःसुब्राह्मणस्यैवकार्योमध्यमसाहसः विवास्योवाभवेद्राष्ट्रात्सद्रव्यःसपरिच्छदः २४१ इतरे कृतवंतस्तुपापान्येतान्यकामतः सर्वस्वहारमर्हंतिकामतस्तुप्रवासनम् २४२ नाददीतनृपःसाधु- र्महापातकिनोधनम् आददानस्तुतल्लोभात्तेनदोषेणलिप्यते २४३ अप्सुप्रवेश्यतंदंडंवरुणायो पपादयेत् श्रुतवृत्तोपपन्नेवाब्राह्मणेप्रतिपादयेत् २४४ ईशोदंडस्यवरुणोराज्ञांदंडधरोहिसः ई शःसर्वस्यजगतोब्राह्मणोवेदपारगः २४५ यत्रवर्जयतेराजापापकृद्भ्योधनागमम् तत्रकालेनजायं तेमानवादीर्घजीविनः २४६ निष्पद्यंतेचसस्यानियथोप्तानिविशांपृथक् बालाश्चनप्रमीयंतेविकृ- तन्नचजायते २४७

पेद्वरुणायदद्यात्श्रुतसंपन्नब्राह्मणायवादद्यात् २४४ ईशइति महापातकिदंडधनस्यवरुणः स्वामीयस्माद्राज्ञामपिदंडधारित्वात्प्रभुः तथाब्राह्मणःसमस्तवेदाध्यायीसर्वस्यजगतःप्रभुः अतःप्रभुत्वात्तौदंडधनमर्हतः २४५ यत्रेति निष्पद्यंतइति यत्रदेशेप्रकृतंमहापातकिधनंराजानगृण्हातितत्रपरिपूर्णेनकालेनमनुष्याउत्पद्यंतेदीर्घायुषश्चभवं ति वैश्यानांचयथैवधान्यादिसस्यान्युप्तानितथैवपृथक्पृथक्जायंतेअकालेनबालाम्रियंतेदीर्घजीविनइत्युक्तेप्याद्यर्थंबालानांपु नर्वचनंव्यंगंचनकिंचित्भूतमुत्पद्यते २४६ २४७ ब्राह्मणानिति शरीरपीडाधनग्रहणादिनाशूद्रमिच्छातोब्राह्मणान्बाधमा-

नंछेवादिभिरुद्वेगकरैर्वधोपायैर्नृपोहन्यात् २४८ यावानिति अवध्यस्यवधेयावानधर्मोनृपतेः शास्त्रेणज्ञातः तावानेववध्यस्य त्यागेपियथाशास्त्रंदंडंतुकुर्वतोधर्मः स्यात्तस्मात्तंकुर्यात् २४९ उदितइति अष्टादशसुऋणादानादिषुव्यवहारपदेषुपरस्परंविवदमा नयोरर्थिप्रत्यर्थिनोः कार्यनिर्णयोयंविस्तरेणोक्तः २५० एवमिति अनेनोक्तप्रकारेणधर्मादनपेतान् निर्णयंकुर्वन्राजाजनानुरा गात् देशान्लब्धुमिच्छेत्लब्धांश्चसम्यक्पालयेत् एवंसम्यग्व्यवहारेलब्धप्रदेशापास्यर्थंसुक्तम् २५१ सम्यगिति जांगलंसस्यसं पन्नइत्यक्तरीत्यासम्यगाश्रितदेशस्तत्रसप्तमाध्यायोक्तप्रकारेण कृतदुर्गश्चोरसाहसिकादिकंटकनिराकरणेप्रकृष्टयत्नंसदाकुर्यात्

ब्राह्मणान्बाधमानंतुकामादवरवर्णजम् हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः २४८ यावानवध्य स्यवधेतावान्वध्यस्यमोक्षणे अधर्मोनृपतेर्दृष्टोधर्मस्तुविनियच्छतः २४९ उदितोयंविस्तरशोमिथो विवदमानयोः अष्टादशसुमार्गेषुव्यवहारस्यनिर्णयः २५० एवंधर्म्याणिकार्याणिसम्यक्कुर्वन्महीप तिः देशानलब्धान्लिप्सेतलब्धांश्चपरिपालयेत् २५१ सम्यङ्निविष्टदेशस्तुकृतदुर्गश्चशास्त्रतः कंट कोद्धरणेनित्यमातिष्ठेद्यत्नमुत्तमम् २५२ रक्षणादार्यवृत्तानांकंटकानांचशोधनात् नरेन्द्रास्त्रिदिवंयां तिप्रजापालनतत्पराः २५३ अशासंस्तस्करान्यस्तुबलिंगृण्हातिपार्थिवः तस्यप्रक्षुभ्यतेराष्ट्रंस्वर्गा च्चपरिहीयते २५४ निर्भयंतुभवेद्यस्यराष्ट्रंबाहुबलाश्रितम् तस्यतद्वर्धतेनित्यंसिच्यमानइवद्रुमः २५५ द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान् प्रकाशांश्चाप्रकाशांश्चचारचक्षुर्महीपतिः २५६

२५२ रक्षणादिति यस्मात्साध्वाचाराणांरक्षणाच्चौरादीनांनशासनात्प्रजापालनयुक्ताराजानःस्वर्गंगच्छंति तस्मात्कंटकोद्धरणेय त्नंकुर्यात् २५३ अशासन्निति यथापुनर्नृपतिश्चौरादीननिराकुर्वन् षड्भागाद्युक्तंकरंगृण्हातितस्यराष्ट्रवासिनोजनाःकुप्यंतिक र्मान्तरार्जितात्प्यस्यस्वर्गप्राप्तिरनेनदुष्कृतेनप्रतिबध्यते २५४ निर्भयमिति यस्यराज्ञोबाहुवीर्याश्रयेणराष्ट्रंचौरादिभयरहितंभ वतितस्यनित्यंतद्वृद्धिंगच्छतिउदकसेकेनेववृक्षः २५५ द्विविधेति चारएवचोरज्ञानेहेतुत्वात्चक्षुर्विषयस्यासौराजाचारैरेव

टनयाद्दिप्रकाशान्न्यायेनपरधनग्राहिणोजानीयात् २५६ प्रकाशेति तेषांपुनश्चौरादीनांमध्याद्येतुलाप्रतिमानत्रोटनयादिनाहि रण्यादिपण्यविक्रयिणः परधनमनुचितेनगृण्हंतितेप्रकाशवंचकास्तेनाःचौराःसंधिच्छेदादिनागुप्ताऽटव्याश्रयाश्चपरधनंगृण्हंतितेप्रच्छन्नवंचकाःकिंच २५७ उत्कोचकाइति असभ्यागिति एवमिति उत्कोचकायेकार्यिभ्योधनंगृहीत्वाकार्यमयुक्तंकुर्वंति औपाधिकाभयदर्शनात्येधनमुपजीवंतिवंचकायेसुवर्णादिद्रव्यंगृहीत्वाऽपद्रव्यप्रक्षेपेणवंचयंतिकितवाद्यूतमुपाल्हयदेविनःधनपुत्रलाभादिमंगलमप्रलभादिश्यमेवर्त्ततेतेमंगलदेशवृत्ताःभद्राःकल्याणाकारप्रच्छन्नपापायेधनग्राहिणःईक्षणिकाहस्तरेखाद्यवलोकनेनशुभाशुभफलकथनजीविनः महामात्राहस्तिशिक्षाजीविनःचिकित्सकाःचिकित्साजीविनः असम्यक्कारिणइतिमहामात्रचिकित्सकविशेषणंशिल्पयुक्ताश्चित्रलेखाद्युपायजीविनःतेप्यनुपजीव्यमानशिल्पोपायप्रोत्साहनेनधनंगृण्हंति पण्यस्त्रियश्चपर

प्रकाशवंचकास्तेषांनानापण्योपजीविनः प्रच्छन्नवंचकास्त्वेतेयेस्तेनाटविकादयः २५७ उत्कोचकाश्चोपधिकावंचकाःकितवास्तथा मंगलादेशवृत्ताश्चभद्राश्चेक्षणिकैःसह २५८ असभ्यक्कारिणश्चैवमहामात्राश्चिकित्सकाः शिल्पोपचारयुक्ताश्चनिपुणाःपण्ययोषितः २५९ एवमादीन्विजानीयात्प्रकाशाँल्लोककंटकान् निगूढचारिणश्चान्याननार्यानार्यलिंगिनः २६० तान्विदित्वासुचरितैर्गूढैस्तत्कर्मकारिभिः चारैश्चानेकसंस्थानैःप्रोत्साद्यवशमानयेत् २६१ तेषांदोषानभिख्याप्यस्वेस्वेकर्मणितत्त्वतः कुर्वीतशासनंराजासम्यक्सारापराधतः २६२

वशीकरणकुशलाइत्येवमादीन्प्रकाशांल्लोकवंचकान्चारैर्जानीयात् अन्यानपिप्रच्छन्नचारिणःशूद्रादीन्ब्राह्मणादिवेषधारिणोधनग्राहिणोजानीयात् २५८ २५९ २६० तानिति तानुक्तान्वंचकान्सभ्यैःप्रच्छन्नैस्तत्कर्मकारिभिर्वणिजांवणिग्भ्यएवमादिभिःपुरुषैश्चैव्यतिरिक्तैःससमाख्यायोपदिष्टकापटिकादिभिश्चारैरनेकस्थानस्थैर्ज्ञात्वाप्रोत्साद्यस्ववशान्कुर्यात् २६१ तेषामिति तेषांप्रकाशाप्रकाशतस्कराणांस्वकर्मणिचौर्यादौयेपारमार्थिकादोषाःसंधिच्छेदादयःतान्लोकेप्रख्याप्यतत्कृतधनशरीरादिसामर्थ्यापेक्षयाचराजादंडंकुर्यात् २६२

नहीति यस्माच्चौराणांपापाचरणबुद्धीनांविनीतवेषेणपृथिव्यांचरतांदंडव्यतिरेकेणपापक्रियायांनियमंकर्त्तुमशक्यं अतएवांदंडं कुर्यात् २६३ सभेति जीर्णेति एवमिति सभाग्रामनगरादौनियतंजनसमूहस्थानंप्रपाजलदानगृहं अपूपविक्रयवेश्मपण्यस्त्रीगृहंमद्यान्नविक्रयस्थानानिचतुष्पथाःप्रख्याततरुसमूलानिजनसमूहस्थानानिजीर्णवाटिकाअटव्यःशिल्पगृहाणिशून्यगृहाणिआम्रादिवनानिकृत्रिमोद्यानानिएवंप्रकारान्सैन्यैःपदातिसमूहैःस्थावरजंगमैःएकस्थानस्थितैःप्रचारिभिश्चान्यैश्चारैस्तस्करनिवारणार्थंचारयेत्तायेणेनंविधेऽन्नपानस्त्रीसंभोगस्वभद्रर्नोपच्छेपणार्थंतस्कराअवतिष्ठंते २६४ २६५ २६६ तद्धीति तेषांसाहाय्यंप्रतिपादयमानैस्तच्चरितानुवृत्तिभिःसंधिच्छेदादिकर्मानुष्ठानवेदिभिः पूर्वचौरैश्चाररूपैश्चौरमायानिपुणैःतस्करान्जानीयादु

नहिदंडादृतेशक्यः कर्त्तुंपापविनिग्रहः स्तेनानांपापबुद्धीनान्निभृतंचरतांक्षितौ २६३ सभाप्रपापूपशालावेशमद्यान्नविक्रयाः चतुष्पथाश्चैत्यवृक्षाः समाजाःप्रेक्षणानिच २६४ जीर्णोद्यानान्यरण्यानिकारुकावेशनानिच शून्यानिचाप्यगाराणिवनान्युपवनानिच २६५ एवंविधान्नृपोदेशान्गुल्मैःस्थावरजंगमैः तस्करप्रतिषेधार्थंचारैश्चाप्यनुचारयेत् २६६ तत्सहायैरनुगतैर्नानाकर्मप्रवेदिभिः विद्यादुत्सादयेच्चैवनिपुणैःपूर्वतस्करैः २६७ भक्ष्यभोज्योपदेशैश्चब्राह्मणानाञ्चदर्शनैः शौर्यकर्मापदेशैश्चकुर्युस्तेषांसमागमम् २६८ येतत्रनोपसर्पेयुर्मूलप्रणिहिताश्चये तान्प्रसह्यनृपोहन्यात्समित्रज्ञातिबान्धवान् २६९

त्सादयेच्च २६७ भक्ष्येति तेपूर्वचौराश्चरभूता आगच्छंतास्मद्गृहंगच्छामःतत्रगोदकपायसादीन्यश्नीमःइत्येवंभक्ष्यभोज्यव्याजेनास्माकंदेशेब्राह्मणोस्तिसोभिलषितार्थसिद्धिंजानातितंपश्यामइत्येवंब्राह्मणानांदर्शनैःकश्चिदेकएवबहुभिःसहयोत्स्यतेतंपश्यामइत्येवंशौर्यकर्मव्याजेनतेषांचौराणांराज्ञोदंडधारकपुरुषैःसमागमंकुर्युःग्राहयेयुश्च २६८ येइति येचौरास्तत्रभक्ष्यभोज्यादौनिग्रहणशंकयानोपसर्पंतियेचमूलेराजनियुक्तपुराणचौरवधेप्रणिहिताःसावधानभूताःनसंगतिंभजंतेतांश्चौरांस्तेभ्यएवज्ञात्वातदेकतापन्नमित्रपित्रादिज्ञातिस्वजनसहितान्बलादाक्रम्यराजाहन्यात्

नह्योढेनेति धार्मिकोराजाहृतद्रव्यसंधिच्छेदोपकरणव्यतिरेकेणानिश्चितचौरभावंनघातयेत्किंतुद्रव्येणचौर्योपकरणेनचनिश्चि-
तचौरभावमविचारयन्घातयेत् २७० ग्रामेष्विति ग्रामादिष्वपियेकेचिच्चोराणांचौरत्वंज्ञात्वाभक्तदाःचौर्योपयुक्तभांडादिगृहाव-
स्थानंयेददतितानपिनेरंतर्यायपराधगोचरापेक्षयाघातयेत् २७१ राष्ट्रेष्विति येराष्ट्रेषुरक्षानियुक्ताःयेचसीमांतवासिनोक्रूराःसं-
तःचौर्योपदेशेमध्यस्थाभवंतितान्चौरवत्क्षिप्रंदंडयेत् २७२ यश्चापीति याजनमतिग्रहादिनापरस्ययागदानादिधर्ममुत्पाद्ययो
जीवतिसधर्मजीवनोब्राह्मणःसोपियोधर्मभर्यादायाश्च्युतोभवतितमपिस्वधर्मत्यागित्वंदंडेनोपतापयेत् २७३ ग्रामेति
दनेतस्करादिक्रियमाणेहिताभंगेजलसेतुभंगेजातेक्षेत्रापपन्नसस्यनाशनेवृत्तिभंगेचेतिमेधातिथिःपथिचौरदर्शनेतन्निकट

नह्योढेनविनाचौरंघातयेद्धार्मिकोनृपः सह्योढंसोपकरणंघातयेदविचारयन् २७० ग्रामेष्वपिचये
केचिच्चौराणांभक्तदायकाः भांडावकाशदाश्चैवसर्वांस्तानपिघातयेत् २७१ राष्ट्रेषुरक्षाधिकृतान्
सामंतांश्चैवचोदितान् अभ्याघातेषुमध्यस्थान्शिष्याच्चौरानिवद्रुतम् २७२ यश्चापिधर्मसमयात्प्र-
च्युतोधर्मजीवनः दंडेनैवतमप्योषेत्स्वकाद्धर्माद्धिविच्युतम् २७३ ग्रामघातेहिताभंगेपथिमोषाभि
दर्शने शक्तितोनाभिधावंतोनिर्वास्याःसपरिच्छदाः २७४ राज्ञःकोपापहर्तॄंश्चप्रतिकूलेषुचस्थिता
न् घातयेद्विविधैर्दंडैररीणांचोपजापकान् २७५ संधिंछित्वातुयेचौर्यंरात्रौकुर्वंतितस्कराः तेषांछि
त्वानृपोहस्तौतीक्ष्णेशूलेनिवेशयेत् २७६

वर्त्तिनोयेयथाशक्तितोयेरक्षान्नकुर्वंतितेशय्यागवाश्वादिपरिच्छदसहितादे
शान्निर्वासनीयाः २७४ राज्ञइति राज्ञोधनगृहात्धनापहारिणस्तथातदाज्ञाव्याघातकारिणःशत्रूणांचराज्ञासहवैरिवृद्धिकारि
णोअपराधापेक्षयाकरचरणजिह्वाछेदनादिभिर्नानाप्रकारदंडैर्घातयेत् २७५ संधिमिति योरात्रौसंधिच्छेदंकृत्वापरधनंतस्क
रामुष्णातितेषांराजाहस्तद्वयंछित्वातीक्ष्णेशूलेआरोपयेत् २७६ अंगुलीरिति पटप्रांतादिस्थितंस्वर्णादिकंग्रंथिमोक्षणेनयश्चो
रयतिसग्रंथिभेदःतस्यप्रथमेद्रव्यग्रहणेअंगुलीश्छेदयेत् तेचांगुष्ठतर्जन्यौ उत्क्षेपकग्रंथिभेदौकरसंदंशहीनकावितिया

वचनात् द्वितीयेग्रहणेहस्तपादौछेदयेत्तृतीयेग्रहणेवधार्होभवति २७७ अग्निदानिति ग्रंथिभेदादिकारिणोविज्ञायअग्निभक्त शस्त्रावस्थानप्रदान्मुष्यतइतिमोषश्चौरधनंतस्यावस्थापकान्चौरवद्राजानिगृण्हीयात् २७८ तडागेति यःस्नानदानादिनाज लोपकारकंभागंसेतुभेदादिनाविनाशयतितमप्सुमज्जनेनप्रकारांतरेणवाहन्यात् यद्वायदितडागंपुनःसंस्कुर्यात्तदोत्तमसाहसंदं ड्यः २७९ कोष्ठेति राजसंबंध्यादिषुधनागारायुधगृहयोर्देवप्रतिमागृहस्यबहुधनव्ययसाध्यस्यविनाशकान्हस्त्यश्वरथस्यचाप हर्तॄन्शीघ्रमेवहन्यात्यत्तुसंक्रमध्वजयष्टिप्रतिमाभेदिनःपंचशतदंडंवक्ष्यतिसोऽस्मादेवदेवतागारभेदकस्यवधविधानान्मृन्मयंपू जितोक्षितदेवताप्रतिमाविषयोत्रद्रष्टव्यः २८०यस्त्विति यःपुनःप्रजार्थंपूर्वकेनचित्कृतस्यतडागस्यउदकमेवगृण्हातिछिन्नतडा

अंगुलीग्रंथिभेदस्यछेदयेत्प्रथमेग्रहे द्वितीयेहस्तचरणौतृतीयेवधमर्हति २७७ अग्निदान्भ क्तदांश्चैवतथाशस्त्रावकाशदान् सन्निधातॄंश्चमोषस्यहन्याच्चोरमिवेश्वरः २७८ तडागभेदकंह न्यादप्सुशुद्धवधेनवा यद्वापिप्रतिसंस्कुर्याद्दाप्यस्तूत्तमसाहसम् २७९ कोष्ठागारायुधागारदेवता गारभेदकान् हस्त्यश्वरथहर्तॄंश्चहन्यादेवाविचारयन् २८० यस्तुपूर्वनिविष्टस्यतडागस्योदकंह रेत् आगमंवाप्यपांभिंद्यात्सदाप्यःपूर्वसाहसम् २८१ समुत्सृजेद्राजमार्गेयस्त्वमेध्यमनापदि स द्वौकार्षापणौदद्यादमेध्यंचाशुशोधयेत् २८२ आपद्गतोऽथवावृद्धोगर्भिणीबालएववा परिभा षणमर्हतितच्चशोध्यमितिस्थितिः २८३ चिकित्सकानांसर्वेषांमिथ्याप्रचरतांदमः अमानुषेषुप्र थमोमानुषेषुतुमध्यमः २८४

गोदकनाशनेवधदंडःप्रागुक्तःतथोदकगमनमार्गंसेतुबंधादिनायोनाशयतिसप्रथम साहसंदंड्यः २८१ समुत्सृजेति अनार्त्तःसन्योराजपथेपुरीषंकुर्यात्सपणद्वयंदंडंदद्यात्तच्चामेध्यंशीघ्रमेवापसारयेत् २८२ आपद्गतइति व्याधितवृद्धगर्भिणीबालानदंडनीयाः किंतुतेपुनःकिंकृतमितिपरिभाषणीयाः तच्चामेध्यंशोधनीयाइतिशास्त्रमर्या दा २८३ चिकित्सकेति सर्वेषांकायशल्यादिभिषजांदुश्चिकित्सांकुर्वतांदंडःकर्त्तव्यःतत्रगवाश्वादिविषयेदुश्चिकित्सायांप्रथम

हसदंडोमाप्नुयविषयेपुनर्मध्यमसाहसः २८४ संक्रमेति संक्रमोजलोपरिगमनार्थंकाष्ठशिलादिरूपः ध्वजः चिन्हंराजद्वारादौयष्टि पुष्करिण्यादौप्रतिमाश्चक्षुद्रमृन्मय्यादयस्तासांविनाशकःपंचशतपणान्दद्यात् तच्चविनाशितंद्रव्यंपुनर्नवंकुर्यात् २८५ अदूषिते ति अदुष्टद्रव्याणांअपद्रव्यप्रक्षेपेणदूषणेमणीनांचमाणक्यादीनांअभेद्यानांविद्रावणेवेध्यानामपिमुक्तादीनामनवस्थानवेधनेप्र थमसाहसोदंडःकार्यःसर्वत्रपरकीयद्रव्यनाशेद्रव्यांतरदानादिनास्वामितुष्टिःकार्या २८६ समैरिति समैःसममूल्यदातृभिःसहोत्कृ ष्टापकृष्टद्रव्यदानेनयोविषमंव्यवहरतिसममूल्यंद्रव्यंदत्वायःकस्यचिद्बहुमूल्यंकस्यचिदल्पमूल्यंगृह्णातिसोऽर्थबंधविशेषापेक्षया प्रथमसाहसंदंडमाप्नुयात् २८७ बंधनेति प्राकारेति बंधनगृहाणिसर्वजनदृश्येराजगृहपुरादिसंबंधिनःप्राकारस्यभेदकंतदीया

संक्रमध्वजयष्टीनांप्रतिमानांचभेदकः प्रतिकुर्याच्चतत्सर्वंपंचदद्याच्छतानिच २८५ अदूषितानांद्रव्याणांदूषणेभेदनेतथा मणीनामपवेधेचदंडःप्रथमसाहसः २८६ समैर्हिविषमंयस्तुचरेद्वैमूल्यतोपिवा समाप्नुयाद्दमंपूर्वंनरोमध्यममेववा २८७ बंधनानिचसर्वाणिराजामार्गेनिवेशयेत् दुःखितायत्रदृश्येरन्विकृताःपापकारिणः २८८ प्राकारस्यचभेत्तारंपरिखाणांचपूरकम् द्वाराणांचैवभंक्तारंक्षिप्रमेवप्रवासयेत् २८९ अभिचारेषुसर्वेषुकर्त्तव्योद्विशतोदमः मूलकर्मणिचानाप्तेःकृत्यासुविविधासुच २९० अबीजविक्रयीचैवबीजोत्कृष्टतथैवच मर्यादाभेदकश्चैवविकृतंप्राप्नुयाद्वधम् २९१

नामेवपरिखाणांपूरयितारंतद्भृतानांद्वाराणांभंजकंशीघ्रमेवदेशान्निर्वासयेत् २८८ २८९ अभिचारइति अभिचारहोमादिषुशास्त्रीयेषुमारणोपायेषुलौकिकेषुचमूलनिखननपदपांसुग्रहणादिषुकृतेषुअनुत्पन्नमरणफलेषुद्विशतपण ग्रहणरूपोदंडःकर्त्तव्यः मरणेतुमानुषमारणदंडःएवमातृपितृभार्यादिव्यतिरिक्तैःअसत्यैर्वामोह्यधनग्रहणाद्यर्थंवशीकरणेत थाकृत्यासूच्चाटनापाटवादिहेतुषुक्रियमाणासुनानाप्रकारासुद्विशतपणदंडएवकर्त्तव्यः २९० अबीजेति अबीजंबीजप्ररोहासमर्थंब्रीह्यादिप्ररोहसमर्थमितिकृत्वायोविक्रीणीतेतथातिशयमेवकतिचित्उत्कृष्टप्रक्षेपेणसर्वमिदंसोत्कर्षमितिकृत्वायोविक्रीणी

तेयश्चग्रामनगरादिसीमांविनाशयतिसविकृतनासाकरचरणकर्णादिरूपंवधंमाप्नुयात् २९१ सर्वेति सर्वकंटकानांमध्येअतिश
येनपापतमंस्वर्णकारंतुलाच्छद्मकषपरिवर्त्तापद्रव्यप्रक्षेपादिनाहेमादिचौर्य्येप्रवर्त्तमानंअनुबंधापेक्षयांगाविशेषेणसर्वदेहं
वाखंडशः च्छेदयेत् २९२ सीतेति कृष्यमाणभूमिद्रव्याणांहलकुद्दालादीनामपहरणेखड्गादीनांचशस्त्राणांऔषधस्यचक-
ल्याणघृतादेः चौर्य्येसत्कृपयोगकालेतरकालापेक्षयाप्रयोजनापेक्षयाचराजादंडंकुर्यात् २९३ स्वाम्येति स्वामीराजाअमात्यो
मंत्र्यादिःपुरंराज्ञः कृतदुर्गनिवासनगरंराष्ट्रंदेशःकोषोवित्तनिचयःदंडोहस्त्यश्वरथपादातंमित्रंत्रिविधंसप्तमाख्यायोक्तमित्येताः
सप्तप्रकृतयोअंगानिसप्तांगमिदंराज्यमित्युच्यतेततः किमित्याह २९४ सप्तेति आसांराज्यप्रकृतीनांसप्तानांक्रमं

सर्वकंटकपापिष्ठंहेमकारंतुपार्थिवः प्रवर्त्तमानमन्यायेच्छेदयेल्लवशः क्षुरैः २९२ सीताद्रव्यापहर
णेशस्त्राणामौषधस्यच कालमासाद्यकार्यंचराजादंडंप्रकल्पयेत् २९३ स्वाम्यमात्यौपुरंराष्ट्रंकोष
दंडौसुहृत्तथा सप्तप्रकृतयोह्येताःसप्तांगराज्यमुच्यते २९४ सप्तानांप्रकृतीनांतुराज्यस्यासांयथाक्र
मम् पूर्वंपूर्वंगुरुतरंजानीयाद्व्यसनंमहत् २९५ सप्तांगस्येहराज्यस्यविष्टब्धस्यत्रिदंडवत् अन्योन्य
गुणवैशेष्यान्नकिंचिदतिरिच्यते २९६

रस्यविनाशमपेक्ष्यपूर्वस्याःपूर्वस्याविनाशविषयेगरीयोव्यसनंजानीयात्
तथाहिमित्रव्यसनात्स्वबलव्यसनंगरीयः संपन्नबलस्यैवानुग्रहेसामर्थ्यात् एवंबलात्कोषोगरीयान्कोषनाशेबलस्यापिनाशात्
कोषाद्राष्ट्रंगरीयः राष्ट्रनाशेकुतः कोषोत्पत्तिः एवंराष्ट्राद्दुर्गनाशोपिदुर्गादेवयवसेंधनादिसंपन्नाद्राज्यरक्षासिद्धिः दुर्गादमात्योगरी
यान्प्रधानामात्यनाशेसर्वांगवैकल्यात् अमात्यादपिआत्मासर्वस्यात्मार्थत्वात्तस्माद्युत्तरापेक्षयापूर्वंयत्नतोरक्षेत् २९५ सप्तेति
उक्तसप्तांगवतोलोकेराष्ट्रस्यत्रिदंडवदन्योन्यसंबंधस्यपरस्परविलक्षणोपकारणान्नकिंचिदंगमधिकंभवतियद्यपिपूर्वस्मिन्श्लोकेपूर्व
पूर्वांगस्याधिक्यमुक्तंतथाप्येषामंगानांमध्यादन्यस्यांगसंबंधिनमपकारमन्यदंगंकर्त्तुंनशक्नोतितस्माद्युत्तरोत्तरांगमप्यपेक्षणी
यमित्येवंपरोयमाधिक्यनिषेधः अप्रमसिद्ध्यतित्रिदंडमेवदर्शयति तद्धिचतुरंगुलगोवालवेष्टनादन्योन्यसंबंधन्नचतन्मध्येत्रिदंड

धारणशास्त्रार्थेकश्चिद्दंडोधिकोभवति २९६ तेष्विति यस्मात्तेषु तेषुसंपाद्येषुकार्येषु तत्तदंगस्यातिशयोभवतितत्कार्यमन्येनकर्त्तुमशक्तेः एवंचयेनांगेनयत्कार्यसंपाद्यतेतस्मिन्कार्येतदेवप्रधानमुच्यते ततश्चान्योन्यगुणविशेषादियदुक्तंतदेवानेनस्फुटीकृतम् २९७ चारेणेति सप्तमाध्यायोक्तकापटिकादिना बलस्योत्साहयोगेन कर्मणांचहस्तिबधवणिक्पथादीनामनुष्ठानेनजातांशत्रोरात्मनश्चशक्तिंराजासदाजानीयात् २९८ पीडनेति पीडनानिमारकादीनिकामक्रोधोद्भवानिदुःखानिस्वपरचक्रगतानितेषांचगुरुलघुभावंपर्यालोच्यसंधिविग्रहादिकार्यमारभेत् २९९ आरभेतेति राजास्वराज्यवृद्धिपरःपचयनिमित्तानिकार्याणिकथंचिदिदंसंजातमितिच्छलान्यपि आरभ्यात्मनाखिन्नः पुनःपुनस्तान्यारभेतैवयस्मात्कर्माणिसृज्यमानंपुरुषंश्रीर्न्नितरांसेवतेतथानाब्राह्मणेनानाश्रयेश्रीरस्तीतिप्ररोहितापिशेषमेतिनचयुगानुरूपेणकर्माणिफलतीतिराज्ञोदासितव्यंयत. ३०० कृतमिति कृतत्रेताद्वापरकलयोरा

तेषुतेषुतुकृत्येषुतत्तदंगंविशिष्यते येनयत्साध्यतेकार्यंतत्तस्मिन्श्रेष्ठमुच्यते २९७ चारेणोत्साहयोगेनक्रिययैवचकर्मणाम् स्वशक्तिंपरशक्तिंचनित्यंविद्यान्महीपतिः २९८ पीडनानिचसर्वाणिव्यसनानितथैवच आरभेततततःकार्यंसंचिंत्यगुरुलाघवम् २९९ आरभेतैवकर्माणिश्रांतःश्रांतःपुनःपुनः कर्माण्यारभमाणंहिपुरुषंश्रीर्न्निषेवते ३०० कृतंत्रेतायुगंचैवद्वापरंकलिरेवच राज्ञोवृत्तानिसर्वाणिराजाहियुगमुच्यते ३०१ कलिःप्रसुप्तोभवतिसजाग्रद्द्वापरंयुगम् कर्मस्वभ्युद्यतस्त्रेताविचरंस्तुकृतंयुगम् ३०२ इंद्रस्यार्कस्यवायोश्चयमस्यवरुणस्यच चंद्रस्याग्नेःपृथिव्याश्चतेजोवृत्तंनृपश्चरेत् ३०३ एवचेष्टितविशेषाः तैरेवसत्यादिविशेषप्रवृत्तेः तस्माद्राजैवकृतादियुगमभिधीयतेकीदृक्चेष्टितःकृतादियुगमित्यतआह ३०१ कलिरिति अज्ञानालस्यादिनायदानिरुद्यमोराजाभवतितदाकलिःस्यात् यदाजानन्नपिनानुतिष्ठतितदाद्वापरम् यदाकर्मानुष्ठानेअवस्थितस्तदात्रेता यथाशास्त्रंपुनःकर्माण्यनुतिष्ठन्विचरतितदाकृतयुगंतस्माद्राज्ञाकर्मानुष्ठानपरेणभाव्यमितिअत्रतात्पर्यन्नतुवास्तव्यकृतयुगाद्यपलापे ३०२ इंद्रस्येति इंद्रादिवीर्यसंबंधिनोंऽशस्यानुरूपंचरितंराजानुतिष्ठेत्तथाचराजाकंटकोद्धारेणप्रतापानुरागाभ्यांसंयुज्येद्रस्यचरितमनुतिष्ठेदित्याह ३०३ वार्षिकेति ऋतुसंवत्सरपक्षाश्रय-

णेनइदमुच्यतेयथाश्रावणादींश्चतुरोमासानिंद्र सस्यादींसिद्ध्येवर्षतिएवमिंद्रचरितंअनुतिष्ठन्राजास्वदेशायातसाधूनभिल
षितार्थैःपूरयेत् ३०४ अष्टाविति यथासूर्योमार्गशीर्षाद्यष्टमासान्रश्मिभिस्तोकंस्तोकंरसमीषत्तापेनादत्तेतथाराजाशास्त्री
यकरानपीडयासदाराष्ट्राद्गृण्हीयात् यस्मादेतदस्यार्कव्रतम् ३०५ प्रविश्येति यथाप्राणाख्योवायुःसर्वजंतुष्वंतःप्रविश्यविचरति
एवंचारद्वारेणस्वपरमंडलजालेषुचिकीर्षितार्थज्ञानार्थमंतःप्रवेष्टव्यम् यस्मादेतन्मारुतंचरितम् ३०६ यमेति यद्यपियमस्यश
त्रुमित्रेनस्तस्तथापितन्निंदकाच्चकयोःशत्रुमित्रयोर्यथायमः शत्रुमित्रमरणकालेतुल्यवन्नियमयतिएवंराज्ञाऽपराधकालेप्रजाः
पणीया यस्मादेतदस्ययाम्यंव्रतम् ३०७ वरुणेनेति योवरुणस्यरज्जुभिर्बंधयितुमिष्टःसयथातेनाविशंकितःपाशैर्बद्धएवलक्ष्य

वार्षिकांश्चतुरोमासान्यथेंद्रोऽभिप्रवर्षति तथाभिवर्षेत्स्वंराष्ट्रंकामैरिंद्रव्रतंचरन् ३०४ अष्टौ
मासान्यथादित्यस्तोयंहरतिरश्मिभिः तथाहरेत्करंराष्ट्रान्नित्यमर्कव्रतंहितत् ३०५ प्रविश्यसर्व
भूतानियथाचरतिमारुतः तथाचारैःप्रवेष्टव्यंव्रतमेतद्धिमारुतम् ३०६ यथायमःप्रियद्वेष्यौप्राप्ते
कालेनियच्छति तथाराज्ञानियंतव्याःप्रजास्तद्धियमव्रतम् ३०७ वरुणेनयथापाशैर्बद्धएवाभि
दृश्यते तथापापान्निगृण्हीयाद्व्रतमेतद्धिवारुणम् ३०८ परिपूर्णंयथाचंद्रंदृष्ट्वाहृष्यंतिमानवाः
तथाप्रकृतयोयस्मिन्सचांद्रव्रतिकोनृपः ३०९ प्रतापयुक्तस्तेजस्वीनित्यंस्यात्पापकर्मसु दुष्टसाम
तहिंस्रश्चतदाग्नेयंव्रतंस्मृतम् ३१० यथासर्वाणिभूतानिधराधारयतेसमम् तथासर्वाणिभूता
निबिभ्रतःपार्थिवंव्रतम् ३११

तेतथापापकारिणोऽविशंकितान्नेवयावन्नपारयंतेतावच्छासयेत् यस्मादेतदस्यवारुणं
व्रतम् ३०८ परिपूर्णमिति यथापूर्णेंदुदर्शनेनमनुष्याहर्षमुत्पादयंत्येवममात्यादयोयस्मिन्दृष्टेतुष्टिमुपगच्छंतिसचंद्राचारचारी
नरेंद्रः ३०९ प्रतापयुक्तइत्यादि पापकारिषुसदादंडपातेनप्रचंडोऽनलसःस्यात्तथाप्रतिकूलामात्यहिंसनशीलोभवेत्तदस्याग्नि
संबंधिव्रतंस्मृतम् ३१० यथेति यथापृथिवीसर्वाणिउच्चावचानिस्थावरजंगमानिउत्कृष्टापकृष्टानिसमंकृत्वाधारयतेतद्वदिद्ध

निकगुणवद्भूतानितदितराणिच दीनानाथादिसर्वभूतानिरक्षणधनदानादिनासामान्येनधारयतः पृथिवीसंबंधिव्रतंभवति ३११ एतैरिति एतैरुक्तोपायैरन्यैश्चानुक्तैरपिस्वबुद्धिप्रयुक्तैराजाऽनलसःसन्स्वराष्ट्रेयेचौरावसंतियेचपरराष्ट्रेसंतस्तद्देशमागत्यमुष्णं तितानुभयप्रकारान्निगृण्हीयात् सोऽग्निर्भवतिवायुश्चेत्यादिनापूर्वसिद्धवदुक्तमग्न्यादिरूपत्वंइहतुतद्गुणत्यागेनस्फुटीकृतमि- त्यपुनरुक्तिः ३१२ परामिति कोपक्षयादिनाप्रकृष्टामप्यापदंप्राप्तोराजाब्राह्मणान्नप्रकोपयेत् यस्मात्तेरुष्टाःसबलवाहनंसद्यए- वशापाभिचाराभ्यांहन्युः तथाहि ३१३ यैरिति यैर्ब्राह्मणैरभिशापेनसर्वभक्ष्योऽग्निःकृतःसमुद्रश्चापेयजलश्चंद्रश्चक्षययुक्तःप- श्चात्पूरितः तान्कोपयित्वाकोननश्येत् किंच ३१४ लोकानामिति येस्वर्गादिलोकान् परानन्यांश्चलोकपालान्सृजंतीतिसं-

एतैरुपायैरन्यैश्चयुक्तोनित्यमतंद्रितः स्तेनान्राजानिगृण्हीयात्स्वराष्ट्रेपरएवच ३१२ परामप्याप दंप्राप्तोब्राह्मणान्नप्रकोपयेत् तेह्येनंकुपिताहन्युःसद्यःसबलवाहनम् ३१३ यैःकृतःसर्वभक्ष्योग्नि रपेयश्चमहोदधिः क्षयीचाप्यायितःसोमःकोननश्येत्प्रकोप्यतान् ३१४ लोकानन्यान्सृजेयुर्येलोक पालांश्चकोपिताः देवान्कुर्युरदेवांश्चकःक्षिण्वंस्तान्समृध्नुयात् ३१५ यानुपाश्रित्यतिष्ठंतिलो- कादेवाश्चसर्वदा ब्रह्मचैवधनंयेषांकोहिंस्यात्ताञ्जिजीविषुः ३१६ अविद्वांश्चैवविद्वांश्चब्राह्मणो दैवतंमहत् प्रणीतश्चाप्रणीतश्चयथाग्निर्दैवतंमहत् ३१७ श्मशानेष्वपितेजस्वीपावकोनैवदु ष्यति हूयमानश्चयज्ञेषुभूयएवाभिवर्द्धते ३१८

भाव्यतेदेवांश्चमानुषादीन्कुर्वंतितान्पीडयन्कःसमृद्धिंप्राप्नु यात् अपिच ३१५ यानित्यादि यान्ब्राह्मणान्यजनयाजनकर्तृकान्नाश्रित्याग्नौप्रास्ताहुतिरितिन्यायेनपृथिव्यादिलोकादेवाश्च- स्थितिंलभंतेवेदएवचयेषांअभ्युदयसाधनतयायाजनाध्यापनादिनाधनोपायत्वाच्चतान्जीवितुमिच्छन्कोहिंस्यात् एवंतर्हि विद्वांसंब्राह्मणंसेवेतेत्यत्रआह ३१६ अविद्वानिति यथाहितोऽनाहितोवाग्निर्महतीदेवताएवंमूर्खोविद्वांश्चप्रकृष्टादेवतेति ३१७ श्मशानेष्वित्यादि एवंपद्यप्यनिष्टेवर्त्ततेसर्वकर्मसुतथापिब्राह्मणाःपूज्याःपरमंदैवतंहितत्प्रयथाग्निर्महातेजाःश्मशानेशवंदहन्कार्ये

पिनैवदुष्टो भवतिकिंतुपुनरपियज्ञेषुहूयमानोऽभिवर्द्धते ३१८ एवंयद्यपीति एवंकुत्सितकर्मस्वपिसर्वेषुयद्यपिब्राह्मणाःप्रवर्त्तंते तथापिसर्वप्रकारेणपूज्याः तथाप्रकृष्टंतद्दैवतंतस्यार्थत्वाच्चास्यनयथाश्रुतार्थविरोधःशंकनीयः ३१९ क्षत्रस्येति क्षत्रियस्य णान्प्रतिसर्वथापीडानुरक्तस्यब्राह्मणाएवशापाभिचारादिनासम्यग्नियंतारः यस्मात्क्षत्रियोब्राह्मणात्संभूतः ब्राह्मणबाहुप्रसूत त्वात्तथाच ३२० अद्भ्यइति जलब्राह्मणपाषाणेभ्योऽग्निक्षत्रियशस्त्राणिजातानितेषांसंबंधितेजः सर्वत्रदहनाभिभवच्छेदना र्थकंकार्यंकरोतिस्वकारणेषुजलब्राह्मणपाषाणाख्येषुदहनाभिभवच्छेदनरूपंकार्यंन्नकरोति ३२१ नेति ब्राह्मणरहितक्ष त्रियोराद्धिन्नयातिशांतिकपौष्टिकव्यवहारे क्षणादिधर्मविरहात् एवंक्षत्रियरहितोपिब्राह्मणोनवर्द्धतेरक्षांविनायागादिकर्म-

एवंयद्यप्यनिष्टेषुवर्त्तंतेसर्वकर्मसु सर्वथाब्राह्मणाःपूज्याःपरमंदैवतंहितत् ३१९ क्षत्रस्यातिप्रवृद्ध स्यब्राह्मणान्प्रतिसर्वशः ब्रह्मैवसन्नियंतृस्यात्क्षत्रंहिब्रह्मसंभवम् ३२० अद्भ्योग्निर्ब्रह्मतःक्षत्रम श्मनोलोहमुत्थितम् तेषांसर्वत्रगंतेजःस्वासुयोनिषुशाम्यति ३२१ नाब्रह्मक्षत्रमृध्नोतिनाक्षत्रंब्रह्म वर्द्धते ब्रह्मक्षत्रंचसंपृक्तमिहचामुत्रवर्द्धते ३२२ दत्वाधनंतुविप्रेभ्यःसर्वदंडसमुत्थितम् पुत्रेराज्यं समासृज्यकुर्वीतप्रायणंरणे ३२३ एवंचरन्सदायुक्तोराजधर्मेषुपार्थिवः हितेषुचैवलोकस्यसर्वान्भृ त्यान्नियोजयेत् ३२४ एषोखिलःकर्मविधिरुक्तोराज्ञःसनातनः इमंकर्मविधिंविद्यात्क्रमशोवैश्यशूद्र योः ३२५

निष्पत्तेःकिंतुब्राह्मणःक्षत्रियश्चपरस्परसंबद्धएवेहलोकेपरलोकेचधर्मार्थकाममोक्षावाप्त्यावृद्धिमेतिदंडप्रक रणेन्वेषंब्राह्मणस्तुतिःब्राह्मणानामेवाधिपानामपिलघुदंडप्रयोगनियमार्थायदातुविशिष्टदर्शनेनाचिकित्स्यव्याधिनावाआसन्नमृ त्युर्भवतितदा ३२२ दत्वेति महापातकिव्यतिरिक्तविनियुक्तावशिष्टसर्वदंडधनंब्राह्मणेभ्योदत्वापुत्रेराज्यंसमर्प्यासन्नमृत्युःफला तिशयप्राप्तयेसंग्रामेप्राणत्यागंकुर्यात् संग्रामासंभवेत्वनशनादिनापि ३२३ एवमिति एवमध्यायत्रयोक्तराजधर्मेषुव्यवहार्यमाणो राजासर्वदायत्नवान्प्रजाहितेषुसर्वान्भृत्यान्विनियोजयेत् ३२४ एषइति एतद्राज्ञःकर्मानुष्ठानंपारंपर्यागततयानित्यंसमग्रमुक्तंइ

दानींवैश्यशूद्रक्रमेणवक्ष्यमाणंइदंकर्मानुष्ठानंजानीयात् ३२५ वैश्यस्त्विति वैश्यः कृतोपनयनपर्यंतसंस्कारः विवाहादिकंकृत्वाजी
विकायांवक्ष्यमाणायांकृष्यादिकार्यपशुपालनेनचसदासमायुक्तःस्यात् पशुरक्षणस्य वार्त्तात्वेपिप्राधान्यस्थापनार्थंपृथग्विधानंत
थाचोत्तरश्लोकाभ्यांप्राधान्यंदर्शयति ३२६ प्रजापतिरिति यस्माद्ब्रह्मापशून्सृष्ट्वारक्षणार्थंवैश्यायदत्तवान् अतोवैश्येनरक्षणी
याइतिपूर्वानुवादःप्रजाश्चसर्वाःसृष्ट्वाब्राह्मणायराज्ञेचदत्तवानितिप्रसंगादेतदुक्तम् ३२७ नचेति पशुरक्षणंनकरोमीतिवैश्येन
इच्छानकार्याअतःकृष्यादिवृत्तिसंभवेपिवैश्येनपशुरक्षणमवश्यंकरणीयंवैश्येचपशुरक्षणंकुर्वत्यन्यःपशुरक्षणन्नकारयितव्यः
किंच ३२८ मणीति मणिमुक्ताविद्रुमलोहवस्त्राणांगंधानांकर्पूरादीनांरसानांलवणादीनांउत्तममध्यमानांदेशकालापेक्षयामू-

वैश्यस्तुकृतसंस्कारःकृत्वादारपरिग्रहम् वार्त्तायांनित्ययुक्तःस्यात्पशूनांचैवरक्षणे ३२५ प्रजापति
र्हिवैश्यायसृष्ट्वापरिददेपशून् ब्राह्मणायचराज्ञेचसर्वाःपरिददेप्रजाः ३२६ नचवैश्यस्यकामःस्या
न्नरक्षेयंपशूनिति वैश्येचेच्छतिनान्येनरक्षितव्याःकथंचन ३२७ मणिमुक्ताप्रवालानांलोहानांतां
तवस्यच गंधानांचरसानांचविद्यादर्घबलाबलम् ३२८ बीजानामुप्तिविच्चस्यात्क्षेत्रदोषगुणस्यच
मानयोगंचजानीयात्तुलायोगांश्चसर्वशः ३२९ सारासारंचभांडानांदेशानांचगुणागुणान् लाभाला
भंचपण्यानांपशूनांपरिवर्द्धनम् ३३०

ल्योत्कर्षापकर्षंवैश्यःजानीयात् ३२९ बीजेति बीजानांसर्वेषांवपनविधिज्ञः
स्यात् इदंबीजमस्मिन्कालेतत्रसंहतंचोप्तंप्ररोहतीत्येवंतथेदमूषरमिदंसस्यप्रदमित्यादिक्षेत्रदोषगुणज्ञश्चस्यात् मानोपा-
यांश्चप्रस्थद्रोणादीन्तुलोपायांश्चसर्वान्तत्त्वतोजानीयात् यथान्योनवंचयति ३३० सारेति इदमुत्कृष्टमेतदपकृष्टमित्येकजा-
तीनामपिद्रव्याणांविशेषंजानीयात्तथादेशानांमाक्षश्विमादीनांक्वचिद्बहुमूल्यंचेत्यादिदेशगुणदोषौतुल्येतविक्रेयद्रव्याणांचे
यताकालेनइयानपचयउपचयोवेतिविद्यात्तथाऽस्मिन्देशेकालेअनेनचतृणोदकयवादिनापशवोवर्द्धंतेअनेनक्षीयंतइतिएतदपि
जानीयात् ३३१ भृत्येति गोपालमहीपालानामितीदमस्यदेयमितिदेशकालकर्मानुरूपंवेतनंजानीयात् गौडदाक्षिणात्यादीनांच

मनुष्याणान्नानाप्रकाराम्भाषाविक्रयाद्यर्थंविद्यात्तथाइदंद्रव्यमेवंस्थाप्यतेअनेनचसंयुक्तंचिरंतिष्ठतीतिबुध्येततथेदंद्रव्य
मस्मिन्देशेकालेनचैयतावित्क्रीयतइतिएतदपिजानीयात् ३३२ धर्मेणेति धर्मेणविक्रयादिनाउक्तप्रकारेणधनवृद्धौप्रकृष्टंय
त्नंकुर्यात्हिरण्यादिदानमपेक्ष्यान्नमेवप्राणिभ्योविशेषेणदद्यात् ३३३ विप्रेति शूद्रस्यपुनर्वेदविदांगृहस्थानांस्वधर्मानुष्ठा
नेनयशोयुक्तानांयापरिचर्यासैवप्रकृष्टस्वर्गादिश्रेयोहेतुर्धर्मः ३३४ शुचिरिति बाह्याभ्यंतरशौचोपेतःस्वजात्यपेक्षयाउत्कृष्ट
द्विजातिपरिचरणशीलोऽपरुषभाषीनिरहंकारःप्राधान्येनब्राह्मणादयःतदभावेक्षत्रियवैश्यास्त्रयोपिस्वजातितउत्कृष्टास्तदाश्र
यउत्कृष्टंजातिंप्राप्नोति ३३५ एषइति एषवर्णानामनापदिचतुर्णामपिकर्मविधिर्धर्मउक्तःआपद्यपियस्तेषांधर्मःसंकीर्णश्चइ

भृत्यानांचभृतिंविद्याद्भाषाश्चविविधानृणाम् द्रव्याणांस्थानयोगांश्चक्रयविक्रयमेवच ३३२ ध
र्मेणचद्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम् दद्याच्चसर्वभूतानामन्नमेवप्रयत्नतः ३३३ विप्राणांवेदवि
दुषांगृहस्थानांयशस्विनाम् शुश्रूषैवतुशूद्रस्यधर्मोनैःश्रेयसःपरः ३३४ शुचिरुत्कृष्टशुश्रूषुर्मृ
दुवागनहंकृतः ब्राह्मणाद्याश्रयोनित्यमुत्कृष्टांजातिमश्नुते ३३५ एषोऽनापदिवर्णानामुक्तःकर्म
विधिःशुभः आपद्यपिहियस्तेषांक्रमशस्तन्निबोधत ३३६ इतिमानवेधर्मशास्त्रेभृगुप्रो
क्तायांसंहितायांनवमोऽध्यायः ९ ७ ७ ७ अधीयीरंस्त्रयोवर्णाःस्वकर्मस्था
द्विजातयः प्रब्रूयाद्ब्राह्मणस्त्वेषान्नेतरावितिनिश्चयः १

दंचक्रमेणशृणुत ३३६ इतिश्रीकुल्लूकभट्ट
विरचितायांमन्वर्थमुक्तावल्यांनवमोऽध्यायः ९ ७ ७ ७ अधीयीरन्निति वैश्यशूद्रधर्मानंतरंसंकीर्णानांच
संभवमितितस्मिन्वाच्येवर्णेभ्यएवसंकीर्णानामुत्पत्तेःवर्णानुवादार्थंत्रैवर्णिकस्यप्रधानधर्ममध्ययनंब्राह्मणस्यचाध्यापन
मनुवदतिब्राह्मणादयस्त्रयोवर्णाःअध्ययनात्प्रभृतस्वकर्मस्वनुष्ठातारोवेदंपठेयुःएषांपुनर्मध्येब्राह्मणएवाध्यापनंकुर्यात्नक्ष
त्रियवैश्यावितियन्निश्चयःप्रब्रूयाद्ब्राह्मणःपुनस्त्वेषामित्यनेनैवक्षत्रियवैश्ययोरध्यापननिषेधसिद्धौनेतराविति पुनर्निषेधव

-चनंश्रायश्चित्तगौरवार्यांकिंच १ सर्वेति सर्वेषांवर्णानांजीवनोपायंयथाशास्त्रंब्राह्मणोजानीयात्तेभ्यश्चोपदिशेत्स्वयंचयथोक्तवन्नि यममनुतिष्ठेत् अत्रानुवादः २ वैशेष्यादिति जात्युत्कर्षात्प्रकृतिः कारणंहिरण्यगर्भोत्तमांगरूपकारणोत्कर्षान्नियम्यते ऽनेनेतितथा वेदाऽध्ययनाध्यापनव्याख्यानादियुक्तसातिशयवेदधारणात् अतएवब्राह्मणश्चैवधारणादितिसातिशयवेदधारणेनैवब्राह्मणोत्क र्षउक्तः गोविंदराजस्तुस्नातकव्रतानांधारणादितिव्याख्यातवान् तन्नक्षत्रियादिसाधारणादिस्थिरस्योपनयनाख्यस्यक्षत्रियाद्यपेक्ष याधानस्यैवविधानेविरोधात् वर्णानामध्यापनवृत्त्युपदेशयोर्ब्राह्मणएवेश्वरः ३ ब्राह्मणइति ब्राह्मणादयस्त्रयोवर्णाद्विजास्तेषामुपन यनविधानात् शूद्रःपुनश्चतुर्थोवर्णएकजातिरुपनयनाभावात् नचपुनर्वर्णोनास्तिसंकीर्णजातीनांत्वश्वतरवत्मातापितृजातिव्य तिरिक्तजात्यंतरत्वं अयंचवर्णलोपदेशःशास्त्रेसंव्यवहरणार्थः ४ सर्वेति ब्राह्मणादिषुवर्णेषुचतुर्ष्वपिसमानजातीयासुयथाशास्त्रंप

सर्वेषांब्राह्मणोविद्याद्वृत्त्युपायान्यथाविधि प्रब्रूयादितरेभ्यश्चस्वयंचैवतथाभवेत् २ वैशेष्यात्प्र कृतिश्रैष्ठ्यान्नियमस्यचधारणात् संस्कारस्यविशेषाच्चवर्णानांब्राह्मणःप्रभुः ३ ब्राह्मणःक्षत्रियोवै श्यस्त्रयोवर्णाद्विजातयः चतुर्थएकजातिस्तुशूद्रोनास्तितुपंचमः ४ सर्ववर्णेषुतुल्यासुपत्नीष्वक्ष तयोनिषु आनुलोम्येनसंभूताजात्याज्ञेयास्तएवते ५

रिणीतास्वक्षतयोनिषु आनुलोम्येन ब्राह्मणेनब्राह्मण्यां क्षत्रियेणक्षत्रियायांइत्यनेनानुक्रमेणयेजातास्तेमातापित्रोर्जात्यायुक्तास्तज्जातीयाएवज्ञातव्याः आनुलोम्यग्रहणंचात्रमंदोपयुक्त मुत्तरश्लोकेउपयोक्ष्यते गवाश्वादिवदवयवविशेषस्यब्राह्मणजात्यभिव्यंजकाभावादेतद्ब्राह्मणादिलक्षणमुक्तम् अत्रचपत्नीग्र हणादन्यपत्नीजनितानान्नब्राह्मणादिजातित्वम् तथाचदेवलः द्वितीयेनतुयःपित्रासवर्णायांप्रजायते अवावटइतिख्यातःशूद्र धर्मासजातितः व्रतहीनानसंस्कार्याःस्वतंत्रास्वपिपेसुताः उत्पादिताःसवर्णेनव्रात्याइवबहिष्कृताः व्यासः येतुजाताःसमानासुसं स्कार्यास्युरतोन्यथा याज्ञवल्क्योपि सवर्णेभ्यःसवर्णासुजायंतेहिसजातयः इत्यभिधायविन्नास्वेषविधिःस्मृतइतिब्रुवाणःपत्न्यु त्पादितस्यैवब्राह्मणादिजातित्वंनिश्चिकाय ५ स्त्रीष्विति आनुलोम्येनाव्यवहितवर्णजातीयासुभार्यासुद्विजातिभिर्येउत्पादिताः

पुत्राः यथाब्राह्मणेनक्षत्रियायांक्षत्रियेणवैश्यायांतान्मातुर्हीनजातीयत्वदोषान्गर्हितान्पितृसदृशानूनतुपितृसजातीयान् मन्वादयआहुः पितृसदृशग्रहणान्मातृजातेरुत्कृष्टाःपितृजातितोनिकृष्टाज्ञेयाः एतेषांचनामानिमूर्द्धाभिषिक्तमाहिष्यकरणा रव्यानियाज्ञवल्क्यादिभिरुक्तानि वृत्तयश्चैषांलक्षणेनोक्ताः हस्त्यश्वरथशिक्षा अस्त्रधारणंचमूर्द्धाभिषिक्तानाम् नृत्यगीतनक्षत्र जीवनंसस्यरक्षाचमाहिष्याणांद्विजातिशुश्रूषाधनधान्याध्यक्षताराजसेवांऽतःपुररक्षाचपारशवोग्रकरणानामिति ६ अनंतरेति एवंपारंपर्यगतनयानित्योविधिरनंतरभार्योत्पन्नानामुक्तः एकेनद्वाभ्यांचव्यवहितासूत्पन्नानांयथाब्राह्मणेनवैश्यायांक्षत्रियेण शूद्रायांब्राह्मणेनशूद्रायामिमंवक्ष्यमाणंधर्मादनपेतंविधिंजानीयात् ७ ब्राह्मणादिति कन्याग्रहणादत्रऊढायामित्यध्याहार्यंविन्ना स्वेषविधिःस्मृतइतियाज्ञवल्क्येनस्फुटीकृतत्वाच्चब्राह्मणाद्वैश्यकन्यायांऊढायामंबष्ठाख्योजायतेशूद्रकन्यायामूढायांनिषादउत्प

स्त्रीष्वनंतरजातासु द्विजैरुत्पादितान्सुतान् सदृशानेवतानाहुर्मातृदोषविगर्हितान् ६ अनंतरासुजातानांविधिरेषसनातनः द्व्येकांतरासुजातानांधर्म्यंविद्यादिमंविधिम् ७ ब्राह्मणाद्वैश्यकन्यायामंबष्ठोनामजायते निषादःशूद्रकन्यायांयःपारशवउच्यते ८ क्षत्रियाच्छूद्रकन्यायांक्रूराचारविहारवान् क्षत्रशूद्रवपुर्जंतुरुग्रोनामप्रजायते ९ विप्रस्यत्रिषुवर्णेषुनृपतेर्वर्णयोर्द्वयोः वैश्यस्यवर्णेचैकस्मिन्षडेतेऽपसदाःस्मृताः १० क्षत्रियाद्विप्रकन्यायांसूतोभवतिजातितः वैश्यान्मागधवैदेहौराजविप्रांगनासुतौ ११

द्यतेयतःसंज्ञांतरेणपारशवश्चोच्यते ८ क्षत्रियादिति क्षत्रियाच्छूद्रकन्यायामूढायांक्रूरचेष्टःक्रूरकर्मरतिश्च क्षत्रशूद्रस्वभावउग्राख्यःपुत्रोजायते ९ विप्रस्येति ब्राह्मणस्यक्षत्रियादित्रयस्त्रीषुक्षत्रियस्यवैश्यादिवर्णस्त्रियोःवैश्यस्यचशूद्रायांवर्णत्रयाणांएतेषुषट्पुत्राःसवर्णपुत्रकार्यापेक्षयाअपसदाअवसन्नानिकृष्टाःस्युः एवमनुलोमानुक्त्वा प्रतिलोमानाह १० क्षत्रियादिति अत्रविवाहासंभवात्कन्याग्रहणंस्त्रीमात्रप्रदर्शनार्थम् ब्राह्मण्यांक्षत्रियाज्जातस्यसूतनामासंजायते वैश्याद्यथाक्रमंक्षत्रियाब्राह्मण्योर्मागधवैदेहाख्यौपुत्रौभवतः एषांचवृत्तयोमनुनैवाभिधास्यंते ११

शूद्रादिति शूद्राद्वैश्याक्षत्रियाब्राह्मणीषुक्रमेणायोगवः क्षत्तानृणामधमश्चांडालश्चवर्णानांसंकरोयेषुजनयितव्येषु तेवर्णसंकराजा यंते १२ एकांतरइति एकांतरेपिवर्णेब्राह्मणाद्वैश्यकन्यायामंबष्ठः क्षत्रियाच्छूद्रकन्यायामुग्रः एतावानुलोम्येनयथास्पर्शाद्यर्हौतद्वदेकां तरेप्रतिलोमजननेपिशूद्रात्क्षत्रियायांक्षत्तावैश्याद्ब्राह्मण्यांवैदेहः एतावपिस्पर्शादियोग्यौविज्ञेयौ एकांतरोत्पन्नयोःस्पर्शाद्यनुज्ञाना दनंतरोत्पन्नानांस्पर्शादियोग्यत्वंसिद्धंभवतिअतश्चांडालएवैकःप्रतिलोमतःस्पर्शादौ निरस्यते १३ पुत्राइति मातुर्दोषादितित्रूपन्य सेत् अनंतरग्रहणमनंतरवच्चैकांतरद्व्यंतरजातिस्त्रीषु आनुलोम्येनउत्पन्नाः पूर्वमुक्ताः पुत्रास्तान् हीनजातिमातृदोषान्मातृदोष व्यपदेश्यानाचक्षते मातृपितृव्यतिरिक्तसंकीर्णजातित्वेपि एषांमातृजातिव्यपदेशकथनंमातृजातिसंस्कारादिधर्मप्राप्त्यर्थम् १४

शूद्रादायोगवः क्षत्ताचंडालश्चाधमोनृणाम् वैश्यराजन्यविप्रासुजायंतेवर्णसंकराः १२ एकांतरेत्वा नुलोम्यादंबष्ठोग्रौयथास्मृतौ क्षत्तृवैदेहकौतद्वत्प्रातिलोम्येपिजन्मनि १३ पुत्रायेनंतरस्त्रीजाः क्रमे णोक्ताद्विजन्मनाम् ताननंतरनाम्नस्तुमातृदोषात्प्रचक्षते १४ ब्राह्मणादुग्रकन्यायामावृतोनामजाय ते आभीरोंबष्ठकन्यायामायोगव्यांतुधिग्वणः १५ आयोगवश्चक्षत्ताचचंडालश्चाधमोनृणाम् प्राति लोम्येनजायंतेशूद्रादपसदास्त्रयः १६ वैश्यान्मागधवैदेहौक्षत्रियात्सूतएवतु प्रतीपमेतेजायंतेपरेप्यप सदास्त्रयः १७ जातोनिषादाच्छूद्रायांजात्याभवतिपुक्कसः शूद्राज्जातोनिषाद्यांतुसवैकुक्कुटकःस्मृ तः १८

ब्राह्मणादिति क्षत्रियेणशूद्रायामुत्पन्नाउग्राउग्राचासौकन्याचेतिउग्रकन्यातस्यांब्राह्मणादावृतनामाजायते ब्राह्मणेन वैश्यायामुत्पन्नाअंबष्ठातस्यांब्राह्मणादाभीरस्त्वोजायते शूद्रेणवैश्यायामुत्पन्नाआयोगवीतस्यांब्राह्मणाद्धिग्वणोजायते १५ आयोगेति आयोगवःक्षत्ताचंडालश्चमनुष्याणामधमइत्येतेत्रयोव्युत्क्रमेणवैश्याक्षत्रियाब्राह्मणीषुपुत्रकार्यादपगतास्त्रयःशू द्राज्जायंते पुत्रकार्याक्षमत्वप्रतिपादनार्थमुक्तानामप्येषांपुनर्वचनंएवमुत्तरश्लोकेउक्तानामपि १६ वैश्यादिति क्षत्रियाब्राह्मण्योर्मा गधवैदेहौक्षत्रियाद्ब्राह्मण्यांसूतइत्येवंप्रातिलोम्येनापरेपित्रयःपुत्रकार्यादपजायंते १७ जातइति निषादाच्छूद्रायांजातोजात्या-

पुक्कसो भवति निषाद्यां पुनः शूद्राद्यो जातः स कुक्कुटक नामा स्मृतः १८ क्षत्तुरिति शूद्रेण वैश्यायां जातः क्षत्ता क्षत्रियेण शूद्रायां जाता उग्रा तेन तस्यां जातः श्वपाक इत्युच्यते वैदेहकेन अंबष्ठ्यां ब्राह्मणेन वैश्या जातायां वेण इति कथ्यते. १९ द्विजातय इति द्विजातयः सवर्णासु स्त्रीषु यान् पुत्रानुत्पादयंते ते चेदुपनयनाख्य व्रत हीना भवंति तदा तान् कृतोपनयनान् व्रात्या इत्येतया संज्ञया व्यपदिशेद् तद् ऊर्ध्वं त्रयोप्येते इत्युक्तमपि व्रात्य लक्षणं प्रतिलोमज पुत्रवदस्यापि उपकाराक्षम पुत्रत्व प्रदर्शनार्थमस्मिन् संकीर्णप्रकरणे अनूदितम् २० व्रात्यादिति व्रात्याद् ब्राह्मणात्सवर्णास्वित्यनुवृत्तेः ब्राह्मण्यां पापस्वभावो भूर्ज्जकंटको जायते तथा आवंत्य वाटधान पुष्पध शैखा जायंते एकस्यैवैतानि देशभेद प्रसिद्धानि नामानि २१ झल्लो मल्लश्चेति क्षत्रियाद्व्रात्यात्सवर्णायां झल्ल मल्ल निच्छिवि नट करण खस द्र-

क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते वैदेहकेन त्वंबष्ठ्यामुत्पन्नो वेण उच्यते १९ द्विजातयः सवर्णासु जनयंत्यव्रतांस्तु यान् तान्सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत् २० व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकंटकः आवंत्य वाटधानौ च पुष्पधः शैख एव च २१ झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च नटश्च करणश्चैव खसो द्रविड एव च २२ वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च कारुषश्च विजन्मा च मैत्रः सात्वत एव च २३ व्यभिचारेण वर्णानामवेद्यावेदनेन च स्वकर्मणां च त्यागेन जायंते वर्णसंकराः २४ संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः अन्योन्यव्यतिषक्ताश्च तान्प्रवक्ष्याम्यशेषतः २५ सूतो वैदेहकश्चैव चंडालश्च नराधमः मागधः क्षत्तृजातिश्च तथाऽयोगव एव च २६

विडाख्या जायंते एतान्यप्येकस्यैव नामानि २२ वैश्यात्विति वैश्यात्पुनर्व्रात्यात्सवर्णायां सुधन्वाचार्य कारुष विजन्म मैत्र सात्वताख्या जायंते एकस्यैवैतान्यपि नामानि २३ व्यभिचारेणेति ब्राह्मणादि वर्णानामन्योन्य स्त्रीगमनेन सगोत्रादि विवाहेन उपनयन रूप स्वकर्म त्यागेन वर्णसंकरो नाम जायते अतो युक्तमस्मिन्प्रकरणे व्रात्यानामभिधानम् २४ संकीर्णमिति ये संकीर्णयोनयः प्रतिलोमैरनुलोमैश्च परस्पर संबंधात् जायंते तान् विशेषेण वक्ष्यामि २५ सूत इति एते यदुक्त लक्षणाः सूतादयः उत्तरार्थमनूद्यंते २६ ७ ७

एतेइति एतेपूर्वोक्ताःषट्प्रतिलोमजाःस्वयोनिषुस्रुतोत्पत्तिंकुर्वंति यथाशूद्रेणवैश्यायांजातआयोगवः आयोगव्यामेवमातृजातौ वैश्यायांप्रवरासुक्षत्रियाब्राह्मणीयोनिषुचकारादपकृष्टायामपिशूद्रजातौसर्वत्रसदृशान्वर्णान्जनयंतिसदृशत्वंचनपित्रपेक्ष याकिंतुमातृजात्यादिषुचातुर्वर्ण्यस्त्रीष्वेवापत्तृतोअधिकगर्हितपुत्रोत्पत्तेर्वक्ष्यमाणत्वात्तत्सदृशान्पितृतोऽधिकगर्हितान्स्व- जातावपिजनयंतीत्येतावदेवाप्रसक्तत्वात् अनेनविधीयते किंतुजघन्यवर्णेनोत्तमवर्णस्त्रीषुजनितत्वात्क्रियादुष्टाआयोगवाद्याः प्रतिलोमजाःक्रियादुष्टाभ्यांचमातापितृभ्यांतुल्याभ्यामपिजनितेआयोगवादिपुत्रेब्रह्महंत्रनंतरजनितोब्रह्महंतृमातापितृजनितवत् अधिकदुष्टएवन्याय्यःसुस्थब्राह्मणादिजातीयेनशास्त्रब्राह्मण्यादिसजातीयायांजनितःनतुक्रियादुष्टोभयजनितोपि २७ यथेति य- थात्रयाणांवर्णानांक्षत्रियवैश्यशूद्राणांमध्याद्द्वयोर्वर्णयोःक्षत्रियवैश्ययोर्गमनेब्राह्मणस्यानुलोम्याद्द्विजउत्पद्यतेसजातीयायांच

एतेषट्सदृशान्वर्णान्जनयंतिस्वयोनिषु मातृजात्यांप्रसूयंतेप्रवरासुचयोनिषु २७ यथात्रयाणां वर्णानांद्वयोरात्मास्यजायते आनंतर्यात्स्वयोन्यांतुतथाबाह्येष्वपिक्रमात् २८ तेचापिबाह्यान्सुब हूंस्ततोप्यधिकदूषितान् परस्परस्यदारेषुजनयंतिविगर्हितान् २९ यथैवशूद्रोब्राह्मण्यांबाह्यंजं तुंप्रसूयते तथाबाह्यतरंबाह्यश्चातुर्वर्ण्येप्रसूयते ३०

द्विजोजायते एवंबाह्येष्वपिक्षत्रियवैश्याभ्यांवैश्यक्षत्रियाभ्यांक्षत्रि याब्राह्मण्योर्जातेषूत्कर्षापकर्षोभवतिशूद्रजातप्रतिलोमापेक्षयाद्विजाद्युत्पन्नप्रतिलोमप्रशास्त्यार्थमिदम् मेधातिथिस्तुद्विजत्वप्रति पादकमेतत्एषांवचनमुपनयनार्थमित्याह तन्नप्रतिलोमजास्तुधर्महीनाइतिगौतमेनसंस्कारनिषेधात् २८ तेचापीति तेचायोग- वादयःषट्परस्परजातीयासुभार्यासुसुबहून्आनुलोम्येप्यधिकदुष्टान्सत्क्रियाबहिर्भूतान्जनयंति तद्यथा आयोगवःक्षत्तृजा- यायामात्मनोहीनतरंजनयति तथाक्षत्ताप्यायोगव्यामात्मनोहीनतरमुत्पादयति एवमन्येष्वपिप्रतिलोमेषुद्रष्टव्यम् २९ यथैवेति य थाब्राह्मण्यांशूद्रोऽपकृष्टंचंडालाख्यंप्राणिनंप्रसूयतेजनयतिएवंबाह्यश्चंडालादिवर्णचतुष्टयेचंडालादिभ्योप्यपकृष्टंपुत्रंप्रसूयते

एतदेवविस्तारयति ३० प्रतिकूलमिति अत्रमेधातिथिगोविंदराजयोर्व्याख्यानंचातुर्वर्ण्यबाह्यश्चंडालक्षत्रायोगवाः शूद्रप्रभवा
स्त्रयश्चातुर्वर्ण्येगच्छंतआत्मनोहीनतरान्परस्परापेक्षयाप्रकृष्टोत्कृष्टपंचदशप्रभवत्वात्वर्णान्संपादयंति तद्यथाचंडालःशूद्रा
यामात्मनोहीनतरंवैश्याक्षत्रियाब्राह्मणीजातेष्वउत्कृष्टंजनयतिएवंवैश्यायांततोप्यपसदंक्षत्रियायांब्राह्मणीजातादुत्कृष्टंज
नयतिततोपसदंक्षत्रियायांब्राह्मणीजातादुत्कृष्टंततोपिहीनंब्राह्मण्यांजनयतिएवंक्षत्रायोगवावपिचातुर्वर्ण्येचतुरश्चतुरोजन
यतइत्येतेशूद्रेतरेभ्यश्चंडालक्षत्रायोगवेभ्यःचातुर्वर्ण्यद्वादशप्रभेदाउत्पद्यंतेआत्मनाचचंडालक्षत्रायोगवास्त्रयइत्येवंशूद्रप्र
भवाःपंचदशउत्पद्यंतेएवंवैश्यक्षत्रियब्राह्मणप्रभवाःप्रत्येकंपंचदशासंभवंतिएवंषष्ठिश्चातुर्वर्ण्येनसहचतुःषष्ठिप्रभेदाभवंतितेतु
परस्परगमनेननानावर्णान्जनयंतीति नैतन्मनोहरंपूर्वश्लोकेषण्णांप्रतिलोमजानांप्रकृतत्वात्तद्विस्तारकथनत्वाच्चास्यअत्रापिश्लो
केप्रतिकूलंवर्त्तमानाइत्यपादानात्प्रतिलोममात्रविषयोयंश्लोकोनानुलोमजविषयः तथाचवैश्यक्षत्रियब्राह्मणप्रभवाश्चपंचदश

प्रतिकूलंवर्त्तमानाबाह्याबाह्यतरान्पुनः हीनाहीनान्प्रसूयंतेवर्णान्पंचदशैवतु ३१

संभवंस्येवंषष्ठिरितिनसंगच्छतेनचसंभवमात्रेणैवइयंषष्ठिरुक्तानदुष्टतयाशूद्रप्रभवायोगवक्षत्तृचंडालाएवचातुर्वर्ण्यसंतानोपेताः
पंचदशागर्हिताइतिवाच्यंयतोवैश्यक्षत्रियाभ्यामपिप्रतिलोमतउत्पादितानांत्रयाणांहीनत्वात्तैरपिचातुर्वर्ण्येजनितानांगर्हितत्वतथा
बाह्यतरंबाह्यश्चातुर्वर्ण्येप्रसूयतइतिमनुनैवानंतरंस्फुटमुक्तत्वात् सुताभ्यामपितथैवव्याख्यातत्वात्चातुर्वर्ण्येनसहचतुःषष्ठिरिति
सर्वनैवप्रकृतम् नहिसंकीर्णप्रकरणेशुद्धचातुर्वर्ण्यगणनोचिताकिंचवर्णान्पंचदशप्रसूयंतेइतिश्रूयमाणद्वादशजनानुक्तातेचात्म
नाचंडालक्षत्रायोगवास्त्रयइत्येवंशूद्रप्रभवाःपंचदशेतिनयुक्तम् अपिचात्मनासहपंचदशसंपादयंतीतिनसंगच्छतेअसंपाद्यद्वाद
शात्मनःपंचदशासंपद्यंतइतिचव्याख्यानेऽध्याहारएवदोषः तस्मादेवंव्याख्यायतेप्रतिकूलंवर्त्तमानाःप्रतिलोमजाःबाह्याद्विजप्रति
लोमजेप्योनिकृष्टत्वात् शूद्रप्रभवायोगवक्षत्तृचंडालास्त्रयःपूर्वश्लोकादनुवर्त्तमानेचातुर्वर्ण्येस्वजातौएतेषट्सहशानित्यत्रस-

आत्कृतन्मस्य पितृतोगर्हितत्वाभिधानात् आत्मापेक्षया बाह्यतरान् प्रत्येकं पंचदशपुत्रान्जनयंति तद्यथा आयोगवश्चातुर्वर्ण्य-
स्त्रीषु चायोगव्यां आत्मनोनिकृष्टान् पंचपुत्रान्जनयंति एवं क्षतृचांडालावपि प्रत्येकं पंचपुत्रान्जनयत इत्थं बाह्यास्त्रयः पंचदशपुत्रान्
जनयंति तथानुलोमजेभ्यो हीना वैश्यक्षत्रियप्रभवा मागधवैदेहसूता आत्मापेक्षया हीनान् पूर्ववच्चातुर्वर्ण्यस्त्रीषु सजातौ प्रत्येकं पंच
पुत्रान्जनयंतो हीना अपि त्रयः पंचदशैव पुत्रान्जनयंति एवं त्रिंशदेते भवंति अथवा बाह्यशब्दो हीनशब्दश्च प्रकृते व प्रतिलोमजाना
ह अत्र बाह्याश्चंडालक्षत्रायोगववैदेहमागधसूताः षट् यथोक्तमुत्कर्षान् प्रातिलोम्येन स्त्रीषु वर्त्तमाना बाह्यतरान् पंचदशैव पुत्रा
न्जनयंति तद्यथा चंडालः क्षत्रियादिषु पंचसु स्त्रीषु क्षत्रायोगव्यादिषु चतसृषु आयोगवो वैदेह्यादितिसृषु वैदेहो मागधीसू
त्योः मागधः सूत्यां सूतस्तु प्रतिलोमाभावात् प्रातिलोम्येन पंचदशैव पुत्रान्जनयति पुनरिति निर्देशात् हीनाः सूतादयश्चांडालांताः

प्रसाधनोपचारज्ञमदासं दासजीवनम् सैरिंध्रं वागुरावृत्तिं सूते दस्युरयोगवे ३२ मैत्रेयकं तु वैदेहो माधूकं संप्रसूयते नॄन्प्रशंसत्यजस्रं यो घंटाताडोरुणोदये ३३ निषादो मार्गवं सूते दासं नौकर्मजीविनम् कैवर्त्तमिति यं प्राहुरार्यावर्त्तनिवासिनः ३४ मृतवस्त्रभृत्स्वनारीषु गर्हितान्नाशनासु च भवंत्यायोगवीष्वेते जातिहीनाः पृथक्त्रयः ३५

षट् यथोत्तरमपकर्षात् आनुलोम्येनापि प्रतिलोमोक्तरीत्या स्वापेक्षया हीनान्
पंचदशैव पुत्रान्जनयंति एवं त्रिंशदेते भवंति ३१ प्रसाधनेति केशचरणादिप्रसाधनांगसंवाहनादिदासकर्मजीवनं पाशबंधनेन मृ
गादिवधाख्यवृत्त्यंतरजीवनं सैरिंध्रनामानं मुखबाहूरुपज्जानामिति श्लोके वक्ष्यमाणो दस्युरायोगवस्त्रीजातो शूद्रेण वैश्यायामुत्प-
न्नायां जनयति तत्त्वास्य मृगादिमारणं देवपित्रौषधार्थं चेदितव्यम् ३२ मैत्रेयेति वैश्याद्ब्राह्मण्यां जातो वैदेहः प्रकृतायामायोगव्यां मैत्रेया
ख्यं मधुरभाषिणं जनयति यः प्रातर्घंटामाहत्य राजप्रभृतीन्सततं स्तुत्यर्थं स्तौति ३३ निषाद इति ब्राह्मणेन शूद्रायां जातो निषादः प्रकृ
तायामायोगव्यां मार्गवं दासापरनामानं नौव्यवहारजीविनं जनयति आर्यावर्त्तदेशवासिनः कैवर्त्तशब्देन कीर्त्तयंति ३४ मृतेति सैरिं
ध्रमैत्रेयमार्गवा हीनजातीयास्त्रयः मृतवस्त्रपरिधानाः क्रूराः सूच्छिष्टादिभक्तान्नाशनायोगवीषु पितृभेदाद्भिन्ना भवंति ३५ ६७

एतदेवविस्तारयति ३० प्रतिकूलमिति अत्रमेधातिथिगोविंदराजयोर्व्याख्यानंचातुर्वर्ण्यबाह्यश्चंडालक्षत्रायोगवाःशूद्रप्रभवा स्त्रयश्चातुर्वर्ण्येगच्छंतआत्मनोहीनतरान्परस्परापेक्षयापकृष्टोत्कृष्टपंचदशप्रभवत्वान्वर्णान्संपादयंति तद्यथाचंडालःशूद्रा यामात्मनोहीनतरंवैश्याक्षत्रियाब्राह्मणीजातेष्वउत्कृष्टंजनयतिएवंवैश्यायांततोप्यपसदंक्षत्रियायांब्राह्मणीजाताद्युत्कृष्टंज नयतिततोपसदंक्षत्रियायांब्राह्मणीजाताद्युत्कृष्टंततोपिहीनंब्राह्मण्यांजनयतिएवंक्षत्रायोगवावपिचातुर्वर्ण्येचतुरश्चतुरोऽजन यतइत्येतेशूद्रेतरेभ्यश्चंडालक्षत्रायोगवेभ्यःचातुर्वर्ण्यद्वादशप्रभेदाउत्पद्यंतेआत्मनाचचंडालक्षत्रायोगवास्त्रयइत्येवंशूद्रप्र भवाःपंचदशउत्पद्यंतेएवंवैश्यक्षत्रियब्राह्मणप्रभवाःप्रत्येकंपंचदशसंभवंतिएवंषष्ठिश्चातुर्वर्ण्येनसहचतुःषष्ठिप्रभेदाभवंतितेतु परस्परगमनेननानावर्णान्जनयंतीति नैतन्मनोहरंपूर्वश्लोकेषण्णांप्रतिलोमजानांप्रकृतत्वात्तद्विस्तारकथनत्वाच्चास्य अत्रापिश्लो केप्रतिकूलंवर्त्तमानाइत्कपादानात्प्रतिलोममात्रविषयोयंश्लोकोनानुलोमजविषयः तथाचवैश्यक्षत्रियब्राह्मणप्रभवाश्चपंचदश

प्रतिकूलंवर्त्तमानाबाह्याबाह्यतरान्पुनः हीनाहीनान्प्रसूयंतेवर्णान्पंचदशैवतु ३१

संभवंस्त्येवंषष्ठिरितिनसंगच्छतेनचसंभवमात्रेणैवइयंषष्ठिरुक्तानदुष्टतयाशूद्रप्रभवायोगवक्षत्तृचंडालाएवचातुर्वर्ण्यसंतानोपेताः पंचदशगर्हिताइतिवाच्यंयतोवैश्यक्षत्रियाभ्यामपिप्रतिलोमतउत्पादितानांत्रयाणांहीनत्वात्तैरपिचातुर्वर्ण्येजनितानांगर्हितत्वस्यतथा बाह्यतरंबाह्यश्चातुर्वर्ण्येप्रसूयतइतिमनुनैवानंतरंस्फुटमुक्तत्वात् युवाभ्यामपितथैवव्याख्यातत्वात्चातुर्वर्ण्येनसहचतुःषष्ठिरिति सर्वनैवप्रकृतम् नहिसंकीर्णप्रकरणेशूद्रचातुर्वर्ण्यगणनोचिताकिंचवर्णान्पंचदशप्रसूयंतेइतिश्रूयमाणद्वादशजनानुक्तातेचात्म नाचंडालक्षत्रायोगवास्त्रयइत्येवंशूद्रप्रभवाःपंचदशेतिनयुक्तम् अपिचात्मनासहपंचदशसंपादयंतीतिनसंगच्छतेअसंपाद्यद्वाद शात्मनःपंचदशसंपद्यंतइतिचव्याख्यानेऽध्याहारएवदोषः तस्मादेवंव्याख्यायतेप्रतिकूलंवर्त्तमानाःप्रतिलोमजाःबाह्याद्विजप्रति लोमजेभ्योनिकृष्टत्वात् शूद्रप्रभवायोगवक्षत्तृचंडालास्त्रयःपूर्वश्लोकादनुवर्त्तमानेचातुर्वर्ण्येस्वजातौएतेषट्सदृशानित्यत्रस-

तादयः प्रतिलोमजास्ते शूद्रधर्माणो नैषामुपनयनमस्ति ४१ तपइति सजातिजानंतरजास्तपःप्रभावेण विश्वामित्रवद्बीजप्रभावेण ऋष्यशृंगादिवत्तत्रेतादौ मनुष्यमध्ये जात्युत्कर्षं गच्छंति अपकर्षं च वक्ष्यमाणहेतुना यांति ४२ शनकैरिति इमा वक्ष्यमाणाः क्षत्रियजातयः उपनयनादिक्रियालोपेन ब्राह्मणानां च याजनाध्यापनप्रायश्चित्ताद्यर्थदर्शनाभावेन शनैःशनैर्लोके शूद्रतां प्राप्ताः ४३ पौंड्रेति पौंड्रादिदेशोद्भवाः क्षत्रियाः संतः क्रियालोपादिना शूद्रत्वमापन्नाः ४४ मुखेति ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना या जातयो बाह्या जाताः म्लेच्छभाषायुक्ता आर्यभाषोपेता वा ते दस्यवः सर्वे स्मृताः ४५ येइति ये द्विजानामानुलोम्येन उत्पन्नाः षडे तेऽपसदाः स्मृता इति तेषामपि पितृतो जघन्यत्वेनापसदशब्देन भागाभिधानादपध्वंसजास्ते द्विजानामुपकारकैरेव निंदितैर्वक्ष्यमाणैः

तपोबीजप्रभावैस्तु ते गच्छंति युगे युगे उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ४२ शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ४३ पौंड्रकाश्चौड्रद्रविडाः कांबोजा यवनाः शकाः पारदापल्हवाश्चीनाः किराता दरदाः खशाः ४४ मुखबाहूरुपज्जानां या लोके जातयो बहिः म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ४५ ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः ते निंदितैर्वर्तयेयुर्द्विजानामेव कर्मभिः ४६ सूतानामश्वसारथ्यमंबष्ठानां चिकित्सनम् वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ४७ मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च मेदांध्रचुंचुमद्गूनामारण्यपशुहिंसनम् ४८ क्षत्त्रुग्रपुक्कसानां तु बिलौकोवधबंधनम् धिग्वणानां चर्मकार्यं वेणानां भांडवादनम् ४९

कर्माभिजीवेयुः ४६ सूतेति सूतानामश्वदमनयोजनादिरथसारथ्यं जीवनार्थं अंबष्ठानामाकायशल्यादिचिकित्सा वैदेहकानामंतःपुररक्षा मागधानां स्थलपथवणिज्या ४७ मत्स्येति निषादानामुक्तानां मत्स्यवधः आयोगवस्य काष्ठतक्षणं मेदांध्रचुंचुमद्गूनां आरण्यपशुमारणम् चुंचुमद्गुश्च वैदेहकबंदिस्त्रियां ब्राह्मणेन जातौ बौधायनेनोक्तौ बंदी त्वौबंदी स्त्री च क्षत्रियेण शूद्रायां जातौ सोग्रैव ग्राह्या ४८ क्षत्त्रुग्रेति क्षत्त्रादीनां बिलनिवासिगोधादिवधबंधनं धिग्वणानां तद्विक्रयजीवनं च धिग्वणानामित्यौशनसदर्शनात् अतएवकारस

कारावरइति वैदेह्यामेवजायतइतिउत्तरत्रश्रवणात् अत्राप्याशंकायांसैवसंबध्यतेनिषादाद्वैदेह्यांजातःकारावराख्यश्चर्मच्छेदन कारीजायतेअतएवऔशनसेकारावाराणांचर्मच्छेदनाचरणमेववृत्तिस्तेनोक्तम् वैदेहकसेरिंध्रमेदाख्यौग्रामबहिर्वासिनोअंत रानिर्देशाद्वैदेहकेनचवैदेह्यांजातस्यगर्हितवैदेहकस्याप्युचितत्वात् कारावरनिषादजात्योश्चात्रश्लोकेसन्निधानात्कारावरनि षादस्त्रियोरेवक्रमेणजायते ३६ चंडालादिति वैदेह्यांचंडालात्पांडुसोपाकाख्योवेणुव्यवहारजीवीजायतेनिषादेनचवैदेह्या मेवाहिंडिकाख्योजायतेअस्यचबंधनस्थानेषुबाह्यसंरक्षणादाहिंडिकानामित्यौशनसेवृत्तिरित्युक्ता समानमातापितृकत्वेपिका रावराहिंडिकयोर्वृत्तिभेदसंश्रवणात्व्यपदेशभेदः ३७ चंडालेनेति शूद्रायान्निषादेनजातायांपुक्कस्यांचंडालेनजातःसोपाका ख्यःपापात्मसर्वदासाधुभिर्निंदितोमारणोचितापराधस्यमूलभूतस्यव्यसनंराजादेशेनमारणंतेनवृत्तिर्यस्यसजायते ३८ निष

कारावरोनिषादात्तुचर्मकारःप्रसूयते वैदेहिकादंध्रमेदौबहिर्ग्रामप्रतिश्रयौ ३६ चंडालात्पांडु
सोपाकस्त्वक्सारव्यवहारवान् आहिंडिकोनिषादेनवैदेह्यामेवजायते ३७ चंडालेनतुसोपाको
मूलव्यसनवृत्तिमान् पुक्कस्यांजायतेपापःसदासज्जनगर्हितः ३८ निषादस्त्रीतुचंडालात्पुत्रमं
त्यावसायिनम् श्मशानगोचरंसूतेबाह्यानामपिगर्हितम् ३९ संकरेजातयस्त्वेताःपितृमातृप्रद-
र्शिताः प्रच्छन्नावाप्रकाशावावेदितव्याःस्वकर्मभिः ४० स्वजातिजानंतरजाःषट्सुताद्विजधर्मिणः
शूद्राणांतुसधर्माणःसर्वेऽपध्वंसजाःस्मृताः ४१

निषादीचंडालात्अंत्यावसायिसंज्ञंचंडालादिभ्योपिदुष्टतमंश्मशान वासिनंतद्वृत्तिंचजनयति ३९ संकरइति वर्णसंकरविषयेएताजातयोयस्येयंजनयित्रीअयंजनकःसएवंजातीयःपितृमातृकथनपूर्व कंदर्शिताः तथागूढाःप्रकटावातज्जात्कादितकर्मानुष्ठानेनज्ञातव्याः ४० स्वजातीति द्विजातिसमानजातीयासुजाताः तथानुलो म्येनोत्पन्नाःब्राह्मणेनक्षत्रियावैश्ययोःक्षत्रियेणवैश्यायामेवंषट्पुत्राद्विजधर्मिणउपनेयाः ताननंतरजास्त्वितियदुक्तंतत्जा तिव्यपदेशार्थंसंस्कारार्थमितिकस्यचिद्भ्रमःस्यात् अतएवाद्विजातिसंस्कारार्थमिदंवचनम् येपुनरन्येद्विजात्युत्पन्नाअपिसू-

तादपः प्रतिलोमजास्तेऽन्त्यद्धर्मिणोनैषामुपनयनमस्ति ४१ तपइति सजातिजानंतरजास्तपःप्रभावेण विश्वामित्रवद्बीजप्रभावे
णऋष्यशृंगादिवत्कृतत्रेतादौ मनुष्यमध्ये जात्युत्कर्षं गच्छंति अपकर्षं च वक्ष्यमाणहेतुना यांति ४२ शनकैरिति इमा वक्ष्यमाणाः
क्षत्रियजातयः उपनयनादिक्रियालोपेन ब्राह्मणानां च याजनाध्यापनप्रायश्चित्ताद्यर्थदर्शनाभावेन शनैः शनैर्लोके शूद्रतां प्राप्ताः ४३
पौंड्रेति पौंड्रादिदेशोद्भवाः क्षत्रियाः संतः क्रियालोपादिना शूद्रत्वमापन्नाः ४४ मुखेति ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादि
नाया जातयो वाह्या जाता म्लेच्छभाषायुक्ता आर्यभाषोपेता वा ते दस्यवः सर्वे स्मृताः ४५ येइति ये द्विजानामानुलोम्येन उत्पन्नाः षडे
तेऽपसदाः स्मृता इति तेषामपि पितृतो जघन्यत्वेनापसदशब्देन प्रागभिधानादपध्वंसजास्ते द्विजात्युपकारकैरेव निंदितैर्वक्ष्यमाणैः

तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ४२ शनकैस्तु क्रियालो
पादिमाः क्षत्रियजातयः वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ४३ पौंड्रकाश्चौड्रद्रविडाः कांबोजा यव
नाः शकाः पारदापह्लवाश्चीनाः किराता दरदाः खशाः ४४ मुखबाहूरुपज्जानां या लोके जातयो बहिः म्ले
च्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ४५ ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः ते निंदितैर्वर्तये
युर्द्विजानामेव कर्मभिः ४६ सूतानामश्वसारथ्यमंबष्ठानां चिकित्सनम् वैदेहकानां स्त्रीकार्यं मागधानां
वणिक्पथः ४७ मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च मेदांध्रचुंचुमद्गूनामारण्यपशुहिंसनम्
४८ क्षत्त्रुग्रपुक्कसानां तु बिलौकोवधबंधनम् धिग्वणानां चर्मकार्यं वेणानां भांडवादनम् ४९

कर्मभिर्जीवे
युः ४६ सूतेति सूतानामश्वदमनयोजनादिरथसारथ्यं जीवनार्थं अंबष्ठानामौषधशल्यादिचिकित्सा वैदेहकानामंतःपुरं मागधानां
स्थलपथवणिज्या ४७ मत्स्येति निषादानामुक्तानां मत्स्यवधः आयोगवस्य काष्ठतक्षणं मेदांध्रचुंचुमद्गूनां आरण्यपशुमारणम्
चुंचुमद्गू वैदेहकाद्विस्त्रियो ब्राह्मणेन जातौ बोधायनेनोक्तौ वांद्ध्यो वंदीस्त्री च क्षत्रियेण शूद्रायां जातो सोऽग्र्येव ग्राह्या ४८ क्ष-
त्रुग्रेति क्षत्रादीनां बिलनिवासिगोधादिवधबंधनं धिग्वणानां तद्विक्रयजीवनं च धिग्वणानामित्यौशनसदर्शनात् अतएवकारस्त

रेभ्यः एषांवृत्तिच्छेदः वेणानांकांस्यमुरजादिवाद्यभांडवादनम् ४९ चैत्येति ग्रामादिसमीपेख्यातवृक्षश्चैत्यद्रुमः तन्मूलेष्वश
नपर्वतवनसमीपेषुचासीमकाशकाःस्वकर्मभिर्जीवंतो वसेयुः ५० चंडालेति वासांसीति प्रतिश्रयोनिवासः चांडालश्वपाकानांतु
ग्रामाद्बहिर्निवासःस्यात् पात्ररहिताःकर्त्तव्यायत्रलोहादिपात्रेतैर्भुक्तंतत्संस्कृत्यापिनव्यवहर्त्तव्यंधनंचैषांकुक्कुरखरंनवृषभादि
नांसांसिचशववस्त्राणिभिन्नशरावादिषुचभोजनंलोहवलयादिनालंकरणंसर्वदाचभ्रमणशीलत्वम् ५१ ५२ नतैरिति ध
र्मानुष्ठानसमयेचंडालश्वपाकैःसहदर्शनादिव्यवहारंनकुर्यात् तेषांचऋणदानग्रहणादिव्यवहारं विवाहश्चसमानजातीयैःस-
हान्योन्यंस्यात् ५३ अन्नमेषामिति अन्नमेषांपरायत्तंकार्यंसाक्षादेभ्योनदेयंकिंतुभृत्यैर्भिन्नपात्रेदातव्यम् तेचरात्रौग्रामनगरयो

चैत्यद्रुमश्मशानेषुशैलेषूपवनेषुच वसेयुरेतेविज्ञातावर्त्तयंतःस्वकर्मभिः ५० चंडालश्वपचानांतु
बहिर्ग्रामात्प्रतिश्रयः अपपात्राश्चकर्त्तव्याधनमेषांश्वगर्दभम् ५१ वासांसिमृतचेलानिभिन्नभांडेषु
भोजनम् कार्ष्णायसमलंकारःपरिव्रज्याचनित्यशः ५२ नतैःसमयमन्विच्छेत्पुरुषोधर्ममाचरन् व्यव
हारोमिथस्तेषांविवाहःसदृशैःसह ५३ अन्नमेषांपराधीनंदेयंस्याद्भिन्नभाजने रात्रौनविचरेयुस्ते-
ग्रामेषुनगरेषुच ५४ दिवाचरेयुःकार्य्यार्थंचिह्निताराजशासनैः अबांधवंशवंचैवनिर्हरेयुरितिस्थि-
तिः ५५ वध्यांश्चहन्युःसततंयथाशास्त्रंनृपाज्ञया वध्यवासांसिगृण्हीयुःशय्याश्चाभरणानिच ५६
वर्णापेतमविज्ञातंनरंकलुषयोनिजम् आर्यरूपमिवानार्यंकर्मभिःस्वैर्विभावयेत् ५७

र्नपर्यटेयुः ५४ दिवेति दिवाग्रामादौक्रयविक्रयार्थंराजाज्ञयाचिन्हांकिताःसंतःपर्यटेयुः अनाथंचशवंग्रामान्निर्हरेयुरितिशा-
स्त्रमर्यादा ५५ वध्यांश्चेति वध्यांश्चशास्त्रानतिक्रमेणशूलारोपणादिनासर्वदाराजाज्ञयाहन्युः तद्वस्त्रशय्यालंकारांश्चगृण्हीयुः
५६ वर्णेति वर्णत्वादपेतंमनुष्यंसंकरजातंलोकतस्तथात्वेनाविज्ञातंअतएवार्यसदृशंवस्तुतःपुनरनार्य्यंनिंदितानुरूपाभिश्चे-
ष्टाभिर्वक्ष्यमाणाभिर्निश्चिनुयात् ५७ अनार्यतेति निष्ठुरत्वपरुषभाषित्वहिंस्रत्वविहिताऽनुष्ठानत्वानिसंकरजातित्वंप्रसि

नृलोकेप्रकटीकुर्वंतियस्मात् ५८ पित्र्यंवेति असौसंकरजातोदुष्टयोनिःपितृसंबंधिदुष्टस्वभावंसंसेवतेमातृसंबंधिवोभयसंबं-
धिवानकदाचिदसावात्मकारणंगोपयितुंशक्नोति ५९ कुलेति महाकुलप्रसूतस्यापियस्ययोनिसंकरःप्रच्छन्नोभवतिसमनुष्योजन
कत्वभावंस्तोकंप्रचुरंवासेवतएव ६० यत्रेति यस्मिन्राष्ट्रेएतेवर्णसंकरावर्णानांदूषकाजायंतेतद्राष्ट्रंराष्ट्रवासिजनैःसहशीघ्रमेवना
शमेति तस्माद्राज्ञावर्णानांसंकरोनिरसनीयः ६१ ब्राह्मणेति गोब्राह्मणस्त्रीबालानामन्यतरस्यापिपरित्राणार्थंदुष्टप्रयोजनानपे
क्षःप्राणत्यागःप्रतिलोमजानांस्वर्गप्राप्तिकारणम् ६२ अहिंसेत्यादि हिंसात्यागोयथार्थाभिधानम् अन्यायेनपरधनस्याग्रहणंमृ
ज्जलादिनाविशुद्धिरिंद्रियसंयमइत्येवंधर्मसंक्षेपतश्चातुर्वर्ण्येप्ययंमनुराहप्रकरणसामर्थ्यात्संकीर्णानामप्ययंधर्मोवेदितव्यः

अनार्यतानिष्ठुरताक्रूरतानिष्क्रियात्मता पुरुषंव्यंजयंतीहलोकेकलुषयोनिजम् ५८ पित्र्यंवाभज
तेशीलंमातुर्वोभयमेववा नकथंचनदुर्योनिःप्रकृतिंस्वांनियच्छति ५९ कुलेमुख्येपिजातस्यय
स्यस्याद्योनिसंकरः संश्रयत्येवतच्छीलंनरोल्पमपिवाबहु ६० यत्रत्वेतेपरिध्वंसाज्जायंतेवर्णदूषकाः
राष्ट्रिकैःसहतद्राष्ट्रंक्षिप्रमेवविनश्यति ६१ ब्राह्मणार्थेगवार्थेवादेहत्यागोनुपस्कृतः स्त्रीबालाभ्युपप
त्तौचबाह्यानांसिद्धिकारणम् ६२ अहिंसासत्यमस्तेयंशौचमिंद्रियनिग्रहः एतंसामासिकंधर्मंचातुर्व-
र्ण्येब्रवीन्मनुः ६३ शूद्रायांब्राह्मणाज्जातःश्रेयसाचेत्प्रजायते अश्रेयान्श्रेयसींजातिंगच्छत्यासप्त
माद्युगात् ६४

इदानींसर्ववर्णेषुतुल्यास्वित्युक्तलक्षणव्यतिरेकेणापिब्राह्मण्यादिदर्शयितुमाह ६३ शूद्रेति शूद्रायांब्रा
ह्मणाज्जातःपारशवाख्योवर्णःप्रजायतइतिसामर्थ्यात्स्त्रीरूपःस्यात् सायदिस्त्रीब्राह्मणेनोढासतीप्रसूयतेसादुहितरमेवज
नयतिसाप्यन्येनब्राह्मणेनोढासतीदुहितरमेवजनयतिसाप्येवमेवंसप्तमेयुगेजन्मनिसपारशवाख्योवर्णोबीजप्राधान्यात्ब्रा-
ह्मण्यंप्राप्नोतिआसप्तमाद्युगादित्यभिधानात्सप्तमेजन्मनिब्राह्मणःसंपद्यतइत्यर्थः ६४ शूद्रइति एवंपूर्वश्लोकोक्तरीत्याशूद्रो
ब्राह्मणतांयातिब्राह्मणः शूद्रतामेतिब्राह्मणोत्रब्राह्मणात्शूद्रायामुत्पन्नःपारशवोज्ञेयःसयदिपुमान्केवलंशूद्रांविवाहेनतस्यांपुमां

समेवजनयतिसोपिकेवलःशूद्रोह्यहेनापरंपुमांसमेवमेजनयतिसोप्येवंतदासत्राह्मणःसप्तमंजन्मप्राप्तःकेवलःशूद्रतांक्रमेणप्राप्नो
तिएवंक्षत्रियाद्वैश्याच्चशूद्रायांजातस्योत्कर्षापकर्षौजानीयात्किंतुजातेरपकर्षात्जात्युत्कर्षोयुगेज्ञेयःसप्तमेपंचमेपिवाइतियाज्ञ
वल्क्यदर्शनाच्चक्षत्रियाज्जातस्यपंचमेजन्मनिउत्कर्षापकर्षौबोद्धव्यौवैश्याज्जातस्यततोप्युत्कर्षात् याज्ञवल्क्येनापिशब्देनपक्षां
तरस्यसंगृहीतत्वात् वृद्धव्याख्यानुरोधाच्चतृतीयेजन्मनिउत्कर्षापकर्षौज्ञेयौअनेनैवन्यायेनब्राह्मणेनवैश्यायांजातस्यपंचमेज
न्मनिउत्कर्षापकर्षौक्षत्रियायांजातस्यतृतीयेक्षत्रियेणवैश्यायांजातस्यतृतीयएव ६५ अनार्येति एकःशूद्रायांयदृच्छयाअनू
दायामपिब्राह्मणादुत्पन्नोअन्यश्चब्राह्मण्यांशूद्राज्जातःद्वयोर्मध्येकश्चोत्पन्नस्यश्रेयस्त्वमितिचेत्संशयःस्यात्संशयबीजंच्य
याबीजोत्कर्षात्ब्राह्मणात्शूद्रायांजातःसाधुःशूद्रःएवंक्षेत्रोत्कर्षाद्ब्राह्मण्यामपिशूद्रेणजातःकिमितिसाधुःशूद्रोनस्यात्तत्र–

शूद्रोब्राह्मणतामेतिब्राह्मणश्चैतिशूद्रताम् क्षत्रियाज्जातमेवंतुविद्याद्वैश्यात्तथैवच ६५ अनार्या
यांसमुत्पन्नोब्राह्मणात्तुयदृच्छया ब्राह्मण्यामप्यनार्यात्तुश्रेयस्त्वंक्वेतिचेद्भवेत् ६६ जातोनार्यामना
र्यायामार्यादार्योभवेद्गुणैः जातोऽप्यनार्यादार्यायामनार्यइतिनिश्चयः ६७ तावुभावप्यसंस्कार्यावि
तिधर्मोव्यवस्थितः वैगुण्याज्जन्मनःपूर्वउत्तरःप्रतिलोमतः ६८ सुबीजंचैवसुक्षेत्रेजातंसंपद्यतेयथा
तथाऽर्याज्जातआर्यायांसर्वंसंस्कारमर्हति ६९ निर्णयमाह ६६ जातइति शूद्रायांस्त्रियांब्राह्मणाज्जातःस्मृत्यु

क्तैःपाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तःप्रशस्योभवतिशूद्रेणपुनर्ब्राह्मण्यांजातःप्रतिलोमतउत्पन्नतयाशूद्रधर्मेष्वप्य
नधिकारादप्रशस्यइतिनिश्चयःन्यायप्राप्तोप्ययमर्थोवचनप्रामाण्यादत्रबोध्यते ६७ तावुभाविति पारशवचंडालौद्वावप्यनुपनेयौ
इतिव्यवस्थिताशास्त्रमर्यादापूर्वःपारशवःशूद्राज्जातत्वेनजातिवैगुण्यादनुपनेयःप्रातिलोम्येनशूद्रेणब्राह्मण्यांजातत्वात्
इत्तरत्वेनानुपनेयः ६८ सुबीजमिति यथाशोभनबीजंशोभनक्षेत्रेजातंसमृद्धंभवतिएवंद्विजातेर्द्विजातिस्त्रियांसवर्णाया
मानुलोम्येनच क्षत्रियावैश्ययोर्जातःसवर्णसंस्कारंक्षत्रियवैश्यसंस्कारंचसर्वंश्रौतस्मार्तंचार्हतिनत्वपारशवचंडालावि
त्युदाहार्यमेतत् दर्शनांतराण्युक्तस्यैवार्थस्यस्थैर्यार्थमाह ६९ बीजमिति केचित्पंडिताबीजंस्तुवंतिहरण्यादुत्पन्नव्यासर्ष्यशृं

गादेर्ब्रह्मसुनित्वदर्शनात् अपरेपुन. क्षेत्रंस्तुवंति क्षेत्रस्वामिपुत्रत्वदर्शनात् अन्येपुनर्बीजक्षेत्रेउभेअपिस्तुवंतिस्कबीजस्यसुक्षेत्रे
समृद्धिदर्शनात् एतस्मिन्भेदेवक्ष्यमाणेयंव्यवस्थाज्ञेया ७० असेत्रइति ऊषरप्रदेशोबीजमुप्तंफलमदद्दंतरालएवविनश्यति
शोभनमपिक्षेत्रंबीजरहितंस्थंडिलमेवकेवलंस्यात् नतुसस्यमुत्पद्यतेतस्मात्सत्येकन्निदयास्कबीजंचैवस्कक्षेत्रइतिप्रागुक्तंउभयप्रा
धान्यमेवाभिहितम् इदानींबीजप्राधान्यपक्षेदृष्टांतमाह ७१ यस्मादिति यस्माद्बीजमाहात्म्येनतिर्यग्जातिहरिण्यादिजाता अपि
ऋष्यशृंगादयोमुनित्वंप्राप्ताः पूजिताश्चअभिवादनादिनावेदज्ञानादिनाप्रशस्ताश्चासंस्तुताः तस्माद्बीजंप्रस्तूयतेएतच्चबीजप्रा
धान्यनिगमनंबीजयोन्योर्मध्येबीजोत्कृष्टाजातिःप्रधानमित्येवंपरतयाबोद्धव्यम् ७२ अनार्यमिति शूद्रंद्विजातिकर्मकारिणंद्विज

बीजमेकेप्रशंसंति क्षेत्रमन्येमनीषिणः बीजक्षेत्रेतथैवान्येतत्रेयंतुव्यवस्थितिः ७० असेत्रेबीजमु
त्सृष्टमंतरैवविनश्यति अबीजकमपिक्षेत्रंकेवलंस्थंडिलंभवेत् ७१ यस्माद्बीजप्रभावेणतिर्यग्जाऋ
षयोऽभवन् पूजिताश्चप्रशस्ताश्चतस्माद्बीजंप्रशस्यते ७२ अनार्यमार्यकर्माणमार्यंचानार्यकर्मिणं
संप्रधार्याब्रवीद्धातानसमौनासमाविति ७३ ब्राह्मणाब्रह्मयोनिस्थायेस्वकर्मण्यवस्थिताः तेसम्यगु
पजीवेयुःषट्कर्माणियथाक्रमम् ७४ अध्यापनमध्ययनंयजनंयाजनंतथा दानंप्रतिग्रहश्चैवषट्क
र्माण्यग्रजन्मनः ७५ षण्णांतुकर्मणामस्यत्रीणिकर्माणिजीविका याजनाध्यापनेचैवविशुद्धाच्चप्रतिग्र
हः ७६

तंचशूद्रकर्मकारिणंब्रह्माविचार्यनसमौनासमावित्यवोचत्यतः शूद्रोद्विजातिकर्मापिनद्विजातिसमःतस्यानधिकारि
णोद्विजातिकर्माचरणेपितत्साम्याभावात् एवंशूद्रकर्मापिद्विजातिःनशूद्रसमःनिषिद्धसेवनेनजात्युत्कर्षस्यानपायात्नाप्यसमौ
निषिद्धाचरणेनोभयोःसाम्यात् तस्माद्यद्यस्यविगर्हितंतत्तेननकर्तव्यमितिसंकरपर्यंतवर्णधर्मोपदेशः इदानींब्राह्मणानामापद्ध
र्मप्रतिपादयिष्यन्निदमाह ७३ ब्राह्मणाइति येब्राह्मणाब्रह्मप्राप्तिकारणब्रह्मध्याननिष्ठाःस्वकर्मानुष्ठाननिरताश्चतेषट्कर्माणि
वक्ष्यमाणान्यध्यापनादीनिक्रमेणसम्यगनुतिष्ठेयु.तानिकर्माण्याह ७४ अध्येति अध्यापनाध्ययनेसांगस्यवेदस्य तथायजन
याजनेदानप्रतिग्रहौचेतिएतानिषट्कर्माणिब्राह्मणस्यवेदितव्यानि ७५ षण्णामिति अस्यब्राह्मणस्यएषामध्यापनादीनांष

णांकर्मणामध्यायाजनमध्यापनंद्विजातिभ्योधनंलिप्सेत्प्रशस्तेभ्योद्विजइतिवचननिर्देशाद्विजातेः प्रतिग्रह इत्येतानित्रीणिकर्मा
णिजीवनार्थानिज्ञेयानि ७६ त्रयोधर्माइति ब्राह्मणापेक्षयाक्षत्रियस्याध्यापनयाजनप्रतिग्रहाख्यानिवृत्त्यर्थानित्रीणिकर्माणिनिव
र्त्तंते अध्ययनयागदानानितुतस्यापिभवंति ७७ वैश्यंप्रतीति यथाक्षत्रियस्याध्यापनयाजनप्रतिग्रहानिवर्त्ततेतथावैश्यस्यापी
तिशास्त्रव्यवस्था यस्मान्मनुःप्रजापतिःतौक्षत्रियवैश्योप्रतितानिवृत्त्यर्थानिकर्माणिकर्त्तव्यत्वेननोक्तवान् एवंवैश्यस्याप्यध्ययन
यागदानानिभवंति ७८ शस्त्रास्त्रेति शस्त्रंखड्गादिअस्त्रंबाणादिएतद्धारणंप्रजारक्षणायक्षत्रियस्यचवृत्त्यर्थम् वाणिज्यपशुर
क्षणकर्माणिवैश्यस्यजीवनार्थानि धर्मार्थाःपुनरनयोर्दानाध्ययनयागाभवंति ७९ वेदेति वेदाभ्यासोऽध्यापनवृत्त्यर्थाभ्यासद्दोप

त्रयोधर्मानिवर्त्तंतेब्राह्मणात्क्षत्रियंप्रति अध्यापनंयाजनंचतृतीयश्चप्रतिग्रहः ७७ वैश्यंप्रतितथै
वैतेनिवर्त्तेरन्नितिस्थितिः नतौप्रतिहितान्धर्मान्मनुराहप्रजापतिः ७८ शस्त्रास्त्रभृत्त्वंक्षत्रस्यव-
णिक्पशुकृषिर्विशः आजीवनार्थंधर्मस्तुदानमध्ययनंयजिः ७९ वेदाभ्यासोब्राह्मणस्यक्षत्रियस्य
चरक्षणम् वार्त्ताकर्मैववैश्यस्यविशिष्टानिस्वकर्मसु ८० अजीवंस्तुयथोक्तेनब्राह्मणःस्वेनकर्म-
णा जीवेत्क्षत्रियधर्मेणसह्यस्यप्रत्यनंतरः ८१ उभाभ्यामप्यजीवंस्तुकथंस्यादितिचेद्भवेत् कृषिगो
रक्षमास्थायजीवेद्वैश्यस्यजीविकाम् ८२

देशान्तद्ब्राह्मणस्य प्रजारक्षणंक्षत्रियस्य वाणिज्यंपाशुपाल्यंवैश्यस्य
एतान्येतेषांवृत्त्यर्थकर्मसुश्रेष्ठानि अधुनाआपद्धर्ममाह ८० अजीवन्निति यथोक्तेनाध्यापनादिस्वकर्मणाब्राह्मणोनित्यकर्मा
नुष्ठानकुटुंबसंवर्द्धनपूर्वकमजीवन् क्षत्रियकर्मणाग्रामनगररक्षणादिनाजीवेत् यस्मात्क्षत्रियधर्मोस्यसन्निकृष्टवृत्तिः ८१ उभा
भ्यामिति ब्राह्मणउभाभ्यांस्ववृत्तिभ्यामजीवन्केनप्रकारेणवर्त्तेतेतियदिसंशयःस्यात्तदाकृषिपशुरक्षणेआश्रित्यवैश्यस्यवृत्तिम
नुतिष्ठेत् कृषिगोरक्षंवाणिज्यदर्शनार्थंतथाच विक्रेयाणिवक्ष्यतिस्वयंकृतंचेदकृष्यादिब्राह्मणापहृत्तिः अस्वयंकृतस्यत्वलाभ्
ताभ्यांजीवेतइत्यादिनापद्येवविहितत्वात् संप्रतिकृष्यादेर्वलावलमाह ८२ वैश्येति ब्राह्मणःक्षत्रियोऽपिवावैश्यवृत्त्यापिजी

न्भूमिष्ठजंतुहिंसाबहुलांबलीवर्दादिपराधीनां कृषिंयत्नतस्त्यजेत् अतः पशुपालनाद्यभावे कृषिः कार्येतिद्रष्टव्यम् क्षत्रियोपि
वेत्स्वपादानात्क्षत्रियस्याप्यात्मीयवृत्त्यभावे वैश्यवृत्तिरस्तीत्यभिगम्यते ८३ कृषिमिति साध्विदंजीवनमिति कृषिंकेचिन्मन्यंते-
सा पुनर्जीविकासाधुभिर्निंदितायस्माद्धलकुद्दालादिलोहमुखंकाष्ठंभूमिंभूमिष्ठजंतूंश्च हंति ८४ इदंतु वृत्तीतिब्राह्मणस्यक्षत्रि
यस्यचात्मीयवृत्तेरसंभवे धर्मप्रतियथोक्तन्निष्ठांतत्त्यजतो वैश्येन यद्विक्रेतव्यंद्रव्यजातंतद्वर्जितंवक्ष्यमाणवर्ज्जनीयंधनवृद्धिकरं
विक्रेयं तानिवर्जनीयान्याह ८५ सर्वेति सर्वान्रसानपोहेत अधर्मान्यथासिद्धार्थतिलपाषाणलवणपशुमनुष्यान्नविक्रीणीत
रसत्वेनैवलवणस्यनिषेधसिद्धौविशेषेणनिषेधोदोषगौरवज्ञापनार्थः तच्चप्रायश्चित्तगौरवार्थमेवमन्यस्यापिपृथग्निषेधोव्या-

वैश्यवृत्त्यापिजीवंस्तुब्राह्मणःक्षत्रियोपिवा हिंसाप्रायांपराधीनांकृषिंयत्नेनवर्जयेत् ८३ कृषिंसा
ध्वितिमन्यंतेसावृत्तिःसद्विगर्हिता भूमिंभूमिशयांश्चैवहंतिकाष्ठमयोमुखम् ८४ इदंतुवृत्तिवैकल्या
त्त्यजतोधर्मनैपुणम् विट्पण्यमुद्धृतोद्धारंविक्रेयंवित्तवर्द्धनम् ८५ सर्वान्रसानपोहेत कृतान्नंचतिलैः
सह अश्मनोलवणंचैवपशवोयेचमानुषाः ८६ सर्वंचतांतवंरक्तंशाणक्षौमाविकानिच अपिचेत्स्यु
ररक्तानिफलमूलेतथौषधीः ८७ अपःशस्त्रंविषंमांसंसोमंगंधांश्चसर्वशः क्षीरंक्षौद्रंदधिघृतंतैलं
मधुगुडंकुशान् ८८ आरण्यांश्चपशून्सर्वान्दंष्ट्रिणश्चवयांसिच मद्यंनीलिंचलाक्षांचसर्वांश्चैकशफां
स्तथा ८९

ख्येयः ८६ सर्वमिति सर्वंतंतुनिर्मितंवस्त्रंकुसुंभादिरक्तंवर्जयेत् शाणक्षुमातंतुमयान्याविकलोमभवानि
चयद्यलोहितान्यपिभवेयुः तथापिनविक्रीणीततथाफलमूलगुडूच्यादीनिवर्ज्जयेत् ८७ अपइति जललोहविषमांससोम
क्षीरदधिघृततैलगुडदर्भान्तथागंधवंतिसर्वाणिकर्पूरादीनिक्षौद्रंमाक्षिकंमधुमधूच्छिष्टंसप्तामरसधूच्छिष्टेतियाज्ञवल्क्येनप
ठितंवर्जयेत् ८८ आरण्यानिति आरण्यान्सर्वान्हस्त्यादीन्दंष्ट्रिणःसिंहादीन्तथापक्षिजलजंतून्मद्यादीन्एकशफान्श्वाश्वादी
न्नविक्रीणीत ८९ काममिति कर्षकःस्वयमेवकर्षणेनतिलाञ्जुतांद्यद्रव्यांतरेणमिश्रान्उत्पत्त्यनंतरमेवनतुलाभार्थंकालांतरप्र-

तदेव धर्मनिमित्तमिच्छतो विक्रीणीत निषिद्धस्य तिलविक्रयस्य धर्मार्थमयं प्रतिप्रसवः ९० भोजनेति भोजनाभ्यंगदानव्यतिरि
क्तं यदन्यन्निषिद्धविक्रयादि तिलानां कुरुते तेन पितृभिः सह कृमिर्भूत्वा श्वपुरीषे मज्जति ९१ सद्य इति मांसलाक्षालवणवि
क्रयेण ब्राह्मणस्तत्क्षणादेव पततीति दोषगौरवख्यापनार्थमेतत् पंचानामेव महापातकिनां पातित्यहेतूनां वक्ष्यमाणत्वात् क्षीरवि
क्रयात् त्र्यहेण शूद्रतां प्राप्नोति एतदपि दोषगौरवात् प्रायश्चित्तगौरवख्यापनार्थम् ९२ इतरेषामिति ब्राह्मण उक्तेभ्यो मांसादिभ्यो
ऽन्येषामनिषिद्धानां पण्यानां इच्छातो न तु प्रमादात् द्रव्यान्तरसंश्लिष्टानां सप्तरात्रं विक्रयणेन वैश्यत्वं गच्छति ९३ रसेति रसा गुडादयो रसै
र्घृतादिभिः परिवर्त्तनीयाः लवणं पुनः रसान्तरेण न परिवर्त्तनीयं सिद्धान्नं चामान्नेन परिवर्त्तनीयं तिला धान्येन धान्यप्रस्थेन प्रस्थं तत्-

काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः विक्रीणीत तिलान् शूद्रान् धर्मार्थमचिरस्थितान् ९० भोजना
भ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ९१ सद्यः पतति मांसेन
लाक्षया लवणेन च त्र्यहेण शूद्री भवति ब्राह्मणः क्षीरविक्रयात् ९२ इतरेषां तु पण्यानां विक्रयादिह का
मतः ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ९३ रसा रसैर्निमातव्या न त्वेव लवणं रसैः कृतान्नं चा
कृतान्नेन तिला धान्येन तत्समाः ९४ जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः न त्वेव ज्यायसीं वृत्तिमभिम
न्येत कर्हिचित् ९५ यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्
९६ वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः परधर्मेण जीवन्हि सद्यः पतति जातितः ९७

समाः परिवर्त्तनीयाः ९४ जीवे
दिति क्षत्रियः आपदं प्राप्तः एतेनेत्यभिधाय सर्वेणेत्यभिधानात् ब्राह्मणगोचरतया निषिद्धेनापि रसादिविक्रयणेन वैश्यवज्जी
वेन्न पुनः कदाचिद्ब्राह्मणजीविकामाश्रयेत् न केवलं क्षत्रियः क्षत्रियवदन्योपि ९५ यो लोभादिति यो निकृष्टजातिः सन् लोभादु
त्कृष्टजातिविहितकर्मभिर्जीवेत् तं राजा गृहीतसर्वस्वं कृत्वा तदानीमेव देशान्निःसारयेत् ९६ वरमिति विगुणमपि स्वकर्म कर्तुं
न्याय्यं न परकीयं संपूर्णमपि परस्माज्जात्यन्तरविहितकर्मणा जीवन् तत्क्षणादेव स्वजातितः पततीति दोषोपवर्जनार्थः ९७

वैश्यइति वैश्यः स्ववृत्त्याजीवितुमशक्नुवन्शूद्रवृत्त्यापिद्विजातिशुश्रूषयाउच्छिष्टभोजनादीन्यकुर्वन् वर्त्तेतनिस्तीर्णापत्क्रमशः शूद्रवृत्तितोनिवर्त्तेत ९८ अशक्नुवन्निति शूद्रः द्विजातिशुश्रूषांकर्त्तुमक्षमः क्षुदवसन्नपुत्रकलत्रः सूपकारादि कर्मभिर्जीवेत् ९९ यैरिति पूर्वोक्तकारुकर्मविशेषाभिधानार्थइदंयैः कर्मभिः कृतैर्द्विजातयः परिचर्यंते तानिचकर्माणितक्षणादीनिशिल्पानिचचित्रलिखितादीनिनानाप्रकाराणिकुर्यात् १०० वैश्येति ब्राह्मणोवृत्त्यभावपीडितोअवसादंगच्छन्क्षत्रियवैश्यवृत्तिमनुतिष्ठेत् स्वधर्मोविगुणइत्युक्तत्वात्स्ववृत्तावेववर्त्तमानइमांवक्ष्यमाणांवृत्तिमनुतिष्ठेत् अतश्चविगुणप्रतिग्रहादिस्ववृत्त्यसंभवे परवृत्त्याश्रयणंज्ञेयम् १०१ सर्वतइति ब्राह्मणआपदंप्राप्तः सर्वेभ्योपिनिंदिततमेभ्यः क्रमेणप्रतिग्रहंकुर्यात् अत्रार्थांतरन्यासोनामालंकारः यस्मात्पवित्र

वैश्योजीवन्स्वधर्मेणशूद्रवृत्त्यापिवर्त्तयेत् अनाचरन्नकार्याणिनिवर्त्तेतचशक्तिमान् ९८ अशक्नुवंस्तु शुश्रूषांशूद्रः कर्त्तुंद्विजन्मनाम् पुत्रदारात्ययंप्राप्तोजीवेत्कारुककर्मभिः ९९ यैःकर्मभिःप्रचरितैःशुश्रूष्यंते द्विजातयः तानिकारुककर्माणिशिल्पानिविविधानिच १०० वैश्यवृत्तिमनातिष्ठन्ब्राह्मणःस्वेपथिस्थितः अवृत्तिकर्षितःसीदन्निमंधर्मंसमाचरेत् १०१ सर्वतःप्रतिगृह्णीयाद्ब्राह्मणस्त्वनयंगतः पवित्रंदुष्यतीत्येतद्धर्मतोनोपपद्यते १०२ नाध्यापनाद्याजनाद्वागर्हिताद्वाप्रतिग्रहात् दोषोभवतिविप्राणांज्वलनांबुसमाहिते १०३ जीवितात्ययमापन्नोयोऽन्नमत्तियतस्ततः आकाशमिवपंकेननसपापेनलिप्यते १०४ अजीगर्त्तःसुतंहंतुमुपासर्पद्बुभुक्षितः नचालिप्यतपापेनक्षुत्प्रतीकारमाचरन् १०५

गंगारथ्योदकादिनादुष्यतीत्येतत् शास्त्रस्थित्यानोपपद्यतेयस्मात् १०२ नाध्यापनादिति ब्राह्मणानामापदिगर्हिताध्यापनयाजनप्रतिग्रहैरधर्मोनभवति यस्मात्स्वभावतःपवित्रत्वेनाग्न्युदकतुल्यास्ते १०३ जीवितेति यःप्राणात्ययंप्राप्तःप्रतिलोमजादन्नमश्नातिसोऽन्तरिक्षमिवकर्दमेनपापेननसंबध्यते अत्रपरकृतिरूपोऽर्थवादः १०४ अजीगर्त्तइति ऋषिरजीगर्त्ताख्योबुभुक्षितःसन्पुत्रंशुनःशेफनामानंस्वयंविक्रीतंयज्ञेगोशतलाभायविशसिताभूत्वाहंतुंप्रचक्रमेनचक्षुत्प्रतीकारार्थंतथाकुर्वन्पापेनलिप्तःएतच्चबह्वृचब्राह्मणेशुनःशेफाख्यानेसुव्यक्तमुक्तम् १०५

श्वमांसमिति वामदेवाख्यऋषिर्दर्शी धर्मज्ञः क्षुधार्त्तः प्राणत्राणार्थंश्वमांसंखादितुमिच्छन्दोषेणनलिप्तवान् १०६ भरद्वाज इति भरद्वाजाख्योमुनिः महातपस्वीपुत्रसहितोनिर्जनेवने अरण्येउषित्वाक्षुत्पीडितोवृधनाम्नस्तक्ष्णोबह्वीर्गाःप्रतिगृहीतवान् १०७ क्षुधार्त्तइति ऋषिर्विश्वामित्रोधर्माधर्मज्ञः क्षुत्पीडितः चंडालहस्ताद्गृहीत्वाकुक्कुरजघनमांसंभक्षितुमध्यवसितवान् १०८ प्रतिग्रहादिति गर्हितानामप्यध्यापनयाजनप्रतिग्रहाणांमध्यात् ब्राह्मणस्यासत्प्रतिग्रहोनिकृष्टः परलोकेनरकहेतुः ततश्चापदि प्रथमनिंदिताध्यापनयाजनयोःप्रवर्त्तितव्यंतदसंभवेत्वसत्प्रतिग्रहइत्येवंपरमेतत् अत्र हेतुमाह १०९ याजनेति याजनाध्यापने आपद्यनापद्यपि उपनयनसंस्कृतात्मनांद्विजातीनामेवक्रियतेप्रतिग्रहःपुनर्निकृष्टजातेः शूद्रादपिक्रियतेतस्मादसौताभ्यांगर्हितः ११

श्वमांसमिच्छन्नार्त्तोऽत्तुंधर्माधर्मविचक्षणः प्राणानांपरिरक्षार्थंवामदेवोनलिप्तवान् १०६ भरद्वाजःक्षुधार्त्तस्तुसपुत्रोविजनेवने बह्वीर्गाःप्रतिजग्राहवृधोस्तक्ष्णोमहातपाः १०७ क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रःश्वजाघनीम् चंडालहस्तादादायधर्माधर्मविचक्षणः १०८ प्रतिग्रहाद्याजनाद्वातथैवाध्यापनादपि प्रतिग्रहःप्रत्यवरःप्रेत्यविप्रस्यगर्हितः १०९ याजनाध्यापनेनित्यंक्रियेतेसंस्कृतात्मनाम् प्रतिग्रहस्तुक्रियतेशूद्रादप्यन्त्यजन्मनः ११० जपहोमैरपैत्येनोयाजनाध्यापनैःकृतम् प्रतिग्रहनिमित्तंतुत्यागेनतपसैवच १११ शिलोञ्छमप्याददीतविप्रोऽजीवन्यतस्ततः प्रतिग्रहाच्छिलःश्रेयांस्ततोप्युञ्छःप्रशस्यते ११२ सीदद्भिःकुप्यमिच्छद्भिर्धनेवापृथिवीपतिः याच्यःस्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ११३

जपइति एनोग्रह णादसत्प्रतिग्रहयाजनाध्यापनैर्यदुपपन्नंतत्प्रायश्चित्तप्रकरणेवक्ष्यमाणक्रमेणजपहोमैर्नश्यति असत्प्रतिग्रहजनितंपुनःप्रतिगृहीतद्रव्यत्यागेनमासंगोष्ठेपयःपीत्वेत्येवमादिवक्ष्यमाणतपसाऽपगच्छति १११ शिलोञ्छेति ब्राह्मणः स्ववृत्त्याऽजीवन्यतस्ततोपिशिलोञ्छंगृण्हीयात् नतुतत्संभवेऽसत्प्रतिग्रहंकुर्यात्यस्मात्प्रतिग्रहात्शिलः प्रशस्तः मंजर्यात्मकानेकधान्योन्नयनंशिलस्ततोप्युञ्छःश्रेष्ठः एकैकधान्यादिगुडकोच्चयनमुञ्छः ११२ सीदेति स्नातकैर्ब्राह्मणैर्धनाभावात् धर्मार्थंकुटुंबावसादंगच्छद्भिः

स्वर्णरजतव्यतिरिक्तं धान्यवस्त्रादिकुप्यधनं यागाद्युपयुक्तं हिरण्याद्यपि आपत्प्रकरणात्क्षत्रियोऽस्तु शास्त्रवर्त्तीयाचितव्यः स्यात्
यस्त्वदातुं नेच्छति कृपणत्वेनावधारितः स त्याज्यो न याचनीय इत्यर्थः मेधातिथिगोविंदराजौ तु त्यागमर्हतीति तस्य त्यागेन वक्तव्यमिति
व्याचक्षाते ११३ अकृतंचेति अकृतमनुप्तसस्यं क्षेत्रं तत्कृतादुप्तसस्यात्प्रतिग्रहे दोषरहितं तथा गोछागमेषहिरण्यधान्यसिद्धार्थी
नां मध्यात्पूर्वंपूर्वं अदुष्टम् ततश्चैषां पूर्वपूर्वासंभवे परःपरो ज्ञेयः ११४ सप्तेति दायाद्याः सप्त धनागमाः यथाधनाधिकारं धर्मादनपेतास्त
त्र दायोऽन्वयागतधनं लाभो निध्यादेः मैत्र्यादिलब्धस्य च क्रयः प्रसिद्धः एते त्रयश्चतुर्णामपि वर्णानां धर्म्याः जयधनं विजयत्वेन क्षत्रि
यस्य धर्म्यः प्रयोगो वृद्ध्यादिधनस्य कर्मयोगश्च कृषिवाणिज्ये एतौ प्रयोगौ वैश्यधर्म्यौ सत्प्रतिग्रहो ब्राह्मणस्य धर्म्यः एवं चैतेषां धर्मत्ववच
नादेतदभावे अन्येषामापद्विहितेषु वृत्तिकर्मसु प्रवर्त्तितव्यं तदभावे चापद्विहितेषु प्रवृत्तेर्निषिद्धत्वात् तदर्थमेतदिहोच्यते ११५ विद्येति आ

अकृतं च कृतात्क्षेत्राद्गौरजाविकमेव च हिरण्यं धान्यमन्नं च पूर्वंपूर्वमदोषवत् ११४ सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ११५ विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः ११६ ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत् कामं तु खलु धर्मार्थं दद्यात्पापीयसेऽल्पिकाम् ११७ चतुर्थमाददानोऽपि क्षत्रियो भागमापदि प्रजा रक्षन् परं शक्त्या किल्बिषात्प्रतिमुच्यते ११८

पत्प्रकरणाज्जीवनहेतव इति निर्देशात् एषां मध्ये यथा यत्स्वायस्यानापदि न जीवनं तया
तस्यापद्यभ्यनुज्ञायते यथा ब्राह्मणस्य भृतिसेवादि एवं शिल्पादावपि ज्ञेयं विद्या वेदविद्याव्यतिरिक्ता वैद्यतर्कविषापनयनादिविद्या
सर्वे ग्रामापद्जीवनार्थं न दुष्यति शिल्पं गंधयुक्त्यादिकरणं भृतिः प्रैष्यभावेन वेतनग्रहणं सेवा पराज्ञासंपादनं गोरक्ष्यं पशुपाल्यं
विपणिर्वाणिज्या कृषिः स्वयंकृता धृतिः संतोषः तस्मिन्सति अल्पकेनापि जीव्यते भैक्ष्यं भिक्षासमूहः कुसीदं वृद्ध्यार्थं धनप्रयोगः स्वयं
कृतोऽपि इत्येभिर्दशभिरापद्जीवनीयम् ११६ ब्राह्मण इति ब्राह्मणः क्षत्रियो वापि वृद्ध्यादिधनमापद्यपि न प्रयुंजीत किंतु निकृष्ट
कर्मणापधर्मार्थमनुकल्पितया वृत्त्या प्रयुंजीत इदानीं राज्ञामापद्धर्ममाह ११७ चतुर्थमिति राज्ञो धान्यादीनामष्टम इत्याद्युक्तंस

आपदिधान्यादेश्चतुर्थमपिभागंकरार्थंगृह्णन्परयाशक्त्याप्रजारक्षणाअधिककरग्रहणपापेननसंबध्यतेकस्मात्पुनरापद्यपिरा
ज्ञोपिरक्षणमुच्यतेयस्मात् ११८ स्वधर्मइति राज्ञःशत्रुविजयःस्वधर्मोविजयफलंयुद्धमित्यर्थःप्रजारक्षणप्रयुक्तः यदिकुतश्चिद्भयं
स्यात्तदानयुद्धपराङ्मुखोभवेत्एवंचशस्त्रेणवैश्यान्दस्युभ्योरक्षित्वातेभ्योधर्मादनपेतमापत्पुरुषैर्बलिमाहारयेत्कोसौबलिस्त
माह ११९ धान्यइति धान्येविंशउपचयेवैश्यानामष्टमंभागंशुल्कमाहारयेत् धान्यानांद्वादशोपिभागउक्तः आपद्ययमष्टमउच्य
ते असंतापदिप्रागुक्तश्चतुर्थोवेदितव्यः तत्रापिविंशंग्राह्यंतथाहिबल्यादीनांकार्षापणस्थानानांविंशतितमंभागंशुल्कंगृह्णीया
त्तत्रापिपंचाशद्भागआदेयोराज्ञापशुहिरण्ययोरित्यापदिपंचाशद्भागउक्तः आपद्ययंविंशउच्यते तथाशूद्राःकारवः सूपकारादयः
शिल्पिनःतक्षादयःकर्मणैवोपकुर्वंतिनतुतेभ्यआपद्यपिकरोग्राह्यः १२० शूद्रस्त्विति शूद्रोब्राह्मणशुश्रूषयाऽजीवन्यदिवृत्ति

स्वधर्मोविजयस्तस्यनाहवेस्यात्पराङ्मुखः शस्त्रेणवैश्यान्रक्षित्वाधर्म्यमाहारयेद्बलिम् ११९ धान्ये
ऽष्टमंविंशंशुल्कंविंशंकार्षापणावरम् कर्मोपकरणाःशूद्राःकारवःशिल्पिनस्तथा १२० शूद्रस्तुवृत्ति-
माकांक्षन्क्षत्रमाराधयेद्यदि धनिनंवाप्युपाराध्यवैश्यंशूद्रोजिजीविषेत् १२१ स्वर्गार्थमुभयार्थं
वाविप्रानाराधयेत्तुसः जातब्राह्मणशब्दस्यसाह्यस्यकृतकृत्यता १२२ विप्रसेवैवशूद्रस्यविशिष्टंकर्म
कीर्त्यते यदतोऽन्यद्धिकुरुतेतद्भवत्यस्यनिष्फलम् १२३ प्रकल्प्यातस्यतैर्वृत्तिःस्वकुटुंबाद्यथार्हतःश
क्तिंचावेक्ष्यदाक्ष्यंचभृत्यानांचपरिग्रहम् १२४

माकांक्षेत्तदाक्षत्रियंपरिचर्यतदभावेधनिनंवैश्यंपरिचर्यजीवितुमिच्छेत्
द्विजातिशुश्रूषणासामर्थ्येतुप्रागुक्तानिकर्माणिकुर्यात् १२१ स्वर्गार्थमिति स्वर्गप्राप्त्यर्थंस्ववृत्तिलिप्सार्थंवाब्राह्मणानेवशूद्रःपरिचरे
तस्माज्जातोब्राह्मणाश्रितोयमितिशब्दोयस्यशाकपार्थिवादित्वात्समासः सास्यशूद्रस्यकृतकृत्यतातद्व्यपदेशतया असौकृतकृत्यो
भवतियतएवमतः १२२ विप्रेति ब्राह्मणपरिचर्यैवशूद्रस्यकर्मांतरेभ्यःप्रकृष्टंकर्मशास्त्रेऽभिधीयतेयस्मादेतद्व्यतिरिक्तंयदसौकर्म-
कुरुतेतदस्यनिष्फलंभवतीतिपूर्वस्तुत्यर्थंनत्वन्यनिवृत्तयेपाकयज्ञादीनामपितस्यविहितत्वात् १२३ प्रकल्प्येति तस्यैपरिचार

द्रव्यपरिचर्यासामर्थ्यंकर्मोत्साहंपुत्रदारादिभर्त्तव्यपरिमाणंचावेक्ष्यतैर्ब्राह्मणैः स्वगृहाद्यनुरूपाजीविकाकल्पनीया १२४ उच्छिष्ट
मिति तस्मैभक्ताश्रितशूद्राय भुक्तावशिष्टान्नंब्राह्मणैर्देयंएवंचनशूद्रायमतिंदद्यान्नोच्छिष्टमित्यनाश्रितशूद्रविषयमवतिष्ठ
तेतस्माज्जीर्णवस्त्रासारधान्यजीर्णवस्त्रपरिच्छदोऽस्मैदेयः १२५ नशूद्रइति लशुनादिभक्षणेनशूद्रेनकिंचित्पातकंभवतिनतुब्र
ह्मवधादावपिअहिंसासत्यमित्यादेश्चातुर्वर्ण्यसाधारणत्वेनविहितत्वात् नचास्यपुनरुपनयनादिसंस्कारमर्हतिनास्याग्निहोत्रादिधर्मेऽ
धिकारोस्तिअविहितत्वात् नचशूद्रविहितत्वात्पाकयज्ञादिधर्मादस्यनिषेधः एवंचास्यसर्वस्यसिद्धार्थत्वात्अयंश्लोकउत्तरार्थवादः
१२६ धर्मेति येपुन शूद्राःस्वधर्मवेदिनोधर्मप्राप्तिकामास्त्रैवर्णिकानामाचारमनिषिद्धमाश्रितास्तेनमस्कारेणमंत्रेणपंचयज्ञान्न
हापयेदितियाज्ञवल्क्यवचनात् नमस्कारमंत्रेणमंत्रांतररहितंपंचयज्ञादिधर्मंकुर्वाणानप्रत्यवयंतिख्यातिंचलोकेलभंते १२७

उच्छिष्टमन्नंदातव्यंजीर्णानिवसनानिच पुलाकाश्चैवधान्यानांजीर्णाश्चैवपरिच्छदाः १२५ नशूद्रेपा
तकंकिंचिन्नचसंस्कारमर्हति नास्याधिकारोधर्मेस्तिनधर्मात्प्रतिषेधनम् १२६ धर्मेप्सवस्तुधर्मज्ञाः
सतांवृत्तमनुष्ठिताः मन्त्रवर्ज्यंनदुष्यन्तिप्रशंसांप्राप्नुवन्तिच १२७ यथायथाहिसद्वृत्तमातिष्ठत्यनसू
यकः तथातथेमंचामुंचलोकंप्राप्नोत्यनिन्दितः १२८ शक्तेनापिहिशूद्रेणनकार्योधनसंचयः शूद्रोहिध
नमासाद्यब्राह्मणानेवबाधते १२९ एतेचतुर्णांवर्णानामापद्धर्माःप्रकीर्तिताः यान्सम्यगनुतिष्ठन्तो
व्रजन्तिपरमांगतिम् १३०

यथेति परगुणानिंदकःशूद्रोयथायथाद्विजात्याचारमनिषिद्धमनुतिष्ठतितथातथाजनैर
निंदितइहलोकेउत्कृष्टःस्मृतःस्वर्गादिलोकंचप्राप्नोति १२८ शक्तेनापीति धनार्जनसमर्थेनापिशूद्रेणपोष्यवर्गसंवर्द्धनपंचय
ज्ञादिनिर्वाहादधिकबहुधनसंचयोनकर्त्तव्यःयस्मात्शूद्रोधनंप्राप्यशास्त्रानभिज्ञत्वेनधनमदात्शुश्रूषायाश्चाकरणात्ब्राह्म
णानेवपीडयतीत्युक्तस्यानुवादः १२९ एतेइति अमीचतुर्णांवर्णानांआपद्यनुष्ठेयाधर्माउक्तायान्सम्यगाचरंतोविहितानुष्ठाना
त्निषिद्धानाचरणाच्चनिष्पापतयाब्रह्मज्ञानलाभेनपरमांगतिंमोक्षलक्षणांलभंते १३० ७ ७ ७

एषधर्मेति अयंचतुर्णांवर्णानामाचारः समग्रतः कथितः अतऊर्ध्वंप्रायश्चित्तानुष्ठानं शुभमभिधास्यामि १३१ इतिश्रीकुल्लूक भट्टविरचितायांमन्वर्थमुक्तावल्यांदशमोऽध्यायः १० ॥ ॥ ॥ सांतानिकमिति नवैतानिति नन्वतः परमंप्रवक्ष्यामि प्रायश्चित्तविधिंशुभमितिप्रायश्चित्तस्यवक्तव्यतयाप्रतिज्ञातत्वात् सांतानिकादिभ्योदेयमित्यादेः कःप्रस्ताव उच्यते दानेनाकार्यकारिण इतिप्रागुक्तत्वात् दानेनवधनिर्णेकंसर्पादीनामशक्नुवन्नित्यादेश्चवक्ष्यमाणत्वात् प्रकृष्टप्रायश्चित्तार्थकदानपात्रोपन्यासः प्रकृतोपयुक्त एववर्णाश्रमधर्मादिव्यतिरिक्तप्रायश्चित्तादिनैमित्तिकधर्मकथनार्थत्वाच्चाध्यायस्य अन्यस्यापिनैमित्तिकधर्मस्यात्रोपन्यासोयुक्तः स प्रयोजनत्वाद्विवाहस्यसांतानिकोविवाहार्थीयक्ष्यमाणो अवश्यकर्तव्यज्योतिष्टोमादियागंचिकीर्षुः अध्वगः पांथः सर्ववेदसः कृतसर्वस्व दक्षिणविश्वजित्याग विद्यागुरोर्ग्रासाच्छादनाद्यर्थं एवंपितृमात्रर्थोवपिस्वाध्यायार्थीस्वाध्यायाध्ययनकालीनाच्छादनाद्यर्थीब्रह्मचा

एषधर्मविधिः कृत्स्नश्चातुर्वर्ण्यस्यकीर्तितः अतः परंप्रवक्ष्यामिप्रायश्चित्तविधिंशुभम् १३१ इति-मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांदशमोऽध्यायः १० ॥ ॥ ॥ सांतानिकंयक्ष्यमाण मध्वगंसर्ववेदसम् गुर्वर्थंपितृमात्रर्थंस्वाध्यायार्थ्युपतापिनः १ नवैतान्स्नातकान्विद्याद्ब्राह्मणान्धर्म भिक्षुकान् निःस्वेभ्योदेयमेतेभ्योदानंविद्याविशेषतः २ एतेभ्योहिद्विजाग्र्येभ्योदेयमन्नंसदक्षिणम् इ तरेभ्योबहिर्वेदिकृतान्नंदेयमुच्यते ३ सर्वरत्नानिराजातुयथार्हंप्रतिपादयेत् ब्राह्मणान्वेदविदुषोय ज्ञार्थंचैवदक्षिणाम् ४ कृतदारोऽपरान्दारान्भिक्षित्वायोधिगच्छति रतिमात्रंफलंतस्यद्रव्यदातुस्तु संततिः ५

रीउपतापीरोगीएतान्नवब्राह्मणान्धर्मभिक्षाशीलान्स्नातकान्जानीयात् एतेभ्योनिर्द्धनेभ्योगोहिरण्यादिदीय तइतिदानंविद्याविशेषानुरूपेणदद्यात् १ २ एतेभ्यइति एतेभ्योनवब्राह्मणश्रेष्ठेभ्योअंतर्वेदिसदक्षिणमन्नंदातव्यम् एत द्व्यतिरिक्तेभ्यः पुनःसिद्धान्नंबहिर्वेदिदेयत्वेनोपदिश्यतेधनदानेत्वनियमः ३ सर्वेति राजापुनःसर्वरत्नानिमणिमुक्तादीनियागोपयो ग्यानिचदक्षिणार्थंधनंविद्यानुरूपेणवेदविदोब्राह्मणान्स्वीकारयेत् ४ कृतेति यःसभार्यःसंतत्यर्थादिनिमित्तमंतरेणापरान्दा रान्भिक्षित्वाकरोतितस्यरतिमात्रंफलंधनदातुःपुनस्तत्सुतस्याप्यपत्यानिभवंतीतिनिंदातिशयः नैवंविधेनधनंयाचित्वाऽन्योविवाहः

कर्त्तव्यः नाप्येवंविधायनियमतोधनंदेयमिति ५ धनानीति धनानिगोभूहिरण्यादीनिशक्त्यनतिक्रमेणब्राह्मणेषुवेदज्ञेषुविविक्तेषु पुत्रकलत्राद्यवसक्तेषुप्रतिपादयेत्तद्दानाच्चस्वर्गप्राप्तिर्भवतीति ६ यस्येति यस्यावश्यपोष्यभरणार्थंवर्षत्रयपर्याप्तंतदधिकंवाभक्तं स्यात्सकाम्यसोमयागंकर्त्तुमर्हति नित्यस्यपुनर्यथाकथंचिदवश्यकर्त्तव्यत्वात्नायंनिषेधः अतएवसमांतेसौमिकैर्मखैरितिनित्यविषयत्वमुक्तवान् ७ अतइति त्रैवार्षिकधनादल्पधनेसतियःसोमयागंकरोतितस्यप्रथमसोमयागोनित्योपिनसंपन्नोभवतिकिंतर्हिद्वितीययाग काम्यः ८ शक्तइति योबहुधनत्वाद्दानशक्तः सन् अवश्यभरणीयेपितृमात्रादिज्ञातिजनेदौर्गत्यात्दुःखोपेतेसतियशोर्थमन्येभ्योददातिसतस्यदानविशेषोधर्मप्रतिरूपकोनतुधर्मएवमध्वापातोमधुरोपक्रमःप्रथमंयशस्करत्वात्विषास्वादश्चा

धनानितुयथाशक्तिविप्रेषुप्रतिपादयेत् वेदवित्सुविविक्तेषुप्रेत्यस्वर्गंसमश्नुते ६ यस्यत्रैवार्षिकंभक्तंपर्याप्तंभृत्यवृत्तये अधिकंवापिविद्येतससोमंपातुमर्हति ७ अतःस्वल्पीयसिद्रव्येयःसोमंपिबतिद्विजः सपीतसोमपूर्वोपिनतस्याप्नोतितत्फलम् ८ शक्तःपरजनेदातास्वजनेदुःखजीविनि मध्वापातोविषास्वादः सधर्मप्रतिरूपकः ९ भृत्यानामुपरोधेनयत्करोत्यौर्ध्वदैहिकम् तद्भवत्यसुखोदर्कंजीवतश्चमृतस्यच १० यज्ञश्चेत्प्रतिरुद्धःस्यादेकेनांगेनयज्वनः ब्राह्मणस्यविशेषेणधार्मिकेसतिराजनि ११ योवैश्यःस्याद्बहुपशुर्हीनक्रतुरसोमपः कुटुंबात्तस्यतद्द्रव्यमाहरेद्यज्ञसिद्धये १२

तेनरकफलत्वात्तस्मादेतन्नकार्यम् ९ भृत्यानामिति पुत्रदाराद्यवश्यभर्त्तव्यपीडनेनयत् पारलौकिकधर्मबुद्ध्यादानादिकरोतितस्यदातुर्जीवतोमृतस्यचतद्दानंदुःखफलंभवतीतिपूर्वश्लोकोक्तस्यैवविशेषार्थकथनम् अयंलद्दृष्टार्थदानप्रतिषेधः अयंलदृष्टार्थदानप्रतिषेधः १० यज्ञश्चेति योवैश्यइति क्षत्रियादेर्यजमानस्यविशेषतोब्राह्मणस्ययदियज्ञइतरांगसंपत्तौसत्यामेकेनांगेनासंपूर्णःस्यात्तदायोवैश्योबहुपश्वादिधनःपाकयज्ञादिरहितोअसोमयाजीतस्यगृहात्तदंगोचितंद्रव्यंबलेनचौर्येणवाहरेत् एतच्चधर्मप्रधानेसतिराजनिकार्यंसहिशास्त्रार्थमनुतिष्ठंतंननिगृण्हाति ११ १२ आहरेदिति यज्ञस्यद्विअंगवैकल्येसतितानित्रीणिचांगानिद्वेवांगेवैश्यादलाभेसतिनिर्विशंकंशूद्रस्यगृहात्बलेनचौर्येणवाहरेत् य

स्याच्छूद्रस्यक्वचिदपियज्ञसंबंधोनास्तिनयज्ञार्थंधनंशूद्राद्बिभोभिक्षेतेतिवक्ष्यमाणप्रतिषेधः शूद्राद्याचनस्यनतुबलग्रहणादेः
१२ यदिति योनाहिताग्निःगोशतपरिमाणधनआहिताग्निर्वाऽसोमयाजीगोसहस्रपरिमितधनः द्वयोरपिगृहाभ्यांमकृतमंगाद
यंत्रयंवाशीघ्रंब्राह्मणेनद्वाभ्यामाहरणीयंब्राह्मणक्षत्रियाभ्यामपिब्राह्मण आहरेत् क्षत्रियस्यतु अदस्यु । स्वहर
णंनिषेधयिष्यति १४ आदानेति प्रतिग्रहादिना आदानंधनग्रहणंनित्यंयस्यासौ आदाननित्यःब्राह्मणः तस्मादिष्टापूर्त दानर-
हितात् यज्ञांगद्रव्यमयार्थितायां याचनायां कृतायां अददतो बलेनचौर्येणवाहरेत् तथाकृतेअपहर्तुःख्यातिःप्रकाशते
धर्मेति १५ तथैवेति सायंप्रातर्भोजिनोपदेशात् त्रिरात्रोपवासेवृत्तेचतुर्थेऽहनिप्रातःसप्तमेभक्तेदानादिधर्मरा
मर्थंचौर्यादिनाहर्त्तव्यम् १६ खलादिति धान्यादिमर्दनस्थानात्क्षेत्राद्वागृहाद्वायतोवाअन्यस्मात्प्रदेशात् धान्यंहीनकर्मसंबंधि

आहरेत्त्रीणिवाद्वेवाकामंशूद्रस्यवेश्मनः नहिशूद्रस्ययज्ञेषुकश्चिदस्तिपरिग्रहः १३ योनाहिताग्निः
शतगुरयज्वाचसहस्रगुः तयोरपिकुटुंबाभ्यामाहरेदविचारयन् १४ आदाननित्याच्चादातुराहरेदप्र
यच्छतः तथायशोऽस्यप्रथतेधर्मश्चैवप्रवर्द्धते १५ तथैवसप्तमेभक्तेभक्तानिषडनश्नता अश्वस्तन-
विधानेनहर्त्तव्यंहीनकर्मणः १६ खलात्क्षेत्रादगाराद्वायतोवाप्युपलभ्यते आख्यातव्यंतुतत्तस्मैपृच्छ
तेयदिपृच्छति १७ ब्राह्मणस्वंनहर्त्तव्यंक्षत्रियेणकदाचन दस्युनिष्क्रिययोस्तुस्वमजीवन्हर्त्तुमर्ह-
ति १८ योऽसाधुभ्योऽर्थमादायसाधुभ्यःसंप्रयच्छति सकृत्वाप्लवमात्मानंसंतारयतिताबुभौ १९

लभ्यतेततोहर्त्तव्यंयदिवासौधनस्वामीपृच्छतिकिन्निमित्तंकृतमितिपृच्छतेनिमित्तंचौर्यादेर्वक्तव्यम् १७ ब्राह्मणेति
पिनिमित्तेषु क्षत्रियेणब्राह्मणस्यधनंनतोपकृष्टत्वात् नहर्त्तव्यंसमानन्यायतयातुवैश्यशूद्राभ्यांउत्कृ
ष्टहिहितानन्नुष्ठायिनोःपुनर्ब्राह्मणक्षत्रिययोरत्यंतापदिक्षत्रियोहर्त्तुमर्हति १८ योऽसाधुभ्यइति योहीनकर्मादिभ्यःउ
त्कृष्टेभ्योऽभिहितेष्वपिनिमित्तेषुउक्तानुरूपंयज्ञांगादिसाधनंकृत्वासाधुभ्यउत्कृष्टेभ्यऋत्विगादिभ्योधनंददातिसयस्याप
हरतितंदुरितंनाशयतिपस्मैतद्ददातितंदौर्गत्याभिघातादित्येवंद्वावप्यात्मानमुडुपंकृत्वादुःखान्मोचयति १९ ॥ ॥

यद्धनमिति यज्ञशीलानांयद्धनंतद्यागादौविनियोगात्देवस्वंविद्वांसोमन्यंतेयागादिशून्यानांतुयद्द्रव्यंतद्धर्मविनियोगाभावादासुरस्व मुच्यतेअतस्तदप्यपहृत्ययागसंपादनात्तद्देवस्वंकर्तव्यम् २० नतस्मिन्निति तस्मिन्नुक्तनिमित्तेचौर्यबलात्कारंकुर्वाणेधर्मप्रधानोरा जादंडंनकुर्यात्यस्माद्राज्ञोमूढत्वाद्ब्राह्मणःक्षुधावसादंप्राप्नोतिततश्च २१ तस्येति तस्यब्राह्मणस्यावश्यभरणीयपुत्रादिवर्गंज्ञात्वा श्रुताचारौचितत्तदनुरूपांवृत्तिंकल्पयेत् २२ कल्पयित्वेति अस्यब्राह्मणस्यजीविकांविधायशत्रुचौरादेःसर्वतोरक्षयेत् यस्माद्ब्रा ह्मणाद्रक्षितात्तस्यधर्मषड्भागंप्राप्नोति २३ नयज्ञार्थमिति यज्ञसिद्धयेधनंब्राह्मणःकदाचिन्नशूद्राद्याचेत् यस्माच्छूद्राद्याचि त्वायज्ञंकुर्वाणोमृतश्चंडालोभवतिअतोयाचननिषेधात्शूद्रादयाचितोपस्थितंयज्ञार्थमप्यविरुद्धम् २४ यज्ञार्थमिति येज्ञसिद्ध्य

यद्धनंयज्ञशीलानांदेवस्वंतद्विदुर्बुधाः अयज्वनांतुयद्वित्तमासुरस्वंतदुच्यते २० नतस्मिन्धारयेद्दंडं धार्मिकःपृथिवीपतिः क्षत्रियस्यहिबालिश्याद्ब्राह्मणःसीदतिक्षुधा २१ तस्यभृत्यजनंज्ञात्वास्वकुटुं बान्महीपतिः श्रुतशीलेचविज्ञायवृत्तिंधर्म्यांप्रकल्पयेत् २२ कल्पयित्वाऽस्यवृत्तिंचरक्षेदेनंसमंततः रा जाहिधर्मषड्भागंतस्मात्प्राप्नोतिरक्षितात् २३ नयज्ञार्थंधनंशूद्राद्विप्रोभिक्षेतकर्हिचित् यजमानोहिभि क्षित्वाचंडालःप्रेत्यजायते २४ यज्ञार्थमर्थंभिक्षित्वायोनसर्वंप्रयच्छति सयातिभासतांविप्रःकाकतांवा शतंसमाः २५ देवस्वंब्राह्मणस्वंवालोभेनोपहिनस्तियः सपापात्मापरेलोकेगृध्रोच्छिष्टेनजीवति २६ इष्टिंवैश्वानरींनित्यंनिर्वपेदब्दपर्यये क्लृप्तानांपशुसोमानांनिष्कृत्यर्थमसंभवे २७ आपत्कल्पेनयो धर्मंकुरुतेनापदिद्विजः सनाप्नोतिफलंतस्यपरत्रेतिविचारितम् २८

र्थंधनंयाचित्वायोयज्ञेसर्वंनविनियुंक्ते सशतंवर्षाणिभासत्वंकाकत्वंवाप्राप्नोति २५ देवस्वमिति प्रतिमादिदेवतार्थमुत्सृष्टंधनंदेवस्वंब्राह्मणस्वंचयोलोभादपहरतिसपा पस्वभावोजन्मांतरेगृध्रोच्छिष्टेनजीवति २६ इष्टिमिति समासेवर्षेद्वितीयवर्षस्यप्रवृत्तिरब्दपर्ययंचैत्रशुक्लादिवर्षप्रवृत्तिःतत्रसं स्थैर्वैश्वानरीमिष्टिंविहितसोमयागासंभवेतदकरणदोषनिर्हरणार्थंसर्वदाशूद्रादितउक्तधनग्रहणरूपामिष्टिंकुर्यात् २७ आपदि ति आपद्विहितेनविधिनायोऽनापदिधर्मानुष्ठानंद्विजःकुरुतेतस्यतत्परलोकेनिष्फलंभवतीतिमन्वादिभिर्विचारितम् २८ ७

विश्वैरिति विश्वेदेवाख्यैर्देवैः साध्यैश्चतथामहर्षिभिर्ब्राह्मणैर्मरणाद्भीतैरापत्सुमुख्यस्य विधेःसोमादेर्वैश्वानर्यादिःप्रतिनिधिर नुष्ठितोऽसौमुख्यासंभवेकार्यःनतुमुख्यसंभवे २९ प्रभुरिति योमुख्यानुष्ठानसंपन्नःसन् आपद्विहितेनप्रतिनिधिनाऽनुष्ठानं-करोतितस्यदुर्बुद्धेः पारलौकिकंअभ्युदयरूपंप्रत्यवायपरिहारार्थंफलंचनभवति आपत्कल्पेनयोधर्ममित्यनेनोक्तमप्येतत् शास्त्रा दरार्थंपुनरुच्यते ३० नेति धर्मज्ञोब्राह्मणःकिंचिदप्यपकृतंनराज्ञःकथयेत् अपितुस्वशक्त्यैववक्ष्यमाणाभिचारादिनापका रिणोमनुष्यान् निगृह्णीयात् ततश्चस्वकीयधर्मविरोधादपकृष्टापराधकरणेसत्यभिचारादिनदोषायेत्येवंपरमतमेतत् नत्वभि चारोविधीयतेराजनिवेदनंवानिषिध्यते ३१ स्ववीर्यादिति यस्मात्स्वसामर्थ्याद्राजसामर्थ्याच्चपराधीनराजसामर्थ्यापेक्षया

विश्वैश्चदेवैःसाध्यैश्चब्राह्मणैश्चमहर्षिभिः आपत्सुमरणाद्भीतैर्विधेःप्रतिनिधिःकृतः २९ प्रभुःप्रथम कल्पस्ययोऽनुकल्पेनवर्त्तते नसांपरायिकंतस्यदुर्मतेर्विद्यतेफलम् ३० नब्राह्मणोवेदयेतकिंचिद्राज निधर्मवित् स्ववीर्येणैवतान् शिष्यान्मानवानपकारिणः ३१ स्ववीर्याद्राजवीर्याच्चस्ववीर्यंबलवत्तरम् तस्मात्स्वेनैववीर्येणनिगृह्णीयादरीन्द्विजः ३२ श्रुतीरथर्वांगिरसीःकुर्यादित्यविचारयन् वाक्शस्त्रं वैब्राह्मणस्यतेनहन्यादरीन्द्विजः ३३ क्षत्रियोबाहुवीर्येणतरेदापदमात्मनः धनेनवैश्यशूद्रौतुजपहो मैर्द्विजोत्तमः ३४ विधाताशासितावक्तामैत्रोब्राह्मणउच्यते तस्मैनाकुशलंब्रूयान्नशुष्कांगिरमीरयेत् ३५

मर्थ्यमेवस्वाधीनत्वाद्बलीयःतस्मात्स्वेनवीर्येणैवशत्रून्ब्राह्मणोनिगृह्णीयात्तत्किंस्ववीर्यमित्याह ३२ श्रुतीरिति अथर्ववेदअं गिरसीर्दृष्टाभिचारश्रुतीरविचारयन्कुर्यात् तदर्थमभिचारमनुतिष्ठेत् इत्यर्थःयस्मादभिचारमंत्रोच्चारणात्मिकाब्राह्मणस्यवागेव शस्त्रंकार्यकरणात् शस्त्रंतेनब्राह्मणःशत्रून्हन्यात् ३३ क्षत्रियइति क्षत्रियःस्वपौरुषेणशत्रुतःपरिभवलक्षणामात्मनआपदंनि स्तरेत् वैश्यशूद्रौपुनःप्रतिकर्त्रेधनदानेनब्राह्मणस्त्वभिचारात्मकैर्जपहोमैः ३४ विधातेति विहितकर्मणामनुष्ठातापुत्रशिष्या दीनांशास्ताप्रायश्चित्तादिधर्माणांवक्तासर्वभूतमैत्रीप्रधानोब्राह्मणउच्यतेतस्मैनिगृह्यतामयमित्येवंअनिष्टंनब्रूयात्नाप्याक्रो

शंवाचंवाग्दंड धिग्दंडरूपांतस्योच्चारयेत् ३५ नवैइति कन्या अनूढापितरुणीतथाअल्पाध्यायिमूर्खव्याध्यादिपीडितानुपनीताः
श्रौतान्सायंप्रातर्होमान्नकुर्युः ह्वावयेदितिप्रसक्तावयंकन्यादीनांप्रतिषेधः ३६ नरकइति एतेकन्यादयोहोमंकुर्वाणानरकंगच्छंति
यस्यतदग्निहोत्रंप्रतिनिधिरूपेणकुर्वंतिसोपिनरकंगच्छतितस्मात्श्रौतकर्मप्रवीणःसमस्तवेदाध्यायीहोताकार्यः ३७ प्राजाप
त्यमिति आधानेप्राजापत्यमश्वंप्रजापतिदेवताकंधनसंपत्तौसत्यांब्राह्मणोदक्षिणामदत्वाकृतेप्याधानेअनाहिताग्निर्भवतिआधा
नफलन्नलभतेतस्मादाधानेअश्वंदक्षिणांदद्यात् ३८ पुण्यानीति श्रद्धावान्वशीकृतेंद्रियःयज्ञव्यतिरिक्तानितीर्थयात्रादीनिक
र्माणिपुण्यानिकुर्वीतनतुशास्त्रोक्तदक्षिणातोऽल्पदक्षिणैर्यजेतयज्ञोपकारार्थत्वाद्दक्षिणायाःस्वल्पेनाप्युद्वेगादिदोषनिषेधार्थ

नवैकन्यानयुवतिर्नाल्पविद्योनबालिशः होतास्यादग्निहोत्रस्यनार्त्तोनासंस्कृतस्तथा ३६ नरकेहिपतंत्येते
जुह्वतःसचयस्यतत् तस्माद्वैतानकुशलोहोतास्याद्वेदपारगः ३७ प्राजापत्यमदत्वाश्वमग्न्याधेयस्यदक्षिणा
म् अनाहिताग्निर्भवतिब्राह्मणोविभवेसति ३८ पुण्यान्यन्यानिकुर्वीतश्रद्दधानोजितेंद्रियः नत्वल्पदक्षिणै
र्यज्ञैर्यजेतेहकथंचन ३९ इंद्रियाणियशःस्वर्गमायुःकीर्त्तिंप्रजाःपशून् हंत्यल्पदक्षिणोयज्ञस्तस्मान्नाल्पध
नोयजेत् ४० अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणःकामकारतः चांद्रायणंचरेन्मासंवीरहत्यासमंहितत् ४१
येशूद्रादधिगम्यार्थमग्निहोत्रमुपासते ऋत्विजस्तेहिशूद्राणांब्रह्मवादिषुगर्हिताः ४२

मिदंवचनम् ३९ इंद्रि
याणीति श्रक्षुरादीनिइंद्रियाणिजीवतःख्यातिरूपंयशःस्वर्गायुषीमृतस्यख्यातिरूपांकीर्त्तिमपत्यानिपशूंश्चाल्पदक्षिणोय-
ज्ञः नाशयतितस्मादल्पदक्षिणादानेनयागंनकुर्यात् ४० अग्निहोत्रीति अग्निहोत्रीब्राह्मणः इच्छातोग्निषुसायंप्रातर्होमानकृत्वा
मासंचांद्रायणंचरेत्यस्माद्वीरःपुत्रःतस्यहत्याहननंतत्तुल्यमेतत्तथाचश्रुतिः वीरहावाएषदेवानांभवतियोऽग्निमुद्वासयते अन्येतुमा
समपविध्येतिसमर्थयंति ४१ येशूद्रादिति येशूद्रादधिगम्यार्थंप्राप्यसामान्याभिधानेनयाचनेनवा अर्थस्वीकृत्यवृषलाग्न्युपसेविना
मितिवक्ष्यमाणलिंगादाधानपूर्वकमग्निहोत्रमनुतिष्ठंतितेशूद्राणामेवयाजकाःनतुतेषांतत्फलंभवतिअतस्तेवेदवादिषुनिंदिताः ४२

तेषामिति तेषांशूद्रधनाहिताग्निपरिचारिणांमूर्खाणांमूर्द्धिपादंदत्वाशूद्रःतेनदानेनसततंपरलोकेदुःखेभ्योनिस्तरतिननुयजमानानांफलंभवति ४३ अकुर्वन्निति नित्यंयद्विहितंसंध्योपासनादिनैमित्तिकंचशिवस्पर्शादौस्नानादितदकुर्वन्तथाप्रतिषिद्धंहिंसादिकुर्वन्विहितनिषिद्धेषु असंतासक्तिंकुर्वन्नरोमनुष्यजातिमात्रंप्रायश्चित्तमर्हतिनान्विंद्रियार्थेषुसर्वेषुनप्रसज्येतकामतइतिनिषेधात् निंदितपदेनैवप्रसक्तश्चेंद्रियार्थेष्वपिसंगृहीतंअतःपृथक्नवक्तव्यंउच्यतेअस्यस्नातकव्रतेषुपाठात्तत्रव्रतानीमानिधारयेदित्युपक्रमान्नायंप्रतिषेधःकिंतुव्रतविधिःतर्हिअकुर्वन्विहितंकर्मत्यनेनैवप्राप्तत्वात्पृथक्नवक्तव्यमितिचेन्नस्नातकेतरविषयत्वेनास्यसविषयत्वात् ४४ अकामतइति अबुद्धिकृतेपापेप्रायश्चित्तंभवतीत्याहुःपंडिताःएकेपुनराचार्याःकामतःकृतेपापेप्रायश्चित्तंभवतीत्याहुःएतच्चपृथक्स्तुत्यभिधानंप्रायश्चित्तगौरवार्थंश्रुतिनिदर्शनादिति इंद्रोयतीन्सालावृकेभ्यःप्रायच्छत्तमश्लीलावागेत्यवदत्सप्रजापतिमुपाधावत्तस्मात्तमुपहव्यंप्रायच्छदिति अस्यार्थः इंद्रोयतीन्बुद्धिदत्तवान्सप्रायश्चित्तार्थंप्रजापतिसमीपमगमत्तस्मैप्रजापतिरुपहव्याख्यंकर्मप्रायश्चित्तंदत्तवान् अतःकामकारकृतेप्य प्रायश्चित्तम् ४५ अकामतइति अनिच्छातःकृतंपापंवेदाभ्यासेनशुध्यतिनश्यतिवेदाभ्यासेनेतिकामकृतविषयप्रायश्चित्तापेक्षयालघुप्रायश्चित्तोपलक्षणार्थंप्रायश्चित्तांतरेणापिविधानात्रागद्वेषादिव्यामूढतयापुनरनिच्छातःकृतंनानाप्रकारैःप्रायश्चित्तैर्विशोधनतपोभिःशुध्यतीतिगुरुप्रायश्चित्तपरंअतःपूर्वोक्तस्यैवायमध्याहारः यद्यपिअधिकारनिरूपणंप्रकृतप्रायश्चित्तंत्वनंतरंवक्ष्यतितथाप्यज्ञानात्लघुप्रायश्चित्ताधिकारीज्ञानात्गुरुप्रायश्चित्तेअधिक्रियतइतिअधिकारिनिरूपणमेवेदम् ४६ प्रायश्चित्तीयतामिति

तेषांसततमज्ञानांवृषलाग्न्युपसेविनाम् पदामस्तकमाक्रम्यदातादुर्गाणिसंतरेत् ४३ अकुर्वन्विहितंकर्मनिंदितंचसमाचरन् प्रसक्तश्चेंद्रियार्थेषुप्रायश्चित्तीयतेनरः ४४ अकामतःकृतेपापेप्रायश्चित्तंविदुर्बुधाः कामकारकृतेप्याहुरेकेश्रुतिनिदर्शनात् ४५ अकामतःकृतंपापंवेदाभ्यासेनशुध्यति कामतस्तुकृतंमोहात्प्रायश्चित्तैःपृथग्विधैः ४६ प्रायश्चित्तीयतांप्राप्यदैवात्पूर्वकृतेनवा नसंसर्गंव्रजेत्सद्भिःप्रायश्चित्तेऽकृतेद्विजः ४७

दैवात्प्रमादादन्यशरीरकृतेन पूर्वजन्मार्जितदुष्कृतेन क्षयरोगादिभिः सूचितेन प्रायश्चित्तीयतां प्राप्य अकृतेप्रायश्चित्ते साधुभिः सह-याजनादिना संसर्गं न गच्छेत् ४७ इहेति इहजन्मनि निषिद्धाचरणैः केचित्पूर्वजन्मकृतैः दुष्टस्वभावा मनुष्याः कौनख्यादिरूपविपर्ययं प्राप्नुवंति ४८ सुवर्णेति पिशुनइति अन्नहर्तेति एवंकर्मेति ब्राह्मणसुवर्णचोरः कुत्सितनखत्वं प्राप्नोति निषिद्धसुरापः श्यावदंततां ब्रह्महा क्षयरोगित्वं गुरुभार्यागामी विकोपमेहनत्वं पिशुनो विद्यमानदोषाभिधायी दुर्गंधिनासत्वं अविद्यमानदोषाभिधायको दुर्गंधिमुखत्वं धान्यचोरोऽंगहीनत्वं धान्यादेरपद्रव्येण मिश्रणकर्ता अतिरिक्तांगत्वं अन्नचोरो मंदानलत्वं अननुज्ञाताध्यायी मूकत्वं वस्त्रचोरः श्वेतकुष्ठत्वम् अश्वचोरः खंजत्वं एवं बुद्धिवाक्चक्षुःश्रोत्रविकला विकृतरूपाः साधुविगर्हिता अप्राग्जन्मार्जितोपभुक्तदुष्कृत

दीपहर्ता भवेदंधः काणो निर्वापकस्तथा हिंसारुचिः सदा रोगी वातांगः पारदारिकः

इह दुश्चरितैः केचित्केचित्पूर्वकृतैस्तथा प्राप्नुवंति दुरात्मानो नरा रूपविपर्ययम् ४८ सुवर्णचोरः कौनख्यं सुरापः श्यावदंतताम् ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ४९ पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् धान्यचोरोऽंगहीनत्वमातिरेक्यं तु मिश्रकः ५० अन्नहर्ता मयाविंत्वं मौक्यं वागपहारकः वस्त्रापहारकः श्वैत्र्यं पंगुतामश्वहारकः ५१ एवं कर्मविशेषेण जायंते सद्विगर्हिताः जडमूकांधबधिरा विकृताकृतयस्तथा ५२ चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये निंद्यैर्हि लक्षणैर्युक्ता जायंते ऽनिष्कृतैनसः ५३

शेषेणोत्पद्यंते ४९ ५० ५१ ५२ चरितेति यस्मादनिष्कृतमनाशितमेनो यैस्ते अनिष्कृतैनसः अकृतप्रायश्चित्ताः परलोकोपभुक्तदुष्कृतशेषेण निंद्यैर्लक्षणैः कुनखित्वादिभिर्जायंते तस्माद्विशुद्धये पापनिर्हरणार्थं प्रायश्चित्तं सदा कर्तव्यं एवं भिन्नेजुहोतीतिवत् न नैमित्तिकमात्रं प्रायश्चित्तं किंतु निष्कृतैनस इत्युपादानात् तथा विशुद्धये चरितव्यमित्युपदेशात् पापक्षयार्थिन एवाधिकारः तथाहि प्रायश्चित्तं हि चरितव्यमिति विधावधिकारापेक्षायां फलमात्रनिर्देशादिति रात्रिसत्रन्यायेन श्रूयमाणमेव विशुद्धय इति फलमधिकारिविशेषणं युक्तं इममेवार्थं स्फुटयति याज्ञवल्क्यः विहितस्याननुष्ठानान्निंदितस्य च सेवनात् अनिग्रहाच्चेंद्रियाणां नरः पतनमृच्छति तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये पतनमृच्छति पापं प्राप्नोतीत्यर्थः विशुद्धये पापविनाशाय बहून्वर्षग

णान्घोरान्नरकान्प्राप्य तत्क्षयात् संसारान्प्रतिपद्यंते महापातकिनस्त्विमा नित्यादिना महापातक्यादीनान्नरकादिप्राप्तिं वक्ष्यति नंतन्नैमित्तिकमत्रलंभायश्चित्तानां संगच्छते तस्माद्ब्रह्मवधादिजनितपापक्षयार्थिन एव प्रायश्चित्तविधावधिकार इति ज्ञेयम् ५३ ब्रह्महत्येति ब्राह्मणप्राणवियोगफलको व्यापारो ब्रह्महत्या नच साक्षादन्यस्याभिनियुज्यते तथा गोहिरण्यग्रहणादिनिमित्तकार्यकस्यापि तदुद्देशेन ब्राह्मणमरणे ब्रह्महत्या नन्वेवमिषुकारस्यापीषूत्पादनद्वारेण तथा वध्यस्यापि हंतृगतमन्यूत्पादनद्वारा ब्रह्महत्या स्यात् उच्यते शास्त्रतो यस्य ब्राह्मणहंतृत्वं प्रतीयते स एव ब्रह्महंता अत एव शातातपः गोभूहिरण्यग्रहणे स्त्रीसंबंधकृतेऽपि वा यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकं एवंचान्यान्यपि शास्त्रीयाण्येव ब्रह्मवधनिमित्तानि ज्ञेयानि तथा रागात् द्वेषात् प्रमादाद्वा स्वतः परत एव वा ब्राह्मणं घातयेद्यस्तु तमाहुर्ब्रह्मघातकं इति प्रयोजकस्यापि हंतृत्वं शास्त्रीयम् तथा निषिद्धसुरापानं ब्राह्मणसुवर्णहरणं गुरुभार्यागमनं एते श्वसह संसर्गः

ब्रह्महत्यां सुरापानं स्तेयं गुर्वंगनागमः महांति पातकान्याहुः संसर्गश्चापि तैः सह ५४ अनृतंच समुत्कर्षे राजगामि च पैशुनम् गुरोश्चालीकनिर्बंधः समानि ब्रह्महत्यया ५५ ब्रह्मोज्झता वेदनिंदा कौटसाक्ष्यं सुहृद्वधः गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ५६ निक्षेपस्यापहरणं नराश्वरजतस्य च भूमिवज्रमणीनांच रुक्मस्तेयसमं स्मृतम् ५७ रेतःसेकः स्वयोनीषु कुमारीष्वंत्यजासु च सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ५८

संवत्सरेण पततीत्यस्यैतानि महापातकान्याहुः महापातकसंज्ञा चेयं वक्ष्यमाणस्योपपातकादिसंज्ञा लाघवार्थम् ५४ अनृतमिति जात्युत्कर्षनिमित्तमुत्कर्षभाषणं यथा ब्राह्मणोहमिति अब्राह्मणो ब्रवीति राजनि वास्तेनादीनां परेषां मरणफलकं दोषाभिधानं गुरोश्चानृताभिशंसनं तथाच गोतमः गुरोरनृताभिशंसनमिति महापातकसमानीति एतानि ब्रह्महत्या समानीति ५५ ब्रह्मोज्झतेति ब्रह्मणः अधीतवेदस्यानभ्यासेन विस्मरणं असत्शास्त्राश्रयणेन वेदकुत्सनं साक्ष्ये मृषाभिधानं ब्राह्मणस्य वधः निषिद्धस्य लशुनादेर्भक्षणं अनाद्यस्य पुरीषादेरदनम् मेधातिथिस्तु न भोक्ष्यत इति संकल्प्य यद्भुज्यते तदनाद्यमित्याचष्टे एतानि सुरापानसमानि ५६ निक्षेप इति ब्राह्मणसुवर्णव्यतिरिक्तनिःक्षेपस्य हरणं तथा मनुष्यतुरगरूप्यभूमिहीरकमणीनां हरणं सुवर्णस्तेयपतुल्यम् ५७ रेतःसेक इति सोदर्यभगिनीचंडालीसखिपुत्रभार्यासु एतेषु रेतःसेकस्तं गुरुभार्यागमनसमानमाहुः एतेषां

भेदेनसमीकरणंयद्येनसमीकरणंतस्यतेनप्रायश्चित्तार्थंयत्कौटसाक्ष्यसुहृद्वधयोः सुरापानसमीकरणंब्रह्महत्याप्रायश्चित्तंवक्ष्यतित
द्विकल्पार्थंयत्पुनर्गुरोरलीकनिर्बंधस्यब्रह्महत्यासमीकृतस्यपुनरुपरिशाद्ब्रह्महत्याप्रायश्चित्तनिर्देशःसमीकृतानांन्यूनप्रायश्चित्तंभव
तीतिज्ञापनार्थंतथाचलोकेराजसमःसचिवइत्युक्तेसचिवस्यन्यूनतैवगम्यतेअत्रोपदेशिकप्रायश्चित्तेअतिदिश्यतांप्रायश्चित्तंतन्न्यून-
प्रायश्चित्तंसमीकृतानांच इदानीमुपपातकान्याह ५८ गोवधइत्यादि परिवित्तितानुजेनोढइति कन्यायादूषणमिति व्रात्यतेति स
वैति इंधनेति अनाहितेति धान्येति गोहननंजातिकर्मदुष्टानांयाजनंपरपत्नीगमनंआत्मविक्रयःमातृपितृगुरूणांचसुश्रूषाद्यकरणं
सर्वदाब्रह्मयज्ञत्यागःनवेदविस्मरणंब्रह्मोज्झतेत्यनेनोक्तत्वात् अग्नेश्चस्मार्तस्यत्यागःश्रौतानामग्निहोत्र्यपविध्याग्नीनित्युक्तत्वा-
त्कृतस्यचसंस्कारभरणाद्यकरणंकनीयसाआदौविवाहेकृतेज्येष्ठस्यपरिवित्तित्वंभवतिदाराग्निहोत्रसंयोगइत्यादिनाप्रागुक्तंकनिष्ठ
स्यपरिवेत्तृत्वंतयोश्चकन्यायादानंतयोरेवविवाहहोमादियागेचार्त्विज्यंकन्यायामैथुनवर्जमंगुलीप्रक्षेपादिनादूषणंरेतःसेकपर्यंत
मैथुनेषुतुरेतःसेकःस्वयोनीषुकुमारीष्वंत्यजासुचइत्युक्तत्वात्प्रतिषिद्धवृद्धिजीवनंब्रह्मचारिणोमैथुनंतडागोद्यानभार्यापत्यानांविक्र

## गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः गुरुमातृपितृत्यागःस्वाध्यायाग्न्योःसुतस्यच ५९

यःयथाकालमनुपनयनंव्रात्यता तथाचोक्तंअतऊर्ध्वंत्रयोप्येतेयथाकालमसंस्कृताःइति बांधवानांपितृव्यादीनांअननुवृत्तिःप्रतिनि
यतवेतनग्रहणपूर्वकमध्यापनंप्रतिनियतवेतनप्रदानपूर्वकमध्ययनंचअविक्रय्यादीनांतिलादीनांविक्रयःसुवर्णाद्युत्पत्तिस्थानेषुराजा
ज्ञयाअधिकारःमहतांप्रवाहप्रतिबंधहेतूनांसेतुबंधादीनांप्रवर्त्तनंओषधीनांजातिमात्रादीनांहिंसनंएतच्चज्ञानपूर्वकाभ्यासक्रियायां-
प्रायश्चित्तगौरवात्पच्यूल्कटजानांओषधीनामित्यादिनावक्ष्यतितत्सकृद्धिंसायांप्रायश्चित्तलाघवाद्भार्यादिस्त्रीणांवेश्यात्वंकृत्वातदुप-
जीवनंश्येनादियज्ञेनानपराद्धस्यमारणंमंत्रौषधिनावशीकरणंपाकादिदृष्टप्रयोजनार्थमात्रमेववृक्षच्छेदनंअनातुरस्यदेवपित्राद्युद्देश
मंतरेणपाकाद्यनुष्ठानंनिंदितान्नस्यलशुनादेःसकृदनिच्छयाभक्षणंइच्छापूर्वकाभ्यासभक्षणेपुनर्गर्हितानाद्ययोर्जग्धिरित्युक्तत्वात्
सत्यधिकारेअग्न्यनाधानंसुवर्णादन्यस्यसारद्रव्यस्यापहरणंऋणानांचऋणैस्त्रिभिर्ऋणवान्नरोजायतेतदनपकरणंश्रुतिस्मृतिविरुद्धशा
स्त्रशिक्षणंनृत्यगीतवादित्रोपसेवनंधान्यताम्रलोहादेःपशूनांचचौर्यंद्विजातीनांपीतमद्यायाःस्त्रियागमनंस्त्रीशूद्रवैश्यक्षत्रियहननंअ

दृष्टार्थकर्माभावशुद्धिः एतत्प्रत्येकमुपपातकं बांधवत्यागइत्यनेनैवमात्रादीनांत्यागप्राप्तौ पृथग्वचननिंदार्थं पितृव्यादिबांधवत्यागेनाव-
श्यमेवप्रायश्चित्तंभवतिकिंतुमात्रादित्यागप्रायश्चित्तान्न्यूनमपिभवति ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ब्राह्मणस्ये
ति ब्राह्मणस्यदंडहस्तादिनापीडाक्रियायदतिशयदुर्गंधितया घ्रेयं लशुनपुरीषादितस्यमद्यस्यचाघ्राणंकुटिलत्वंवक्रतापुंसिचमुखा
दौमैथुनंइत्येतत्प्रत्येकंजातिभ्रंशकरंस्मृतम् ६७ खरेति गर्दभतुरगोष्ट्रमृगहस्तिछागमेषमत्स्यसर्पमहिषाणांप्रत्येकंवधःसंकरीकर-

परिवित्तितानुजेनोढे परिवेदनमेवच तयोर्द्दानंचकन्यायास्तयोरेवचयाजनम् ६० कन्यायादूषणंचै
ववार्धुष्यंव्रतलोपनम् तडागारामदाराणामपत्यस्यचविक्रयः ६१ व्रात्यताबांधवत्यागोभृत्याध्यापन
मेवच भृताच्चाध्ययनादानमपण्यानांचविक्रयः ६२ सर्वाकरेष्वधीकारोमहायंत्रप्रवर्त्तनम् हिंसौषधी
नांस्त्र्याजीवोऽभिचारोमूलकर्मच ६३ इंधनार्थमशुष्काणांद्रुमाणामवपातनम् आत्मार्थंचक्रियारंभो
निंदितान्नादनंतथा ६४ अनाहिताग्नितास्तेयमृणानामनपक्रिया असच्छास्त्राधिगमनंकौशील
व्यस्यचक्रिया ६५ धान्यकुप्यपशुस्तेयंमद्यपस्त्रीनिषेवणम् स्त्रीशूद्रविट्क्षत्रवधोनास्तिक्यंचोप
पातकम् ६६ ब्राह्मणस्यरुजःकृत्याघ्रातिरघ्रेयमद्ययोः जैह्म्यंचमैथुनंपुंसिजातिभ्रंशकरंस्मृतम् ६७
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा संकरीकरणंज्ञेयंमीनाहिमहिषस्यच ६८ निंदितेभ्योधना
दानंवाणिज्यंशूद्रसेवनम् अपात्रीकरणंज्ञेयमसत्यस्यचभाषणम् ६९ कृमिकीटवयोहत्यामद्यानु
गतभोजनम् फलैधःकुसुमस्तेयमधैर्यंचमलावहम् ७० एतान्येनांसिसर्वाणियथोक्तानिपृथक्पृथक्
यैर्यैर्व्रतैरपोह्यंतेतानिसम्यङ्निबोधत ७१

णंज्ञेयम् ६८ निंदितइति अप्रतिग्राह्यधनेभ्यः प्रतिग्रहोवाणिज्यंशूद्रस्यपरिच
र्या अनृताभिधानंइत्येतत्प्रत्येकमपात्रीकरणंज्ञेयम् ६९ कृमीति कृमयः क्षुद्रजंतवः तेभ्यईषत्स्थूलाः कीटाः तेषांवधः पक्षिणां
गतंयज्ञोज्यमपिशाकाद्येकत्रपिटकादौ कृत्वामद्येनसहानीतंतस्यभोजनम् मेधातिथिस्तुमद्यानुगतंमद्यसंस्पृष्टमाह तन्नतत्रप्राय
श्चात्फलकाष्ठपुष्पाणांचौर्यं अल्पेःपचयेपिअत्यंतंवैक्लव्यं एतत्सर्वंप्रत्येकंमलिनीकरणम् ७० एतानीति एतानिब्रह्महत्यादीनिपापानिमे

देनयथोक्तानियैर्यैर्व्रतैः प्रायश्चित्तरूपैर्नाश्यंतेतानिश्शृणुत ७१ ब्रह्महेति योब्राह्मणंहतवान्सवनेकुटींकृत्वाहतस्यशिरःकपालंत-
दभावेअन्यस्यापिचिन्हंकृत्वाअरण्येभैक्षभुगात्मनःपापनिर्हरणायद्वादशवर्षाणिवसेत्व्रतंकुर्यात् अत्रापिकृतवपनोनिवसेदितिच-
स्यतिअनंतरोक्ताअपिविशेषाग्राह्याः तथाचयमः सप्तागाराण्यपूर्वाणियान्यसंकल्पितानिच संविशेत्तानिशनकैर्विधूमेभुक्तवज्जने भू-
णाम्नेदेहिमेभिक्षामेनोविख्याप्यसंचरेत् एककालंचरेद्भैक्ष्यंतदलब्ध्वोदकंपिबेत् अयंचद्वादशवार्षिकविधिःब्राह्मणस्याज्ञानकृतब्रा-
ह्मणवधे इयंविशुद्धिरुदितामभाप्याकामतोद्विजमितिवक्ष्यमाणत्वात् क्षत्रियवैश्यशूद्राणांतुक्रमेणैतद्द्वादशवार्षिकंद्विगुणंत्रिगुणं-
चतुर्गुणंचद्रष्टव्यम् यथोक्तंभविष्यपुराणे द्विगुणाःक्षत्रियाणांतुवैश्यानांत्रिगुणाःस्मृताः चतुर्गुणास्तुशूद्राणांपर्षदुक्तामहात्मनाम्
पर्षदुच्यव्रतंप्रोक्तंशृणुध्वेपापकर्मणाम् यावद्भिर्ब्राह्मणैर्ब्राह्मणानांसभातत्तोद्विगुणैःक्षत्रियाणांद्रष्टव्यव्यवहारदर्शनाद्यर्थासभाभ-
वेत्त्रिगुणैर्वैश्यैर्वैश्यानांचतुर्भिःशूद्रैःशूद्राणामितिसभवाच्चक्षत्रियादीनांत्रयाणांव्रतमपिद्विगुणत्रिगुणचतुर्गुणमित्यर्थःएतानिच म-

ब्रह्महाद्वादशसमाःकुटींकृत्वावनेवसेत् भैक्षाश्यात्मविशुद्ध्यर्थंकृत्वाशवशिरोध्वजम् ७२ लक्ष्यंशस्त्र-
भृतांवास्याद्विदुषामिच्छयात्मनः प्रास्येदात्मानमग्नौवासमिद्धेत्रिरवाक्शिराः ७३ मूक्तब्रह्मवधप्रायश्चित्तवचना

निर्गुणवत्कृतनिर्गुणब्राह्मणहननविषयत्वेनभविष्यपुराणेव्याख्यातानि हंताचेत्सगुणवान्वीर अकामान्निर्गुणोहतः कर्तव्यानिमनूक्ता-
निकृत्वावैआश्वमेधिकम् ब्रह्महाद्वादशाब्दानिकुटींकृत्वावनेवसेत् गच्छेदवभृथंवापिअकामान्निर्गुणे हते जातिशक्तिगुणापेक्षंस-
कृद्बुद्धिकृतंतथा अनुबंधादिविज्ञायप्रायश्चित्तंप्रकल्पयेत् इतिविश्वामित्रवचनात्प्रायश्चित्ताधिक्यमूहनीयम् कामकृतेतुब्राह्मणव-
धेद्विगुणंब्रह्मवधप्रायश्चित्तंचतुर्विंशतिवर्षंतदाहांगिराः अकामतःकृतेपापेप्रायश्चित्तंनकामतः स्यात्त्वकामकृतेयत्तुद्विगुणंबुद्धिपूर्व-
के ७२ लक्ष्यमिति धनुःशराद्यायुधधारिणांब्रह्मवधपापक्षयार्थमयंलक्षीभूतइत्येवंजानतांस्वेच्छयाबाणलक्ष्यभूतोवावतिष्ठेत् याव-
न्मृतोमृतकल्पोवाविशुध्येत्तदाहयाज्ञवल्क्यः संग्रामेवाहतोलक्ष्यभूतःशुद्धिमवाप्नुयात् मृतकल्पःप्रहारार्तोजीवन्नपिविशुध्यति अ-
ग्नौप्रदीप्तेवाऽधोमुखस्त्रीन्वारान्शरीरंप्रक्षिपेत् तथाप्रास्येतयथाम्रियेतेत्यापस्तंबवचनात् एवंप्रक्षिपेत्एतत्प्रायश्चित्तद्वयमनंतरे-
वक्ष्यमाणंचयजेतवाश्वमेधेनेत्येवंप्रायश्चित्तत्रयमिदंकामतःक्षत्रियस्यब्राह्मणवधविषयंमनुश्लोकमेवलिखित्वायथाव्याख्यानंभविष्य

पुराणे लक्ष्यं शस्त्रभृतां वा स्यात् विदुषामिच्छयात्मनः प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः यजेत वाश्वमेधेन क्षत्रियो विप्रघातकः प्रायश्चित्तत्रयं ह्येतत् क्षत्रियस्य प्रकीर्त्तितम् क्षत्रियो निर्गुणो धीरं ब्राह्मणं वेदपारगम् निहत्य कामतो वीरलक्ष्यः शस्त्रभृतो भवेत् न तु वेदविदं धीरं ब्राह्मणं चाग्निहोत्रिणम् निहत्य कामादात्मानं क्षिपेदग्नाववाक्शिराः निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान् गुरु यष्टा वा अश्वमेधेन क्षत्रियो यो महीपतिः ७३ यजेतेति यजेत वाश्वमेधेनेत्यनन्तरं व्याख्यातं स्वर्जिता यागविशेषेण गोसवेन वा अभिजिता विश्वजिता वा त्रिवृता अग्निष्टुता वा याजयेत् एतानि चाज्ञानतो ब्रह्मवधे प्रायश्चित्तानि त्रैवर्णिकस्य विकल्पितानि तदुक्तं भविष्यपुराणे स्वर्जितादेश्च यद्वीर कर्मणां पृतनापते अनुष्ठानं द्विजातीनां वधे त्वमतिपूर्वके ७४ जपन्निति वेदानां मध्यादेकं वेदं जपन् स्वल्पाहारः संयतेन्द्रियो ब्रह्महत्यापापनिर्हरणाय योजनानां शतं गच्छेत् एतदप्यज्ञानकृते जातिमात्रब्राह्मणवधे त्रैवर्णिकस्य प्रायश्चित्तं तथा च भविष्यपुरा

यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा ७४ जपन् वान्यतमं वेदं योजनानां शतं व्रजेत् ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः ७५ सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् धनं वा जीवनायालं गृहं वा सपरिच्छदम् ७६ हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम् जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम् ७७

णे अयमेव श्लोकः पठितो व्याख्यातश्च जातिमात्रं यदा विप्रं हन्यादमतिपूर्वकम् वेदविच्चाग्निहोत्री च तदा तस्य भवेदिदम् ७५ सर्वस्वमिति सर्वस्वं वा वेदविदे ब्राह्मणाय दद्यात् यावद्धनं जीवनाय समर्थं गृहं वा गृहोपयोगि धनधान्यादियुतं अतः सर्वस्वं वा गृहं वा सपरिच्छदं दद्यात् जीवनायालमिति वचनात् जीवनपर्याप्तसर्वस्वं गृहं वा दद्यात् न ततो ऽल्पं एतच्च जातिमात्रब्राह्मणवधे ब्राह्मणस्य प्रायश्चित्तम् तथा च भविष्यपुराणम् जातिमात्रं यदा हन्यात् ब्राह्मणं ब्राह्मणो गुरु वेदाभ्यासविहीनो वै धनवाननग्निवर्जितः प्रायश्चित्तं तदा कुर्यादिदं पापविशुद्धये धनं वा जीवनायालं गृहं वा सपरिच्छदम् ७६ हविष्येति नीवारादिहविष्यान्नभोजी विख्यातप्रसरणाद्रप्यपश्चिमादपस्रोतः प्रतिसरस्वतीं यायात् एतच्च जातिमात्रब्राह्मणवधे ज्ञानपूर्वके तथा भविष्यपुराणे जातिमात्रे हते विप्रे देवेन्द्र मतिपूर्वकम् हन्ता यदा वेदहीनो धनेन च प्रवर्जितः तदैतत् कल्पयेत्तस्य प्रायश्चित्तं निबोध मे हविष्यभुक् सरेद्वापि प्रतिस्रोतः सरस्वतीम् अथवा परिमिताहारस्त्रीन्वारान् वेदसंहिताम् संहिताग्रहणात् पदक्रमव्युदासः

अत्रापिभविष्यपुराणीयोविशेषः जातिमात्रंतुयोहन्यात्विप्रंत्वमतिपूर्वकम् ब्राह्मणोत्यंतगुणवान् तेनेदंपरिकल्पयेत् जपेद्वा
नियताहारस्त्रिर्वेदस्यसंहिताम् ऋचोयजूंषिसामानित्रैविद्याख्यंसत्रोत्तम ७७ कृतेति इदानींसमाप्तेद्वादशेवर्षेइत्युपदेशात्द्वाद
शवार्षिकस्यविशेषमाह लूनकेशनखश्मश्रुर्गोब्राह्मणहितेरतः गोब्राह्मणोपकारान्कुर्वन्ग्रामसमीपेगोष्ठपुण्यदेशवृक्षमूलान्यतमे
निवसेत्वनेकुटींकृत्वेत्यस्यविकल्पार्थमिदम् ७८ ब्राह्मणार्थइति प्रक्रांतेद्वादशवार्षिके ऽतरान्युदकहिंसकाद्याक्रांतब्राह्मणस्यगो
र्वापरित्राणार्थंप्राणान्परित्यजन्ब्रह्महत्ययामुच्यते गोब्राह्मणानांतत परित्राणायामृतोपिमुच्यते ७९ त्र्यवरइति स्तेनादिभिर्ब्रा
ह्मणसर्वस्वेऽपह्रियमाणेतदानयनार्थंनिर्व्याजंयथाशक्तिप्रयत्नंकुर्वन्तत्रत्रिवारान्युद्धेप्रवर्त्तमानोनानीतेपिसर्वस्वेब्रह्महत्यापापात्

कृतवापनोनिवसेद्ग्रामांतेगोव्रजेपिवा आश्रमेवृक्षमूलेवागोब्राह्मणहितेरतः ७८ ब्राह्मणार्थेगवार्थे
वासद्यःप्राणान्परित्यजेत् मुच्यतेब्रह्महत्यायागोप्तागोर्ब्राह्मणस्यच ७९ त्रिवारंप्रतिरोद्धावासर्वस्व
मवजित्यवा विप्रस्यतन्निमित्तेवाप्राणालाभेविमुच्यते ८० एवंदृढव्रतोनित्यंब्रह्मचारीसमाहितः स
माप्तेद्वादशेवर्षेब्रह्महत्यांव्यपोहति ८१ शिष्ट्वावाभूमिदेवानांनरदेवसमागमे स्वमेनोऽवभृथस्नातो
हयमेधेविमुच्यते ८२

मुच्यते अथवाप्रथमवारएवविप्रसर्वस्वंअपहृतंजित्वाअर्पयतितथापिमुच्यते यद्वा धनापहारक
स्तेनः स्वेनैवब्राह्मणसंवर्द्धनमरणेप्रवर्त्ततेतथादायाद्यपहृतधनदानेनतंजीवयतितदापितन्निमित्तेतस्यप्राणालाभेब्रह्महत्यापापा
न्मुच्यतेएतदितरप्रकारांतरेणतुरक्षणेगोप्तागोर्ब्राह्मणस्यचेत्यपुनरुक्तिः ८० एवमिति एवमुक्तप्रकारेणसर्वदानियमोपहितःस्त्रीसं
योगादिशून्य.संयतमनाःसमाप्तेद्वादशेवर्षेब्रह्महत्यापापंनाशयतिएवंब्राह्मणार्थइत्यादिसर्वप्रक्रांतद्वादशवार्षिकस्यबोद्धव्यम् ८१
शिष्ट्वेति अश्वमेधेब्राह्मणानामृत्विजांक्षत्रियस्ययजमानस्यसमागमेषुब्रह्महत्यापापंशिष्ट्वानिवेद्यअवभृथस्नातोब्रह्महत्यापा-
पान्मुच्यतेद्वादशवार्षिकस्योपसंस्कृतत्वात् अतंत्रमेवेदंप्रायश्चित्तंतथाचभविष्यपुराणे यदातुगुणवान्विप्रोहत्वाविप्रंतुनिर्गुणम्
अकामतस्तदागच्छेत्स्नानंत्वेवाश्वमेधिकम् गोविंदराजकृतअश्वमेधविवर्ज्जितसकलप्रायश्चित्तशेषतअस्यप्रक्रांतद्वादशवार्षिक

प्रायश्चित्तस्यांतराऽवभृथस्नानेतनैवशुद्धिरित्याह तदयुक्तंभविष्यपुराणवचनविरोधात् ८२ धर्मेति यस्माद्ब्राह्मणोधर्मस्यकारणं ब्राह्मणेनधर्मोपदेशेकृतेधर्मानुष्ठानात्राजातस्याग्रंप्रांतंमन्वादिभिरुच्यतेताभ्यांब्राह्मणक्षत्रियाभ्यांसमूलाग्रधर्मतरुनिष्पत्तेः तस्मात्तेषां समागमेअश्वमेधेपापंनिवेद्यावभृथस्नातः शुध्यंतीतिअस्यैवविशेषः ८३ ब्राह्मणइति ब्राह्मणउत्पत्तिमात्रेणैवकिंपुनः श्रुतादिभिर्देवानामपिपूज्यःकृतरांमनुष्याणांलोकस्यचप्रत्यक्षवत्प्रमाणंतदुपदेशस्यप्रामाण्यात्यस्मात्तत्रवेदएवकारणंवेदमूलकत्वादुपदेशस्ययतएवमतः ८४ तेषामिति तेषांविदुषांब्राह्मणानांमध्येवेदज्ञास्त्रयोपिकिंमुताधिकाःयत्पापनिर्हरणायप्रायश्चित्तंब्रूयुः तत्पापिनाविशुद्धयेभवति यस्माद्विदुषांवाक्पावित्रीततश्चप्रकाशप्रायश्चित्तार्थंविदुषामपिपरिषदवश्यंकार्यारहस्यप्रायश्चित्तेपुनरेतन्नास्तिरहस्यत्वविरोधात् ८५

धर्मस्यब्राह्मणोमूलमग्रंराजन्यउच्यते तस्मात्समागमेतेषामेनोविख्याप्यशुध्यति ८३ ब्राह्मणःसंभवेनैवदेवानामपिदैवतम् प्रमाणंचैवलोकस्यब्रह्मात्रैवहिकारणम् ८४ तेषांवेदविदोब्रूयुस्त्रयोप्येनःसुनिष्कृतिम् सातेषांपावनायस्यात्पवित्रंविदुषांहिवाक् ८५ अतोन्यतममास्थायविधिंविप्रःसमाहितः ब्रह्महत्याकृतंपापंव्यपोहत्यात्मवत्तया ८६

अतइति अस्मात्प्रायश्चित्तगणादन्यतमंप्रायश्चित्तंब्राह्मणादिः संयतमनाआश्रित्यप्रशस्तार्थतयाब्रह्महत्याकृतंपापमपनुदतिएतच्चब्रह्मवधादिप्रायश्चित्तविधानंसकृत्पापकरणविषयंपापावृत्तौतुआवर्त्तनीयंएनसिगुरुणिगुरूणिलघुनिलघूनिइतिगौतमस्मरणात् पूर्णेचानस्यनस्ज्ञातशूद्रहत्याव्रतंचरेत् इतिबहुमारणेप्रायश्चित्तबहुत्वस्यवक्ष्यमाणत्वाच्चविधेःप्राथमिकादस्माद्द्वितीयेद्विगुणंस्मृतम् तृतीयेत्रिगुणंप्रोक्तंइतिगौतमस्मरणात् गृहदाहादिनायुगपदनेकब्राह्मणहननेतुभविष्यपुराणीयोविशेषः ब्राह्मणोब्राह्मणंवीरब्राह्मणौवाबहून्गुह निहत्ययुगपद्वीरएकंप्राणांतिकंचरेत् कामतस्तुयदाहन्याद्ब्राह्मणान्कुरुसत्तम तदात्मानंदहेदग्नौविधिनायेनतच्छृणु एतच्चाज्ञानविषयंसर्वमेवैतत् तथाअकामतोयदाहन्यात्ब्राह्मणान्ब्राह्मणोगुह चरेद्वनेतथाघोरेयावत्प्राणपरिक्षयम् एतच्चाज्ञानवधेप्रकृतत्वाद्युगपन्मारणविषयंक्रमप्रमारणेतुविधेःप्राथमिकादस्माद्दित्यावृत्तिविधायकंवेदवचनात् ८६

हत्वेति प्रकृतत्वाद्ब्राह्मणगर्भविषयं स्त्रीपुन्नपुंसकत्वेनाविज्ञातं क्षत्रियं वैश्यं च यागप्रवृत्तं हत्वा आत्रेयीं च स्त्रियं ब्राह्मणीं तथात्रेयीं च ब्राह्मणीमिति यमस्मरणात् हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यात् आत्रेयी च रजस्वला ऋतुस्नातोच्यते रजस्वलां ऋतुस्नातामात्रेयीमिति वसिष्ठस्मरणात् एवं चानात्रेयीब्राह्मणीवधे त्रैवार्षिकं उपपातकं यथोक्तं स्त्रीशूद्रविट्क्षत्रवध इति यच्चोत्तरश्लोके कृत्वा च स्त्रीसुहृद्वधमिति तदाहिताग्निब्राह्मणस्य ब्राह्मणीभार्याविषयम् तथा चांगिराः आहिताग्नेर्ब्राह्मणस्य हत्वा पत्नीमनिंदिताम् ब्रह्महत्याव्रतं कुर्यात् आत्रेयीघ्नस्तथैव च ८७ उक्त्वेति हिरण्यभूम्यादियुक्तसाक्ष्ये अनृतमुक्त्वा गुरोश्च मिथ्याभिशापमुत्पाद्य निक्षेपं च ब्राह्मणसुवर्णादन्यद्रजतादिद्रव्यं क्षत्रियादेः सुवर्णमपि चापहृत्य स्त्रीवधं च यथाव्याख्यातं कृत्वा मित्रं चाब्राह्मणं हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्यात् ८८ इयमिति एतत्तु प्रायश्चित्तं विशेषउपदेशांतरेणाकामतो ब्राह्मणवधेऽभिहितं कामतस्तु ब्राह्मणवधे नेयन्निष्कृतिः नैतत्प्रा

हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् राजन्यवैश्यौ चेजानावात्रेयीमेव च स्त्रियम् ८७ उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ८८ इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ८९ सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् तया स कायेनिर्दग्धे मुच्यते किल्बिषात्ततः ९०

यश्चित्तं किं तु ततो द्विगुणादिकमरणात्मकमिति प्रायश्चित्तगौरवार्थं न तु प्रायश्चित्ताभावार्थम् कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः इति पूर्वोक्तविरोधात् ८९ सुरामिति सुराशब्दः पैष्टीमात्रे मुख्यो न तु गौडीमाध्वीषु त्रितयानुगतैकरूपाभावात्प्रत्येकं च शक्तिकल्पने शक्तित्रयकल्पनागौरवप्रसंगात् गौड्यादिमदिरासु गुणवृत्त्यापि सुराशब्दप्रयोगोपपत्तेः अतएव भविष्यपुराणे सुरा च पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे पैष्ट्याः पानेन चैतासां प्रायश्चित्तं निबोधत यमेनोक्तम् महाबाहो समाः सर्वा मदिरा मदयोगतः एतासामिति निर्द्धारणे षष्ठी एतासां गौडीमाध्वीपैष्टीनां प्रकृतानां मध्ये पैष्टीपाने मनूक्तं प्रायश्चित्तं सुरां पीत्वा द्विजो मोहादिति निबोधतेत्यर्थः मुख्यां सुरां पैष्टीं रागादिव्यामूढतया द्विजो ब्राह्मणादिश्च पीत्वा अग्निवर्णां सुरां पिबेत्तया सुरया शरीरे निर्दग्धे सति द्विजस्तस्मात्पापान्मुच्यते एतच्च गुरुत्वात्कामकारकृतसुरापानविषयम् तथा च बृहस्पतिः

सुरापानेकामकृतेज्वलन्तींतांविनिःक्षिपेत् मुखेतयासनिर्दग्धोमृतःशुद्धिमवाप्नुयात् ९० गोमूत्रमिति गोमूत्रजलगोक्षीराज्यघृतगोमयरसानामन्यतममग्निस्पर्शंकृत्वायावन्मरणंपिबेत् ९१ कणान्वेति अथवाविकृतवासाजटावान्सुराभाजनचिन्हः सूक्ष्मवपवान् आकृष्टतैलंतिलंवारात्रावेकवारंसंवत्सरपर्यंतंसुरापानपापनाशनार्थंभक्षयेत् इदमबुद्धिपूर्वकंअमुख्यसुरापानेद्रष्टव्यम् नतुगुणांतरवैकल्पिकत्वात् ९२ सुरेति यस्मात्तंडुलपिष्टसाध्यत्वात्सुरा अन्नमलंमलशब्देनचपापमुच्यते तस्माद्ब्राह्मणक्षत्रियवैश्यापैष्टींसुरांनपिबेयुः इत्यनेनप्रतिषेधेसतिएतदतिक्रमेसुरांपीत्वेतिप्रायश्चित्तं अन्नमलानुवादाच्चपैष्टीनिषेधएवस्फुटः त्रैवर्णिकस्यमनुनेरोक्तः ९३ गौडीति यागुडेनकृतासागौडीएवंपिष्टेनकृतापैष्टीमधुकवृक्षोमधुःतत्पुष्पैः कृतासामाध्वीएवंत्रिःप्रकारासुराजा

गोमूत्रमग्निवर्णंवापिबेदुदकमेववा पयोघृतंवामरणाद्गोशकृद्रसमेववा ९१ कणान्वाभक्षयेदब्दंपिण्याकंवासकृन्निशि सुरापानापनुत्त्यर्थंवालवासाजटीध्वजी ९२ सुरावैमलमन्नानांपाप्माचमलमुच्यते तस्माद्ब्राह्मणराजन्यौवैश्यश्चनसुरांपिबेत् ९३ गौडीपैष्टीचमाध्वीचविज्ञेयात्रिविधासुरा यथैवैकातथासर्वानपातव्याद्विजोत्तमैः ९४ यक्षरक्षःपिशाचान्नंमद्यंमांससुरासवम् तद्ब्राह्मणेननात्तव्यंदेवानामश्नताहविः ९५

रासाम्भनिबोधनमितरसुरापेक्षयाब्राह्मणस्यगौडीमाध्वीपानेप्रायश्चित्त गौरवार्थम् यथावैकापैष्टीसुरापूर्ववाक्यनिषिद्धत्वात्त्रैवर्णिकस्यापेक्षयातथापूर्वागौडीमाध्वीचद्विजोत्तमैर्नपातव्या ९४ यक्षेति मद्यमत्रनिषिद्धंपैष्टीगौडीमाध्वीव्यतिरिक्तंनवविधंवोद्धव्यंतान्याहपुलस्त्यः पानसद्राक्षमाध्वीकंखार्जूरंतालमैक्षवम् माध्वीकंटांकमार्द्वीकमैरेयंनारिकेरजम् सामान्यानिद्विजातीनांमद्यान्येकादशैवच द्वादशंतुसुरामद्यंसर्वेषामधमंस्मृतम् मांसंचप्रतिषिद्धंसुराचत्रिप्रकाराप्रोक्ता असूयतइतिआसवोमद्यानामवस्थाविशेषः मद्यःकृतसंसाधनोसंजातमद्यस्वभावः यमधिकृत्यइदंपुलस्त्योक्तंप्रायश्चित्तम् द्राक्षेक्षुटंकखर्जूरपनसादेश्चयोरसः सद्योजातंतुपीत्वातुत्र्यहाच्छुद्धोद्विजोत्तमः एवंमद्यादिचतुष्टयंयक्षरक्षःसंबंध्यन्नं ततस्तद्ब्राह्मणेनदेवानांहविर्भक्षयतानाशितव्यम् निषिद्धायाःसुरायाइहोपादानंयक्षरक्षःपिशाचान्नतयानिंदार्थम् अत्रकेचिद्देवानामश्नताहविरितिपुंलिंगनिर्देशा-

ब्राह्मणस्य पुंसः एवमद्यप्रतिषेधो न स्त्रिया इत्याहुः तदसत् पतिलोकंनसायातिब्राह्मणीयासुरांपिबेत् इहैवसाशुनीगृध्रीसूकरीचो
पजायते इतियाज्ञवल्क्यादिस्मृतिविरोधात् ९५ अमेध्यइति ब्राह्मणोमद्यपानमदमूढबुद्धिःसन् अशुचौवापतेत् वेदवाक्यंवाउच्चार
येत् ब्रह्महत्याद्यकार्यंवाकुर्यात् अतस्तेनमद्यपानंनकार्यमितिपूर्वस्यैवानुवादः ९६ यस्येति यस्यब्राह्मणस्यकायगतंब्रह्मजीवात्माएक
वारमपिमद्येनाप्लाव्यतेतथानेकवारमपियोब्राह्मणोमद्यंपिबतितस्यब्राह्मण्यंव्यपैतिशूद्रतांसमाप्नोतितस्मान्मद्यंसर्वथैवनपातव्यं ९७
एषेति इदंसुरापानजनितपापस्यनानाप्रकारंप्रायश्चित्तमभिहितंतस्मात्परंब्राह्मणसुवर्णहरणपापस्यनिष्कृतिंवक्ष्यामि ९८ सुवर्णेति
अपहृत्यसुवर्णंतुब्राह्मणस्यपतःस्वयमितिशातातपस्मरणात् ब्राह्मणसुवर्णचोरोब्राह्मणोराजानंगत्वाब्राह्मणसुवर्णापहारंस्वीयक
र्मकथयन्ममनिग्रहंकरोत्विति ब्रूयात् ब्राह्मणग्रहणंमनुष्यमात्रप्रदर्शनार्थम् प्रायश्चित्तीयतेनरइतिप्रकृतत्वात् क्षत्रियादीनांचप्राय-

अमेध्येवापतेन्मत्तोवैदिकंवाप्युदाहरेत् अकार्यमन्यत्कुर्याद्वाब्राह्मणोमदमोहितः ९६ यस्यकाय
गतंब्रह्ममद्येनाप्लाव्यतेसकृत् तस्यव्यपैतिब्राह्मण्यंशूद्रत्वंचसगच्छति ९७ एषाविचित्राभिहिता
सुरापानस्यनिष्कृतिः अतऊर्ध्वंप्रवक्ष्यामिसुवर्णस्तेयनिष्कृतिम् ९८ सुवर्णस्तेयकृद्विप्रोराजानम
भिगम्यतु स्वकर्मख्यापयन्ब्रूयान्मांभवाननुशास्त्विति ९९ गृहीत्वामुसलंराजासकृद्धन्यात्तुतंस्व
यम् वधेनशुध्यतिस्तेनोब्राह्मणस्तपसैववा १०० श्चित्ताभिधानात् ९९ गृहीत्वेति स्कंधेनादायमुसलमित्यादेरु

क्तत्वात्तेनार्पितमुसलादिकंगृहीत्वास्तेयकारिणंमनुष्यमेकवारंराजास्वयंहन्यात् सचस्तेनोवधेनमुसलाभिघातेनहतोमुक्तोपिवाशु
ध्यतीतियाज्ञवल्क्यस्मरणात् मृतोवामृतकल्पोवाजीवन्तस्मात्पापान्मुच्यतेब्राह्मणःपुनस्तपसैववेत्येवकारदर्शनात् नचात्रनजातुब्रा
ह्मणंहन्यात्सर्वपापेष्वपिस्थितमितितपसैवशुध्यतिअतएवमन्वर्थव्याख्यानपरेभविष्यपुराणे यदेतद्वचनंवीरब्राह्मणस्तपसैववा न
चैनंमरणादिहन्ब्राह्मणस्यसुराधिप तपसैवेत्यनेनेहप्रतिषेधोवधस्यतु वाशब्दश्चक्षत्रियादीनामपितपोविकल्पार्थःब्राह्मणस्यतु
तपएवेतिनियमोनतुब्राह्मणस्यैवतपःअतएवभविष्यपुराणे इतरेषामपिविभोतपोनप्रतिषिध्यतइति तदेवतपआह १०० तपसेति
तपसास्वर्णस्तेयेउत्पन्नंपापंद्विजोनिर्हर्तुमिच्छन् अरण्यग्रहणात्तायत्याज्ज ब्रह्महणियद्व्रतमुक्तंतत्कुर्यात् एतच्चद्वादशवार्षिकं

क्लेशगौरवात् क्षत्रियादीनां मरणेन विकल्पितत्वाच्च ब्राह्मणसंबंधिनः सुवर्णापहरणे पंचकृष्णलको माषस्ते सुवर्णस्तु षोडशेति सुवर्णपरिमाणं द्रष्टव्यं न ततोन्यूनस्य परिमाणापेक्षया मनूक्तपरिमाणस्य ग्रहीतुं न्याय्यत्वात् यत्त्वधिकपरिमाणं भविष्यपुराणे श्रूयते तत्तथानुबंधविशिष्टापहारे तथाविध प्रायश्चित्तविषयमेव तथा भविष्यपुराणे क्षत्रियाद्यास्त्रयो वर्णा निर्गुणाह्ययनत्पराः गुणाढ्यस्य तु विप्रस्य पंच निष्कान् हरंति चेत् निष्कानेकादश तथा दग्ध्वात्मानं तु पावके शुद्ध्येयुर्मरणाद् ऊर्ध्वं चरेद् ब्रह्मात्मशुद्धये १०१ एतैरिति ब्राह्मणसुवर्णस्तेयजनितपापमेभिर्व्रतैर्द्विजो निर्हरेत् व्रततपसो द्वयोरुक्तत्वात् एतैरिति बहुवचनं संबंधामपि प्रायश्चित्तं कल्पनीयमिति ज्ञापनार्थम् गुरुस्त्रीगमननिमित्तं पुनः पापमेभिर्वक्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत् १०२ गुर्विति

तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम् चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महणो व्रतम् १०१ एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः गुरुस्त्रीगमनीयं तु व्रतैरेभिरपानुदेत् १०२ गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये सूर्मीं ज्वलंतीं स्वाश्लिष्येन्मृत्युना स विशुध्यति १०३ स्वयं वा शिश्नवृषणावुत्कृत्याधाय चांजलौ नैर्ऋतीं दिशमातिष्ठेदा निपातादजिह्मगः १०४ खट्वांगी चीरवासा वा श्मश्रुलो विजने वने प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः १०५ चांद्रायणं वा त्रीन्मासानभ्यस्येन्नियतेंद्रियः हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये १०६

दीनिकर्माणि त्यक्तत्वात् गुरुः पिता तल्पं भार्या गुरुतल्पं गुरुभार्या तद्गामी गुरुभार्यागः विख्याप्य लोहमये तप्तशयने स्वप्यात् लोहमयीं स्त्रीप्रकृतिं कृत्वा ज्वलंतीमालिंग्य मृत्युनासौ विशुद्धो भवति १०३ स्वयंवेति स्ववालिंगवृषणौ छित्वा अंजलौ कृत्वा यावत् शरीरपातमवक्रगतिः सन् दक्षिणपश्चिमां दिशं गच्छेत् एवं च उक्तप्रायश्चित्तद्वयं गुरुत्वसवर्णगुरुभार्याविषयं ज्ञानतो रेतोविसर्गपर्यंतमैथुनविषयम् १०४ खट्वांगीति खट्वांगभृद् ब्रह्मवधलांछनः केशनखलोमधारी संयतमना निर्जने वने वर्षमेकं प्राजापत्यव्रतं चरेत् एवं च वक्ष्यमाणप्रायश्चित्तं च लघुत्वात् भार्यादिक्रमेणाज्ञानविषयं बोद्धव्यम् १०५ चांद्रायणमित्यादि यद्वा गुरुभार्यापापनिर्हरणाय संयतेंद्रियः फलमूलादिना हविष्येण नीवारादिकृतयवाग्वा वा त्रीन् मासान् चांद्र

पणात्याचरेत् एतच्च पूर्वोक्तादपि लघुत्वात् असाध्वीमसवर्णां वा गुरुभार्यां गच्छतो द्रष्टव्यम् १०६ एतैरित्यादि एभिरुक्तव्रतैर्ब्रह्महत्या
दिमहापातककारिणः पापं निर्हरेयुः गोवधाद्युपपातककारिणः पुनर्वक्ष्यमाणप्रकारेणानेकरूपव्रतैः पापानि निर्हरेयुः १०७ उपेति अ
नेन विधिना यस्त्रीतियावत्कुलकं उपपातकयुक्तो गोघाती शिथिलयवागूरूपेण प्रथममासं यवान्पिबेत् स शिरसं मुंडितशिरा लूनश्मश्रुः तेन
हतगोचर्मणाच्छादितदेहो मासत्रयमेव गोष्ठे वसेत् गोमूत्रेणाचरेत् स्नानं संयतेंद्रियः कृत्रिमलवणवर्जितं हविष्यमन्नमेकाहं भुक्त्वा द्वितीये
न्हि सायं द्वितीयतृतीयमासावश्नीयात् मासद्वयमेव दिवा प्रातस्तामनुगच्छेत्तासां च गवां खुरप्रहाराद्दूर्ध्वमुत्थितं रजस्तिष्ठन्नास्वादयेत् कं
डूयनादिना ताः परिचर्य प्रणम्य च रात्रौ भित्त्यादिकमनुपेक्ष्य उपविष्ट आसीत तथा शक्तिर्विगतक्रोध उत्थितासु गोषु पश्चादुत्तिष्ठेत् वने च

एतैर्व्रतैरपोहेयुर्महापातकिनो मलम् उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः १०७ उपपातकसंयुक्तो
गोघ्नो मासं यवान्पिबेत् कृतवापो वसेद्गोष्ठे चर्मणा तेन संवृतः १०८ चतुर्थकालमश्नीयादक्षारलवणं मि
तम् गोमूत्रेणाचरेत्स्नानं द्वौ मासौ नियतेंद्रियः १०९ दिवानुगच्छेद्गास्तास्तु तिष्ठन्नूर्ध्वं रजः पिबेत् शुश्रू
षित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ११० तिष्ठंतीष्वनुतिष्ठेत्तु व्रजंतीष्वप्यनुव्रजेत् आसीनासु तथासी
नो नियतो वीतमत्सरः १११ आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः पतितां पंकलग्नां वा सर्वोपायैर्वि
मोचयेत् ११२ उष्णे वर्षति शीते वा मारुते वाति वा भृशम् न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ११३
आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले भक्षयंतीं न कथयेत् पिबंतं चैव वत्सकम् ११४ अनेन विधिना
यस्तु गोघ्नो गामनुगच्छति स गोहत्याकृतं पापं त्रिभिर्मासैर्व्यपोहति ११५ परिक्रमंतीषु पश्चात्ततः परिक्रमेत् उ
पविशत्सु गोषूपविशेत् व्याधितां चौरव्याघ्रादिभयहेतुभिराक्रांतां पतितां कर्दमलग्नां वा यथाशक्ति मोचयेत् तथा उष्णे आदित्ये
तपति मेघेन वर्षति शीते चोपस्थिते मारुते चात्यर्थं वाति गोर्यथाशक्ति रक्षामकृत्वा आत्मनस्त्राणं न कुर्यात् तथा आत्मनो अन्येषां वा गृ
हे क्षेत्रे खले वा सस्यादि भक्षणं कुर्वतीं वत्सं च क्षीरं पिबंतं न कथयेत् अनेनोक्तविधानेन यो गोघ्नो गाः परिचरति स गोवधजनितपा
पं त्रिभिर्मासैरपनुदति १०८ १०९ ११० १११ ११२ ११३ ११४ ११५ ९ ९ ९

वृषभेति वृषएकादशोयासांताः सम्यगनुष्ठितप्रायश्चित्तोदद्यात् अविद्यमानेतावतिधनेसर्वस्वंवेदज्ञेभ्योब्राह्मणेभ्योदद्यात् ११६ एतदेवेति अपरेनूपपातकिनोवक्ष्यमाणावकीर्णिवर्जिताः पापनिर्हरणार्थमेतद्गोवधप्रायश्चित्तंचांद्रायणंवालघुलाकुर्युःचांद्रायणंतुलघुसुपपातकेजातिशक्तिगुणाद्यपेक्ष्यंवायोजनीयम् ११७ अवेति अवकीर्णीवक्ष्यमाणःकाणेनगर्दभेनरात्रौचयतेनतंत्रेणनिर्ऋत्याख्यांदेवतांयजेत् ११८ हुत्वेति ततोनिर्ऋत्यैगर्दभवपादिहोमान्यथावच्चतुष्पथेकृत्वातदंतेसमासिंचतुमारुतइत्येतयाऋचामारुतेंद्रबृहस्पत्यग्नीनांघृतेनाहुतीर्जुहुयादमसिक्त्वादवकीर्णवतोलक्षणमाह ११९ कामतइति इच्छातोद्विजःअवकीर्णीभवेद्गत्वाब्रह्मचारीचयोषितमितिवचनात्स्त्रीयोनौशुक्रोत्सर्गंब्रह्मचर्यस्यातिक्रममवकीर्णरूपंसर्वज्ञावेदविदःप्राहुः १२० मारुत

वृषभैकादशागाश्चदद्यात्सुचरितव्रतः अविद्यमानेसर्वस्वंवेदविद्भ्योनिवेदयेत् ११६ एतदेवव्रतंकुर्युरुपपातकिनोद्विजाः अवकीर्णिवर्ज्यंशुद्ध्यर्थंचांद्रायणमथापिवा ११७ अवकीर्णीतुकाणेनगर्दभेनचतुष्पथे पाकयज्ञविधानेनयजेतनिर्ऋतिंनिशि ११८ हुत्वाग्नौविधिवद्धोमानंततश्चसमेत्यृचा वातेंद्रगुरुवह्नीनांजुहुयात्सर्पिषाहुतीः ११९ कामतोरेतसःसेकंव्रतस्थस्यद्विजन्मनः अतिक्रमंव्रतस्याहुर्धर्मज्ञाब्रह्मवादिनः १२० मारुतंपुरुहूतंचगुरुंपावकमेवच चतुरोव्रतिनोऽभ्येतिब्राह्मंतेजोऽवकीर्णिनः १२१ एतस्मिन्नेनसिप्राप्तेवसित्वागर्दभाजिनम् सप्तागारांश्चरेद्भैक्षंस्वकर्मपरिकीर्तयन् १२२ तेभ्योलब्धेनभैक्षेणवर्तयन्नेककालिकम् उपस्पृशंस्त्रिषवणंत्वब्देनसविशुद्ध्यति १२३

मिति व्रतचारिणोवेदाध्ययननियमानुष्ठानजंतेजःतदवकीर्णिनःसतोमरुदिंद्रबृहस्पतिपावकांश्चतुरःसंक्रामतिअतस्तेभ्यआहुतीर्जुहुयात्इत्याज्याहुतेरयमनुवादः १२१ एतस्मिन्निति एतस्मिन्नवकीर्णाख्येपापउत्पन्नेपूर्वोक्तंगर्दभयागादिकृत्वागर्दभचर्मपरिधायेतिहारीतस्मरणात्सगर्दभसंबंधिचर्मप्रावृतोवर्णीअहमितिस्वकर्मख्यापनंकुर्वन्सप्तगृहाणिभैक्ष्यंचरेत्तेभ्योलब्धेनभैक्ष्येणवर्तयन्नेककालिकमिति १२२ तेभ्यइति तेभ्यःसप्तगृहेभ्योलब्धेनभैक्षेणएककालमाहारंकुर्वन्सायंप्रातर्मध्यंदिनेषुचस्नानमाचरन्संवत्सरेणैवविशुद्ध्यति १२३

जातीति ब्राह्मणस्यरुजः कृत्वेत्यादिजातिभ्रंशकर्मोक्तंतन्मध्यादन्यतमं कर्मविशेषं इच्छातः कृत्वा वक्ष्यमाणंसांतपनंसप्ताहसाध्यंकुर्या
त् अनिच्छातः पुनः कृत्वाप्राजापत्यंवक्ष्यमाणंचरेत् १२४ संकरेति खराश्वोष्ट्रेत्यादिना संकरीकरणान्युक्तानिनिंदितेभ्योधनादानमि
त्यादिनाचापात्रीकरणान्युक्तानितेषांमध्यादन्यतममिच्छातः कृत्वाचांद्रायणंमासंशुद्ध्यर्थंकुर्यात् कृमिकीटवयोहत्येत्यादिनामलिनीक
रणान्युक्तानितन्मध्यादेकमिच्छातः कृत्वात्रिरात्रंयवागूंक्वथितामश्नीयात् १२५ तुरीयइति ब्रह्महत्यातुरीयोभागः त्रैवार्षिकरूपः द्वा
दशवार्षिकस्यचतुर्थोभागः एतच्चप्रायश्चित्तंस्त्रीशूद्रविट्क्षत्रवधइतिउपपातकत्वेनोपदिष्टंत्रैवार्षिकसापेक्षयागुरुत्वात् वृत्तस्थक्षत्रि
यस्यकामतोवधेद्रष्टव्यं वैश्येसाध्वाचारेकामतोहतेअष्टमोभागः सार्द्धवार्षिकंमंतं शूद्रेवृत्तस्थेहतेकामतोद्रष्टव्यंनवमासिकम् १२६
अकामतइति अबुद्धिपूर्वकंपुनः क्षत्रियंनिहत्यवृषभेनाधिकंसहस्रंयासांगवांताआत्मशुद्ध्यर्थंब्राह्मणेभ्योदद्यात् १२७ त्र्यब्दमिति

जातिभ्रंशकरंकर्मकृत्वान्यतममिच्छया चरेत्सांतपनंकृच्छ्रंप्राजापत्यमनिच्छया १२४ संकरापात्रकृ
त्यासुमासंशोधनमैन्दवम् मलिनीकरणीयेषुतप्तः स्याद्यावकैस्त्र्यहम् १२५ तुरीयोब्रह्महत्यायाः क्षत्रि
यस्यवधे स्मृतः वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तुषोडशः १२६ अकामतस्तुराजन्यंविनिपात्यद्विजोत्त
मः वृषभैकसहस्रागादद्यात्सुचरितव्रतः १२७ त्र्यब्दंचरेद्वानियतोजटीब्रह्मणोव्रतम् वसन्दूरतरेग्रा
मादृक्षमूलनिकेतनः १२८ एतदेवचरेदब्दंप्रायश्चित्तंद्विजोत्तमः प्रमाप्यवैश्यंवृत्तस्थंदद्याच्चैकशतं
गवाम् १२९ एतदेवव्रतंकृत्स्नंषण्मासान्शूद्रहाचरेत् वृषभैकादशावापिदद्याद्विप्रायगाः सिताः १३०

यद्वासंयतोजटावान् ग्रामादतिदूरवृक्षमूलेकृतनिवासोब्रह्महणियदुक्तंब्रह्महाद्वादशसमा इत्यादितद्वर्षत्रयंकुर्यात्नतुतुरीयो
ब्रह्महत्यायाइत्यनेनपुनरुक्तिर्वाच्याजटीदूरतरेग्रामात्वृक्षमूलनिकेतनइतिवचनात्व्यतिरिक्तशवशिरोध्वजधारणादिसकल
धर्मनिवृत्त्यर्थत्वादस्यग्रंथस्यअकामाधिकाराच्चइदमकामतः अतएवांगलाघवाद्युचितम् १२८ एतदिति एतदेवद्वादशवार्षि
कव्रतमकामतः साध्वाचारंवैश्यंनिहत्यवर्षमेकंब्राह्मणादिः कुर्यात् एकाधिकंवागोशतंदद्यात् १२९ एतदिति एतदप्यकामतः
इदमेवव्रतंशूद्रहाषण्मासंचरेत् वृषभएकादशोपासांगवांताः शुक्लवर्णाब्राह्मणायदद्यात् १३० मार्जारेति बिडालनकुलचाष

भेकंकुक्कुरगोधापेचककाकानामेकैकंहत्वाशूद्रहत्याव्रतंस्त्रीशूद्रवधइत्युपपातकप्रायश्चित्तंगोवधव्रतंचांद्रायणंचरेन्नतुशूद्रेज्ञेयस्तु योऽयंत्रोत्सादिप्रायश्चित्तंपापस्यलघुत्वात् चांद्रायणमप्येतत्कामतोऽभ्यासादिविषयेद्रष्टव्यम् १३१ पयइति अबुद्धिपूर्वकंमार्जा-रादीनांवधेत्रिरात्रंक्षीरंपिबेत् अथमंदानलत्वाद्दिनानसमर्थः त्रिरात्रंप्रतियोजनमध्वनोव्रजेत् अत्राशक्तस्त्रिरात्रंनद्यांस्नायात् तत्राप्यक्षमस्त्रिरात्रंआपोहिष्ठेत्यादिसूक्तंजपेत् यथोत्तरंलघुत्वात्पूर्वपूर्वासंभवेउत्तरोत्तरपरिग्रहः नतुवैकल्पिकः १३२ अभ्रिमिति सर्पंहत्वाब्राह्मणायतीक्ष्णाग्रंलोहदंडंदद्यात् नपुंसकंहत्वापलालभारंसीसकंचमाषकंब्राह्मणायदद्यात् १३३ घृतेति सूकरेहतेघृतपूर्णं घटंब्राह्मणायदद्यात्तित्तिरिसंज्ञिनिपक्षिणिहतेचतुराढकपरिमाणंतिलंदद्यात् शुकेहतेद्विवर्षंवत्संक्रौंचाख्यंपक्षिणंहत्वात्रिवर्षंवत्सं ब्राह्मणायदद्यात् १३४ हत्वेति हंसबलाकामयूरवानरश्येनभासाख्यंपक्षिणामन्यतमंहत्वाब्राह्मणायगांदद्यात् १३५ वासइति अ

मार्जारनकुलौहत्वाचाषंमंडूकमेवच श्वगोधोलूककाकांश्चशूद्रहत्याव्रतंचरेत् १३१ पयःपिबेत्त्रिरात्रं वायोजनंवाध्वनोव्रजेत् उपस्पृशेत्स्रवंत्यांवासूक्तंवाब्दैवतंजपेत् १३२ अभ्रिंकार्ष्णायसींदद्यात्सर्पं हत्वाद्विजोत्तमः पलालभारकंषंढेसैसकंचैकमाषकम् १३३ घृतकुंभंवराहेतुतिलद्रोणंतुतित्तिरौ शुके द्विहायनंवत्संक्रौंचंहत्वात्रिहायनम् १३४ हत्वाहंसंबलाकांचबकंबर्हिणमेवच वानरंश्येनभासौचस्पर्शयेद्ब्राह्मणायगाम् १३५ वासोदद्याद्धयंहत्वापंचनीलान्वृषान्गजम् अजमेषावनड्वाहंखरंहत्वैकहायनम् १३६ क्रव्यादांस्तुमृगान्हत्वाधेनुंदद्यात्पयस्विनीम् अक्रव्यादान्वत्सतरीमुष्ट्रंहत्वातुकृष्णलम् १३७ जीनकार्मुकबस्तावीन्पृथग्दद्याद्विशुद्धये चतुर्णामपिवर्णानांनारीर्हत्वानवस्थिताः १३८

श्वंहत्वावस्त्रंदद्यात्हस्तिनंहत्वापंचनीलान्वृषभान्दद्यात्प्रत्येकंछागमेषौहत्वावृषभंदद्यात्गर्दभंहत्वाएकवर्षंवत्संदद्यात् १३६ क्रव्यादानिति आममांसभक्षिणोमृगान्व्याघ्रादीन्हत्वाबहुक्षीरांधेनुंदद्यात् आममांसाभक्षकान्हरिणादीन्हत्वावत्सिकांदद्यान्उष्ट्रंहत्वासुवर्णकृष्णलंरक्तिकांदद्यात् १३७ जीनेति ब्राह्मणादिवर्णस्त्रियोलोभाद्दुष्टशीलपुरुषव्यभिचारिणीर्हत्वाब्राह्म-णादिक्रमेणचर्मपुटधनुःछागमेषान्शुद्ध्यर्थंदद्यात् १३८ दानेति अभिमतीनामभावाद्दानेनसर्वपापनिर्हरणंकर्तुमसमर्थोब्रा

णादिः प्रत्येकंवधे कृच्छ्रं प्राथस्यात्प्राजापत्यंद्विज. पापनिर्हरणार्थंचरेत्सर्पादयश्चाग्निकार्ष्यायसीं दद्यादित्येवमादयो न्येन सर्वं तागृहीतं ने
१३९ अस्थीति अनस्थिसाहचर्यात् अस्थिमतां प्राणिनां कृकलासादीनां सहस्रस्य वधे शूद्रवधप्रायश्चित्तमोपदेशिकं कुर्यात् अस्थिरहि
तानां च शकटपरिमितानां वधे तदेव प्रायश्चित्तं कुर्यात् १४० किंचिदिति अस्थिमतां क्षुद्रजंतूनां कृकलासादीनां प्रत्येकं वधे किंचिदेव द
द्यात् अस्थिमतां वधे पणो देयः स्वर्णस्येति स्मरणात् किंचिदेवेति पणो बोद्धव्यः अनस्थिमतां तु यूकामत्कुणादीनां प्रत्येकं वधे प्राणायामेन
शुद्धो भवति प्राणायामश्च सव्याहृतिकां सप्रणवां सावित्रीं शिरसा सह त्रिः पठेदायतप्राणः प्राणायामः स उच्यते इति वसिष्ठोक्तलक्षणो ग्रा
ह्यः १४१ फलेति फलदानामाम्रादीनां वृक्षाणां गुल्मानां कुब्जकादीनां वल्लीनां गुडूच्यादीनां लतानां वृक्षशाखासक्तानां पुष्पितानां च वी
रुधां कुष्मांडादीनां प्रत्येकं छेदने पापप्रमोचनार्थं सावित्र्यादि ऋक्शतं जपनीयं इंधनार्थमशुष्काणां द्रुमाणामवपातनमित्यादेरुपपातक

दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये १३९ अस्थिमतां तु सत्त्वा
नां सहस्रस्य प्रमापणे पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् १४० किंचिदेव तु विप्राय दद्यादस्थिमतां वधे
अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति १४१ फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम् गुल्मवल्लीलता
नां च पुष्पितानां च वीरुधाम् १४२ अन्नाद्यजानां सत्त्वानां रसजानां च सर्वशः फलपुष्पोद्भवानां च घृतप्राशो वि-
शोधनम् १४३ कृष्टजानामोषधीनां जातानां च स्वयं वने वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः १४४ ए
तैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम् ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे १४५

मध्ये पठितस्य गुरुप्रायश्चि
त्ताभिधानात् इदं फलवद्वृक्षादिच्छेदने लघुप्रायश्चित्तं सकृदबुद्धिपूर्वकविषयं वेदितव्यम् १४२ अन्नाद्येति अन्नादिषु जातानां गुडा
दिरसजातानां च उदुंबरादिफलसंभवानां मधूकादिपुष्पोद्भवानां च सर्वप्राणिनां वधे घृतप्राशनं पापशोधनम् १४३ कृष्टेति कर्षणपूर्व
कजातानामोषधीनां षष्टिकादीनां वने च स्वयमुत्पन्नानां निःप्रयोजनच्छेदने क्षीराहारः एकं दिनं गोरनुगमनं कुर्यात् १४४ एतैरिति
एभिरुक्तपापैर्हिंसाजनितपापं ज्ञानाज्ञानकृतं निर्हरणीयं इदानीमभक्ष्यभक्षणप्रायश्चित्तं वक्ष्यमाणं शृणुत १४५ अज्ञानादिति म
हापातकप्रकरणव्यवधानेनास्याम्नानात् नेदं मुख्यपैष्टीसुराविषयं वचनम् किंतु तदितरविषयं तत्र यथा चैका तथा सर्वा गौडी माध्वी

श्यमद्यस्करासंस्पृष्टंच भक्तादिरसंवामारयद्विजातयस्त्रयोवर्णा पुनरुपनयनमर्हति १५० वपनमिति शिरोमुंडनंमेखलाधारणंदं डधारणंभैक्षाणिव्रतानिचमधुमांसस्त्रीवर्जनयुतानिप्रायश्चित्तानिपुनरुपनयनेद्विजातीनान्नभवंति १५१ अभोज्याइति अभोज्या न्नानाम्नाश्रोत्रियकृतेयज्ञेइत्याद्युक्तानामन्नभुक्त्वाजलमिश्रितसक्तुरूपेणयवागूरूपेणवायवान्पानयोग्यान्कृत्वासप्तरात्रंपिबेत् अ मुष्मिन्नेवविषयेमत्याभुक्त्वाचरेत्कृच्छ्रमितिचतुर्थाध्यायेप्रायश्चित्तमुक्तंतेनसहवैकल्पितविकल्पश्चकर्तृशक्त्यपेक्षः तथाद्विजातिस्त्री णांशुद्रस्यशूद्रोच्छिष्टंवाभुक्त्वाएतदेवकुर्यात्तथाक्रव्यादसूकरोष्ट्राणामित्यादिनायद्विशेषप्रायश्चित्तंतन्निषिद्धमांसंभुक्त्वाइदमेवकुर्या त् १५२ शुक्तेति पानिस्वभावतोमधुरादिरसानिकालयोगेनोदकपरिणामादिनास्वभावत्यजंतितानिशुक्तानिकषायान्विभीतकादीन् क्वथितानिअप्रतिषिद्धान्यपिपीत्वायावन्नजीर्णानिभवंतितावदशुचिःपुरुषोभवति १५३ विड्वराहेति ग्राम्यसूकरखरोष्ट्रशृगालवानर

वपनंमेखलादंडोभैक्ष्यचर्याव्रतानिच निवर्त्ततेद्विजातीनांपुनःसंस्कारकर्मणि १५१ अभोज्यानांतुभु क्त्वान्नंस्त्रीशूद्रोच्छिष्टमेवच जग्ध्वामांसमभक्ष्यंचसप्तरात्रंयवान्पिबेत् १५२ शुक्तानिचकषायांश्चपी- त्वामेध्यान्यपिद्विजः तावद्भवत्यप्रयतोयावत्तन्नव्रजत्यधः १५३ विड्वराहखरोष्ट्राणांगोमायोःकपिकाकयोः प्राश्यमूत्रपुरीषाणिद्विजश्चांद्रायणंचरेत् १५४ शुष्काणिभुक्त्वामांसानिभौमानिकवकानिच अज्ञातं- चैवसूनास्थमेतदेवव्रतंचरेत् १५५ क्रव्यादसूकरोष्ट्राणांकुक्कुटानांचभक्षणे नरकाकखराणांचतप्त- कृच्छ्रंविशोधनम् १५६

काकानांमूत्रंपुरीषंवाद्विजातिर्भुक्त्वाचांद्रायणंकुर्यात्शोधनंयत्तुच्छत्राकंविड्वराहंचेत्यनेनविड्वरा हग्रामकुक्कुटयोर्बुद्धिपूर्वकभक्षणेपंचमाध्यायेप्रायश्चित्तमुक्तंतदभ्यासविषयेव्याख्यातंइदंत्वनभ्यासविषयेतप्तकृच्छ्रमित्यविरोधः १५४ शुष्काणीति शल्यादिनाशोषितानिमांसानिभुक्त्वाभूम्यादिप्रभवानिच्छत्राकानिभुक्त्वाभूमिजंवावृक्षजंवाछत्राकंभक्षयतिये त्रस्यमांसान्विजानीयात्इतियमेनवृक्षस्यापिनिषेधात्हरिणमांसंवाअभक्ष्यमांसमितिभक्ष्याभक्ष्यतयान्नज्ञातंतथाहिंसास्थानं- सूनातत्रोपदानीततद्भुक्त्वाचांद्रायणमेवकुर्यात् १५५ क्रव्यादेति आममांसभक्षिणांग्राम्यसूकरोष्ट्रग्राम्यकुक्कुटानांतथामानुषकाक- खरादीनांमत्स्येकंबुद्धिपूर्वकंमांसभक्षणेवक्ष्यमाणंतप्तकृच्छ्रंप्रायश्चित्तम् १५६ मासिकेति योब्रह्मचारीब्राह्मणोमासिकश्राद्धसंबं

रव्यसुरासाम्यबोधनमितरमद्यापेक्षयाब्राह्मणस्यप्रायश्चित्तगौरवार्थमित्युक्तं गौडीमाध्वीचपीत्वागौतमोक्तंतप्तकृच्छ्रंकृत्वापुनःसं-
स्कारेणैवशुध्यति तथाचगौतमः अमत्यामद्यपानेपयोघृतमुदकंवायुंप्रत्यहंतप्तकृच्छ्रःततोऽस्यसंस्कारः इत्थमेवव्याख्यातंभविष्यपु-
राणे अकामतःकृतेपानेगौडीमाध्व्योर्नराधिप तप्तकृच्छ्रविधानंस्यात्गौतमेनयथोदितम् बुद्धिपूर्वकंतुपैष्टीनरमद्यपानेप्राणांतिक-
अनिर्देश्यमितिशास्त्रमर्यादा तथागौडीमाध्व्योर्ज्ञानात्पानेमरणनिषेधादितरमद्यापेक्षयागुरुत्वाच्चमानवमेवकणान्वाभक्षयेदब्दमि-
तिप्रायश्चित्तमुक्तंअतएवगौडीमाध्व्योःकामतःपानानुवृत्तौभविष्यपुराणे यद्वाऽस्मिन्नेवविषयेमानवीवंप्रकल्पयेत् कणान्वाभक्ष-
येदब्दंपिण्याकंवासकृन्निशि सुरापापापनुत्यर्थंवालवासाजटीध्वजीतिपैष्टीगौडीमाध्वीव्यतिरिक्तपुलस्त्योक्तपानसादिनवविधम-
द्यस्यमत्यैकंपानेलघुत्वात्संस्कारमात्रमेवकेवलंअन्यहालघुत्वात्प्रायश्चित्तंब्राह्मणस्ययुक्तम् बुद्धिपूर्वपानसादिमद्यपानेतु मतिपू-

अज्ञानाद्वारुणींपीत्वासंस्कारेणैवशुध्यति मतिपूर्वमनिर्देश्यंप्राणांतिकमितिस्थितिः १४६ अपःसुरा
भाजनस्थामद्यभांडस्थितास्तथा पंचरात्रंपिबेत्पीत्वाशंखपुष्पीश्रितंपयः १४७ स्पृष्ट्वादत्वाचमदिरांवि
धिवत्प्रतिगृह्यच शूद्रोच्छिष्टाश्चपीत्वापःकुशवारिपिबेत्त्र्यहं १४८ ब्राह्मणस्तुसुरापस्यगंधमाघ्रायसो
मपः प्राणानप्सुत्रिरायम्यघृतंप्राश्यविशुध्यति १४९ अज्ञानात्प्राश्यविण्मूत्रंसुरासंस्पृष्टमेवच पुनःसं
स्कारमर्हंतित्रयोवर्णाद्विजातयः १५०

र्वंसुरापानेकृतेवैज्ञानतोगुरु कृच्छ्रातिकृच्छ्रौभवतःपुनःसंस्कारएवहीतिभविष्य
पुराणीयमन्यद्द्विविधमुन्यंतरोक्तम् १४६ अपइति पैष्टीसुराभांडेतदितरमद्यभांडेऽवस्थिताअपःसुरारसगंधवर्जिताःपीत्वाशंखपु-
ष्प्यौषधिप्रक्षेपेणपक्वंक्षीरमनूदकंशंखपुष्पीविपक्वेनक्षीरेणवर्त्तयेदितिबौधायनस्मरणात् पंचरात्रंपिबेत्सुरामद्ययोःसर्वत्रैवगु-
रुलघुप्रायश्चित्ताभिधानात् इहापिज्ञानाज्ञानादिप्रकारभेदेनविषयसमीकरणंसमाधेयम् वाचनिकमेवप्रायश्चित्तंसाध्यमिति
तिथिराह १४७ स्पृष्ट्वेति सुरांस्पृष्ट्वादत्वाचस्वस्तिवाचनपूर्वकंचप्रतिगृह्यशूद्रोच्छिष्टाश्च अपःपीत्वाप्रतिगृह्योपादानात् ब्राह्म-
णोदर्भक्वथितमुदकंत्र्यहंपिबेत् १४८ ब्राह्मणस्त्वित्यादि ब्राह्मणःपुनःकृतसोमयागःसुरापस्यमुखसंबंधिनंगंधंघ्रात्वाजलमध्येप्राणा-
यामत्रयंकृत्वाघृतंप्राश्यविशुद्धोभवति १४९ अज्ञानादिति विड्वराहादीनांवक्ष्यमाणत्वात्अबुद्धिपूर्वकंमनुष्यसंबंधिमूत्रंपुरीषंवा

श्यमद्यसक्तासंस्पृष्टंच भक्त्कादिरसंवाप्राश्य द्विजातयस्त्रयोवर्णा पुनरुपनयनमर्हंति १५० वपनमिति शिरोमुंडनंमेखलाधारणंदं
डधारणंभैक्षाणिव्रतानिचमधुमांसस्त्रीवर्जनयुतानिप्रायश्चित्तानिपुनरुपनयनेद्विजातीनान्नभवंति १५१ अभोज्याइति अभोज्या
न्नानान्नाश्रोत्रियकृतेयज्ञेइत्याद्युक्तानामन्नं भुक्त्वाजलमिश्रितसक्तुरूपेणयवागूरूपेणवायवान्पानयोग्यान्कृत्वासप्तरात्रंपिबेत् अ
बुद्धिपूर्वेविषयेमत्याभुक्त्वाचरेत्कृच्छ्रमितिचतुर्थाध्यायेप्रायश्चित्तमुक्तंतेनसहवैकल्पितंविकल्पश्चकर्तृशक्त्यपेक्षः तथाद्विजातिस्त्री
णामुच्छिष्टंशूद्रोच्छिष्टंवाभुक्त्वाएतदेवकुर्यात्तथाक्रव्यादसूकरोष्ट्राणामित्यादिनायद्विशेषप्रायश्चित्तंतन्निषिद्धमांसंभुक्त्वाइदमेवकुर्या
त् १५२ शुक्तेति यानिस्वभावतोमधुरादिरसानिकालयोगेनोदकपरिणामादिनाम्लभावंव्रजंतितानिशुक्तानिकषायान्विभीतकादीन्
क्वथितानिअमतिविस्रान्यपिपीत्वायावन्नजीर्णानिभवंतितावदशुचिःपुरुषोभवति १५३ विड्वराहेति ग्राम्यसूकरखरोष्ट्रमृगालवानर

वपनंमेखलादंडोभैक्ष्यचर्याव्रतानिच निवर्त्तंतेद्विजातीनांपुनःसंस्कारकर्मणि १५१ अभोज्यानांतुभु
क्त्वान्नंस्त्रीशूद्रोच्छिष्टमेवच जग्ध्वामांसमभक्ष्यंचसप्तरात्रंयवान्पिबेत् १५२ शुक्तानिचकषायांश्चपी-
त्वामेध्यान्यपिद्विजः तावद्भवत्यप्रयतोयावत्तन्नव्रजत्यधः १५३ विड्वराहखरोष्ट्राणांगोमायोःकपिकाकयोः
प्राश्यमूत्रपुरीषाणिद्विजश्चांद्रायणंचरेत् १५४ शुष्काणिभुक्त्वामांसानिभौमानिकवकानिच अज्ञातं-
चैवसूनास्थमेतदेवव्रतंचरेत् १५५ क्रव्यादसूकरोष्ट्राणांकुक्कुटानांचभक्षणे नरकाकखराणांचतप्त-
कृच्छ्रंविशोधनम् १५६

काकानांमूत्रंपुरीषंवाद्विजातिर्भुक्त्वाचांद्रायणंकुर्यात्शोधनंयत्तुछत्राकंविड्वराहंचेत्यनेनविड्वरा
हग्रामकुक्कुटयोर्बुद्धिपूर्वकभक्षणेपंचमाध्यायेप्रायश्चित्तमुक्तंतदभ्यासविषयेव्याख्यातंइदंत्वनभ्यासविषयेतसकृच्छ्रमित्यविरोधः
१५४ शुष्काणीति वाय्वादिनाशोषितानिमांसानिभुक्त्वाभूम्यादिप्रभवानिछत्राकानिभुक्त्वाभूमिजंवावृक्षजंवा छत्राकंभक्षयंतिये
ब्रह्मघ्नांस्तान्विजानीयात्इतियमेनवृक्षस्यापिनिषेधात्हरिणमांसंवा भक्ष्यमांसमितिभक्ष्याभक्ष्यतयायन्नज्ञातंतथाहिंसास्थानं
सूनाततोयदानीतंतद्भुक्त्वाचांद्रायणमेवकुर्यात् १५५ क्रव्यादेति आममांसभक्षिणांग्राम्यसूकरोष्ट्रग्राम्यकुक्कुटानांतथामानुषका-
कगर्दभानांमत्येकबुद्धिपूर्वकंमांसभक्षणेवक्ष्यमाणंतप्तकृच्छ्रंप्रायश्चित्तम् १५६ मासिकेति योब्रह्मचारीब्राह्मणोमासिकश्राद्धसंबं

ध्यन्नमश्नातिएतच्चसपिंडीकरणात्पूर्वंएकोद्दिष्टश्राद्धार्थोपलक्षणंसत्रिरात्रमुपवसेत् त्रिरात्रमध्यएकस्मिन्नहनिजलमावसेत्
१५७ ब्रह्मचारीति योब्रह्मचारीमाक्षिकंमांसंवा अनिच्छातः आपदिवा यात्सप्राजापत्यंकृत्वाप्रारब्धब्रह्मचर्यव्रतशेषंसमापये
त् १५८ बिडालेति बिडालकाकमूषिककुक्कुरनकुलानामुच्छिष्टंकेशकीटरूपसंसर्गदुष्टंवाअकृतमृत्क्षेपविशुद्धिकंज्ञात्वाभक्त्वा
ब्रह्मसुवर्चलाक्वथितमुदकंपिबेत् १५९ अभोज्यमिति आत्मनःशुद्धिकामेनप्रतिषिद्धमन्नंनादनीयंप्रमादात्तुभक्तंवमितव्यंत
दसंभवेप्रायश्चित्तैःक्षिप्रंशोधनीयंवमनपक्षेतुलघुप्रायश्चित्तंभवत्येवज्ञानतःपुनःपूर्वोक्तंप्रायश्चित्तम् १६० एषइति अभक्ष्यभक्ष
णेयानिप्रायश्चित्तानितेषामेतन्नानाप्रकारमुक्तंस्तेयपापकारिणांविधानमधुनाश्रूयताम् १६१ धान्येति ब्राह्मणोब्राह्मण



मासिकान्नंतुयोऽश्नीयादसमावर्त्तकोद्विजः सत्रीण्यहान्युपवसेदेकाहंचोदकेवसेत् १५७ ब्रह्मचारी
तुयोऽश्नीयान्मधुमांसंकथंचन सकृत्वाप्राकृतंकृच्छ्रंव्रतशेषंसमापयेत् १५८ बिडालकाकाखूच्छिष्टंज
ग्ध्वाश्वनकुलस्यच केशकीटावपन्नंचपिबेद्ब्रह्मसुवर्चलाम् १५९ अभोज्यमन्नंनात्तव्यमात्मनःशुद्धि
मिच्छता अज्ञानभुक्तंतूत्तार्यंशोध्यंवाप्याशुशोधनैः १६० एषोनाद्यादनस्योक्तोव्रतानांविविधोविधिः
स्तेयदोषापहर्तॄणांव्रतानांश्रूयतांविधिः १६१ धान्यान्नधनचौर्याणिकृत्वाकामाद्द्विजोत्तमः स्वजातीयगृ
हादेवकृच्छ्राब्देनविशुद्ध्यति १६२ मनुष्याणांतुहरणेस्त्रीणांक्षेत्रगृहस्यच कूपवापीजलानांचशुद्धिश्चा
न्द्रायणंस्मृतम् १६३ द्रव्याणामल्पसाराणांस्तेयंकृत्वाऽन्यवेश्मतः चरेत्सांतपनंकृच्छ्रंतन्निर्यात्यात्मशु
द्धये १६४

भक्त्वा यन्नरूपाणिधनचौर्याणिइच्छातः नत्वात्मीयंकृत्वान्यानीत्वासंवत्सरंप्राजापत्यव्रताचरणेनशुद्ध्यतिएतच्चदे
शकालद्रव्यपरिमाणस्वामिगुणाद्यपेक्षयामहत्वादिबोद्धव्यंएवमुत्तरत्रापि १६२ मनुष्याणामिति पुरुषस्त्रीक्षेत्रगृहाणामन्यत
हरणेकूपजलस्यवापीजलस्यवासमस्तस्यवाहरणेचान्द्रायणंप्रायश्चित्तंमन्वादिभिःस्मृतम् १६४ द्रव्याणामिति द्रव्याण
णामल्पप्रयोजनानांचानुक्तप्रायश्चित्तविशेषाणांत्रपुसीसकादीनांपरगृहाच्चौर्यंकृत्वातदपहृतंद्रव्यंस्वामिनेदत्वासांतपनंकृच्छ्रं

प्रायश्चित्तंवक्ष्यमाणंचात्मशुद्धयेकुर्यात्स्वामिने प्रहृतंद्रव्यंनिर्यातयेतिसर्वस्तेयप्रायश्चित्तशेषः १६४ भक्ष्येति भक्ष्यस्यमोदकादेः भोज्यस्य
पायसादेःयानस्यशकटादेः शय्याया आसनस्यचपुष्पमूलफलानांचप्रत्येकमपहरणेपंचगव्यपानंविशोधनम् १६५ तृणेति तृणकाष्ठवृक्षा
णांशुष्कान्नस्यचतंडुलादेः वस्त्रचर्ममांसानांमध्येएकस्याप्यपहरणेत्रिरात्रमुपवासंचरेत् १६६ मणीति मणिमुक्ताविद्रुमताम्ररूप्यलो
हकांस्योपलानांचप्रत्येकमपहरणेद्वादशाहंतंडुलकणभक्षणंकुर्यात्सर्वत्रचात्रसकृदभ्यासदेशकालद्रव्यस्वामिगुणादौशक्त्यपेक्षयाउत्कृ
ष्टापकृष्टद्रव्यापहारिविषयसमीकरणंसमाधेयम् १६७ कार्पासेति कार्पासकृमिकोषउर्णानांवस्त्राणांद्विशफैकशफस्यगोरश्वादेःपक्षि
णांशुकादीनांगंधानांचचंदनप्रभृतीनांरज्ज्वाश्चप्रत्येकंहरणेत्र्यहंक्षीराहारःस्यात् अत्रापिपूर्ववद्विषयसमीकरणपरिहारःस्वामिनश्चो

भक्ष्यभोज्यापहरणेयानशय्यासनस्यच पुष्पमूलफलानांचपंचगव्यंविशोधनम् १६५ तृणकाष्ठद्रुमाणां
चशुष्कान्नस्यगुडस्यच चैलचर्मामिषाणांचत्रिरात्रंस्यादभोजनम् १६६ मणिमुक्ताप्रवालानांताम्रस्यरज
तस्यच अयःकांस्योपलानांचद्वादशाहंकणान्नता १६७ कार्पासकीटजोर्णानांद्विशफैकशफस्यच पक्षि
गंधौषधीनांचरज्ज्वाश्चैवत्र्यहंपयः १६८ एतैर्व्रतैरपोहेतपापंस्तेयकृतंद्विजः अगम्यागमनीयंतुव्रतैरे-
भिरपानुदेत् १६९ गुरुतल्पव्रतंकुर्याद्रेतःसिक्त्वास्वयोनिषु सख्युःपुत्रस्यचस्त्रीषुकुमारीष्वन्त्यजासुच
१७० पैतृष्वसेयींभगिनींस्वस्रीयांमातुरेवच मातुश्चभ्रातुस्तनयांगत्वाचान्द्रायणंचरेत् १७१

त्कृष्टापकृष्टद्रव्य
समर्पणादपिवचनादेकरूपप्रायश्चित्ताविरोधः १६८ एतैरिति एतैरुक्तैःस्तेयजनितपापंद्विजातिरपानुदेत् अगम्यागमननिमित्तंपुन
रेभिर्वक्ष्यमाणैर्व्रतैर्निर्हरेत् १६९ गुरुतल्पेति स्वयोनिषुसोदर्यभगिनीषुतथामित्रभार्यासुपुत्रपत्नीषुकुमारीषुचांडालीषुप्रत्येकंरे
तःसिक्त्वागुरुदारगमनप्रायश्चित्तंकुर्यात् अत्रापिज्ञानाभ्यासाद्यनुबंधापेक्षयामरणांतिकअतएवरेतःसिक्त्वाकुमारीषुचांडालीष्वंत्य
जासुच सपिंडापत्यदारेषुप्राणत्यागोविधीयतेइतियमेनमरणांतिकमुपदिष्टंअज्ञानात्तद्व्रतम् १७० पैतृस्वसेयीमिति पितृष्वसुर्भ
गिनीमातुश्चसोदर्यभ्रातुर्दुहितरंसोदर्यभगिनीमिवनिषिद्धगमनांगत्वाचांद्रायणंकुर्यात् १७१

एतादति तिस्रएता·पैतृष्वसेय्याद्या·भार्यार्थेभाज्ञोनोद्वहेत्‌ज्ञातित्वेनबांधवत्वेनतानोपेतव्याःयस्मादेतानुपयन्‌उपागच्छन्नरकंयाति असपिंडाचयामातुरित्यनेननिषेधसिद्धौदाक्षिणात्याचारदर्शननिषेधदार्ढ्यार्थंपुनर्वचनम्‌ १७२ अमेति अमानुषीषुवडवाद्यासु नगाधि तथागोव्यवकीर्णीसंवत्सरंप्राजापत्यंचरेत्‌ इतिशंखलिखितादिभिर्गुरुप्रायश्चित्ताभिधानात्‌ तथारजस्वलायांयोनितश्चान्य त्रस्त्रियांजलेरेत सेकंकृत्वापुरुषःसांतपनंकृच्छ्रंकुर्यात्‌ १७३ मैथुनमिति यत्रदेशेक्वापिपुरुषेमैथुनंसेवित्वास्त्रियांगोयानेशक- टादौजलेदिवाकालेमैथुनंचसेवित्वासवस्त्रश्चस्नायात्‌ १७४ चंडालेति चंडालस्यांत्यजानांचम्लेच्छशरीरादीनांअज्ञानतोब्राह्म- णःस्त्रियोगत्वातेषांचान्नंभुक्त्वातेभ्यःप्रतिगृह्यपततिपतितस्यप्रायश्चित्तंकुर्यात्‌एतच्चगुरुत्वाच्चाभ्यासतोभोजनप्रतिग्रहविषयम्‌

एतास्तिस्रस्तुभार्यार्थेनोपयच्छेत्तुबुद्धिमान्‌ ज्ञातित्वेनानुपेयास्ताःपततिह्युपयन्नधः १७२ अमानु- षीषुपुरुषउदक्यायामयोनिषु रेतःसिक्त्वाजलेचैवकृच्छ्रंसांतपनंचरेत्‌ १७३ मैथुनंतुसमासेव्यपुं- सियोषितिवाद्विजः गोयानेप्सुदिवाचैवसवासाःस्नानमाचरेत्‌ १७४ चंडालांत्यस्त्रियोगत्वाभुक्त्वा- चप्रतिगृह्यच पतत्यज्ञानतोविप्रोज्ञानात्साम्यंतुगच्छति १७५ विप्रदुष्टांस्त्रियंभर्त्तानिरुंध्यादेकवेश्मनि यत्पुंसःपरदारेषुतच्चैनांचारयेद्व्रतम्‌ १७६ साचेत्पुनःप्रदुष्येत्तुसदृशेनोपमंत्रिता कृच्छ्रंचांद्रायणंचैव तदस्याःपावनंस्मृतम्‌ १७७ यत्करोत्येकरात्रेणवृषलीसेवनाद्द्विजः तद्भैक्षभुग्जपन्नित्यंत्रिभिर्वर्षैर्व्यपो हति १७८

ज्ञानात्तुतेषांगमनंकृत्वासमानतांगच्छतिएतच्चप्रायश्चित्तगौरवार्थम्‌ १७५ विप्रदुष्टामिति विशेषेणप्रदुष्टामिच्छया व्यभिचारिणीमित्यर्थःभर्त्तानिरुंध्यात्सत्तीकार्य्येष्वयोनिवर्त्सनियतबद्धामिवएकगृहेधारयेत्‌ यच्चपुरुषस्यसजातीयपरदारगमनेप्राय श्चित्तंतदेवैनांकारयेत्तत्रच स्त्रीणामर्द्धंप्रदातव्यमितियद्वसिष्ठादिभिरुक्तंतदनिच्छयाव्यभिचारेणकर्त्तव्यम्‌ १७६ साचेदिति सा- स्त्रीसजातीयगमनेसकृद्दुष्टाकृतप्रायश्चित्तायदिपुनःसजातीयेनाभ्यर्थितासतीतद्गमनंकुर्यात्तदास्याःप्रायश्चित्तंप्राजाप चां द्रायणंचमन्वादिभिःस्मृतम्‌ १७७ यदिति वृषल्यत्रचंडालीप्रायश्चित्तगौरवात्‌चंडालीगमनेयदेकरात्रेणब्राह्मणःपापम

ऽङ्क्षाशीनित्यंसावित्र्यादिकंजपन्त्रिभिर्वर्षैरपनुदति तथाचापस्तंबः यदेकरात्रेणकरोतिपापंकृष्णंवर्णंब्राह्मणःसेवमानः चतुर्थका
लउदकआत्मजापीत्रिभिर्वर्षैस्तदपोहतिपापम् मेधातिथिस्तुइत्थमेवव्याख्यातवान् गोविंदराजस्तुअक्रमपरिणीतशूद्रागमनप्रा
यश्चित्तमिदमाह १७८ एषेति इयं हिंसाऽभक्ष्यभक्षणस्तेयागम्यागमनकारिणांचतुर्णामपिपापकृतांविशुद्धिरुक्ता इदानींसाक्षा
त्पापकृद्भिःसहसंसर्गिणामिमावक्ष्यमाणाःसंशुद्धीःशृणुत १७९ संवत्सरेणेति पतितेनसहसंसर्गमाचरन् एकयानगमनएकासनोपवे
शनएकपंक्तिभोजनरूपान्संसर्गानाचरन्संवत्सरेणपततिनतुयाजनाध्यापनयौनात्संवत्सरेणपततिकिंतुसद्यएवेत्यर्थः अध्यापनम
न्त्रोपनयनपूर्वकंसावित्र्यध्यापनंयाजनादीनांचसद्यःपातित्यमाहदेवलः याजनंयोनिसंबंधंस्वाध्यायंसहभोजनम् कृत्वासद्यःपतंत्येते
पतितेननसंशयः विष्णुः आसंवत्सरात्पततिपतितेनसहाचरन् सहयानासनाभ्यासंयौनात्तुसद्यएवाह बौधायनः संवत्सरेणपतति

एषांपापकृतामुक्ताचतुर्णामपिनिष्कृतिः पतितैःसंप्रयुक्तानामिमाःशृणुतनिष्कृतीः १७९ संवत्सरेणप
ततिपतितेनसहाचरन् याजनाध्यापनाद्यौनान्नतुयानासनाशनात् १८० योयेनपतितेनैषांसंसर्गंया
तिमानवः सतस्यैवव्रतंकुर्यात्तत्संसर्गविशुद्धये १८१ पतितस्योदककार्यंसपिंडैर्बांधवैर्बहिः निंदितेह
निसायान्हेज्ञात्यृत्विग्गुरुसन्निधौ १८२ दासीघटमपांपूर्णंपर्यस्येत्प्रेतवत्पदा अहोरात्रमुपासीरन्नशौचं
बांधवैःसह १८३

पतितेनसहाचरन् याजनाध्यापनाद्यौनात्सद्योनशयनासनादिति गोविंदराजस्तु याजनादीनांत्रयाणांसंव
त्सरेणपातित्यहेतुत्वंसहासनादीनांलघुत्वान्नसंवत्सरेण किंतुतस्माद्भूर्ध्वमपीतिव्याचष्टे अस्मदीयमनुव्याख्यामुनिव्याख्यानुसारिणी
नेनांगोविंदराजस्यकल्पनामनुरुंध्महे १८० योयेनेति पतितशब्दोयंपापकारिवचनः सकलपापिनामविशेषपाठात् एषांपतितानांमध्ये
योयेनपापकारिणासहपूर्वोक्तंसंसर्गंकरोतिसतस्यैवव्रतरूपंप्रायश्चित्तंकुर्यान्नतुमरणांतिकमित्यभिहितंतदपिव्रतंसंसर्गिणाक्रियमा
णंब्रह्महाद्वादशसमाइत्यादिकंपादहीनंकर्तव्यम् तथाचव्यासः योयेनसंसृजेद्वर्षंसोपितत्समतामियात् पादन्यूनंचरेत्सोपितस्यतस्य
व्रतंद्विजः १८१ पतितस्येति महापातकिनोजीवतएवप्रेतस्योदकक्रियावक्ष्यमाणरीत्यासपिंडैःसमानोदकैश्चग्रामाद्बहिःकृत्वाज्ञातिऋ
त्विग्गुरुसन्निधानेरिक्तायांनवम्यांतिथौदिनांतेकर्तव्यम् १८२ दासीति सपिंडसमानोदकप्रयुक्तादासीउदकपूर्णंघटंप्रेतवद्दिति दक्षि

णाभिमुखीभूयपादेनक्षिपेत् यथासौनिरुदकोभवतितदनुतेसपिंडास्समानोदकैस्सहाहोरात्रमशौचमाचरेयुः १८३ निवर्त्तेरन्निति त
स्मात्पतितात्सपिंडादीनांसंभाषणमेकासनोपवेशनंचतस्मैऋक्थप्रदानंसांवत्सरिकादौनिमंत्रणादिरूपोलौकिकव्यवहारएतानिनिवर्त्ते
रन् १८४ ज्येष्ठतेति ज्येष्ठस्यपत्प्रत्युत्थानादिकंकार्यंतत्तस्यनकार्यंज्येष्ठलभ्यंचतस्यविंशत्युद्धारादिकंधनंनदेयंयद्यपिऋक्थप्रदानप्र
तिषेधादेवाप्युद्धारप्रतिषेधःसिद्धःतथापियवीयसस्तल्लाभार्थमनूद्यतेतस्यैवज्येष्ठस्यसंबंधिधनंसोद्धारांशंतदनुजोगुणाधिकोलभते
१८५ प्रायश्चित्तइति कृतेपुनःपतितेनप्रायश्चित्तेसपिंडसमानोदकास्तेनैवकृतप्रायश्चित्तेनसहपवित्रेजलाधारेस्नात्वाजलपूर्णन्नवं
घटंप्रक्षिपेयुःइहनवघटग्रहणाद्दासीघटःकृतोपयोगिघटःप्रतीयते १८६ सत्विति सकृतप्रायश्चित्तःतंपूर्वोक्तघटंजलमध्येक्षिप्त्वाततः
स्वकीयभवनंप्रविश्ययथापूर्वंसर्वाणिज्ञातिकर्माणिकुर्यात् १८७ एतदिति स्त्रीष्वपिपतितास्वएवमेवपतितस्योदककार्यमित्यादि

निवर्त्तेरंश्चतस्मात्तुसंभाषणसहासने दायाद्यस्यप्रदानंचयात्राचैवहिलौकिकी १८४ ज्येष्ठताचनिव
र्त्तेतज्येष्ठावाप्यंचयद्धनम् ज्येष्ठांशंप्राप्नुयाच्चास्ययवीयान्गुणतोधिकः १८५ प्रायश्चित्तेतुचरितेपूर्णकुं
भमपान्नवम् तेनैवसार्द्धंप्रास्येयुःस्नात्वापुण्येजलाशये १८६ सत्वप्सुतंघटंप्रास्यप्रविश्यभवनंस्वकम्
सर्वाणिज्ञातिकार्याणियथापूर्वंसमाचरेत् १८७ एतदेवविधिंकुर्याद्योषित्सुपतितास्वपि वस्त्रान्नपानं
देयंतुवसेयुश्चगृहांतिके १८८ एनस्विभिरनिर्णिक्तैर्नार्थंकिंचित्सहाचरेत् कृतनिर्णेजनांश्चैवन
जुगुप्सेतकर्हिचित् १८९ बालघ्नांश्चकृतघ्नांश्चविशुद्धानपिधर्मतः शरणागतहंतृंश्चस्त्रीहंतृंश्च
नसंवसेत् १९०

विधिंभर्त्रादिसपिंडसमानोदकवर्गःकुर्यात् ग्रासाच्छादनानिपुनरासांदेयानिगृहसमीपेचासांवासार्थंकु
टीर्दद्युः १८८ एनस्विभिरिति पापकारिभिरकृतप्रायश्चित्तैःसहदानप्रतिग्रहादिकमर्थंकिंचिन्नानुतिष्ठेत् कृतप्रायश्चित्तान्नैवकदाचि
दपिपूर्वकृतपापत्वेननिंदेत्किंतुपूर्ववद्व्यवहरेत् अस्यापवादमाह १८९ बालघ्नानिति बालंयोहतवान् कृतोपकारंअपकाराचर
णेनयोविनाशितवान्प्राणरक्षार्थमागतंयोहतवान्स्त्रियंचयोव्यापादितवान् एतान्यथावत्कृतप्रायश्चित्तानपिसंसर्गितयानपरिव
सेत् १९० येषामिति येषांब्राह्मणक्षत्रियविशांआनुकल्पिककालेउपनयनंयथाशास्त्रंनकृतवान् तान्प्राजापत्यत्रयंकारयित्वायथा

शास्त्रमुपनयेन् यत्तु याज्ञवल्क्यादिभिर्व्रात्यस्तोमादिप्रायश्चित्तमुक्तं तेन सहास्य गुरुलाघवमनुसंधाय जातिशक्त्याद्यपेक्षो विकल्पो मन्तव्यः १९१ प्रायश्चित्तमिति ये प्रतिषिद्धशूद्रसेविनो द्विजास्ते चोपनीता अपि अनधीतवेदाः प्रायश्चित्तं कर्त्तुमिच्छन्ति तेषामप्येतत्प्राजापत्यादित्रयमुपदिशेत् १९२ यदिति गर्हितेन कर्मणा निषिद्धदुःप्रतिग्रहादिना ब्राह्मणा यद्धनमर्ज्जयन्ति तस्य धनस्य त्यागेन जपतपोभ्यां वक्ष्यमाणाभ्यां शुध्यन्ति धनत्यागेन च प्रायश्चित्तविधानात् बहुमूल्ये च कपितुरगादौ अल्पमूल्ये च लोहादौ परिगृहीते तुल्यप्रायश्चित्ताभिधानमुपपन्नं गव्यमविक्रय्यविक्रयादावपि १९३ जपित्वेति त्रीणि सावित्रीसहस्राणि जपित्वा गोष्ठे वा मासं दीरहारो असत्प्रतिग्रहजनितात्पापान्मुक्तो भवति शूद्रप्रतिग्रहादावपि एतदेव प्रायश्चित्तं द्रव्यदोषेण च दातृदोषेणापि प्रतिग्रहस्य गर्हितत्वाविशेषादिति १९४ उपवासेति

येषां द्विजानां सावित्री नानूच्येत यथाविधि तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् १९१ प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् १९२ यद्गर्हितेनार्ज्जयन्ति कर्मणा ब्राह्मणा धनम् तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च १९३ जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् १९४ उपवासकृशं तं तु गोव्रजात्पुनरागतम् प्रणतं प्रतिपृच्छेयुः साम्यं सौम्येच्छसीति किम् १९५ सत्यमुक्त्वा तु विप्रेषु विकिरेद्यवसं गवाम् गोभिः प्रवर्त्तिते तीर्थे कुर्युस्तस्य परिग्रहम् १९६ व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति १९७

केवलक्षीराहारेण इतरभोजनत्यागेन कृशदेहं गोष्ठात्पुनरागतं प्रणतं नम्रीभूतं किमस्माभिः सह साम्यमिच्छसि पुनरसत्प्रतिग्रहं न करिष्यसीति एवं धर्मं ब्राह्मणाः परिपृच्छेयुः १९५ सत्यमिति सत्यमेतत् पुनरसत्प्रतिग्रहं न करिष्यामीत्येवं ब्राह्मणेभ्य उक्त्वा यवसं गवां दद्यात् तस्मिन् यवसं भक्ष्यमाणे देशे गोभिः पवित्रीकृतत्वात्तीर्थीभूते ब्राह्मणास्तस्य संव्यवहारे स्वीकारं कुर्युः १९६ व्रात्यानामिति व्रात्यानामनर्हत्वेन योप्येते इत्युक्तानामादियाजनं कृत्वा पितृगुर्वादिव्यतिरिक्तानां च निषिद्धौर्ध्वदैहिकदाहश्राद्धादि कृत्वा अभिचारं च श्येनादिकं अभिचारो अभिचारणीयस्य अहीनं यागविशेषः अहीनयजनमशुचिकरमिति श्रुतेः त्रिरात्रादि तस्य यजनं कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति १९७

शरणागतमिति शरणागतंपरित्राणार्थमुपगतंशक्तः सन्नुपेक्षते द्विजातिरनध्याप्यंच वेदमध्याप्य तज्जनितंपापंसंवत्सरंयवाहारो ऽपनुदति १९८ श्वसृगालेति कुक्कुरसृगालगर्दभनर अश्ववराहादिभिर्ग्राम्यैश्चामममांसादैर्मार्ज्जारादिभिर्दष्टः प्राणायामेन शुध्यति १९९ षष्ठान्नेति अपांक्त्यायेपतिताः स्तेनक्लीबा इत्यादिनोक्तास्तेषां विशेषतो ऽनुपदिष्टप्रायश्चित्तानां मासंत्र्यहम भक्तात्तृतीयेऽह्नि सायंभोजनंवेदसंहिताजपो देवकृतस्यैनसो अवयजनमसीत्यादिनाउक्ताः अष्टभिर्मंत्रैर्होमः प्रत्येकंकार्यः एतत्समुद्दिष्टंपापशोधनम् २००. उष्ट्रयानमिति उष्ट्रैर्युक्तंयानंशकटादि एवंखरयानमपि तत्कामत आरुह्य अव्यवधानउष्ट्रखराभ्यांयाने प्राणायाम बहुत्वन्न ग्रश्चकामतः स्नानं कृत्वा प्राणायामेन सुध्यो भवति २०१ विनेति असन्निहितजलोजलमध्येवा मूत्रंपुरीषंवा कृत्वा सवासा बहिर्ग्रामात्नद्यादौस्नात्वा गांचस्पृष्ट्वा विशुद्धो भवति २०२ वेदेति वेदविहितानांकर्मणामग्निहोत्रादीनां अनुपदिष्टप्रायश्चित्तविशेषाणां

शरणागतंपरित्यज्य वेदंविप्लाव्यच द्विजः संवत्सरंयवाहारस्तत्पापमपसेधति १९८ श्वसृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेवच नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति १९९ षष्ठान्नकालता मासंसंहिताजप एववा होमाश्चसकला नित्यमपांक्त्यानां विशोधनम् २०० उष्ट्रयानंसमारुह्य खरयानंतुकामतः स्नात्वातुविप्रो दिग्वासाः प्राणायामेन शुध्यति २०१ विनाद्भिरप्सुवाप्यार्त्तः शारीरंसन्निवेश्यच सचेलोबहिराप्लुत्य गामालभ्यविशुध्यति २०२ वेदोदितानांनित्यानां कर्मणांसमतिक्रमे स्नातकव्रतलोपेच प्रायश्चित्तमभोजनम् २०३ हुंकारंब्राह्मणस्योक्त्वा त्वंकारंचगरीयसः स्नात्वानश्नन्नहःशेषमभिवाद्य प्रसादयेत् २०४ ताडयित्वा तृणेनापि कंठेवाबध्यवाससा विवादेवाविनिर्जित्य प्रणिपत्य प्रसादयेत् २०५ अवगूर्यत्वब्दशतंसहस्र- मभिहत्यच जिघांसया ब्राह्मणस्य नरकंप्रतिपद्यते २०६

चपरिलोपे स्नातकव्रतानांचतुर्थाध्यायोक्तानामतिक्रमेसत्ये काहोपवासंप्रायश्चित्तंकुर्यात् २०३ हुंकारमिति हुंतूष्णींस्थीयतामित्याक्षेपंब्राह्मणस्य कृत्वात्वंकारंचविद्याद्यधिकस्यउक्त्वा अभिवाद नकालादारभ्याहःशेषंयावत्स्नात्वाभोजननिवृत्तः पादोपग्रहणेनापगतकोपंकुर्यात् २०४ ताडयित्वेति प्रकृतंब्राह्मणंतृणेनापि ताडयित्वा कंठेवाबध्यवाससा वा कलहेनजित्वा प्रणिपातेन प्रसादयेत् २०५ अवेति ब्राह्मणस्यहननेच्छयादंडमुद्यम्यवर्षशतंनरकंप्राप्नोति दंडा

दिनापुनः महत्स्यवर्षसहस्रंनरकंप्राप्नोति २०६ शोणितमिति महतस्यब्राह्मणस्यरुधिरंयावत्संख्यकान्रजः कणान्भूमौपिंडाकरो तितावत्संख्यकानिवर्षसहस्राणितत्शोणितोत्पादकोनरकेवसेत् २०७ अवेति ब्राह्मणस्यहननेच्छयादंडाद्युद्यमनेकृच्छ्रंकुर्यात्दं डादिप्रहारेदत्तेअतिकृच्छ्रंवक्ष्यमाणंचरेत्रुधिरमुत्पाद्यकृच्छ्रातिकृच्छ्रौकुर्वीत २०८ अनुक्तेति अनुक्तप्रायश्चित्तानांयथाप्रतिलो मवधादिकृतानांनिर्हरणार्थंकर्तुःशरीरधनानिसामर्थ्यमवेक्ष्यपापंचज्ञाताज्ञानाज्ञानसकृदावृत्त्यनुबंधादिरूपेणप्रायश्चित्तंप्रकल्पयेत् २०९ यैरिति यैर्हेतुभिर्मनुष्यःपापान्यपनुदतितान्पापनाशहेतून्देवर्षिपितृभिरनुष्ठितान्युष्माकंवक्ष्यामि २१० त्र्यहमिति प्राजाप त्याख्यंकृच्छ्रमाचरन्द्विजातिराद्यंदिनत्रयंप्रातर्भुंजीत प्रातःशब्दोयंभोजनानामौचित्यप्राप्तदिवाकालपरः अतएववसिष्ठः त्र्यहंदि

शोणितंयावतःपांसून्संगृह्णातिमहीतले तावत्यब्दसहस्राणितत्कर्तानरकेवसेत् २०७ अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रंनिपातने कृच्छ्रातिकृच्छ्रौकुर्वीतविप्रस्योत्पाद्यशोणितम् २०८ अनुक्तनिष्कृतीनां तुपापानामपनुत्तये शक्तिंचावेक्ष्यपापंचप्रायश्चित्तंप्रकल्पयेत् २०९ यैरभ्युपायैरेनांसिमानवोव्यपकर्ष ति तान्वोऽभ्युपायान्वक्ष्यामिदेवर्षिपितृसेवितान् २१० त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् त्र्यहं परंचनाश्नीयात्प्राजापत्यंचरन्द्विजः २११ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् एकरात्रोपवासश्चकृ च्छ्रंसांतपनंस्मृतम् २१२

साभुंक्तेनक्तमत्तित्र्यहंत्र्यहंअयाचितव्रतंत्र्यहंनभुंक्तइतिचकृच्छ्रः आपस्तंबोप्याह त्र्यहमनक्ताशी दिवाशीचततस्त्र्यहंत्र्यहमयाचितव्रतस्त्र्यहंनाश्नातिकिंचनइतिकृच्छ्रद्वादशरात्रस्यविधिः अपरंचदिनत्रयंसायंसंध्यामतीतायांभुंजीत अन्याहिनत्रयमयाचितंतावदन्नंभुंजीतशेषंचदिनत्रयंनकिंचिदश्नीयात् अत्रग्राससंख्यापरिमाणापेक्षायांपराशरः सायंद्वात्रिंशति- र्ग्रासाःप्रातःषड्विंशतिस्तथा अयाचितेचतुर्विंशत्परंचानशनंस्मृतम् कुक्कुटांडप्रमाणंचयावांश्चप्रविशेन्मुखम् एतंग्रासंविजानीया त्शुद्ध्यर्थंग्रासशोधनम् हविष्यंचान्नमश्नीयाद्यथारात्रौतथादिवा त्रीणित्रीण्यहानिशास्त्रीयान्ग्रासान्संख्याकृतान्यथा अयाचि तंतथैवाद्यादुपवासस्त्र्यहंभवेत् २११ गोमूत्रमिति गोमूत्रादिएकीकृत्यएकैकस्मिन्नहनिभक्षयेत्नान्यत्किंचिदद्यात् अपरदिने

पवास इत्येतत्सांतपनं कृच्छ्रं स्मृतं यदा तु गोमूत्रादिषट्प्रत्येकं षट् दिनान्युपभुज्य सप्तमे दिने चोपवासः तदा महासांतपनं भवति तथाच याज्ञवल्क्यः कुशोदकं च गोक्षीरं दधिमूत्रं शकृद्घृतम् जग्ध्वापरेह्युपवसेत् कृच्छ्रं सांतपनं चरन् पृथक्सांतनद्रव्यैः षडहः सोपवासिकः सप्ताहेन तु कृच्छ्रोयं महासांतपनं स्मृतम् २१२ एकैकमिति अतिकृच्छ्रं द्विजातिरनुतिष्ठन् प्रातः सायमयाचितादिरूपेण त्र्यहाणि त्रीणि त्रीणि पूर्ववत् अन्यच्च त्र्यहं न किंचिद्भुंजीत २१३ तप्तेति तप्तकृच्छ्रं चरन् द्विजातिः त्र्यहमुष्णोदकं त्र्यहमुष्णक्षीरं त्र्यहमुष्णघृतं त्र्यहमुष्णवायुमेकवारस्नानं कुर्वन् संयतवान् पिबेत् अत्र पराशरोक्तो विशेषः षट्पलं तु पिबेदंभस्त्रिपलं तु पयः पिबेत् पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते २१४ यतात्मन इति विगतानवधानस्य संयतेंद्रियस्य द्वादशाहमभोजनमेव पराकाख्यः कृच्छ्रः सकृदाचरितो रतस्येन गुरुलघुसमफलपापापनोदनः २१५ एकैकमिति सायंप्रातर्मध्याह्नेषु स्नानं कुर्वाणः पौर्णमास्यां पंचदश ग्रासानशित्वा ततः ।

एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् त्र्यहं चोपवसेदंत्यमतिकृच्छ्रं चरन् द्विजः २१३ तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान् प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः २१४ यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् पराको नाम कृच्छ्रोयं सर्वपापापनोदनः २१५ एकैकं ह्रासयेत्पिंडं कृष्णे शुक्ले च वर्द्धयेत् उपस्पृशंस्त्रिषवणमेतच्चांद्रायणं स्मृतम् २१६ एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे शुक्लपक्षादिनियतश्चरंश्चांद्रायणव्रतम् २१७ अष्टावष्टौ समश्नीयात्पिंडान्मध्यंदिने स्थिते नियतात्मा हविष्याशी यतिश्चांद्रायणं चरन् २१८

प्रतिपत्क्रमेणैकैकं ग्रासं ह्रासयेत्तथा चतुर्दश्यामेको ग्रासः संपद्यते ततोऽमावास्यायामुपोष्य शुक्लप्रतिपत्प्रभृतिभिरेकैकं वर्द्धयेत् एवं पौर्णमास्यां पंचदश ग्रासाः संपद्यंते एतत्पिपीलिकामध्याख्यं चांद्रायणं स्मृतम् २१६ एतमिति एतमेव पिंडह्रासवृद्धित्रिषवणस्नानात्मकं यवमध्याख्यं चांद्रायणं शुक्लपक्षमादितः कृत्वा संयतेंद्रियश्चांद्रायणमनुतिष्ठन् आचरेत् ततश्च शुक्लप्रतिपदमारभ्य एकैकं पिंडं वर्द्धयेत् यथा पौर्णमास्यां पंचदश ग्रासाः संपद्यंते ततः कृष्णप्रतिपदमारभ्य एकैकं पिंडं ह्रासयेत् यथा अमावस्यायामुपवासो भवति २१७ अष्टाविति यतिश्चांद्रायणमनुतिष्ठन् शुक्लपक्षात्कृष्णपक्षाद्वा आरभ्य मासमेकं संयतेंद्रियः प्रत्यहमष्टावष्टौ ग्रासान्मध्यंदिने भुंजीत मध्यंदिन इति गृहस्थब्रह्मचारिणोः सायंभोजननिवृत्त्यर्थम् २१८ ७ ७ ७

चतुरः प्रातरिति प्रातश्चतुरो ग्रासानश्नीयात् अस्तमिते च सूर्ये चतुरो ग्रासान् भुंजीत एतच्छिशुचांद्रायणं मुनिभिः स्मृतम् २१९ यथे
ति नीवारादिहविष्यसंबंधिनां ग्रासानां द्वेशते चत्वारिंशदधिके कदाचित्षोडश कदाचिदुपवास इत्येवमाद्यनियमेन यथा कथंचित् पिंडान्मा
सेन स पतवान् भुंजानश्चंद्रसलोकतां याति एवं पापक्षयार्थमभ्युदयार्थं च इदमुक्तं अत एव याज्ञवल्क्यः धर्मार्थी यश्चरेदेतच्चंद्रस्येति सलो
कताम्। कृच्छ्रकृत् शर्म कामस्तु महतीं श्रियमाप्नुयात् अतः प्राजापत्यादिकृच्छ्रमपि अभ्युदयफलमिति याज्ञवल्क्येनोक्तम् २२० एतदि
ति एतच्चांद्रायणाख्यं व्रतं रुद्रादित्यवसवो मरुतश्च महर्षिभिः सह सर्वपापनाशाय गुरुलघुपापापेक्षया सकृदावृत्तिप्रकारेण कृतवंतः २२१
महेति महाव्याहृतिभिर्भूर्भुवः स्वरेताभिः आज्यहविरनादेशे जुहोतिषु विधीयते इति परिशिष्टवचनात् आज्येन स्वयं होमं कुर्यात्

चतुरः प्रातरश्नीयात्पिंडान्विप्रः समाहितः चतुरोऽस्तमिते सूर्ये शिशुचांद्रायणं स्मृतम् २१९ यथाकथंचित्पिंडानां तिस्रोऽशीतीः समाहितः मासेनाश्नन् हविष्यस्य चंद्रस्येति सलोकताम् २२० एतद्रुद्रास्तथादित्या वसवश्चाचरन्व्रतम् सर्वाकुशलमोक्षाय मरुतश्च महर्षिभिः २२१ महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम् अहिंसासत्यमक्रोधमार्जवं च समाचरेत् २२२ त्रिरह्नस्त्रिर्निशायां च सवासा जलमाविशेत् स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित् २२३ स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः २२४ सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः २२५

अहिंसासत्याक्रोधाकौटिल्यानि चानुतिष्ठेत् यद्यप्येतानि पुरुषार्थतया विहितानि तथापि व्रतांग
तयाप्यसुपदेशः २२२ त्रिरिति अहनि रात्रौ वा आदिमध्यावसानेषु स्नानार्थं सचेलो जलं द्विजः प्रविशेत् एतच्च पिपीलिकामध्ययवमध्यचां
द्रायणेतरचांद्रायणविषयम् तयोरुपस्पर्शं त्रिषवणमित्युक्तत्वात् स्त्रीशूद्रपतितैश्च सह यावद्व्रतं कदाचित्संभाषणं न कुर्यात् २२३ स्था
नेति अहनि रात्रौ तु उत्थित आसीनः स्यात् न तु शयीत असामर्थ्ये तु स्थंडिले शयीत न खट्वादौ ब्रह्मचारी स्त्रीसंयोगरहितः व्रतः व्रती मौं
जीदंडादियुक्तः पालाशं धारयेद्दंडं त्रिवृन्मौंजीं च मेखलामिति यमवचनस्मरणात् गुरुदेवब्राह्मणानां च पूजको भवेत् २२४ सावित्री
मिति सावित्रीं च सदा जपेत् पवित्राणि चाघमर्षणादीनि यथाशक्ति जपेत् एतच्च यथा चांद्रायणे तथा प्राजापत्यादिकृच्छ्रेष्वपि यत्नवान् प्राय
श्चित्तार्थमनुतिष्ठेत् २२५

एतेरिति लोकविदितपापाद्द्विजातयः एभिरुक्तप्रायश्चित्तैर्वक्ष्यमाणपरिषदाशोधनीयाः अप्रकाशितपापांस्तुमानवान्मंत्रैर्होमैश्चपरिषदे वशोधयेत् यद्यपिपरिषदिनिवेदनेरहस्यत्वस्यनाशः तथाप्यमुकपापेकृतेकेनापिलोकाविदितेकिंप्रायश्चित्तंस्यादितिसामान्यप्रश्नेनविरोधः २२६ ख्यापनेति पापकारीनरोलोकेषुनिजपापकथनेनधिङ्मामतिपापकारिणमितिपश्चात्तापेनशुध्यति तपसाचोग्ररूपेणसावित्रीजपादिनाचपापान्मुच्यतेतपस्यसक्तोदानेनचपापान्मुक्तोभवति ख्यापनंचेदंप्रकाशप्रायश्चित्तांगभूतंनरहस्यप्रायश्चित्तांगम् रहस्यत्वहानिप्रसंगात् अनुतापश्चप्रकाशरहस्यांगमेव २२७ यथेति यथायथास्वयंपापंकृत्वानरोभाषतेलोकेख्यापयतितथातथातेनपापेनसर्पइवजीर्णत्वचामुच्यतेइतिख्यापनविधेरनुवादः २२८ यथेति तस्यपापकारिणोमनोयथायथादुष्कृतंकर्मनिंदतितथातथाशरीरं

एतैर्द्विजातयः शोध्याव्रतैराविष्कृतैनसः अनाविष्कृतपापांस्तुमंत्रैर्होमैश्चशोधयेत् २२६ ख्यापनेनानुतापेनतपसाध्ययनेनच पापकृन्मुच्यतेपापात्तथादानेनचापदि २२७ यथायथानरोऽधर्मंस्वयंकृत्वानुभाषते तथातथात्वचेवाहिस्तेनाधर्मेणमुच्यते २२८ यथायथामनस्तस्यदुष्कृतंकर्मगर्हति तथातथाशरीरंतत्तेनाधर्मेणमुच्यते २२९ कृत्वापापंहिसंतप्यतस्मात्पापात्प्रमुच्यते नैवंकुर्यांपुनरितिनिवृत्त्यापूयतेतुसः २३० एवंसंचिंत्यमनसाप्रेत्यकर्मफलोदयम् मनोवाङ्मूर्तिभिर्नित्यंशुभंकर्मसमाचरेत् २३१ अज्ञानाद्यदिवाज्ञानात्कृत्वाकर्मविगर्हितम् तस्माद्विमुक्तिमन्विच्छन्द्वितीयन्नसमाचरेत् २३२

जीवात्मातेनाधर्मेणमुक्तोभवतिअयमनुतापानुवाद इति २२९ कृत्वेति पापंकृत्वापश्चात्संतप्यतस्मात्पापान्मुच्यते इत्युक्तमपिनैवंकुर्यांपुनरित्येवमनूदितंयदातुपश्चात्तापोनैवंपुनः करिष्यामीतिएवंरूपंनिवृत्तिरूपसंकल्पफलकःस्यात्तदासुतरांतस्मात्पापात्पूतोभवतीतिएतच्चनिवृत्तिसंकल्पस्यप्रकाशाप्रकाशप्रायश्चित्तांगविधानार्थम् २३० एवमिति एवंशुभाशुभानांकर्मणांपरलोकइष्टानिष्टफलंमनसाविचार्यमनोवाक्कायैःशुभमेवसर्वकर्मकुर्यात् इष्टफलत्वान्नाशुभंनरकादिदुःखहेतुत्वात् २३१ अज्ञानादिति प्रमादादिच्छातोवानिषिद्धंकर्मकृत्वातस्मात्पापान्मुक्तिमिच्छन्पुनस्तन्नकुर्यात् एतच्चपुनःकरणेप्रायश्चित्तगौरवार्थम् अतएवदेवलः विधेःप्राथमिकादस्माद्द्वितीयेद्विगुणंभवेदिति

यस्मिन्निति अस्यपापकारिणोयस्मिन्प्रायश्चित्ताख्येऽनुष्ठितेनचित्तस्यसंतोषःस्यात्तस्मिन्नेवप्रायश्चित्तंतावदावर्तयेद्यावन्मनसःसंतोषःप्रसादश्चस्यात् २३३ तपइति यदेतत्सर्वंदेवानांमनुष्याणांसुखंतस्यतपःकारणंतपसैवचतस्यस्थितिः तपोऽतंचबुधैःप्रतिनियतदेवादिसुखस्यतपसाजननाददादिष्टंवेदार्थैरुक्तंउक्तप्राजापत्यादिप्रायश्चित्तात्मकंतपःप्रसंगेनचेदंवक्ष्यमाणंचसर्वंतपोमाहात्म्यकथनम् २३४ ब्राह्मणस्येति ब्राह्मणस्यब्रह्मचर्यात्मकवेदांतावबोधनंतपोराजन्यस्यरक्षणंतपःवैश्यस्यकृषिवाणिज्यपाशुपाल्यादिकंतपः शूद्रस्यब्राह्मणपरिचर्यातपइतिवर्णविशेषेणोत्कर्षबोधनार्थम् २३५ ऋषयइति ऋषयोवाङ्मनःकायनियमोपेताःफलमूलवायुभक्षाःतपसैवजंगमस्थावरसहितंपृथिव्यंतरिक्षस्वर्गात्मकंलोकत्रयमेकदेशस्थाःसंतोनिष्पापांतःकरणाःप्रकर्षेणपश्यंति

यस्मिन्कर्मण्यस्यकृतेमनसःस्यादलाघवम् तस्मिंस्तावत्तपःकुर्याद्यावत्तुष्टिकरंभवेत् २३३ तपोमूलमिदंसर्वंदैवमानुषकंसुखम् तपोमध्यंबुधैःप्रोक्तंतपोंतंवेददर्शिभिः २३४ ब्राह्मणस्यतपोज्ञानंतपःक्षत्रस्यरक्षणम् वैश्यस्यतुतपोवार्तातपःशूद्रस्यसेवनम् २३५ ऋषयःसंयतात्मानःफलमूलानिलाशनाः तपसैवप्रपश्यंतित्रैलोक्यंसचराचरम् २३६ औषधान्यगदोविद्यादैवीचविविधास्थितिः तपसैवप्रसिध्यंतितपस्तेषांहिसाधनम् २३७ यद्दुस्तरंयद्दुरापंयद्दुर्गंयच्चदुष्करम् सर्वंतुतपसासाध्यंतपोहिदुरतिक्रमम् २३८ महापातकिनश्चैवशेषाश्चाकार्यकारिणः तपसैवसुतप्तेनमुच्यंतेकिल्बिषात्ततः २३९ कीटाश्चाहिपतंगाश्चपशवश्चवयांसिच स्थावराणिचभूतानिदिवंयांतितपोबलात् २४०

२३६ औषधानीति औषधानिव्याध्युपशमनहेतुकानिअगदोगदाभावोनैरुज्यमितियावत् विद्याब्रह्मधर्मचर्यात्मकवेदांतज्ञानंवेदसंबंधिनीचनानारूपान्नगोदानवास्थितिः इत्येतानितपसैवप्राप्यंते यस्मात्तपएषांप्राप्तिनिमित्तम् २३७ यदिति यद्दुःखेनतार्यतेग्रहदोषसूचितपदानियद्दुःखेनप्राप्यतेक्षत्रियादिनातेनैवशरीरेणब्राह्मण्यादियद्दुःखेनगम्यतेमेरुपृष्ठादियद्दुःखेनक्रियतेगोःप्रचुरदानादितत्सर्वंतपसासाधितुंशक्यते यस्मादतिदुष्करकार्यकरणंसर्वंतपसासाध्यतेतपोऽदुर्दनशक्ति २३८ महेति ब्रह्महत्यादिमहापातककारिणोऽन्येउपपातकाद्यकार्यकारिणःतपसैवउक्तरूपेणानुष्ठितेनतस्मात्पापान्मुच्यंतेउक्तस्यापिपुनर्वचनंप्रायश्चित्तस्तुत्यर्थम् २३९ कीटाइति कीटसर्पशल

भपन्तु पक्षिणः स्थावराणिच वृक्षगुल्मादीनि भूतानि तपोमाहात्म्येन स्वर्गं यांति इतिहासादौ कपोतोपाख्यानादिषु पक्षिणोप्यग्निप्रवे शादिकृतं प्रत्तपतीति श्रूयते कीटानां पक्षजातिसह दुःखं तत्समं तपः तेनच क्षीणकल्मषा अविकारिकजन्मांतर कृतेन सुकृतेन दिवं यांति २४० यत्किंचिदिति यत्किंचित्पापं मनोवाग्देहैर्मानवाः कुर्वंति तत्सर्वं पापं निर्दहंति तपसैव तपोधना इति तप एव धनमिव रक्षणीयं येषां ते तपोधनाः २४१ तपसैवेति प्रायश्चित्ततपसा क्षीणपापस्य ब्राह्मणस्य यागे हवींषि देवाः प्रतिगृण्हंति अभिलषितार्थांश्च प्रयच्छंति २४२ प्रजापतिरिति हिरण्यगर्भः सकललोकोत्पत्तिस्थितिप्रलयप्रभुः तपःकरणपूर्वकमेवेमं ग्रंथमकरोत् तथैव ऋषयो वसिष्ठादयस्तपसैव मं त्रसंपन्नाः २४३ इत्येतदिति सर्वस्यास्य जंतोर्यद्दुर्लभं जन्म तपसः प्रकाशात् इत्येवं देवाः प्रपश्यंतः तपोमूलमिदं सर्वमित्यादि तपोमाहा त्म्यं प्रवदंति २४४ वेदेति यथाशक्ति प्रत्यहं वेदाध्ययनं पंचमहायज्ञानुष्ठानमपराधसहिष्णुत्वमित्येतानि महापातकजनितान्यपि पापा-

यत्किंचिदेनः कुर्वंति मनोवाङ्मूर्तिभिर्जनाः तत्सर्वं निर्दहंत्याशु तपसैव तपोधनाः २४१ तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः इज्याश्च प्रतिगृण्हंति कामान्संवर्द्धयंति च २४२ प्रजापतिरिदं शास्त्रं तपसैवासृजत्प्रभुः तथैव वेदानृषयस्तपसा प्रतिपेदिरे २४३ इत्येतत्तपसो देवा महाभाग्यं प्रचक्षते सर्वस्यास्य प्रपश्यंतस्तपसः पुण्यमुत्तमम् २४४ वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमा नाशयंत्याशु पापानि महापातकजान्यपि २४५ यथैधस्तेजसा वन्हिः प्राप्तं निर्दहति क्षणात् तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित् २४६ इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि अत ऊर्ध्वं रहस्यानां प्रायश्चित्तं निबोधत २४७ सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश अपि भ्रूणहणं मासात्पुनंत्यहरहः कृताः २४८

निशीघ्रं नाशयंति किंमुतान्यानि २४५ यथेति यथाग्निः काष्ठान्यासन्नानि क्षणेनैव तेजसा निःशेषं करोति तथा ज्ञानाग्निना पापं सर्वं वेदार्थज्ञो ब्राह्मणो नाशयति इत्येत न परमार्थज्ञानस्यैव तु पापक्षयोत्कर्षज्ञापनार्थमेतत् २४६ इत्येतदिति इत्येन ब्रह्महत्यादीनां पापानां प्रकाशानां प्रायश्चित्तं यथावि ध्यभिहितं अत ऊर्ध्वमप्रकाशानां पापानां प्रायश्चित्तं शृणुत अयं श्लोको गोविंदराजेनालिखितः मेधातिथिना तु लिखित एव २४७ सव्याहृतीति सव्याहृतिसप्रणवाः सावित्रीशिरोयुक्ताः पूरककुंभकरेचकादिविधिना प्रत्यहं षोडश प्राणायामाः कृताः मासात् ब्रह्मघ्न

मपिनिष्पापंकुर्वंतिअपिशब्दादातिदेशिकब्रह्महत्याप्रायश्चित्ताधिकृतमपिएतच्चप्रायश्चित्तंद्विजातीनामेवनस्त्रीशूद्रादेर्मंत्रानधिकारा
त् २४८ कौत्समिति कौत्सेनऋषिणाअपनःशोशुचदघमितिएतत्सूक्तंवसिष्ठेनऋषिणादृष्टंच प्रतिस्तोमेतिरुषमज्जुशिष्यइत्येवंऋ
चंमाहित्रंमहित्रीणामवोस्त्वित्येतत्सूक्तंशुद्धवत्यएतोन्विंद्रंस्तवामशुद्धमित्येतास्तिस्रऋचःप्रकृतंमासमहरहःषोडशकृत्वोपिजपित्वासु
रापोपिविशुध्यतिअपिशब्दात् आतिदेशिकसुरापानप्रायश्चित्ताधिकृतोपि २४९ सकृदिति ब्राह्मणसुवर्णमपहृत्यअस्यवामस्यप
लितस्यएतत्सूक्तंप्रकृतत्वात्माससमेकंप्रत्यहमेकवारंजपित्वाशिवसंकल्पंयज्जाग्रतोदूरमित्येतद्वाजसनेयकेयत्पठितंतज्जपित्वा
सुवर्णमपहृत्यक्षिप्रमेवनिष्पापोभवति २५० हवीति हविष्यांतमजरंस्वर्विदमेकोनविंशतिऋचःनतमंहोनदुरितमित्यष्टौइतिवा

कौत्संजप्त्वापइत्येतद्वासिष्ठंचप्रतीत्यृचम् माहित्रंशुद्धवत्यश्चसुरापोपिविशुध्यति २४९ सकृ-
ज्जप्त्वास्यवामीयंशिवसंकल्पमेवच अपहृत्यसुवर्णंतुक्षणाद्भवतिनिर्मलः २५० हविष्यंतीयम
भ्यस्यनतमंहइतीतिच जपित्वापौरुषंसूक्तंमुच्यतेगुरुतल्पगः २५१ एनसांस्थूलसूक्ष्माणांचिकी-
र्षन्नपनोदनम् अवेत्यृचंजपेदब्दंयत्किंचेदमितीतिवा २५२ प्रतिगृह्याप्रतिग्राह्यंभुक्त्वाचान्नंविग
र्हितम् जपंस्तरत्समंदीयंपूयतेमानवस्त्र्यहात् २५३ सोमारौद्रंतुबह्वेनामासमभ्यस्यशुध्यति
स्रवंत्यामाचरन्स्नानमर्यम्णामितिचत्यृचम् २५४

इतिमेमनःशिवसंकल्पइतिचसूक्तंसहस्रशीर्षापुरुषइति
एतच्चषोडशर्चसूक्तंमासमेकंप्रत्यहमभ्यस्येतिश्रवणात्प्रकृतत्वात्षोडशाभ्यासात्जपित्वागुरुदारगःतस्मात्पापान्मुच्यते २५१ ए
नसामिति स्थूलानांपापानांमहापातकानांसूक्ष्माणांचउपपातकादीनांनिर्हरणंकर्त्तुमिच्छन् अवतेहेळोवरुणनमोभिरित्येतामृचं
यत्किंचेदंवरुणदैव्येजनेइत्येतांचऋचंइतिवाइतिमेमनइत्येतत्सूक्तंसंवत्सरमेकवारंप्रत्यहंजपेत् २५२ प्रतिगृह्येति स्वरूपतोमहा
पातकित्वनत्वादिनावाप्रतिग्राह्यंप्रतिगृह्यचान्नंस्वभावकालप्रतिग्रहसंसर्गदुष्टंभुक्त्वातरत्समंदिधावतीत्येताऋचश्चतस्रोजपित्वात्र्य
हंतस्मात्पापान्मनुष्यःपूतोभवति स्नानमर्यम्णामितिऋक्त्र्यृचंवा २५३ सोमेति सोमारुद्राधारयेथामसुर्यमितिचतस्रःअर्यमावरुणं

मित्रंचेतिऋग्द्वयंनद्यांचस्नानंकृत्वामासमेकंमत्सेकमभ्यस्यबहुपापोविशुद्ध्यतिबहुष्वपिपापेषुतंत्रेणैकंप्रायश्चित्तंकार्यमितिज्ञापकः मिदम् २५४ अब्दार्द्धमिति एनसीत्यविशेषात्सर्वेष्वेवपापेषु इंद्रंमित्रंवरुणमग्निंत्रयइतिएताःसप्तऋचोषण्मासंजपेत् अप्रशस्तंमूत्र पुरीषोत्सर्गादिकंजलेकृत्वामासंभैक्षभोजीभवेत् २५५ मंत्रैरिति देवकृतस्येत्यादिभिःशाकलहोमैःसंवत्सरंघृतहोमंकृत्वानमइंद्र श्चइत्येतांवाऋचंसंवत्सरंजपित्वामहापातकमपिपापंद्विजातिरपहंति २५६ महापातकेति ब्रह्महत्यादिमहापातकयुक्तोभिक्षाल ब्धाहारोवर्षमेकंसंयतेंद्रियोगवामनुगमनंकुर्वन्यःपावमानीर्विधादिऋचोअन्वहमभ्यासेनजपित्वातस्मात्पापाद्विशुद्धोभवति २५७ अरण्यइति त्रिभिःपराकैःपूतोमंत्रब्राह्मणात्मिकांवेदसंहितांअरण्येवारत्रयंअभ्यस्यवाभयतोबाह्याभ्यंतरशौचयुक्तःसर्वे

अब्दार्द्धमिंद्रमित्येतदेनस्वीसप्तकंजपेत् अप्रशस्तंतुकृत्वाप्सुमासमासीतभैक्षभुक् २५५ मंत्रैःशा कलहोमीयैरब्दंहुत्वाघृतंद्विजः सुगुर्वप्यपहंत्येनोजप्त्वावानमइत्यृचम् २५६ महापातकसंयुक्तोऽनु गच्छेद्गाःसमाहितः अभ्यस्याब्दंपावमानीर्भैक्षाहारोविशुद्ध्यति २५७ अरण्येवात्रिरभ्यस्यप्रयतोवेद संहिताम् मुच्यतेपातकैःसर्वैःपराकैःशोधितस्त्रिभिः २५८ त्र्यहंतूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्न पः मुच्यतेपातकैःसर्वैस्त्रिर्जपित्वाऽघमर्षणम् २५९ यथाश्वमेधःक्रतुराट्सर्वपापापनोदनः तथाऽघ मर्षणंसूक्तंसर्वपापापनोदनम् २६० हत्वालोकानपीमांस्त्रीनश्नन्नपियतस्ततः ऋग्वेदंधारयन्विप्रो नैनःप्राप्नोतिकिंचन २६१ ऋक्संहितांत्रिरभ्यस्ययजुषांवासमाहितः साम्नांवासरहस्यानांसर्वपापैःप्रमु च्यते २६२

महापातकैर्मुच्यते २५८ त्र्यहमिति त्रिरात्रमुपवसन्संयतःप्रत्यहंप्रातर्मध्याह्नसायंकालेषुस्नानंकुर्वन्त्रिषवणस्ना नकालएवजलेनिमज्यऋतंचसत्यंचेतिसूक्तमघमर्षणंत्रिरावृत्तंजपित्वासर्वैःपापैर्मुच्यतेनत्रगुरुलघुपापापेक्षयापुरुषशक्त्याद्यपेक्ष यावर्त्तनीयम् २५९ यथेति यथाऽश्वमेधयागःसर्वयागश्रेष्ठःसर्वपापक्षयहेतुस्तथाऽघमर्षणसूक्तमपिसर्वपापक्षयहेतुरितिअघमर्ष णसूक्तोत्कर्षः २६० हत्वेति भूरादिलोकत्रयमपिहत्वामहापातक्यादीनामप्यन्नमश्नन्नृग्वेदंधारयन्विप्रादिःनकिंचित्पापंप्राप्नोतिऋ ग्वेदरहस्यमायश्चित्तार्थमुक्तंरहस्यपापेकृतेऋक्संहितांमंत्रब्राह्मणात्मिकामभ्यसेत्तदाह २६१ ऋगिति ऋक्संहितांमंत्रब्राह्मणात्मि

कान्नतुमंत्रात्मिकांअनंतरंवेदेंत्रिवृतीतिमत्यवमर्षात् यजुषांचामंत्रब्राह्मणानांसंहितांसाम्नांवाब्राह्मणोपनिषत्संहितांवारत्रयमभ्य स्यसर्वपापैःप्रमुक्तोभवति २६२ यथेति ऋगाद्यात्मनात्रिरावर्त्ततइतित्रिवृत् यथामहान्हृदंप्रविश्यलोष्टंविशीर्यतेतथासर्वंदुश्चरितंत्रि वृतिवेदेविनश्यतित्रिवृत्त्वमेवाह २६३ ऋचइति ऋचऋङ्मंत्राःयजूंषियजुर्मंत्राःसामानिबृहद्रथंतरादीनिनानाप्रकाराणि अन्यान्ये- षांत्रयाणांपृथक्पृथक्मंत्रब्राह्मणानिएषत्रिवृद्वेदोज्ञातव्योयएनंवेदसवेदविद्भवति २६४ आद्यमिति सर्ववेदानामाद्यंयद्ब्रह्मवेद सारंअकारोकारमकारात्मकत्वेनत्र्यक्षरंयत्रत्रयोवेदाःस्थिताःसोन्यस्त्रिवृद्वेदःप्रणवाख्योगुह्योगोपनीयःवेदमंत्रश्रेष्ठत्वात् परमा- र्थाभिधायकत्वात्परमार्थकत्वेनधारणजपाभ्यांमोक्षहेतुत्वाच्चयस्तंस्वरूपतोऽर्थतश्चजानातिसवेदवित् प्रायश्चित्तेबहुमुनिमतालो

यथामहाह्रदंप्राप्यक्षिप्तंलोष्टंविनश्यति तथादुश्चरितंसर्वंवेदेत्रिवृतिमज्जति २६३ ऋचोयजूंषिचा- न्यानिसामानिविविधानिच एषज्ञेयस्त्रिवृद्वेदोयोवेदैनंसवेदवित् २६४ आद्यंयत्त्र्यक्षरंब्रह्मत्रयीय- स्मिन्प्रतिष्ठिता सगुह्योऽन्यस्त्रिवृद्वेदोयस्तंवेदसवेदवित् २६५ इतिमानवेधर्मशास्त्रेभृगुप्रो क्तायांसंहितायांएकादशोऽध्यायः ११ ७ ७ ७ चातुर्वर्ण्यस्यकृत्स्नोयमुक्तोधर्मस्त्वयान घ कर्मणांफलनिर्वृत्तिंशंसनस्तत्त्वतःपराम् १ सतानुवाचधर्मात्मामहर्षीन्मानवोभृगुः अस्यसर्वस्यशृ णुतकर्मयोगस्यनिर्णयम् २ शुभाशुभफलंकर्ममनोवाग्देहसंभवम् कर्मजागतयोनृणामुत्तमाधमम ध्यमाः ३ -वनाधन्मयोक्तंसद्व्याख्यानंखलुमुनिगिरांतद्भजध्वंगुणज्ञाः नैतन्मेधातिथिरभिदधेनापिगोविंदराजोव्याख्यातारोन जगुरपरेप्यन्यतोदुर्लभंवः २६५ इतिश्रीकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांमनुवृत्तावेकादशोऽध्यायः ११ ७ ७ ७ चातुर्वर्ण्यस्येति हेपापरहितब्राह्मणादिवर्णचतुष्टयस्यसांतरप्रभवस्यायधर्मस्त्वयोक्तःइदानींकर्मणांशुभाशुभफलप्राप्तिंपरांज न्मांतरप्रभवांपरमार्थरूपामस्माकंब्रूहीतिमहर्षयोभृगुमवोचन् १ सतानिति सधर्मप्रधानोमनोरपत्यात्माभृगुरस्यसर्वस्यकर्म संबंधस्यफलनिश्चयंशृणुतेतितान्महर्षीनब्रवीत् २ शुभेति मनोवाग्देहहेतुकंकर्मविहितनिषिद्धरूपंसुखदुःखफलकंतज्ज न्याएवमनुष्यतिर्यगादिभावेनोत्कृष्टमध्यमाधमापेक्षयामनुष्याणांगतयोजन्मांतरप्राप्तयोभवंति कर्मशब्दश्चात्रनकायचेष्टया-

मेवकिंतुभमेदंस्वमितिसंकल्परूपयोगादिध्यानरचनादावपिक्रियामात्रेवर्त्तते ३ तस्येति तस्यदेहिसंबंधिनःकर्मणःउत्कृष्टमध्यमाधमतयात्रिप्रकारस्यापिमनोवाक्कायाश्रितस्यवक्ष्यमाणदशलक्षणोपेतस्यमनएवप्रवर्त्तकंजानीयात् मनसाहिसंकल्पितमुच्यते क्रियतेच तथातैत्तिरीयोपनिषदितस्मात्यत्पुरुषोमनसाभिगच्छतितद्वाचावदतितत्कर्मणाकरोतीति तानिदशलक्षणानिकर्माणिदर्शयितुमाह ४ परद्रव्येति कथंपरधनमन्यायेनगृण्हामीत्येवंचिंतनंमनसाब्रह्मवधादिनिषिद्धाकांक्षानास्तिपरलोकःदेहएवात्मेति अतद्ग्रहश्चइत्येवंत्रिःप्रकारमशुभफलंमानसंकर्मएतत्रयविपरीतबुद्धिश्चत्रिविधंशुभफलंमानसंकर्मशुभाशुभफलकर्मत्सुभयस्यैवमकांतत्वात् ५ पारुष्यमिति अप्रियाभिधानमसत्यभाषणंपरोक्षेपरदूषणकथनंसत्यस्यापिराजदेशपौरवार्त्तादेर्निःप्रयोजनंवर्णनंइत्येवंचतुःप्रकारमशुभफलंवाचिकंकर्मभवेत् एतद्विपरीतंप्रियसत्यपरगुणाभिधानंश्रुतिपुराणादौचराजादिचरितकथनंशुभफलं

तस्येहत्रिविधस्यापित्र्यधिष्ठानस्यदेहिनः दशलक्षणयुक्तस्यमनोविद्यात्प्रवर्त्तकम् ४ परद्रव्येष्वभिध्यानंमनसानिष्टचिंतनम् वितथाभिनिवेशश्चत्रिविधंकर्ममानसम् ५ पारुष्यमनृतंचैवपैशून्यंचापि सर्वशः असंबद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम् ६ अदत्तानामुपादानंहिंसाचैवाविधानतः परदारोपसेवाचशारीरंत्रिविधंस्मृतम् ७ मानसंमनसैवायमुपभुंक्तेशुभाशुभम् वाचावाचाकृतंकर्मकायेनैवचकायिकम् ८ शरीरजैःकर्मदोषैर्याति स्थावरतांनरः वाचिकैःपक्षिमृगतांमानसैरंत्यजातिताम् ९

६ अदत्तानामिति अन्यायेनपरस्वग्रहणमशास्त्रीयहिंसापरदारगमनमित्येवंत्रिप्रकारमशुभफलंशारीरंकर्मएतद्विपरीतंत्रयंशुभफलम् ७ मानसमिति मनसायत्सुकृतंदुष्कृतंवाकर्मकृतंतत्फलंसुखदुःखरूपमिहजन्मनिजन्मांतरेवामनसैवायमुपभुंक्तेएवंवाचाकृतंशुभाशुभंवाग्द्वारेणमधुरगद्गदभाषित्वादिनाशारीरंशुभाशुभंशरीरद्वारेणस्त्रक्चंदनादिप्रियोपभोगव्याधितत्वादिनानुभवतितस्मात्प्रयत्नेनशारीरमानसवाचिकानिधर्मरहितानिचवर्जयेन्नकुर्याच्च ८ शारीरेति यद्यपिपापिष्ठानांशारीरवाचिकमानसिकान्येवत्राणिपापानिसंभवंतितथापिसयदिप्रायशोअधर्ममेवसेवतेधर्ममल्पमितिबाहुल्याभिप्रायेणाइतिव्याख्यातंबाहुल्येनशरीरकर्मजपापैर्युक्तःस्थावरत्वंमानुषःप्राप्नोतिबाहुल्येनवाक्कृतैःपक्षित्वंमृगत्वंवाबाहुल्येनमनसाकृतैश्चांडालादित्वंप्राप्नोति ९

वागिति दमनंदंडः वाङ्मनःकायानांदंडाः निषिद्धाभिधानासत्संकल्पप्रतिषिद्धव्यापारत्यागेन बुद्धाववस्थिताः सत्रिदंडीत्युच्यतेन तुदंडत्रयमात्रेणइत्याभ्यंतरदंडत्रयप्रशंसा १० त्रिदंडमिति एवन्निषिद्धवागादीनांसर्वभूतगोचरतयादमनंकृत्वाएतद्मनात्मकमेवकामक्रोधौतुनियम्यततोमोक्षावाप्तिलक्षणांसिद्धिंमनुष्योलभते कोसौसिद्धिमाप्नोतीत्यतआह ११ यइति अस्यलोकसिद्धस्यात्मोपकारकत्वादात्मनःशरीराख्यस्ययःकर्मसुप्रवर्त्तयितातंक्षेत्रज्ञंपंडितावदंतियःपुनरेषव्यापारान्करोतिशरीराख्यःसपृथिव्यादिभूतारब्धत्वात्भूतात्मेतिपंडितैरुच्यते १२ जीवेति जीवशब्दोयंमहत्परः येनेतिकरणविभक्तिनिर्देशात् उत्तरश्लोकेचतावुभौभूतसंपृक्तौमहान्क्षेत्रज्ञएवचेतितत्शब्देनप्रत्यवमर्षात् शरीरक्षेत्रज्ञातिरिक्तोअंतःशरीरंआत्माख्यत्वादात्माजीवाख्यः

वाग्दंडोऽथमनोदंडःकायदंडस्तथैवच यस्यैतेनिहिताबुद्धौत्रिदंडीतिसउच्यते १० त्रिदंडमेतन्निक्षिप्यसर्वभूतेषुमानवः कामक्रोधौतुसंयम्यततःसिद्धिंनियच्छति ११ योऽस्यात्मनःकारयितातंक्षेत्रज्ञंप्रचक्षते यःकरोतितुकर्माणिसभूतात्मोच्यतेबुधैः १२ जीवसंज्ञोऽन्तरात्मान्यःसहजःसर्वदेहिनाम् येनवेदयतेसर्वंसुखदुःखंचजन्मसु १३ तावुभौभूतसंपृक्तौमहान्क्षेत्रज्ञएवच उच्चावचेषुभूतेषुस्थितंतंव्याप्यतिष्ठतः १४ असंख्यामूर्तयस्तस्यनिष्पतंतिशरीरतः उच्चावचानिभूतानिसततंचेष्टयंतियाः १५ पंचभ्यएवमात्राभ्यःप्रेत्यदुष्कृतिनांनृणाम् शरीरंयातनार्थीयमन्यदुत्पद्यतेध्रुवम् १६

सर्वक्षेत्रज्ञानांसहजआत्मातस्मात्तस्यविनियोगात्येनाहंकारेंद्रियरूपतयापरिणतेनकारणभूतेनक्षेत्रज्ञःप्रतिजन्मसुखंदुःखंचानुभवति १३ तावितितौद्वौमहत्क्षेत्रज्ञौपृथिव्यादिपंचभूतसंपृक्तौवक्ष्यमाणंसर्वलोकवेदस्मृतिपुराणादिप्रसिद्धतयाततमितिनिर्दिष्टंपरमात्मानमुत्कृष्टापकृष्टसत्वेषुव्यवस्थितमाश्रित्यतिष्ठतः १४ असंख्येति अस्यपरमात्मनःशरीरादसंख्यमूर्त्तयोजीवाःक्षेत्रज्ञशब्देनांतरमुक्तालिंगशरीरावच्छिन्नावेदांतउक्तप्रकारेणाग्नेरिवस्फुलिंगानिःसरंतियामूर्त्तयउत्कृष्टापकृष्टभूतानिदेवरूपतयापरिणतानिसर्वदाकर्मसुप्रेरयंति १५ पंचभ्यइति पंचभ्यएवपृथिव्यादिभूतेभ्योदुष्कृतकारिणांमनुष्याणांपीडानुभवप्रयोजकंजरायुजादिदेहव्यतिरिक्तंदुःखसहिष्णुशरीरंपरलोकेजायते १६ ७

तेनेति तेननिर्गतेनशरीरेणतायमकारितायातनादुःखानिनीजीवाः सूक्ष्मानुभूतस्थूलशरीरनाशेतेष्वेवारंभकभूतभागेषुयथा स्वंप्रलीयंतेतत्संयोगिनोभूत्वा अवतिष्ठंतइत्यर्थः १७ सोऽनुभूयेति शरीरीभूतसूक्ष्मादिलिंगशरीरावच्छिन्नोनिषिद्धशब्दस्पर्शरू परसगंधाख्यविषयोपभोगजनितयमलोकदुःखाद्यनुभूयानंतरंभोगादपहतपाप्मभावेनमहत्परमात्मानौमहावीर्यौद्वावाश्रयति १८ ताविति तौमहत्परमात्मानौ अनलसौतस्यजीवस्यधर्मंभुक्तशेषंचपापंसहविचारयतः याभ्यांधर्माधर्माभ्यांयुक्तोजीवः परलोकेइहलो कयोः सुखदुःखेप्राप्नोति १९ यदीति सयदिजीवोमानुषदशायांबाहुल्येनधर्ममनुतिष्ठति अल्पंचाधर्मंतदातैरेवपृथिव्यादिभूतैः स्थूलशरीररूपतयापरिणतैर्युक्तः स्वर्गसुखमनुभवति २० यदीति यदिपुनःसजीवोमानुषदशायांबाहुल्येनपापमनुतिष्ठतिअल्पंच

तेनानुभूयतायामीःशरीरेणेहयातनाः तास्वेवभूतमात्रासुप्रलीयंतेविभागशः १७ सोऽनुभूयासुखोदर्कान्दोषान्विषयसंगजान् व्यपेतकल्मषोऽभ्येतितावेवोभौमहौजसौ १८ तौधर्मंपश्यतस्तस्यपापंचातंद्रितौसह याभ्यांप्राप्नोतिसंपृक्तःप्रेत्येहचसुखासुखम् १९ यद्याचरतिधर्मंसप्रायशोऽधर्ममल्पशः तैरेवचावृतोभूतैःस्वर्गेसुखमुपाश्नुते २० यदितुप्रायशोधर्मंसेवतेधर्ममल्पशः तैर्भूतैःसपरित्यक्तोयामीःप्राप्नोतियातनाः २१ यामीस्तायातनाःप्राप्यसजीवोवीतकल्मषः तान्येवपंचभूतानिपुनरप्येतिभागशः २२ एतादृष्ट्वास्यजीवस्यगतीःस्वेनैवचेतसा धर्मतोधर्मतश्चैवधर्मेदध्यात्सदामनः २३ सत्त्वंरजस्तमश्चैव त्रीन्विद्यादात्मनोगुणान् यैर्व्याप्येमान्स्थितोभावान्महान्सर्वानशेषतः २४

पुण्यंतदातैरेवभूतैर्मानुषदेहरूपत यापरिणतैस्त्यक्तोमृतःसन्नंतरंपंचभ्यएवमात्राभ्यइत्युक्तरीत्यायातनानुभवोचितसंपातकठिनदेहोयामीःपीडाअनुभवति २१ यामीरिति सजीवोयमकारितास्ताःपीडास्तेनकठिनदेहेनानुभूयततोभोगेनापहतपाप्मातान्येवजरायुजादिशरीरारंभकान्पृथि व्यादिभूतभागानधितिष्ठतिमानुषंशरीरंगृह्णातीत्यर्थः २२ एताइति अस्यजीवस्यएताधर्माधर्महेतुकाःस्वर्गनरकाद्युपभोगोचित प्रियाप्रियदेहप्राप्तीरंतःकरणेज्ञात्वाधर्मानुष्ठानेमनःसदासंगतंकुर्यात् २३ सत्त्वमिति सत्त्वरजस्तमांसित्रीणिवक्ष्यमाणगुणलक्ष णानिआत्मोपकारकत्वादात्मनोमहतोगुणान्जानीयात्यैर्व्याप्तोमहानिमान्स्थावरजंगमरूपान्पदार्थान्निःशेषेणव्याप्यस्थितः २४

यइति यद्यपिसर्वमेवेदंत्रिगुणंतथापियत्रदेहेएषांगुणानांमध्येयोगुणोयदासाकल्येनाधिकोभवतितदातद्गुणलक्षणबहुलंतंदे-
हिनंकरोतिसंप्रतिसत्त्वादीनांलक्षणमाह २५ सत्त्वमिति यथार्थावभासोज्ञानंतत्सत्त्वस्यलक्षणंएतद्विपरीतमज्ञानंतत्तमोलक्षणंवि
पादाभिलाषमानसकार्यंरजोलक्षणंस्वरूपंतुसत्त्वरजस्तमसांप्रीत्यप्रीतिविषादात्मकतथाचभवंतिप्रीत्यप्रीतिविषादात्मकाःप्रका
शप्रवृत्तिनियमार्था अन्योन्याभिभवजननमिथुनवृत्तयश्चगुणा एतच्चैषांस्वरूपमनंतरश्लोकत्रयेणवक्ष्यतिएतेषांसत्त्वादिगुणानामेतं
त्ज्ञानादिसर्वप्राणिव्यापकंलक्षणम् २६ तत्रेति तस्मिन्नात्मनियत्संवेदनंप्रीतियुक्तमस्तमितक्लेशंप्रकाशरूपमंतर्भवेत्तत्सत्त्वं
जानीयात् २७ यत्त्विति यत्पुनःसंवेदनंदुःखयुक्तंअतएवसत्त्वसुखात्मप्रीतेरजनकंसर्वदाचशरीरिणांविषयस्पृहोत्पादकंतत्त्वनि
वारकत्वात्प्रतिपक्षंरजोजानीयात् २८ यत्त्विति यत्पुनःसदसद्विवेकशून्यंअस्फुटविषयाकारस्वभावमतर्कणीयस्वरूपमंतःकरण

योयदेषांगुणोदेहेसाकल्येनातिरिच्यते सतदातद्गुणप्रायंतंकरोतिशरीरिणम् २५ सत्त्वंज्ञानंतमो
ज्ञानंरागद्वेषौरजःस्मृतम् एतद्व्याप्तिमदेतेषांसर्वभूताश्रितंवपुः २६ तत्रयत्प्रीतिसंयुक्तंकिंचिदात्मनि
लक्षयेत् प्रशांतमिवशुद्धाभंसत्त्वंतदुपधारयेत् २७ यत्तुदुःखसमायुक्तमप्रीतिकरमात्मनः तद्रजो
प्रतिपंविद्यात्सततंहारिदेहिनाम् २८ यत्तुस्यान्मोहसंयुक्तमव्यक्तंविषयात्मकम् अप्रतर्क्यमविज्ञेयं
तमस्तदुपधारयेत् २९ त्रयाणामपिचैतेषांगुणानांयःफलोदयः अग्र्योमध्योजघन्यश्चतंप्रवक्ष्याम्य
शेषतः ३० वेदाभ्यासस्तपोज्ञानंशौचमिंद्रियनिग्रहः धर्मक्रियात्मचिंताचसात्त्विकंगुणलक्षणम् ३१

बहिःकरणाभ्यांदुर्ज्ञातंतत्तमोजानीयात् एषांचगुणानांस्वरूपकथनंसत्त्वरजस्तमसामवस्थितोयद्भवताभावितव्यमित्येतत्प्रयोजनक
म् २९ त्रयाणामिति एतेषांसत्त्वादीनांत्रयाणामपिगुणानांयथाक्रमयुत्तममध्यमाधमरूपोयःफलोत्पादकःतद्विशेषेणवक्ष्या
मि ३० वेदेति वेदाभ्यासःप्राजापत्यानुष्ठानंशास्त्रार्थावबोधःमृद्वार्यादिशौचमिंद्रियसंयमोदानादिधर्मानुष्ठानमात्मध्यानपर
तापतत्सत्त्वाख्यगुणस्यकार्यम् ३१ आरंभेति फलार्थकर्मानुष्ठानशीलताअल्पेप्यर्थेवैक्लव्यंनिषिद्धकर्माचरणंअजस्रंशब्दा
दिविषयोपभोगइत्येतद्रजोभिधानगुणस्यकार्यम् ३२ लोभइत्यादि अधिकाधिकधनस्पृहानिद्रालुताकार्पण्यंपैशून्यंपर-

लोकाभावबुद्धिराचारपरिलोपः याचनशीलत्वं धर्मादिष्वनवधानं इत्येतत्तामसाभिधानस्य गुणस्य लक्षणम् ३३ त्रयाणामपीति एषां सत्त्वादीनां त्रयाणामपि गुणानां त्रिषु कालेषु भूतभविष्यद्वर्तमानेषु विद्यमानानामिदं वक्ष्यमाणं सांक्षेपिकं क्रमेण गुणलक्षणं ज्ञातव्यम् ३४ यदिति यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्च लज्जावान्भवति कालत्रये द्वयोरन्यत्र चेति विवक्षितं तत्सर्वं तमःकार्यत्वात्तमोभिधानं गुणलक्षणं शास्त्रविदा बोद्धव्यम् ३५ येनेति इहलोके महतीं श्रियं प्राप्नोतीत्येतदर्थमेव यो यत्कर्म करोति न परलोकार्थं न च तत्कर्मफलासंपत्तौ दुःखी भवति तद्रजःकार्यत्वाद्रजोगुणलक्षणं विज्ञेयम् ३६ यदिति यत्कर्म वेदार्थं ज्ञातुमिच्छति यच्च कर्माचरन् कालत्रयेऽपि न लज्जति येन येन कर्मणा स्यात्मतुष्टिर्जायते तत्सत्त्वाख्यस्य गुणस्य लक्षणं ज्ञेयम् ३७ तमस इति कामप्रधानता तमसो लक्षणं अर्थ

आरंभरुचिताधैर्यमसत्कार्यपरिग्रहः विषयोपसेवा चाजस्रं राजसं गुणलक्षणम् ३२ लोभः स्वप्नोऽधृतिः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता याचिष्णुता प्रमादश्च तामसं गुणलक्षणम् ३३ त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम् इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम् ३४ यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ३५ येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम् न च शोचत्यसंपत्तौ तद्विज्ञेयं तु राजसम् ३६ यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन् येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम् ३७ तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथोत्तरम् ३८ येन यस्तु गुणेनैषां संसारान्प्रतिपद्यते तान्समासेन वक्ष्यामि सर्वस्यास्य यथाक्रमम् ३९ देवत्वं सात्त्विका यांति मनुष्यत्वं च राजसाः तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ४०

प्रधानता रजसः धर्मप्रधानता सत्त्वस्य एषां च कामादीनां उत्तरोत्तरस्य श्रेष्ठत्वं कामादर्थः श्रेयान् अर्थमूलत्वात्कामस्य ताभ्यां च धर्मः तन्मूलत्वात्तयोः ३८ येनेति एषां सत्त्वादीनां गुणानां मध्ये येन गुणेन सर्वकार्येण या या गतीर्जीवः प्राप्नोति ताः सर्वस्यास्य जगतः क्रमेण वक्ष्यामि ३९ देवत्वमिति ये सत्त्ववृत्ताववस्थिताः ते देवत्वं यांति ये तु रजोवृत्त्यवस्थिताः ते मनुष्यत्वं ये तमोवृत्तिस्थाः ते तिर्यक्त्वं च इत्येषा त्रिविधा जन्मप्राप्तिः ४० त्रिविधेति या सत्त्वादिगुणत्रयनिमित्ता त्रिविधा जन्मांतरप्राप्तिरुक्ता सा देशकालादिभेदेन संसारभूतकर्मभेदाच्चा

धममध्यमोत्तमभेदेनपुनस्त्रिविधाबोद्धव्या ४१ स्थावराइति स्थावरावृक्षादयः कृमयःसूक्ष्माः प्राणिनःतेभ्यईषत्स्थूलाः कीटाःन
थामत्स्यसर्पकूर्मपशुमृगाश्चेत्येषांतमोनिमित्ताजघन्यागतिः ४२ हस्तिनश्चेति हस्त्यश्वशूद्रम्लेच्छसिंहव्याघ्रसूकराःतमोगुणनिमित्ता
मध्यमागतिः गर्हिताइतिम्लेच्छानांस्वरूपानुवादः ४३ चारणाश्चेति चारणानटादयःसुपर्णाःपक्षिणः छद्मनाकर्मकारिणःपुरुषाराक्ष
साःपिशाचाश्चेत्येषातामसीषूत्तमागतिः ४४ झल्लाइति झल्लामल्लाःक्षत्रियात्व्रात्यात्सवर्णायासुत्पन्नादशमाध्यायोक्ताज्ञेयाःतत्रझ-
ल्लायष्टिप्रहरणाःमल्लाबाहुयोधिनःरंगावतारकानटाःशस्त्राजीविद्यूतपानप्रसक्ताश्चपुरुषाअधमाराजसीगतिर्ज्ञेया ४५ राजानइति
राजानोअभिषिक्ताजनपदेश्वराःतथाक्षत्रियाराजपुरोहिताश्चशास्त्रार्थकलहप्रियाश्चएषाराजसीगतिर्मध्यमाबोद्धव्या ४६ गंधर्वा

त्रिविधात्रिविधैषातुविज्ञेयागौणिकीगतिः अधमामध्यमाउग्याचकर्मविद्याविशेषतः ४१ स्थावराः कृमिकी
टाश्चमत्स्याःसर्पाःसकच्छपाः पशवश्चमृगाश्चैवजघन्यातामसीगतिः ४२ हस्तिनश्चतुरंगाश्चशूद्राम्लेच्छा
श्चगर्हिताः सिंहाव्याघ्रावराहाश्चमध्यमातामसीगतिः ४३ चारणाश्चसुपर्णाश्चपुरुषाश्चैवदांभिकाः रक्षां
सिचपिशाचाश्चतामसीषूत्तमागतिः ४४ झल्लामल्लानटाश्चैवपुरुषाःशस्त्रवृत्तयः द्यूतपानप्रसक्ताश्चजघ
न्याराजसीगतिः ४५ राजानःक्षत्रियाश्चैवराज्ञांचैवपुरोहिताः वादयुद्धप्रधानाश्चमध्यमाराजसीगतिः ४६
गंधर्वागुह्यकायक्षाविबुधानुचराश्चये तथैवाप्सरसःसर्वाराजसीषूत्तमागतिः ४७ तापसायतयोविप्राये
चवैमानिकागणाः नक्षत्राणिचदैत्याश्चप्रथमासात्त्विकीगतिः ४८ यज्वानऋषयोदेवावेदाज्योतींषिव
त्सराः पितरश्चैवसाध्याश्चद्वितीयासात्त्विकीगतिः ४९

इति गंधर्वागुह्यकाराक्षसाजातिविशेषाःपुराणादिप्रसिद्धाःयेच
देवानुयायिनोविद्याधरादयः अप्सरसश्चदेवगणिकाःसर्वाइत्येषाराजसीमध्येउत्कृष्टागतिः ४७ तापसाइति वानप्रस्थाभिक्षवोब्राह्मणा
श्च अप्सरसोव्यतिरिक्ताःपुष्पकादिविमानचारिणोनक्षत्राणिदैत्याश्चेत्येषासत्त्वनिमित्ताऽधमागतिः ४८ यज्वानइति यागशीलाः
तथर्षयोदेवावेदाभिमानिन्यश्चदेवताविग्रहवत्यःइतिहासप्रसिद्धाःज्योतींषिध्रुवादीनिवत्सराइतिहासदृष्ट्याविग्रहवंतःपितरःसो

मपादयःसाध्याश्चदेवयोनिविशेषाइत्येषासत्त्वनिमित्तामध्यमागतिः ४९ ब्रह्मेति चतुर्वदनोविश्वसृजश्चमरीच्यादयःधर्मे वान् अव्यक्तंचसांख्यमसिद्धंचतत्त्वद्वयंतदधिष्ठातृदेवताद्वयमिहविवक्षितंअचेतनगुणत्रयमात्रस्योत्तमसात्त्विकगतित्वानुपपत्तेः एतांचतुर्वदनाद्यात्मिकांसत्त्वनिमित्तामुत्कृष्टांगतिंपंडितावदंति ५० एषइति एषमनोवाक्कायरूपत्रयभेदेनत्रिःप्रकारस्यकर्मणःसत्त्वरजस्तमोभेदेनत्रिविधःपुनःप्रथममध्यमोत्तमभेदेनत्रिविधःसर्वप्राणिगतःसमग्रोगतिविशेषःकार्त्स्न्येनोक्तःसार्वभौतिकइत्यभिधानात् अनुक्ताअप्यत्रगतयोद्रष्टव्याःउक्तगतयस्तुप्रदर्शनार्थाः ५१ इंद्रियाणामिति इंद्रियाणांविषयेषुप्रसंगेननिषिद्धाचरणंप्रायश्चित्तादिधर्माननुष्ठानेनमूढामनुष्यापसदाःकुत्सितागतीःप्राप्नुवंति ५२ यांयामिति अयंजीवोयेनयेनपापेनकर्मणाइहलोकेयत्तेनयद्यज्जन्मप्राप्नोतितत्सर्वंक्रमेणशृणुत ५३ बहूनिति ब्रह्महत्यादिमहापातककारिणोबहून्वर्षसहस्रान्भयंक

ब्रह्माविश्वसृजोधर्मोमहानव्यक्तमेवच उत्तमांसात्त्विकीमेतांगतिमाहुर्मनीषिणः ५० एषसर्वःसमुद्दिष्टस्त्रिप्रकारस्यकर्मणः त्रिविधस्त्रिविधःकृत्स्नःसंसारःसार्वभौतिकः ५१ इंद्रियाणांप्रसंगेनधर्मस्यासेवनेनच पापान्संयांतिसंसारानविद्वांसोनराधमाः ५२ यांयांयोनिंतुजीवोयंयेनयेनेहकर्मणा क्रमशोयातिलोकेस्मिंस्तत्तत्सर्वंनिबोधत ५३ बहून्वर्षगणान्घोरान्नरकान्प्राप्यतत्क्षयात् संसारान्प्रतिपद्यंतेमहापातकिनस्त्विमान् ५४ श्वसूकरखरोष्ट्राणांगोजाविमृगपक्षिणाम् चंडालपुक्कसानांचब्रह्महायोनिमृच्छति ५५ कृमिकीटपतंगानांविड्भुजांचैवपक्षिणाम् हिंस्राणांचैवसत्त्वानांसुरापोब्राह्मणोव्रजेत् ५६ लूताहिसरटानांचतिरश्चांचांबुचारिणाम् हिंस्राणांचपिशाचानांस्तेनोविप्रःसहस्रशः ५७

प्यतदुपभोगक्षयात्तदुत्कृतशेषेणवक्ष्यमाणान्जन्मविशेषान्प्राप्नुवंति ५४ श्वेति कुक्कुरसूकरगर्दभउष्ट्रगोच्छागमेषमृगपक्षिचंडालमासु निषादेनशूद्रायांजातानांसंबंधिनींजातिंब्रह्महाप्राप्नोतितत्रपापदेशगौरवापेक्षयाक्रमेणसर्वयोनिप्राप्तिर्बोद्धव्याएवमुत्तरत्रापि ५५ कृमीति कृमिकीटशलभानांपुरीषभक्षिणांहिंसनशीलानांचव्याघ्रादीनांप्राणिनांजातिंसुरापोब्राह्मणोगच्छति ५६ लूताहीति ऊर्णनाभसर्पकृकलासानांजलचराणांचतिरश्चांकुंभीरादीनांपिशाचादीनांहिंसनशीलानांचयोनिंसुवर्णहारीब्राह्मणःसहस्रवाराःप्राप्नोति ५७

तृणेति तृणानांदूर्वादीनांगुल्मानामभकांडादीनांलतानांगुडुच्यादीनांआममांसभक्षिणांगृध्रादीनांदंष्ट्रिणांसिंहादीनांक्रूरकर्मशा-लिनांवधशीलानांव्याघ्रादीनांजातिंशतवारान्प्राप्नोतिगुरुदारगामी ५८ हिंस्राइति येप्राणिवधशीलास्तेआममांसाशिनोमार्जारादयोभवंतिअभक्ष्यभक्षिणोयेतेकृमयोजायंतेमहापातकव्यतिरिक्ताश्चौरास्तेपरस्परंमांसस्यादिनोभवंति येचांडालादिस्त्रीगामिन.तेप्रेताख्याःप्राणिविशेषाजायंतेअंत्यस्त्रीनिषेविणइतिछंदःसमानत्वात्स्मृतीनांसर्वेविधयश्छंदसिविकल्प्यंतेइतिविसर्गलोपेचयह्रायलोपेचसवर्णदीर्घः ५९ संयोगमिति यावत्कालीनपतितसंयोगेनपतितोभवतितावंतंकालंब्रह्महादिभिश्चतुर्भिःसहसंसर्गंकृत्वापरेषांचस्त्रियंगत्वाब्राह्मणस्वर्णादन्यदपहृत्यएकैकपापकारेणब्रह्मराक्षसोभूतविशेषोभवति ६० मणीति मणीन्माणिक्यादीनिमुक्ताविद्रुमांचनानाविधानिचरत्नानिवैडूर्यहीरकादीनिलोभेनहृत्वात्मीयक्षमाहिनास्वर्णकारयोनौजायते

तृणगुल्मलतानांचक्रव्यादांदंष्ट्रिणामपि क्रूरकर्मकृतांचैव शतशोगुरुतल्पगः ५८ हिंस्राभवंति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः परस्परादिनस्तेनाःप्रेताऽन्त्यस्त्रीनिषेविणः ५९ संयोगंपतितैर्गत्वा परस्यैवचयोषितम् अपहृत्यचविप्रस्वंभवतिब्रह्मराक्षसः ६० मणिमुक्ताप्रवालानिहृत्वालोभेन मानवः विविधानिचरत्नानिजायतेहेमकर्तृषु ६१ धान्यंहृत्वाभवत्याखुः कांस्यंहंसोजलंप्लवः मधु दंशःपयःकाकोरसंश्वानकुलोघृतम् ६२ मांसंगृध्रोवपांमद्गुस्तैलंतैलपकःखगः चीरीवाकस्तुल वणंबलाकाशकुनिर्दधि ६३ कौशेयंतित्तिरिर्हृत्वाक्षौमंहृत्वातुदर्दुरः कार्पासतांतवंक्रौंचोगोधागां वाग्गुदोगुडम् ६४ केचित्तुहेमकारपक्षिणमाचक्षते ६१ धान्यमिति धान्यमपहृत्यमूषिकोभवतिकांस्यंहृत्वाहंसःजलंहृत्वाप्लवाख्यःपक्षीमाक्षिकंहृत्वादंशःक्षीरंहृत्वाकाकःविशेषोपदिष्टगुडलवणादिव्यतिरिक्तमिक्ष्वादिरसंहृत्वाश्वाभवतिघृतंहृत्वानकुलोभवति ६२ मांसमिति मांसंहृत्वागृध्रोभवतिवपांहृत्वामद्गुनामाजलचरोभवतितैलंहृत्वातैलपायिकाख्यःपक्षीलवणंहृत्वाचीराख्यउच्चैस्वरःकीटःदधिहृत्वाबलाकाख्यःपक्षीजायते ६३ कौशेयमिति कीटकोषनिर्मितंवस्त्रंहृत्वातित्तिरिर्नामापक्षीभवतिक्षौमकृतवस्त्रंहृत्वामंडूकःकार्पासमयंपटंहृत्वाक्रौंचाख्यःप्राणीगुडंहृत्वावाग्गुदनामाशकुनिर्भवति ६४ ७

छुच्छुंदरिरिति सुगंधिद्रव्याणि कस्तूर्यादीनि हृत्वा छुच्छुंदरिर्भवति वास्तूकादि पत्रशाकं हृत्वा मयूरः सिद्धान्नं मोदनसक्त्वादिना नाप्रकारकं हृत्वा श्वाविधाख्यः प्राणी अकृतान्नं तु व्रीहियवादिकं हृत्वा शल्यकसंज्ञो जायते ६५ बक इति अग्निं हृत्वा बकाख्यः पक्षी जायते गृहोपयोगि शूर्पमुसलादि हृत्वा भित्त्यादिषु मृत्तिकादि गृहकारी स पक्षः कीटो भवति कुसुंभादिरक्तानि वासांसि हृत्वा चकोराख्यः पक्षी जायते ६६ वृक इति मृगं हस्तिनं वा हृत्वा वृकाख्यो हिंस्रपशुर्भवति घोटकं हृत्वा व्याघ्रो भवति फलमूलं हृत्वा मर्कटो भवति स्त्रियं हृत्वा भल्लूको भवति पानार्थमुदकं हृत्वा चातकाख्यः पक्षी यानानि शकटादीनि हृत्वा उष्ट्रो भवति पशून् उक्तेतरान् [illegible]
गो भवति ६७ यद्वेति यत्किंचिदसारमपि परद्रव्यमिच्छातो मानुषो अपहृत्य पुरोडाशादिकं तु हविरहुतं भक्षयित्वा तिर्यक्त्वं प्राप्नोति नर

छुच्छुंदरिः शुभान्गंधान्पत्रशाकं तु बर्हिणः श्वावित्कृतान्नं विविधमकृतान्नं तु शल्यकः ६५ बको भवति हृत्वाग्निं गृहकारी ह्युपस्करम् रक्तानि हृत्वा वासांसि जायते जीवजीवकः ६६ वृको मृगेभं व्याघ्रोऽश्वं फलमूलं तु मर्कटः स्त्रीमृक्षः स्तोकको वारि यानान्युष्ट्रः पशूनजः ६७ यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ६८ स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः ६९ स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युता वर्णा ह्यनापदि पापान्संसृत्य संसारान्प्रेष्यतां यान्ति शत्रुषु ७० वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात्स्वकाच्च्युतः अमेध्यकुणपाशी च क्षत्रियः कटपूतनः ७१ मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक् चैलाशकश्च भवति शूद्रो धर्मात्स्वकाच्च्युतः ७२

ति ६८ स्त्रियोपीति स्त्रियो
प्येतेन प्रकारेण इच्छातः परस्वमपहृत्य पापं प्राप्नुवंति तेन पापेन उक्तानां जंतूनां भार्यात्वं प्रतिपद्यंते एवं निषिद्धाचरणफलान्यभिधाय अधुना विहिताकरणफलविपाकमाह ६९ स्वेभ्य इति ब्राह्मणादयश्चत्वारो वर्णा आपदं विना पंचयज्ञादिकर्मत्यागिनो वस्थमाणा कुत्सिता योनीः प्राप्य ततो जन्मांतरे शत्रुदासत्वं प्राप्नुवंति ७० वांताशीति ब्राह्मणः स्वकर्मभ्रष्टश्छर्दितभक् ज्वालामुखः प्रेतविशेषो जायते क्षत्रियः पुनर्नष्टकर्मा पुरीषशवभोजी कटपूतनाख्यः प्रेतविशेषो भवति ७१ मैत्रेति वैश्यो भ्रष्टकर्मा मैत्राक्षज्योतिकना

मापूयभक्षः प्रेतोजन्मांतरेभवति मित्रदेवताकत्वान्मैत्रः पायुस्तदेवाक्षंकर्मेंद्रियंतत्रज्योतिर्यस्यसमैत्राक्षज्योतिकः पृषोदरादित्वात् ज्योतिष. षकारलोपः शूद्रः पुनर्भ्रष्टकर्मा चैलाशकाख्यः प्रेतोभवति चेलं वस्त्रं तत्संबंधिनीं यूकामश्नातीति चैलाशकः गोविंदराजस्तु चैलाशकाख्यः कीटश्चैलइत्युच्यते तद्भक्षश्च सभवतीत्याह तदयुक्तं प्रेताख्यप्राणिविशेषप्रकरणात् ७२ यथेति यथायथाशब्दादिविषयान्विषयलोलुपानितांतंसेवंते तथातथाविषयेष्वेव तेषां प्रावीण्यंभवतीतितत: ७३ तइति तेऽल्पधियस्तेषान्निषिद्धविषयोपभोगानामभ्यासतारतम्यात्तासुतासुगर्हितगर्हिततरगर्हिततमासु तिर्यगादियोनिषु दुःखमनुभवंति ७४ तामिस्रादिष्विति संप्राप्नुवंतीति पूर्वश्लोकस्थमिहोत्तरत्रानुवर्त्तते तामिस्रादिषु चतुर्थाध्यायोक्तेषु घोरेषु नरकेषु दुःखानुभवंप्राप्नुवंति तथाऽसिपत्रवनादीनि बंधनच्छेदनात्मिकान्नरकान्प्राप्नुवंति ७५ विविधाइति विविधपीडनंकाकादीर्भक्षणंतथातप्तवालुकादीन्कुंभीपाका

यथायथानिषेवंते विषयान्विषयात्मकाः तथातथाकुशलतातेषांतेषूपजायते ७३ तेऽभ्यासात्कर्मणांतेषांपापानामल्पबुद्धयः संप्राप्नुवंति दुःखानितासुतास्विहयोनिषु ७४ तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम् असिपत्रवनादीनि बंधनच्छेदनानि च ७५ विविधाश्चैवसंपीडाः काकोलूकैश्च भक्षणम् करंभवालुकातापान्कुंभीपाकांश्च दारुणान् ७६ संभवांश्च वियोनीषु दुःखप्रायासु नित्यशः शीतातपाभिघातांश्च विविधानि भयानि च ७७ असकृद्गर्भवासेषु वासं जन्म च दारुणम् बंधनानि च कष्टानि परप्रेष्यत्वमेव च ७८ बंधुप्रियवियोगांश्च संवासं चैव दुर्जनैः द्रव्यार्जनं च नाशं च मित्रामित्रस्य चार्जनम् ७९ जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम् क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ८०

दींश्चनरकान् दारुणान्प्राप्नुवंति ७६ संभवांश्चेति संभवान्तिर्यगादिजातिषु नित्यं दुःखबहुलासूत्पत्तिंप्राप्नुवंति तत्र शीतातपादिपीडनादिनानाप्रकाराणि च प्राप्नुवंति ७७ असकृदिति पुनःपुनर्गर्भस्थानेषु वासः समुत्पत्तिं च योनियंत्रादिभिर्दुःखावहां उत्पन्नाश्च शृंखलादिभिर्बंधनादिपीडामनुभवंति परदासत्वं च प्राप्नुवंति ७८ बंधुप्रियेति बांधवैः सुहृद्भिः सहवियोगान् दुर्जनैश्च सह एकत्रावस्थानं धनार्ज्जनप्रयासं धनविनाशं कष्टेन मित्रार्ज्जनं शत्रुप्रादुर्भावं प्राप्नुवंति च ७९ जरामिति जरां चाविद्यमानप्रतीकारां व्याधिभिश्चोपपीडनं क्षुत्पिपासादिना च नाना

प्रकारान्क्लेशान्मृत्युंचदुर्वारंप्राप्नुवंति ८० यादृशेनेति यथाविधेनसात्त्विकेनराजसेनतामसेनवाचेतसायद्यत्कर्मस्नानदानयो
गादयत्तुतिष्ठतितादृशेनैवशरीरेणसात्त्विकेनरजोधिकेनतमोधिकेनवातत्तत्स्नानादिफलमुपभुंक्ते ८१ एषइति एषयुष्माकंवि
हितप्रतिषिद्धानांकर्मणांसर्वःफलोदयउक्तःइदानींब्राह्मणस्यनिःश्रेयसामुपायंहितंकर्मानुष्ठानंइदंशृणुत ८२ वेदाभ्यासइ
ति उपनिषदादेर्वेदस्यग्रंथतोऽर्थतश्चआवर्त्तनंतपः कृच्छ्रादिज्ञानंब्रह्मविषयंइंद्रियजयोअविहितहिंसावर्ज्जनंगुरु
तत्सकृष्टंसाधनम् ८३ सर्वेषामिति सर्वेषामप्येतेषांवेदाभ्यासादीनांशुभकर्मणांमध्येकिंचित्कर्मातिशयेनमोक्षसाधं स्या
दितिवितर्केऋषीणांजिज्ञासाविशेषादुत्तरश्लोकेननिर्णयमाह ८४ सर्वेषामिति एषांवेदाभ्यासादीनांसर्वेषामपिमध्येउपनिष

यादृशेनतुभावेनयद्यत्कर्मनिषेवते तादृशेनशरीरेणतत्तत्फलमुपाश्नुते ८१ एषसर्वःसमुद्दिष्टः
कर्मणांवःफलोदयः नैःश्रेयसकरंकर्मविप्रस्येदन्निबोधत ८२ वेदाभ्यासस्तपोज्ञानमिंद्रियाणांचसं
यमः अहिंसागुरुसेवाचनिःश्रेयसकरंपरम् ८३ सर्वेषामपिचैतेषांशुभानामिहकर्मणाम् किंचित्श्रे
यस्करतरंकर्मोक्तंपुरुषंप्रति ८४ सर्वेषामपिचैतेषामात्मज्ञानंपरंस्मृतम् तद्ध्यग्र्यंसर्वविद्यानांप्राप्यते
ह्यमृतंततः ८५ षण्णामेषांतुसर्वेषांकर्मणांप्रेत्यचेहच श्रेयस्करतरंज्ञेयंसर्वदाकर्मवैदिकम् ८६

दुक्तंपरमार्थज्ञानंप्रकृष्टंस्मृतंयस्मात्सर्वविद्यानांप्रधानम् अत्रैवहेतुमाहयतोमोक्षस्तस्मात्प्राप्यते ८५ षण्णामिति एषांपुनः ष-
ण्णांपूर्वोक्तानांवेदाभ्यासादीनांकर्मणांमध्येवैदिकंकर्मपरमार्थज्ञानमैहिकामुष्मिकश्रेयस्करतरंज्ञातव्यंपूर्वश्लोकेमोक्षहेतुत्वमा
त्मज्ञानस्योक्तंइहतुऐहिकामुष्मिकश्रेयोंतरहेतुत्वमुच्यतेइत्यपौनरुक्त्यंतथाहिप्रतीकोपासनानांसंशयोदयंनामब्रह्मेत्युपास्ते-
यावन्नाम्नोगतंतत्रास्यकामचारोभवति गोविंदराजस्तुएषांपूर्वश्लोकोक्तानांवेदाभ्यासादीनांषण्णांकर्मणांमध्यात्स्मार्त्तकर्मापेक्ष
यावैदिकंकर्मसर्वदेहपरलोकेसातिशयंसातिशयेनकीर्त्तिस्वर्गनिःश्रेयःसाधनंज्ञेयमितिव्याख्यातवान् तदयुक्तंवेदाभ्यासादीनां
षण्णामपिप्रत्येकंश्रुतिविहितत्वात्तेषुमध्येस्मार्त्तापेक्षयाकिंचिदेवंकिंचिन्नेतिनसंभवतिततश्चकथंनिर्द्धारणषष्ठी तस्माद्य

र्केवच्याख्या इदानीमैहिकामुष्मिकश्रेयःसाधनत्वमेवात्मज्ञानस्यस्पष्टयति ८६ वैदिकेति वैदिकेपुनः कर्मयोगेपरमात्मोपासनारूपेसर्वाण्येतानिपूर्वश्लोकोक्तानिऐहिकामुष्मिकश्रेयांसितस्मिंस्तस्मिन्उपासनाविधौक्रमशःसंभवंति अथवासर्वाण्येतानीतिवेदाभ्यासादीन्येवपरामृष्यंतेपरमात्मज्ञानेवेदाभ्यासादीनितमेतंवेदानुवचनेन विविदिषंतियज्ञेनदानेनतपसानाशकेनेतिश्रुतिविहितांगत्वेनांतर्भवंति ८७ सुखेति वैदिकंकर्मात्रिज्योतिष्टोमादिप्रतीकोपासनादिचगृह्यतेस्वर्गादिसुखप्रापकंसंसारप्रवृत्तिहेतुत्वात्प्रवृत्ताख्यंवैदिकंकर्मतथानिःश्रेयसंमोक्षस्तदर्थंकर्मनैःश्रेयसिकंसंसारनिवृत्तिहेतुत्वात्निवृत्ताख्यमित्येवंवैदिकंकर्मद्विप्रकारंवेदितव्यंएतदेवस्पष्टयति ८८ इहेति इहकाम्यसाधनंदृष्टहेतुकारीयागादिरत्रस्वर्गादिफलसाधनं-

वैदिकेकर्मयोगेतुसर्वाण्येतान्यशेषतः अंतर्भवंतिक्रमशस्तस्मिंस्तस्मिन्क्रियाविधौ ८७ सुखाभ्युदयिकंचैवनैःश्रेयसिकमेवच प्रवृत्तंचनिवृत्तंचद्विविधंकर्मवैदिकम् ८८ इहचामुत्रवाकाम्यंप्रवृत्तंकर्मकीर्त्यते निष्कामंज्ञानपूर्वंतुनिवृत्तमुपदिश्यते ८९ प्रवृत्तंकर्मसंसेव्यदेवानामेतिसाम्यताम् निवृत्तंसेवमानस्तुभूतान्यत्येतिपंचवै ९० सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि समपश्यन्नात्मयाजीस्वाराज्यमधिगच्छति ९१

ज्योतिष्टोमादियत्कामतयाक्रियतेतत्संसारप्रवृत्तमित्युच्यतेदृष्टादृष्टफलकामनारहितंपुनर्ब्रह्मज्ञानाभ्यासपूर्वकंसंसारनिवृत्तिहेतुत्वात्निवृत्तमित्युच्यते ८९ प्रवृत्तमिति प्रवृत्तकर्माभ्यासेनदेवसमानगतित्वंतत्फलंकर्मणाप्राप्नोतिएतच्चप्रदर्शनार्थमन्यफलकेनकर्मणाप्रवृत्तेनफलांतरमपिप्राप्नोतिनिवृत्तकर्माभ्यासेनपुनः शरीरारंभकानिपंचभूतानिअतिक्रामतिमोक्षंप्राप्नोतीत्यर्थः ९० सर्वेति सर्वभूतेषुस्थावरजंगमात्मकेषुअहमेवात्मरूपेणास्मिसर्वाणिभूतानिपरमाणुपरिमाणसिद्धानिमय्येवपरमात्मन्यासतइतिसामान्येनयोयावज्जीवंब्रह्मार्पणन्यायेनज्योतिष्टोमादिकुर्वन्स्वेनराजतेप्रकाशतइतिस्वराट्ब्रह्मतस्यभावःस्वाराज्यंब्रह्मत्वंलभ्यतेमोक्षमाप्नोतीत्यर्थः तथाचश्रुतिःसर्वंखल्विदंब्रह्मसंयजनादिभिः शांतउपासीत तथाचयजुर्वेदमंत्रः यस्तुसर्वाणिभूतानिआत्मन्येवानुपश्यति सर्वभूतेषुचात्मानंततोनविजुगुप्सते ९१ ७

यथेति शास्त्रचोदितान्यपिअग्निहोत्रादीनिकर्माणिपरित्यज्यब्रह्मध्यानेंद्रियजयप्रणवोपनिषदादिवेदाभ्यासेषुब्राह्मणोयत्नंकुर्यात् एतच्चेषांमोक्षोपायांतरंगोपायत्वप्रदर्शनार्थंनत्वग्निहोत्रादिपरित्यागपरत्वमुक्तम् ९२ एतदिति एतदात्मज्ञानवेदाभ्यासादि द्विजातेर्जन्मफलत्वापादकत्वात्जन्मनःसाफल्यंविशेषेणब्राह्मणस्ययस्मादेतत्प्राप्यद्विजातिः कृतकृत्योभवतिनप्रकारां[illegible]ण इदानीं वेदादेवब्रह्मज्ञातव्यमितिप्रदर्शयितुंवेदप्रशंसामाह ९३ पितृदेवेति पितृदेवमनुष्याणांहव्यकव्यान्नदानेषुवेद एवचक्षुरिवचक्षुरनश्वरंतत्प्रमाणत्वादसन्निकृष्टफलकव्यदानादौप्रमाणांतरानवकाशात् अशक्यंचवेदशास्त्रंकर्तुमनेनापौरुषेयतोक्ता अप्रमेयंचमीमांसादिन्यायनिरपेक्षतया अनवगम्यमानतयाअप्रमेयमेवंव्यवस्था ततश्चमीमांसयाव्याकरणाद्यंगैश्चसर्वब्रह्मात्मकं

यथोक्तान्यपिकर्माणिपरिहायद्विजोत्तमः आत्मज्ञानेशमेचस्याद्वेदाभ्यासेचयत्नवान् ९२ एतद्धिजन्मसाफल्यंब्राह्मणस्यविशेषतः प्राप्यैतत्कृतकृत्योहिद्विजोभवतिनान्यथा ९३ पितृदेवमनुष्याणांवेदश्चक्षुःसनातनम् अशक्यंचाप्रमेयंचवेदशास्त्रमितिस्थितिः ९४ यावेदबाह्याःस्मृतयोयाश्चकाश्चकुदृष्टयः सर्वास्तानिष्फलाःप्रेत्यतमोनिष्ठाहिताःस्मृताः ९५ उत्पद्यंतेच्यवंतेचयान्यतोन्यानिकानिचित् तान्यर्वाक्कालिकतयानिष्फलान्यनृतानिच ९६ चातुर्वर्ण्यंत्रयोलोकाश्चत्वारश्चाश्रमाःपृथक् भूतंभव्यंभविष्यंचसर्ववेदात्प्रसिद्ध्यति ९७

वेदार्थंजानीयादितिव्यवस्थितम् ९४ यावेदबाह्याइति याःस्मृतयःवेदमूलानभवंतिदृष्टार्थवाक्यानिचैत्यवंदनात्स्वर्गोभवतीत्यादीनियानिचासत्तर्कमूलानिदेवताः पूर्वादिनिराकरणात्मकानिवेदविरुद्धानिचार्वाकदर्शनानिसर्वाणिपरलोकेनिष्फलानि यस्मान्नरकफलानितानिमन्वादिभिःस्मृतानिएतदेवस्पष्टयति ९५ उत्पद्यंतइति यान्यतोवेदादन्यमूलानिचकानिचित्शास्त्राणिपौरुषेयत्वात्उत्पद्यंतेएवमाशुविनश्यंतितानिचइदानींतनत्वान्निष्फलानिअसत्यरूपाणिचस्मृत्यादीनांतुवेदमूलत्वादेवप्रामाण्यम् ९६ चातुर्वर्ण्यमिति ब्राह्मणोऽस्यमुखमासीदित्यादिवेदादेवचातुर्वर्ण्यप्रसिद्ध्यतिब्राह्मणोभूतमातापितृजनितत्वमितितदुपजीवितयास्वर्गादिलोकोपिवेदादेवप्रसिद्धः एवंब्रह्मचर्याद्याश्रमाअपिचत्वारो

वेदमूलकत्वाद्वेदादेवप्रसिध्यंतिकिंबहुनायत्किंचिदतीतंवर्त्तमानंभविष्यंचसर्वमग्नौप्रास्ताहुतिः सम्यगित्यादिन्यायेनवेदादे
वप्रसिध्यति ९७ शब्दइति यइहलोकेपरलोकेच शब्दादयोविषयाः प्रयुज्यंतेप्रसूयंतएतेरितिप्रसूतयः प्रसूतयश्चगुणाश्चेति
सत्त्वरजस्तमोरूपाः तन्निबंधनवैदिककर्महेतुत्वात्वेदादेवप्रसिध्यंति ९८ बिभर्त्तीति वेदशास्त्रंनित्यंसर्वभूतानिधारयति-
तथाचहविरग्नौहूयतेसोग्निरादित्यमुपसर्पतिवेदः तत्सूर्योरश्मिभिर्वर्षतितेनान्नंभवतिअथेहभूतानामुत्पत्तिस्थितिश्चेति-
हविर्जायतइतिब्राह्मणंतस्माद्वेदशास्त्रमस्यजंतोर्वैदिककर्माधिकारिपुरुषस्यप्रकृष्टंपुरुषार्थसाधनंजानंति ९९ सेनापत्यमि
ति सेनापत्यंराज्यंदंडप्रणेतृत्वंसर्वभूम्याधिपत्यादीन्येतत्सर्वउक्तप्रयोजनंवेदात्मकशास्त्रज्ञएवार्हति १०० यथेति यथाग्नि

शब्दस्पर्शश्चरूपंचरसोगंधश्चपंचमः वेदादेवप्रसूयंतेप्रसूतिगुणकर्मतः ९८ बिभर्त्तिसर्वभूता
निवेदशास्त्रंसनातनम् तस्मादेतत्परंमन्येयज्जंतोरस्यसाधनम् ९९ सेनापत्यंचराज्यंचदंडनेतृत्व
मेवच सर्वलोकाधिपत्यंचवेदशास्त्रविदर्हति १०० यथाजातबलोवह्निर्दहत्यार्द्रानपिद्रुमान् तथा
दहतिवेदज्ञःकर्मजंदोषमात्मनः १०१ वेदशास्त्रार्थतत्त्वज्ञोयत्रतत्राश्रमेवसन् इहैवलोकेतिष्ठ-
न्सब्रह्मभूयायकल्पते १०२ अज्ञेभ्योग्रंथिनःश्रेष्ठाग्रंथिभ्योधारिणोवराः धारिभ्योज्ञानिनःश्रे-
ष्ठाज्ञानिभ्योव्यवसायिनः १०३ तपोविद्याचविप्रस्यनिःश्रेयसकरंपरम् तपसाकिल्बिषंहंतिविद्य
याऽमृतमश्नुते १०४

र्होग्निरार्द्रानपिद्रुमान्दहत्येवंग्रंथतोऽर्थतश्चवेदज्ञःप्रतिषिद्धाद्याचरणादिकर्मजनितंपाप
मात्मनोनाशयति एवंचनकेवलंस्वर्गापवर्गादिहेतुः किंतुनिवृत्तिहेतुरितिदर्शितः १०१ वेदशास्त्रार्थेति यस्तत्त्वतोवेदंत
दर्थंचकर्मवेदात्मकंजानातिसनित्यनैमित्तिककर्मानुगृहीतब्रह्मज्ञानेनब्रह्मचर्याद्याश्रमावस्थितोअस्मिन्नेवलोकेतिष्ठन्ब्र-
ह्मत्वायकल्पते १०२ अज्ञेभ्यइति उभयोःप्रशस्यत्वेसति अन्यतरातिशयविवक्षायांश्रेष्ठइतीष्ठनोविधानादीषदध्ययनाअ
ज्ञाः तेभ्योग्रंथाध्येतारःश्रेष्ठाः तेभ्योऽधीतग्रंथधारणसमर्थाःश्रेष्ठाः तेनग्रंथिनः पठितविस्मृतग्रंथाबोद्धव्याः अर्थविद्योअ-

धीतग्रंथार्थज्ञाःप्रकृष्टाः तेभ्योऽनुष्ठातारः १०३ तपइति तपःस्वधर्मवृत्तित्वमितितावद्दर्शनात् आश्रमविहितंकर्मआत्म
ज्ञानंचब्राह्मणस्यमोक्षसाधनंतत्रतपसोऽवांतरव्यापारमाह तपसापापमपहंतिब्रह्मज्ञानेनमोक्षमाप्नोति तथाचश्रुतिः वि
द्यांचाविद्यांचयस्तद्वेदोभयंसह अविद्ययामृत्युंतीर्त्वाविद्ययामृतमश्नुते विद्यातोऽन्यदविद्याकर्ममृत्युर्दुःखसाधनत्वान्मृत्युः
पापंमृत्युसर्वएवायंमनुनाव्याख्यातोक्तः १०४ प्रत्यक्षमिति धर्मस्यतत्त्वावबोधमिच्छताप्रत्यक्षमनुमानंचधर्मसाधनभूतद्र-
व्यगुणजातितत्त्वज्ञानायथाशास्त्रंचवेदमूलंस्मृत्यादिरूपंनानाप्रकारधर्मस्वरूपविज्ञानायसम्यग्विदितंकर्त्तव्यंतदेवंचप्रमाण
त्रयंमनोरभिमतंउपमानार्थापत्त्यादेश्चानुमानांतर्भावः १०५ आर्षमिति ऋषिदृष्टत्वात् आर्षंवेदंधर्मोपदेशंचतन्मूलस्मृ

प्रत्यक्षंचानुमानंचशास्त्रंचविविधागमम् त्रयंसुविदितंकार्यंधर्मशुद्धिमभीप्सता १०५ आर्षंध
र्मोपदेशंचवेदशास्त्राऽविरोधिना यस्तर्केणानुसंधत्तेसधर्मंवेदनेतरः १०६ नैःश्रेयसमिदंकर्मय
थोदितमशेषतः मानवस्यास्यशास्त्रस्यरहस्यमुपदिश्यते १०७ अनाम्नातेषुधर्मेषुकथंस्यादिति
चेद्भवेत् यंशिष्टाब्राह्मणाब्रूयुःसधर्मःस्यादशंकितः १०८ धर्मेणाधिगतोयैस्तुवेदःसपरिबृंहणः
तेशिष्टाब्राह्मणाज्ञेयाःश्रुतिप्रत्यक्षहेतवः १०९

त्यादिकंयस्तदविरुद्धेनमीमांसादिन्यायेनविचारयतिसधर्मंजाना
तिनतुमीमांसानभिज्ञः धर्मेकरणंवेदोमीमांसाचेतिकर्त्तव्यतास्थानीया तदुक्तंभट्टवार्त्तिककृता धर्मेप्रमीयमाणेहिवेदेनकर
णात्मना इतिकर्त्तव्यताभागंमीमांसापूरयिष्यति १०६ नैःश्रेयसमिति एतन्निःश्रेयससाधनंकर्मनिःशेषेणयथावदुदितम् अ
तऊर्ध्वमस्यमानवशास्त्रस्यरहस्यंगोपनीयमिदंवक्ष्यमाणंशृणुत १०७ अनाम्नातेष्विति अस्यशास्त्रस्यासमस्तधर्माभि
मासांस्यबोधयति सामान्यविधिप्राप्तेषुविशेषेणानुपदिष्टेषुकथंकर्त्तव्यंस्यादितियदिसंशयोभवेत्तदा यंधर्मंवक्ष्यमाणलक्षणाः
शिष्टाब्राह्मणाब्रूयुःसतत्रनिश्चितोधर्मःस्यात् १०८ धर्मेणेति ब्रह्मचर्याद्युक्तधर्मेणयैरंगमीमांसाधर्मशास्त्रपुराणाद्युपबृंहितो

वेदोऽधिगतः तेब्राह्मणाःश्रुतेःप्रत्यक्षीकरणेहेतवोयेश्रुतिंपठित्वातदर्थमुपदिशंतितेशिष्टाविज्ञेयाः १०९ दशेति यदिवहवः
संतोऽप्रहितानभवंतितदादशावरास्त्र्यवराश्चेतिवक्ष्यमाणलक्षणायस्याःसापरिषत्तदभावेत्रयोऽवरायस्याःसावासदाचारायंध
र्मनिश्चिनुयात्तंधर्मत्वेनस्वीकुर्यात्नविसंवदेत् ११० त्रैविद्यइति वेदत्रयसंबंधशाखात्रयाध्येतारः श्रुतिस्मृत्यविरुद्धन्यायशा
स्त्रज्ञोमीमांसात्मकतर्कवित् निरुक्तज्ञोमानवादिधर्मशास्त्रवेदीब्रह्मचारिगृहस्थवानप्रस्थाइत्येवादशावरापरिषत्स्यात् १११ ऋग्
वेदविदिति ऋग्यजुःसामवेदशाखानांयेऽध्येतारः तदर्थज्ञास्त्रयः साधर्मसंदेहनिरासार्थंत्र्यवरापरिषद्बोद्धव्यातदभावे ११२
एकोपीति एकोपिवेदार्थधर्मज्ञोयंधर्मनिश्चिनुयात्प्रकृष्टोधर्मःसबोद्धव्योनवेदानभिज्ञानांदशभिःसहस्रैरप्युक्तःवेदवित्त्वा

दशावरावापरिषद्यंधर्मंपरिकल्पयेत् त्र्यवरावापिवृत्तस्थातंधर्मंनविचालयेत् ११० त्रैविद्योहेतुक
स्तर्कीनैरुक्तोधर्मपाठकः त्रयश्चाश्रमिणःपूर्वेपरिषत्स्याद्दशावरा १११ ऋग्वेदविद्यजुर्विच्चसामवेद
विदेवच त्र्यवरापरिषज्ज्ञेयाधर्मसंशयनिर्णये ११२ एकोपिवेदविद्धर्मंयंव्यवस्येद्द्विजोत्तमः सविज्ञेयः
परोधर्मोनाज्ञानामुदितोऽयुतैः ११३ अव्रतानाममंत्राणांजातिमात्रोपजीविनाम् सहस्रशःसमेता
नांपरिषत्त्वंनविद्यते ११४

द्धोऽयंवेदार्थधर्मज्ञपरः एतच्चश्रेष्ठोपलक्षणम् स्मृतिपुराणमीमांसान्यायशास्त्रज्ञोपिगुरुपरंपरोप
देशाविद्यपि तथा केवलंशास्त्रमाश्रित्यनकर्तव्योविनिर्णयः युक्तिहीनविचारेतुधर्महानिःप्रजायते तेनबहुस्मृतिज्ञोपियादिसम्य
ङ्न्यायश्चित्तादिधर्मंजानातितदातेनाप्येकेनधर्मउक्तःप्रकृष्टोधर्मोज्ञेयः अतएवयमः एकोद्वौवात्रयोवापियद्ब्रूयुर्धर्मपाठकाःस
धर्मइतिविज्ञेयोनेतरेषांसहस्रशः ११३ अव्रतानामिति सावित्र्यादिब्रह्मचारिव्रतरहितानांमंत्रवेदाध्ययनरहितानांब्राह्मणजाति

मात्रधारिणांबहूनामपिमिलितानांपरिषत्त्वंनास्ति धर्मनिर्णयसामर्थ्याभावात् ११४ यंवदंतीति तमोगुणबहुलांमूर्खाः धर्मप्रमाणवेदार्थानभिज्ञाअतएवमप्रभविषयधर्माविदः प्रायश्चित्तादिधर्मंयंपुरुषंप्रत्युपदिशंतितदीयंपापंशतगुणंभूत्वाव्यवस्थापकान्बहून्भजते ११५ एतद्वइति एतन्निःश्रेयससाधकंप्रकृष्टंधर्मादिकंसर्वंयुष्माकमभिहितंएतदनुतिष्ठन्ब्राह्मणादिःपरमांगतिंस्वर्गापवर्गरूपांप्राप्नोति ११६ एवमिति सभगवान्ऐश्वर्यादिसंयुक्तोद्योतनाद्देवोमनुरुक्तप्रकारेणइदंसर्वंधर्मस्यपरमार्थंशुश्रूषुशिष्येभ्यः अगोपनीयंलोकहितेच्छयाममेदंसर्वमुक्तवानितिभृगुर्महर्षीनाह एवमुपसंहृत्यमहर्षीणांहितायउक्तमपिआत्मज्ञानंप्रकृष्टमोक्षोपकारकतयापृथक्कृत्वाह ११७ सर्वमिति सद्भावमसद्भावंचैवंसर्वंब्राह्मणोजानन्ब्रह्मस्वरूपमात्म

यंवदंतितमोभूतामूर्खाधर्ममतद्विदः तत्पापंशतधाभूत्वातद्वक्तॄननुगच्छति ११५ एतद्वोऽभिहितंसर्वंनिःश्रेयसकरंपरम् अस्मादप्रच्युतोविप्रःप्राप्नोतिपरमांगतिम् ११६ एवंसभगवान्देवोलोकानांहितकाम्यया धर्मस्यपरमंगुह्यममेदंसर्वमुक्तवान् ११७ सर्वमात्मनिसंपश्येत्सच्चासच्चसमाहितः सर्वंह्यात्मनिसंपश्यन्नाधर्मेकुरुतेमनः ११८ आत्मैवदेवताःसर्वाःसर्वमात्मन्यवस्थितम् आत्माहिजनयत्येषांकर्मयोगंशरीरिणाम् ११९

न्युपस्थितंतदात्मकमनन्यमनाध्यानप्रकर्षेणसाक्षात्कुर्यात् सर्वमात्मत्वेनपश्यन्रागद्वेषाभावात् अधर्मेमनोनकुरुते एतदेवस्पष्टयति ११८ आत्मैवेति इंद्राद्याःसर्वदेवताःपरमात्मैव सर्वात्मत्वात्परमात्मनः सर्वंजगदात्मन्येवावस्थितंपरमात्मपरिणामत्वात् हिरवधारणार्थे परमात्मैवैषांक्षेत्रज्ञादीनांकर्मसंबंधंजनयति तथाचश्रुतिः एषह्येवसाधुकर्मकारयतियमूर्ध्वंनिनीषति एषह्येवासाधुकर्मकारयतियमधोनिनीषतीति इदानींवक्ष्यमाणब्रह्मध्यानविशेषोपयोगितयादैहिकाकाशादिषुबाह्याकाशादीनांलयमाह ११९ खमिति मनसीति बाह्याकाशमुदराद्यवच्छिन्नशरीराकाशेषुलीनमेकत्वेनधारयेत् तथाचेष्टास्पर्शकारणभूतदैहिकवायौबाह्यवायुंऔदर्यचाक्षुषतेजसं

रग्निसूर्ययोः प्रकृष्टंतेजः दैहिकास्त्वऽप्स्वाह्या अपः बाह्याः पृथिव्यादयः शरीरपार्थिवभागेषु मनसि चंद्रं श्रोत्रे दिशः पादेंद्रिये-
विष्णुम् वलेहरं वागिंद्रिये अग्निम् पाय्विंद्रिये मित्रमुपस्थेंद्रिये प्रजापतिं लीनमेकत्वेन भावयेत् एवमाध्यात्मिकभूतादिकंलीन
मेकत्वेन भावयित्वा योयमग्न्यादीनां दैहिकादिनियमो यच्च कर्मणां फलंप्रतिनियतं तत्सर्वं परमात्मानं तथा चैतस्यैवाक्षरस्य प्रशासने
गार्गि त्वर्पयति तथा भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचम इति १२० १२१ प्रशासितार-
मिति प्रशासितारं नियंतारं ब्रह्मादिस्तंबपर्यंतस्य चेतनाचेतनस्य जातेः योयमग्न्यादीनां यो ध्याद्यादिनियमो यश्चादित्यादीनां प्र
मणादिनियमो यश्च कर्मणां फलंप्रतिनियतमेतत्सर्वं परमात्माधीनं तथा चैतस्यवाऽक्षरस्य प्रशासनो गार्गीत्याद्युपनिषदः तथा भयाद-
स्याग्निस्तपति भयात्तपति सूर्यः भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचम इति तथा अणोरणीयांसं सर्वात्मत्वात्तथा च श्रुतिः बाला

स्वंसन्निवेशयेत्स्वेषु चेष्टनस्पर्शनेऽनिलम् पक्तिदृष्ट्योः परंतेजः स्नेहेऽपो गां च मूर्तिषु १२० मनसीं
दुं दिशः श्रोत्रे क्रांते विष्णुं बले हरम् वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् १२१ प्रशासितारं सर्वे
षामणीयांसमणोरपि रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् १२२ एतमेके वदंत्यग्निं मनुमन्ये प्र-
जापतिम् इंद्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् १२३

ग्रशतभागस्य शतधा कल्पितस्य च भागो जीवेति विज्ञेयः स चा
नंत्याय कल्पते रुक्माभं यद्यप्यशब्दमस्पर्शमरूपमव्ययमित्याद्युपनिषदा रूपं परमात्मनो निषिद्धम् तथाप्युपासनाविशेषेषु
-रूपसवर्णाभम् अतएव य एषोऽन्तरादित्ये हिरण्मय इत्यादि छांदोग्योपनिषत् स्वप्नधीगम्यं दृष्टांतोयम् स्वप्नधीसदृशज्ञानग्राह्यं
यथा स्वप्नधीः चक्षुरादिबाह्येंद्रियोपरमे मनोमात्रेणजन्या तएव मात्मधीरपि अतएव व्यासः नैवासौ चक्षुषा ग्राह्यो न च शिष्टैर
पींद्रियैः मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः एवंविधं परमात्मानमनुचिंतयेत् १२२ एतमिति एतं च परमात्मानं अग्नित्वेन
याज्ञिका उपासते तथा तमेकमग्निं इत्यादिधर्मं उपासते अन्ये पुनः स्वतन्त्रत्वात्स्रष्टृरूपप्रजापतिरूपतया उपासते एके पुनरैश्व

र्य्ययोगादिंद्ररूपतयाउपासते अपरेपुनः प्राणत्वेनोपासते सर्वाणि भूतादि इमानि भूतानि प्राणमेवाभिसंविशंति प्राणमूर्जितइ त्यादिश्रुतिदर्शनात् अपरेपुनरपगतप्रपंचात्मकंसर्वदा आनंदस्वरूपंपरमात्मानमुपासते मूर्त्तामूर्त्तस्वरूपेच ब्रह्माणिसर्वाएवो पासनाश्रुतिप्रसिद्धा भवंति १२३ एषइति एषआत्मासर्वान्प्राणिनः पंचभिः पृथिव्यादिभि र्महाभूतैः शरीरारंभकैः परिगृह्यपू र्वजन्मार्जितकर्मापेक्षयाउपस्थितिविनाशैरथादिचक्रवत् असकृदुपावर्त्तमानैः आमोक्षात्संसारिणः कुर्वंति इदानींमोक्षत्वेनो- क्तसर्वधर्मश्रेष्ठतयासर्वत्रपरमात्मदर्शनमनुष्ठेयत्वेनोपसंहरति १२४ एवंयः सर्वभूतेष्विति एवंसर्वभूतेषुचात्मानमित्याद्युक्त प्रकारेणयः सर्वेषुभूतेषु अवस्थितमात्मानमात्मनापश्यतिसब्रह्मसाक्षात्कारात्परंश्रेष्ठंपदस्थानंब्रह्मप्राप्नोतितत्रात्यंतंलीयतेमु

एषसर्वाणिभूतानिपंचभिर्व्याप्यमूर्त्तिभिः जन्मवृद्धिक्षयैर्नित्यंसंसारयतिचक्रवत् १२४ एवंयः सर्वभूतेषुपश्यत्यात्मानमात्मना ससर्वसमतामेत्यब्रह्माभ्येतिपरंपदम् १२५ इत्येतन्मानवंशास्त्रं भृगुप्रोक्तंपठन्द्विजः भवत्याचारवान्नित्यंयथेष्टांप्राप्नुयाद्गतिम् १२६ इतिमानवेध र्मशास्त्रेभृगुप्रोक्तायांसंहितायां द्वादशोऽध्यायः १२ समाप्तेयमनुसंहिता ७ ७ ७

क्तोभवतीत्यर्थः १२५ इत्येतदिति समाप्त्यर्थइतिशब्दः एतन्नुस्मृतिशास्त्रंभृगुणाप्रकर्षेणोक्तंद्विजातिः पठन्विहितानुष्ठान निषिद्धवर्जनात्सदाचारवान्भवतितथाऽपेक्षितांचस्वर्गापवर्गादिरूपांगतिंप्राप्नुयादिति १२६ सारासारवचः प्रपंचनविधौमे- धातिथेश्चातुरीस्तोकंवस्तुनिगूढमल्पवचनाद्गोविंदराजोजगौ ग्रंथेऽस्मिंधरणीधरस्यबहुशः स्वातंत्र्यमेतावतास्पष्टंमानवमर्थ- तत्त्वमखिलंवक्तुंकृतोयंश्रमः १ प्रायोमुनिभिर्विवृतंकथयत्येषामनुस्मृतेरर्थम् दशभिर्ग्रंथसहस्रैःसप्तदशयुता कृतावृत्तिः २ सेयंमयामानवधर्मशास्त्रेव्यधायिवृत्तिर्विदुषांहिताय दुर्बोधजातेदुरितक्षयायभूयात्ततोमेजगतामधीशः ३ इतिवारेंद्र नन्दनावासीयदिवाकरात्मजश्रीमत्कुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांमनुवृत्तौ द्वादशोऽध्यायः समाप्तः इतिश्रीकुल्लूक भट्टविरचितामन्वर्थमुक्तावलीसमाप्ता ७ ७ श्रीकृष्णार्पणमस्तु श्रीरस्तु शुभमस्तु ७ ७ ७

